सचित्रः

# बृहत्स्तोत्ररत्नहारः ।

( स्तोत्रसंख्या ४७६ )

लेले इत्युपाख्यवेंकटेशशास्त्रिणा
संशोधितः

"गुजराती न्यूस" मुद्रणालयाधिपतिना मणिलाल
इच्छाराम देसाई इत्यनेन प्रकाशितः ।

सं. १९८२ ख्रि. १९२५

मूल्यं रूप्यकद्वयम् ।

# प्रस्तावना

स्तोत्रं कस्य न तुष्टये ।

कालिदासः ।

धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थलाभः परम-
यालोः परमेश्वरस्यानुकंपयापि भवतीत्यत्र न कस्य-
चिद्विप्रतिपत्तिः । तत्कृपासंपादनोपायाः प्रभूता ध्या-
नधारणादयो भिन्नभिन्नग्रन्थकारैरुक्तास्ते च अधर्मभू-
यिष्ठे घोरतरेऽस्मिन्कलिकाले अल्पमतिभिरल्पायुर्भि-
र्मलिनमानसैर्मानवैरनुष्ठातुमशक्या अतएव लुप्तप्राया
जाताः । अतिकराले कलियुग एक एव उपायो महानु-
भावैः परमदयालुभिः साधुभिरुपदिष्टः । स उपायो भ-
क्तिरिति । सा च श्रीमद्भागवते सप्तमस्कन्धे भगवतो
विष्णोः परमभक्तेन प्रल्हादेन 'श्रवणं कीर्तनं विष्णोः
स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्म-
निवेदनम्' इति नवप्रकारा उक्ता । तत्रेश्वरस्तुतिरूपो
द्वितीयः प्रकारस्तमेव स्तोत्रपाठमिति वदन्ति । अल्पो-
प्यसावुपायो निखिलैर्लोकैरनायासेनैव कर्तुं शक्यः ।
स एव श्रेष्ठतमः । ननु चतुर्विधपुरुषार्थसाधनेषु वेदा-
न्तादिशास्त्रेषु सत्सु किमिति स्तुतौ यत्नः करणीय



इत्यपि न वाच्यं, कटुकौषधोपशमनीयस्य रोगस्य सि-
तशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्करा-

प्रवृत्तिः साधीयसी न स्यादित्यनेन सुलभ उपाय
कार्य इत्युक्तम् । स स्तुतिरूपः सुलभ उपाय एव भगव
त्प्राप्तिहेतुः । तदेवं स्तोत्राणां सर्वैरभिलषितत्वात्सर्वे
तत्सौलभ्याय बहुभिः प्रकाशिताः स्तोत्रसंग्रहाः। परन्
अनुचितक्रमास्तेऽव्यवस्थितचित्तजना इव जनमनो
रञ्जनाय नालमिति तत्क्रमसौकर्याय बहूनि स्तोत्रा
तेष्वप्रकाशितानि सन्ति तत्प्रकाशनाय च 'गुजराती
न्यूस' मुद्रणालयाधिपतिभिः तत्संशोधनादिकार्याय
नियोजितोऽहमितस्ततो मिलितेभ्यः पुस्तकेभ्यः प्रसा
दगुणयुक्तानि स्तोत्राणि पूर्वं मङ्गलं ततो गणेशस्तो
त्राणि अनन्तरं ब्रह्मस्तोत्रे ततो विष्णुस्तोत्राणि पश्चा
च्छिवस्तोत्राणि ततः सूर्यस्तोत्राणि अनन्तरं देवीस्तो
त्राणि ततोऽवतारस्तोत्राणि पश्चाद्वेदान्तस्तोत्राणि
समाप्तौ भिन्नभिन्नदेवतानां इतस्ततो लब्धानि तानि
प्रकीर्णस्तोत्रप्रकरणे यथाक्रमं संकलय्य यथामति शोध
यित्वा तेषां ४७६ स्तोत्रात्मकमिमं बृहत्स्तोत्ररत्नहार
श्रद्धावद्भ्य उपायनीकरोमि । तदनसूयवो विद्वांस
दोषमनादृत्य गुणग्राहितया प्रकटयेयुः स्वमनःसा
रल्यमित्यर्थयते विदुषामनुचरः ।

संशोधकः
लेले इत्युपाख्यो वेंकटेश शास्त्री ।

# अथ बृहत्स्तोत्ररत्नाकरस्यानुक्रमणिका ।

## अथ गणेशस्तोत्राणि ।

## अथ शिवस्तोत्राणि ।

| विषयाः | | | पृष्ठम् |
|---|---|---|---|

| विषयाः | | | पृष्ठम् |
|---|---|---|---|

## अथ सूर्यस्तोत्राणि ।

## अथ अवतारस्तोत्राणि ।

## अथ कृष्णस्तोत्राणि ।

## अथ पांडुरंगस्तोत्राणि ।

| विषयाः | | | पृष्ठम् |
|---|---|---|---|

विषयाः पृष्ठम्

## अथ सद्गुरुस्तोत्राणि।



## अथ हनुमतस्तोत्राणि।

## अथ गंगादितीर्थस्तोत्राणि।

| विषयाः | | | पृष्ठम् |
|---|---|---|---|

इति बृहत्स्तोत्ररत्नाकरस्यानुक्रमणिका समाप्ता।

श्रीगणेशाय नमः ।

# बृहत्स्तोत्ररत्नहारः ।

## १ मङ्गलम् ।

श्रीगणेशाय नमः ॥ स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम् । वासरमणिरिव तमसां राशीन्नाशयति विघ्नानाम् ॥ १ ॥ यं ब्रह्मावरुणेन्द्ररुद्रमरुतस्स्तुन्वन्ति दिव्यैस्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः । ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ २ ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥३॥ मूर्तित्वे परिकल्पितः शशभृतो वर्त्माऽपुनर्जन्मनामात्मेत्यात्मविदां क्रतुश्च यजतां भर्तामरज्योतिषाम् । लोकानां प्रलयोद्भवस्थितिविभुश्चानेकधा यः श्रुतौ वाचं नः स ददात्वनेककिरणस्त्रैलोक्यदीपो रविः ॥ ४ ॥ व्यासं वसिष्ठनप्तारं शक्तेः पुत्रमकल्मषम् । पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ५ ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान्बादरायणः

॥ ६ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ७ ॥ इति ।

## २ मङ्गलाष्टकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमत्पङ्कजविष्टरौ हरिहरौ वायुर्महेन्द्रोऽनलश्चन्द्रो भास्करवित्तपालवरुणप्रेताधिपा हि ग्रहाः । प्रद्युम्नो नलकूबरः सुरगजश्चिन्तामणिः कौस्तुभः स्वामी शक्तिधरस्तु लाङ्गलधरः कुर्वन्तु नो मङ्गलम् ॥ १ ॥ गौरी श्रीरदितिश्च कद्रुसुभगा भूतिः सुपर्णी शुभा सावित्री तु सरस्वती वसुमती पत्युर्व्रताऽरुन्धती । स्वाहा जाम्बवती सुरुक्मभगिनी दुःस्वप्नविध्वंसिनी वेला चाम्बुनिधेः सुमीनमकराः कुर्वन्तु नो मङ्गलम् ॥ २ ॥ नेत्राणां त्रितयं शिवं पशुपतेरग्नित्रयं पावनं यत्तद्विष्णुपदत्रयं त्रिभुवनं ख्यातं च रामत्रयम् । गङ्गावाहपथत्रयं सुविमलं देवत्रयं ब्राह्मणं संध्यानां त्रितयं द्विजैः सुविहितं कुर्वन्तु नो मङ्गलम् ॥ ३ ॥ अश्वत्थो वटवृक्षचन्दनतरुर्मन्दारकल्पद्रुमौ जम्बूनिम्बकदम्बचूतसरला वृक्षाश्च ये क्षीरिणः । सर्वे ते फलसंयुताः प्रतिदिनं विभ्राजनं राजते रम्यं चैत्ररथं च नन्दनवनं कुर्वन्तु नो मङ्गलम् ॥ ४ ॥ वाल्मीकिः सनकः सनन्दनतरुर्व्यासो वसिष्ठो भृगुर्जाबालिर्जमदग्निकच्छजनको गर्गोऽङ्गिरा गौतमः । मान्धाता ऋतुपर्णवैनसगरा धन्यो दिलीपो नलः पुण्यो

धर्मसुतो ययातिनहुषौ कुर्वन्तु नो मङ्गलम् ॥ ५ ॥ ब्रह्मा वेदपतिः शिवः पशुपतिः सूर्यश्च चक्षुष्पतिः शक्रो देवपतिर्यमः-पितृपतिः स्कन्दश्च सेनापतिः। यक्षो वित्तपतिर्हरिश्च जगतां वायुः पतिः प्राणिनामित्येते पतयः समेत्य सततं कुर्वन्तु नो मङ्गलम् ॥ ६ ॥ गङ्गा सिन्धुसरस्वती च यमुना गोदावरी नर्मदा कावेरी सरयूमहीन्द्रतनया चर्मण्वती वेदिका । क्षिप्रा वेत्रवती महासुरनदी ख्याता च या गण्डकी पूर्णाः पूर्णजलैः समुद्रसहिताः कुर्वन्तु नो मङ्गलम् ॥ ७ ॥ [ गङ्गा गोमति गोपनिर्गणपतिर्गोविन्दगोवर्धनो गीतागो गिरिजो गुहो गिरिसुता गङ्गाधरो गौतमः । गायत्री गरुडो गदा गिरिगुहा गम्भीरगोदावरी गन्धर्वग्रहगोपगोकुलजनाः कुर्वन्तु नो मङ्गलम् ] लक्ष्मीः कौस्तुभपारिजातकसुरा धन्वन्तरिश्चन्द्रमा गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः । अश्वः सप्तमुखः सुधा हरिधनुः शङ्खो विषं चाम्बुधे रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥८॥ इत्येतद्वरमङ्गलाष्टकमिदं पापौघविध्वंसनं पुण्यं संप्रति कालिदासकविना त्रिप्रप्रबन्धीकृतम् । यः प्रातः शृणुयात्समाहितमना नित्यं पठेद्भक्तिमान् गङ्गासागरसंगमे प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ ९ ॥

इति मङ्गलाष्टकस्तोत्रं संपूर्णम् ।

## ३ प्रातःस्मरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं सच्चित्सुखं परमहंसगतिं तुरीयम् । यत्स्वप्नजागरसुषुप्तमवैति नित्यं तद्ब्रह्म निष्कलमहं न च भूतसंघः ॥ १ ॥ प्रातर्भजामि मनसो वचसामगम्यं वाचो विभान्ति निखिला यदनुग्रहेण । यन्नेति नेति वचनैर्निगमा अवोचुस्तं देवदेवमजमच्युतमाहुरग्र्यम् ॥ २ ॥ प्रातर्नमामि तमसः परमर्कवर्णं पूर्णं सनातनपदं पुरुषोत्तमाख्यम् । यस्मिन्निदं जगदशेषमशेषमूर्तौ रज्ज्वां भुजङ्गम इव प्रतिभासितं वै ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् । प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ॥ ४ ॥

इति श्रीभगवत्पादाचार्यविरचितं प्रातःस्मरणस्तोत्रं संपूर्णम् ।

---

## ४ भगवत्प्रातःस्मरणम् ।

श्रीगणेशाय नमः ॥ प्रातः स्मरामि फणिराजतनौ शयानं नागामरासुरनरादिजगन्निदानम् । वेदैः सहामरगणैरुपगीयमानं कान्तारकेतनवतां परमं निधानम् ॥ १ ॥ प्रातर्भजामि भवसागरवारिपारं देवर्षिसिद्धनिवहैर्विहितोपहारम् । संदृप्तदानवकदम्बमदापहारं सौन्दर्यराशिजलराशिसुताविहारम् ॥ २ ॥ प्रातर्नमामि शरदम्बरकान्ति-

कान्तं पादारविन्दमकरन्दजुषां भवान्तम् । नानावतार-हृतभूमिभरं कृतान्तं पाथोजकम्बुरथपादकरं प्रशान्तम् ॥ ३ ॥ श्लोकत्रयमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् । यः पठेत्प्रातरुत्थाय सर्वपापैः प्रमुच्यते ॥ ४ ॥

इति श्रीमत्परहंसस्वामिब्रह्मानन्दविरचितं भगव-त्प्रातःस्मरणं संपूर्णम् ।

---

# गणेशस्तोत्राणि ।

## ५ गणेशन्यासः ।

श्रीगणेशाय नमः ॥ आचम्य प्राणायामं कृत्वा । दक्षिणहस्ते वक्रतुण्डाय नमः । वामहस्ते शूर्पकर्णाय नमः । ओष्ठे विघ्नेशाय नमः । अधरोष्ठे चिन्तामणये नमः । संपुटे गजाननाय नमः । दक्षिणपादे लम्बोदराय नमः । वामपादे एकदन्ताय नमः । शिरसि एकदन्ताय नमः । चिबुके ब्रह्मणस्पतये नमः । दक्षिणनासिकायां विनायकाय नमः । वामनासिकायां ज्येष्ठराजाय नमः । दक्षिणनेत्रे विकटाय नमः । वामनेत्रे कपिलाय नमः । दक्षिणकर्णे धरणीधराय नमः । वामकर्णे आशापूरकाय नमः । नाभौ महोदराय नमः । हृदये धूम्रकेतवे नमः । ललाटे मयूरेशाय नमः ।

दक्षिणबाहौ स्वानन्दवासकारकाय नमः । वामबाहौ सच्चि-त्सुखधाम्ने नमः ॥

इति गणेशन्यासः ।

---

## ६ गणेशकवचम् ।

श्रीगणेशाय नमः ॥ गौर्युवाच । एषोऽतिचपलो दैत्या-न्बाल्येऽपि नाशयत्यहो । अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम ॥ १ ॥ दैत्या नानाविधा दुष्टाः साधुदेवद्रुहः खलाः । अतोऽस्य कण्ठे किंचित्त्वं रक्षार्थं बद्धुमर्हसि ॥ २ ॥ मुनिरुवाच । ध्यायेत्सिंहगतं विनायकममुं दिग्बाहुमाद्ये युगे त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम् । द्वापारे तु गजाननं युगभुजं रक्ताङ्गरागं विभुं तुर्ये तु द्विभुजं सिताङ्ग-रुचिरं सर्वार्थदं सर्वदा ॥ ३ ॥ विनायकः शिखां पातु परमात्मा परात्परः । अतिसुन्दरकायस्तु मस्तकं सुमहो-त्कटः ॥ ४ ॥ ललाटं कश्यपः पातु भ्रूयुगं तु महोदरः । नयने भालचन्द्रस्तु गजास्यस्त्वोष्ठपल्लवौ ॥ ५ ॥ जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः । वाचं विनायकः पातु दन्तान् रक्षतु दुर्मुखः ॥ ६ ॥ श्रवणौ पाशपाणिस्तु नासिकां चिन्तितार्थदः । गणेशस्तु मुखं कण्ठं पातु देवो गणंजयः ॥ ७ ॥ स्कन्धौ पातु गजस्कन्धः स्तनौ विघ्नविनाशनः । हृदयं गणनाथस्तु हेरम्बो जठरं महान् ॥ ८ ॥ धराधरः

पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः । लिङ्गं गुह्यं सदा पातु वक्र-तुण्डो महाबलः ॥ ९ ॥ गणक्रीडो जानुजङ्घे ऊरू मङ्गल-मूर्तिमान् । एकदन्तो महाबुद्धिः पादौ गुल्फौ सदाऽवतु ॥ १० ॥ क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः । अङ्गु-लीश्च नखान्पातु पद्महस्तोऽरिनाशनः ॥ ११ ॥ सर्वाङ्गानि मयूरेशो विश्वव्यापी सदाऽवतु । अनुक्तमपि यत्स्थानं धूम्र-केतुः सदाऽवतु ॥ १२ ॥ आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु । प्राच्यां रक्षतु बुद्धीश आग्नेय्यां सिद्धिदायकः ॥ १३ ॥ दक्षिणस्यामुमापुत्रो नैर्ऋत्यां तु गणेश्वरः । प्रतीच्यां विघ्नहर्ताऽव्याद्वायव्यां गजकर्णकः ॥ १४ ॥ कौबेर्यां निधिपः पायादीशान्यामीशनन्दनः । दिवाऽव्या-देकदन्तस्तु रात्रौ संध्यासु विघ्नहृत् ॥ १५ ॥ राक्षसासुरवे-तालग्रहभूतपिशाचतः । पाशाङ्कुशधरः पातु रजःसत्त्वतमः-स्मृतिः ॥ १६ ॥ ज्ञानं धर्मं च लक्ष्मीं च लज्जां कीर्तिं तथा कुलम् । वपुर्धनं च धान्यं च गृहदारान्सुतान् सखीन् ॥ १७ ॥ सर्वायुधधरः पौत्रान् मयूरेशोऽवतात्सदा । कपि-लोऽजाविकं पातु गजाश्वान्विकटोऽवतु ॥ १८ ॥ भूर्जपत्रे लिखित्वेदं यः कण्ठे धारयेत्सुधीः । न भयं जायते तस्य यक्षरक्षःपिशाचतः ॥ १९ ॥ त्रिसंध्यं जपते यस्तु वज्रसा-



रतनुर्भवेत् । यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत्

॥ २० ॥ युद्धकाले पठेद्यस्तु विजयं चाप्नुयाद्ध्रुवम् । मारणोच्चाटनाकर्षस्तम्भमोहनकर्मणि ॥ २१ ॥ सप्तवारं जपेदेतद्दिनानामेकविंशतिम् । तत्तत्फलमवाप्नोति साधको नात्र संशयः ॥ २२ ॥ एकविंशतिवारं च पठेत्तावद्दिनानि यः । कारागृहगतं सद्यो राज्ञा वध्यं च मोचयेत् ॥ २३ ॥ राजदर्शनवेलायां पठेदेतत्त्रिवारतः । स राजानं वशं नीत्वा प्रकृतीश्च सभां जयेत् ॥ २४ ॥ इदं गणेशकवचं कश्यपेन समीरितम् । मुद्गलाय च ते नाथ माण्डव्याय महर्षये ॥२५॥ मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम् । न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ॥ २६ ॥ अनेनास्य कृता रक्षा न बाधाऽस्य भवेत्कचित् । राक्षसासुरवेतालदैत्यदानवसंभवा ॥ २७ ॥

इति श्रीगणेशपुराणे गणेशकवचं संपूर्णम् ।

---

## ७ संकष्टहरणं गणेशाष्टकम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीसंकष्टहरणस्तोत्रमन्त्रस्य श्रीमहागणपतिर्देवता । संकष्टहरणार्थे जपे विनियोगः । ॐ ॐ ॐकाररूपं त्र्यहमिति च परं यत्स्वरूपं तुरीयं त्रैगुण्यातीतनीलं कलयति मनसस्तेजसिन्दूरमूर्तिम् । योगीन्द्रैर्ब्रह्मरन्ध्रैः सकलगुणमयं श्रीहरेन्द्रेण सङ्गं गं गं गं गंग-

णेशं गजमुखमभितो व्यापकं चिन्तयन्ति ॥ १ ॥ वं वं वं विघ्नराजं भजति निजभुजे दक्षिणे न्यस्तशुण्डं क्रं क्रं क्रं क्रोधमुद्रादलितरिपुबलं कल्पवृक्षस्य मूले। दं दं दं दन्तमेकं दधति मुनिमुखं कामधेन्वा निषेव्यं धं धं धं धारयन्तं धनदमतिमयं सिद्धिबुद्धिद्वितीयम् ॥ २ ॥ तुं तुं तुं तुङ्गरूपं गगनपथि गतं व्याप्नुवन्तं दिगन्तान् क्लीं क्लीं क्लींकारनाथं गलितमदमिलल्लोलमत्तालिमालम्। ह्रीं ह्रीं ह्रींकारपिङ्गं सकलमुनिवरध्येयमुण्डं च शुण्डं श्रीं श्रीं श्रीं श्रीश्रयन्तं निखिलनिधिकुलं नौमि हेरम्बबिम्बम् ॥ ३ ॥ लौं लौं लौंकारमाद्यप्रणवमिव मयं मन्त्रमुक्तावलीनां शुद्धं विघ्नेशबीजं शशिकरसदृशं योगिनां ध्यानगम्यम्। डं डं डं डामरूपं दलितभवभयं सूर्यकोटिप्रकाशं यं यं यं यज्ञनाथं जपति मुनिवरा बाह्यमभ्यन्तरं च ॥ ४ ॥ हुं हुं हुं हेमवर्णं श्रुतिगणितगुणं शूर्पकर्णं कृपालुं ध्येयं सूर्यस्य बिम्बं ह्युरसि च विलसत्सर्पयज्ञोपवीतम्। स्वाहाहुंफट्नमोन्तैठंठठसहितैः पल्लवैः सेव्यमानं मन्त्राणां सप्तकोटिप्रगुणितमहिमाधारमीशं प्रपद्ये ॥ ५ ॥ पूर्वं पीठं त्रिकोणं तदुपरि रुचिरं षट्कपत्रं पवित्रं तस्योर्ध्वं शुद्धरेषा वसुदलकमलं वा स्वतेजश्चतुस्रम्। मध्ये हुंकारबीजं तदनु भगवतः स्वाङ्गषट्कं षडस्रे अष्टौ शक्तीश्च सिद्धीर्बहुलगणपतिर्विष्टरश्चाष्टकं च ॥६॥ धर्माद्यष्टौ प्रसिद्धा दशदिशिविदिता वाहनाद्यैः

मुनिकुलमखिलं मन्त्रमुद्रामहेशम् । एवं यो भक्तियुक्तो जपति गणपतिं पुष्पधूपाक्षताद्यैर्नैवेद्यैर्मोदकानां स्तुतियुतविलसद्गीतवादित्रनादैः ॥ ७ ॥ राजानस्तस्य भृत्या इव युवतिकुलं दासवत्सर्वदास्ते लक्ष्मीः सर्वाङ्गयुक्ता जयति च सदनं किंकराः सर्वलोकाः । पुत्राः पुत्र्यः पवित्रा रणभुवि विजयी द्यूतवादेऽपि वीरो यस्येशो विघ्नराजो निवसति हृदये भक्तिभाग्यस्य रुद्रः ॥ ८ ॥

इति संकष्टहरणं गणेशाष्टकस्तोत्रम् ।

---

## ८ गणेशमहिम्नः स्तोत्रम् ।

श्रीगणेशाय नमः ॥ अनिर्वाच्यं रूपं स्तवननिकरो यत्र गलितस्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्यात्र महतः । यतो जातं विश्वं स्थितमपि सदा यत्र विलयः स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः ॥ १ ॥ गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधा रविं सौरा विष्णुं प्रथमपुरुषं विष्णुभजकाः । वदन्त्येकं शाक्ता जगदुदयमूलां परशिवां न जाने किं तस्मै नम इति परं ब्रह्म सकलम् ॥ २ ॥ तथेशं योगज्ञा गणपतिमिमं कर्म निखिलं समीमांसा वेदान्तिन इति परं ब्रह्म सकलम् । अजां सांख्यो ब्रूते सकलगुणरूपां च सततं प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति ॥ ३ ॥



कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणिर्यथा धीर्यस्य स्यात्स

च तदनुरूपो गणपतिः । महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवद्ध निर्ज्योतिर्बिन्दुर्गगनसदृशः किंच सदसत् ॥ ४ ॥ अनेकास्योपाराक्षिकरचरणोऽनन्तहृदयस्तथा नानारूपो विविधवदनः श्रीगणपतिः । अनन्ताह्वः शक्त्या विविधगुणकर्मैकसमये त्वसंख्यातानन्ताभिमतफलदोऽनेकविषये ॥ ५ ॥ न यस्यान्तो मध्यो न च भवति चादिः सुमहतामलिप्तः कृत्वेत्थं सकलमपि त्वं वत्स च पृथक् । स्मृतः संस्मर्तॄणां सकलहृदयस्थः प्रियकरो नमस्तस्मै देवाय सकलसुवन्द्याय महते ॥ ६ ॥ गणेशाद्यं बीजं दहनवनितापल्लवयुतं मनुश्चैकार्णोयं प्रणवसहितोऽभीष्टफलदः । सबिन्दुश्चाङ्गाद्यां गणकऋषिच्छन्दोस्य च निचृत्स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम् ॥ ७ ॥ गकारो हेरम्बः सगुण इति पुंनिर्गुणमयो द्विधाप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः । स चेशश्चोत्पत्तिस्थितिलयकरोऽयं प्रमथको यतो भूतं भव्यं भवति पतिरीशो गणपतिः ॥ ८ ॥ गकारः कण्ठोर्ध्वं गजमुखसमो मर्त्यसदृशो णकारः कण्ठाधो जठरसदृशाकार इति च । अधोभावः कट्यां चरण इति हीशोऽस्य च तनुर्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवःसुवः ॥ ९ ॥ गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम् । गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतं न विज्ञातो नाम्नः सकलमहिमा कीदृग्विधः ॥ १० ॥ गणेशे-

त्याह्वं यः प्रवदति मुहुस्तस्य पुरतः प्रपश्यँस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा। स्वरूपस्य ज्ञानं त्वमुक इति नाम्नास्य भवति प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना ॥ ११ ॥ गणेशो विश्वेऽस्मिन्स्थित इह च विश्वं गणपतौ गणेशो यत्रास्ते धृतिमतिरमैश्वर्यमखिलम् । समुक्तं नामैकं गणपतिपदं मङ्गलमयं तदेकास्ये दृष्टे सकलविबुधास्यक्षणसमम् ॥ १२ ॥ बहुक्लेशैर्व्याप्तः स्मृत उत गणेशे च हृदये क्षणात्क्लेशान्मुक्तो भवति सहसा त्वभ्रचयवत् । वने विद्यारम्भे युधि रिपुभये कुत्र गमने प्रवेशे प्राणान्ते गणपतिपदं चाशु विशति ॥ १३ ॥ गणाध्यक्षो ज्येष्ठः कपिल अपरो मङ्गलनिधिर्दयालुर्हेरम्बो वरद इति चिन्तामणिरजः । वरानीशो ढुण्ढिर्गजवदननामा शिवसुतो मयूरेशो गौरीतनय इति नामानि पठति ॥ १४ ॥ महेशोऽयं विष्णुः सकविरविरिन्दुः कमलजः क्षितिस्तोयं वह्निः श्वसन इति खं त्वद्रिरुदधिः । कुजस्तारः शुक्रो पुरुरुडुबुधोऽगुश्च धनदो यमः पाशी काव्यः शनिरखिलरूपो गणपतिः ॥ १५ ॥ मुखं वह्निः पादौ हरिरपि विधाता प्रजननं रविर्नेत्रे चन्द्रो हृदयमपि कामोऽस्य मदनः । करौ शक्रः कट्यामवनिरुदरं भाति दशने गणेशस्यासन्वै क्रतुमयवपुश्चैव सकलम् ॥ १६ ॥ अनर्घ्यालंकारैररुणवसनैर्भूषिततनुः करीन्द्रास्यः सिंहासनमुपगतो भाति बुधराट् । स्मितास्यात्तन्मध्येप्युदितरविबिम्बोपम-

रुचिः स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा ॥ १७ ॥ समन्तात्तस्यासन्प्रवरमुनिसिद्धासुरगणाः प्रशंसन्तीत्यग्रे विविधनुतिभिः साञ्जलिपुटाः । बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्तनिकरैर्गुणक्रीडामोदप्रमुदविकटाद्यैः सहचरैः ॥ १८ ॥ वशित्वाद्यष्टाष्टादशदिगखिलाल्लोलमनुवाग्धृतिः पादुः खड्गो-ञ्जनरसबलाः सिद्धय इमाः । सदा पृष्ठे तिष्ठन्त्यनिमिषदृशस्त-न्मुखलया गणेशं सेवन्तेऽप्यतिनिकटसूपायनकराः ॥ १९ ॥ मृगाङ्कास्या रम्भाप्रभृतिगणिका यस्य पुरतः सुसङ्गीतं कुर्वन्त्यपि कुतुकगन्धर्वसहिताः । मुदः पारो नात्रेत्यनुप-ममदे दौर्विगलिता स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम् ॥ २० ॥ हरेणायं ध्यातस्त्रिपुरमथने चासुरवधे गणेशः पार्वत्या बलिविजयकालेपि हरिणा । विधात्रा संस्र-ष्टावुरगपतिना क्षोणिधरणे नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा ॥ २१ ॥ अयं सुप्रासादे सुर इव निजानन्दभुवने महान् श्रीमानाद्यो लघुतरगृहे रङ्कसदृशः । शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे स्थितो भूत्वोमाङ्के शिशुगणप-तिर्लालनपरः ॥ २२ ॥ अमुष्मिन्संतुष्टे गजवदन एवापि विबुधे ततस्ते संतुष्टास्त्रिभुवनगताः स्युर्बुधगणाः । दयालु-र्हेरम्बो न च भवति यस्मिंश्च पुरुषे वृथा सर्वं तस्य प्रजन-नमतः सान्द्रतमसि ॥ २३ ॥ वरेण्यो भूशुण्डिर्भृगुगुरुकुजा मुद्गलमुखा ह्यपारास्तद्भक्ता जपहवनपूजास्तुतिपराः ।

गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः ॥ २४ ॥ मृदः काश्चिद्धातोश्छद-विलिखिता वापि दृषदः स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन सहसा । अशुद्धोद्धा द्रष्टा प्रवदति तदाह्वां गणपतेः श्रुता शुद्धो मर्त्यो भवति दुरिताद्विस्मय इति ॥ २५ ॥ बहि-र्द्वारस्योर्ध्वं गजवदनवर्ष्मेन्धनमयं प्रशस्तं वा कृत्वा विवि-धकुशलैस्तत्र निहितम् । प्रभावात्तन्मूर्त्या भवति सदनं मङ्गलमयं विलोक्यानन्दस्तां भवति जगतो विस्मय इति ॥ २६ ॥ सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये मृदो मूर्तिं कृत्वा गणपतितिथौ ढुण्ढिसदृशीम् । समर्चन्त्युत्साहः प्रभवति महान् सर्वसदने विलोक्यानन्दस्तां प्रभवति नृणां विस्मय इति ॥ २७ ॥ तथा ह्येकः श्लोको वरयति महिम्नो गणपतेः कथं स श्लोकेऽस्मिन्स्तुत इति भवेत्संप्रपतिते । स्मृतं नामास्यैकं सकृदिदमनन्ताह्वयसमं यतो यस्यैकस्य स्तवनसदृशं नान्यदपरम् ॥ २८ ॥ गजवदन विभो यद्वर्णितं वैभवं ते त्विह जडपि ममेत्थं चारु तद्दर्शयाशु । त्वमसि च करुणायाः सागरः कृत्स्नदाताप्यति तव भृतकोऽहं सर्वदा चिन्तकोऽस्मि ॥ २९ ॥ सुस्तोत्रं प्रपठतु नित्यमेतदेव स्वानन्दं प्रति गमनेऽप्ययं सुमार्गः । संचिन्त्यं स्वमनसि तत्पदारविन्दं स्थाप्याग्रे स्तवनफलं नतीः करिष्ये ॥ ३० ॥ गणशब्दस्य

माहात्म्यमेतद्यः श्रावयेद्वापि पठेच्च तस्य । क्लेशा लयं यान्ति लभेच्च शीघ्रं स्त्रीपुत्रविद्यार्थगृहं च मुक्तिम् ॥ ३१ ॥

इति श्रीपुष्पदन्तविरचितं श्रीगणेशमहिम्नः स्तोत्रं संपूर्णम् ।

---

## ९ गणेशाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यम उवाच । गणेश हेरम्ब गजाननेति महोदर स्वानुभवप्रकाशिन् । वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदन्तमेवं त्यजत प्रभीताः ॥ १ ॥ अनेकविघ्नान्तक वक्रतुण्ड स्वसंज्ञवासिंश्च चतुर्भुजेति । कवीश देवान्तकनाशकारिन्वदन्त० ॥२ ॥ महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र । परेश धरणीधर एकदन्त वदन्त० ॥ ३ ॥ प्रमोद मोदेति नरान्तकारे षडूर्मिहन्तर्गजकर्ण ढुण्ढे । द्वन्द्वारिसिन्धो स्थिरभावकारिन् वदन्त० ॥ ४ ॥ विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र । अनादिपूज्याखुग सर्वपूज्य वदन्त० ॥ ५ ॥ विधेर्ज लम्बोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन् । सुरासुरैः सेवितपादपद्म वदन्त० ॥ ६ ॥ बरिन्महाखुध्वज शूर्पकर्ण शिवाज सिंहस्थ अनन्तवाह । दितौज विघ्नेश्वर शेषनाभे वदन्त० ॥ ७ ॥ अणोरणीयो महतो महीयो रवेर्ज योगेशज ज्येष्ठराज । निधीश मन्त्रेश च शेषपुत्र वदन्त० ॥ ८ ॥ वरप्रदातरदितेश्च सूनो परात्परज्ञानद तारवक्त्र । गुहाग्रज ब्रह्मप पार्श्वपुत्र वदन्त० ॥ ९ ॥

सिन्धोश्च शत्रो परशुप्रयाणे शमीशपुष्पप्रिय विघ्नहारिन्। दूर्वाभैरेरर्चित देवदेव वदन्त० ॥ १० ॥ धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशान्तिदातः। अमेयमायामितविक्रमेति वदन्त० ॥ ११ ॥ द्विधाचतुर्थीप्रिय कश्यपाच्च धनप्रद ज्ञानपदप्रकाश। चिन्तामणे चित्तविहारकारिन् वदन्त० ॥ १२ ॥ यमस्य शत्रो अभिमानशत्रो विधेर्जहन्तः कपिलस्य सूनो। विदेह स्वानन्द अयोगयोग वदन्त० ॥१३॥ गणस्य शत्रो कमलस्य शत्रो समस्तभावज्ञ च भालचन्द्र। अनादिमध्यान्तमयप्रचारिन् वदन्त० ॥१४॥ विभो जगद्रूप गणेश भूमन् पुष्टेःपते आखुगतेति बोधः। कर्तुश्च पातुश्च तु संहरेति वदन्त० ॥ १५ ॥ इदमष्टोत्तरशतं नाम्नां तस्य पठन्ति ये। शृण्वन्ति तेषु वै भीताः कुरुध्वं मा प्रवेशनम् ॥ १६ ॥ भुक्तिमुक्तिप्रदं ढुण्ढेर्धनधान्यप्रवर्धनम्। ब्रह्मभूतकरं स्तोत्रं जपन्तं नित्यमादरात् ॥ १७ ॥ यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः। धामानि तत्र संभीताः कुरुध्वं मा प्रवेशनम् ॥ १८ ॥

इति श्रीमदान्त्ये मौद्गल्ये गणेशाष्टोत्तरशतनामस्तोत्रं समाप्तम्।

---

## १० संकष्टनाशनगणेशस्तोत्रम्।

श्रीगणेशाय नमः॥ नारद उवाच। प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्। भक्त्या व्यासः स्मरेन्नित्यमायुःकामा-

र्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लम्बोदरं पञ्चमं च षष्ठं विकटमेव च । सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥३॥ नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभोः ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् । संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥७॥ अष्टाभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥८॥

इति श्रीनारदपुराणे संकष्टनाशनं गणेशस्तोत्रं संपूर्णम् ।

---

## ११ गणेशाष्टकम् ।

श्रीगणेशाय नमः ॥ सर्वे ऊचुः । यतोऽनन्तशक्तेरनन्ताश्च जीवा यतो निर्गुणादप्रमेया गुणास्ते । यतो भाति सर्वं त्रिधा भेदभिन्नं सदा तं गणेशं नमामो भजामः ॥ १ ॥ यतश्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो विश्वगोप्ता । तथेन्द्रादयो देवसंघा मनुष्याः सदा० ॥ २ ॥ यतो वह्निभानुर्भवो भूर्जलं च यतः सागराश्चन्द्रमा व्योम वायुः । यतः

स्थावरा जङ्गमा वृक्षसंघाः सदा० ॥३॥ यतो दानवाः किन्नरा यक्षसंघा यतश्चारणा वारणाः श्वापदाश्च । यतः पक्षिकीटा यतो वीरुधश्च सदा० ॥ ४ ॥ यतो बुद्धिरज्ञाननाशो मुमुक्षो-र्यतः संपदो भक्तसंतोषिकाः स्युः । यतो विघ्ननाशो यतः कार्यसिद्धिः सदा० ॥ ५ ॥ यतः पुत्रसंपद्यतो वाञ्छितार्थो यतोऽभक्तविघ्नास्तथाऽनेकरूपाः । यतः शोकमोहौ यतः काम एवं सदा० ॥ ६ ॥ यतोऽनन्तशक्तिः स शेषो बभूव धराधार-णेऽनेकरूपे च शक्तः । यतोऽनेकधा स्वर्गलोका हि नाना सदा० ॥ ७ ॥ यतो वेदवाचो विकुण्ठा मनोभिः सदा नेति नेतीति यत्ता गृणन्ति । परब्रह्मरूपं चिदानन्दभूतं सदा० ॥ ८ ॥ श्रीगणेश उवाच । पुनरूचे गणाधीशः स्तोत्रमे-तत्पठेन्नरः । त्रिसन्ध्यं त्रिदिनं तस्य सर्वकार्यं भविष्यति ॥ ९ ॥ यो जपेदष्टदिवसं श्लोकाष्टकमिदं शुभम् । अष्टवारं चतुर्थ्यां तु सोऽष्ट सिद्धीरवाप्नुयात् ॥ १० ॥ यः पठेन्मास-मात्रं तु दशवारं दिने दिने । स मोचयेद्बन्धगतं राजवध्यं न संशयः ॥ ११ ॥ विद्याकामो लभेद्विद्यां पुत्रार्थी पुत्रमा-प्नुयात् । वाञ्छितांल्लभते सर्वानेकविंशतिवारतः ॥ १२ ॥ यो जपेत्परया भक्त्या गजाननपरो नरः । एवमुक्त्वा ततो देवश्चान्तर्धानं गतः प्रभुः ॥ १३ ॥

इति श्रीगणेशपुराणे उपासनाखण्डे श्रीगणेशाष्टकं संपूर्णम् ।

## १२ एकदन्तस्तोत्रम् ।

श्रीगणेशाय नमः ॥ महासुरं सुशान्तं वै दृष्ट्वा विष्णुमुखाः सुराः । भृग्वादयश्च मुनय एकदन्तं समाययुः ॥ १ ॥ प्रणम्य तु प्रपूज्यादौ पुनस्तं नेमुरादरात् । तुष्टुवुर्हर्षसंयुक्ता एकदन्तं गणेश्वरम् ॥ २ ॥ देवर्षय ऊचुः । सदात्मरूपं सकलादिभूतममायिनं सोऽहमचिन्त्यबोधम् । अनादिमध्यान्तविहीनमेकं तमेकदन्तं शरणं व्रजामः ॥ ३ ॥ अनन्तचिद्रूपमयं गणेशं ह्यभेदभेदादिविहीनमाद्यम् । हृदि प्रकाशस्य धरं स्वधीस्थं तमेक० ॥ ४ ॥ विश्वादिभूतं हृदि योगिनां वै प्रत्यक्षरूपेण विभान्तमेकम् । सदा निरालम्बसमाधिगम्यं तमेक० ॥ ५ ॥ स्वबिम्बभावेन विलासयुक्तं बिन्दुस्वरूपा रचिता स्वमाया । तस्यां स्ववीर्यं प्रददाति यो वै तमेक० ॥ ६ ॥ त्वदीयवीर्येण समर्थभूता माया तया संरचितं च विश्वम् । नादात्मकं ह्यात्मतया प्रतीतं तमेक० ॥ ७ ॥ त्वदीयसत्ताधरमेकदन्तं गणेशमेकं त्रयबोधितारम् । सेवन्त आपुस्तमजं त्रिसंस्थास्तमेक० ॥ ८ ॥ ततस्त्वया प्रेरित एव नादस्तेनेदमेवं रचितं जगद्वै । आनन्दरूपं समभावसंस्थं तमेक० ॥ ९ ॥ तदेव विश्वं कृपया तवैव संभूतमाद्यं तमसा विभातम् । अनेकरूपं ह्यजमेकभूतं तमेक० ॥ १० ॥ ततस्त्वया प्रेरितमेव तेन सृष्टं सुसूक्ष्मं

जगदेकसंस्थम् । सत्त्वात्मकं श्वेतमनन्तमाद्यं तमेक० ॥११॥ तदेव स्वप्नं तपसा गणेश संसिद्धिरूपं विविधं बभूव । सदेकरूपं कृपया तवापि तमेक० ॥ १२ ॥ संप्रेरितं तच्च त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् । तेनैव जाग्रन्मयम-प्रमेयं तमेक० ॥ १३ ॥ जाग्रत्स्वरूपं रजसा विभातं विलोकितं तत्कृपया यदैव । तदा विभिन्नं भवत्येकरूपं तमेक० ॥ १४ ॥ एवं च सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् । बुद्धिप्रदाता गणनाथ एकस्तमेक० ॥ १५ ॥ त्वदाज्ञया भान्ति ग्रहाश्च सर्वे नक्षत्ररूपाणि विभान्ति खे वै । आधारहीनानि त्वया धृतानि तमेक० ॥ १६ ॥ त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः । त्वदाज्ञया संहरको हरोऽपि तमेक० ॥ १७ ॥ यदाज्ञया भूर्जलमध्यसंस्था यदाज्ञयाऽपः प्रवहन्ति नद्यः । सीमां सदा रक्षति वै समुद्रस्तमेक० ॥ १८ ॥ यदाज्ञया देवगणो दिविस्थो ददाति वै कर्मफलानि नित्यम् । यदा-ज्ञया शैलगणोऽचलो वै तमेक० ॥ १९ ॥ यदाज्ञया शेष इलाधरो वै यदाज्ञया मोहप्रदश्च कामः । यदाज्ञया काल-धरोऽर्यमा च तमेक० ॥ २० ॥ यदाज्ञया वाति विभाति वायुर्यदाज्ञयाऽग्निर्जठरादिसंस्थः । यदाज्ञया वै सचराचरं च तमेक० ॥ २१ ॥ सर्वान्तरे संस्थितमेकमूढं यदाज्ञया सर्वमिदं विभाति । अनन्तरूपं हृदि बोधकं वै तमेक०

॥ २२ ॥ यं योगिनो योगबलेन साध्यं कुर्वन्ति तं कः स्तवनेन स्तौति । अतः प्रणामेन सुसिद्धिदोऽस्तु तमेक० ॥ २३ ॥ गृत्समद उवाच । एवं स्तुत्वा च प्रह्लाद देवाः समुनयश्च वै । तूष्णींभावं प्रपद्येव ननृतुर्हर्षसंयुताः ॥ २४ ॥ स तानुवाच प्रीतात्मा ह्येकदन्तः स्तवेन वै । जगाद तान्महाभागान्देवर्षीन्भक्तवत्सलः ॥ २५ ॥ एकदन्त उवाच । प्रसन्नोऽस्मि च स्तोत्रेण सुराः सर्षिगणाः किल । वृणुत वरदोऽहं वो दास्यामि मनसीप्सितम् ॥ २६ ॥ भवत्कृतं मदीयं वै स्तोत्रं प्रीतिप्रदं मम । भविष्यति न संदेहः सर्वसिद्धि-प्रदायकम् ॥ २७ ॥ यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः । पुत्रपौत्रादिकं सर्वं लभते धनधान्यकम् ॥ २८ ॥ गजाश्वादिकमत्यन्तं राज्यभोगं लभेद्ध्रुवम् । भुक्तिं मुक्तिं च योगं वै लभते शान्तिदायकम् ॥ २९ ॥ मारणोच्चाटनादीनि राज्यबन्धादिकं च न । पठतां शृण्वतां नृणां भवेच्च बन्धहीनता ॥ ३० ॥ एकविंशतिवारं च श्लोकांश्चैवैकविंशतिम् । पठते नित्यमेवं च दिनानि त्वेक-विंशतिम् ॥ ३१ ॥ न तस्य दुर्लभं किंचित्त्रिषु लोकेषु वै भवेत् । असाध्यं साधयेन्मर्त्यः सर्वत्र विजयी भवेत् ॥ ३२ ॥ नित्यं यः पठते स्तोत्रं ब्रह्मभूतः स वै नरः । तस्य दर्शनतः सर्वे देवाः पूता भवन्ति वै ॥ ३३ ॥ एवं तस्य वचः श्रुत्वा

प्रहृष्टा देवतर्षयः । ऊचुः करपुटाः सर्वे भक्तियुक्ता गजाननम् ॥ ३४ ॥

इति श्रीएकदन्तस्तोत्रं संपूर्णम् ।

## १३ मयूरेश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सर्वे ऊचुः । परब्रह्मरूपं चिदानन्दरूपं परेशं सुरेशं गुणाब्धिं गुणेशम् । गुणातीतमीशं मयूरेशवन्द्यं गणेशं नताः स्मो नताः स्मो नताः स्मः ॥ १ ॥ जगद्वन्द्यमेकं पराकारमेकं गुणानां परं कारणं निर्विकल्पम् । जगत्पालकं हारकं तारकं तं मयूरेशवन्द्यं नताः स्मो नताः स्मः ॥ २ ॥ महादेवसूनुं महादैत्यनाशं महापूरुषं सर्वदा विघ्ननाशम् । सदा भक्तपोषं परं ज्ञानकोशं मयू० ॥ ३ ॥ अनादिं गुणादिं सुरादिं शिवाया महातोषदं सर्वदा सर्ववन्द्यम् । सुरार्यन्तकं भुक्तिमुक्तिप्रदं तं मयू० ॥ ४ ॥ परं मायिनं मायिनामप्यगम्यं मुनिध्येयमाकाशकल्पं जनेशम् । असंख्यावतारं निजाज्ञाननाशं मयू० ॥ ५ ॥ अनेकक्रियाकारकं श्रुत्यगम्यं त्रयीबोधितानेककर्मादिबीजम् । क्रियासिद्धिहेतुं सुरेन्द्रादिसेव्यं मयू० ॥ ६ ॥ महाकालरूपं निमेषादिरूपं कलाकल्परूपं सदागम्यरूपम् । जनज्ञानहेतुं नृणां सिद्धिदं तं मयू० ॥ ७ ॥ महेशादिदेवैः सदा ध्येयपादं सदा



रक्षकं तत्पदानां हतारिम् । मुदा कामरूपं कृपावारिधिं

तं मयू० ॥ ८ ॥ सदा भक्तिं नाथे प्रणयपरमानन्दसुखदो यतस्त्वं लोकानां परमकरुणामाशु तनुषे । षड्र्मीनां वेगं सुरवर विनाशं नय विभो ततो भक्तिः श्लाघ्या तव भजनतोऽनन्यसुखदात् ॥ ९ ॥ किमस्माभिः स्तोत्रं सकलसुरतापालक विभो विधेयं विश्वात्मन्नगणितगुणानामधिपते । नसंख्याता भूमिस्तव गुणगणानां त्रिभुवने न रूपाणां देव प्रकटय कृपां नोऽसुरहते ॥ १० ॥ मयूरेशं नमस्कृत्य ततो देवोऽब्रवीच्च तान् । य इदं पठते स्तोत्रं स कामाँल्लभतेऽखिलान् ॥ ११ ॥ सर्वत्र जयमाप्नोति मानवायुः श्रियं पराम् । पुत्रवान्धनसंपन्नो वश्यतामखिलं नयेत् ॥ १२ ॥ सहस्रावर्तनात्कारागृहस्थं मोचयेज्जनम् । नियुतावर्तनान्मर्त्यो साध्यं यत्साधयेत्क्षणात् ॥ १३ ॥

इति श्रीगणेशपुराणे उत्तरखण्डे बालचरित्रे
मयूरेश्वरस्तोत्रं संपूर्णम् ।

---

## १४ गणेशाष्टकम् ।

श्रीगणेशाय नमः ॥ गणपतिपरिवारं चारुकेयूरहारं गिरिधरवरसारं योगिनीचक्रचारम् । भवभयपरिहारं दुःखदारिद्र्यदूरं गणपतिमभिवन्दे वक्रतुण्डावतारम् ॥१॥ अखिलमलविनाशं पाणिना हस्तपाशं कनकगिरिनिकाशं सूर्यकोटिप्रकाशम् । भज भवगिरिनाशं मालतीतीरवासं गणपतिम-

भिवन्दे मानसे राजहंसम् ॥ २ ॥ विविधमणिमयूखैः शोभमानं विदूरैः कनकरचितचित्रं कण्ठदेशे विचित्रम् । दधति विमलहारं सर्वदा यत्नसारं गणपतिमभिवन्दे वक्रतुण्डावतारम् ॥३॥ दुरितगजममन्दं वारुणी चैव वेदं विदितमखिलनादं नृत्यमानन्दकन्दम् । दधति शशिसुवक्रमङ्कुशं यो विशेषं गणपतिमभिवन्दे सर्वदानन्दकन्दम् ॥ ४ ॥ त्रिनयनयुतभाले शोभमाने विशाले मुकुटमणिसुढाले मौक्तिकानां च जाले । धवलकुसुममाले यस्य शीर्ष्णः सताले गणपतिमभिवन्दे सर्वदा चक्रपाणिम् ॥ ५ ॥ वपुषि महति रूपं पीठमादौ सुदीपं तदुपरि रसकोणं यस्य चोर्ध्वं त्रिकोणम् । गजमितदलपद्मं संस्थितं चारुछद्मं गणपतिमभिवन्दे कल्पवृक्षस्य वृन्दे ॥६॥ वरदविशदहस्तं दक्षिणं यस्य हस्तं सदयमभयदं तं चिन्तये चित्तसंस्थम् । शबलकुटिलशुण्डं चैकतुण्डं द्वितुण्डं गणपतिमभिवन्दे सर्वदा वक्रतुण्डम् ॥ ७ ॥ कल्पद्रुमाधःस्थितकामधेनुं चिन्तामणिं दक्षिणपाणिशुण्डम् । बिभ्राणमत्यद्भुतचित्तरूपं यः पूजयेत्तस्य समस्तसिद्धिः ॥ ८ ॥ व्यासाष्टकमिदं पुण्यं गणेशस्तवनं नृणाम् । पठतां दुःखनाशाय विद्यां स श्रियमश्नुते ॥ ९ ॥

इति श्रीपद्मपुराणे उत्तरखण्डे व्यासविरचितं गणेशस्तोत्रं संपूर्णम् ।

## १५ महागणपतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशयप्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् । आनन्दप्लवमानबोधमधुरामोदच्छटामेदुरं तं भूमानमुपास्महे परिणतं दन्तावलास्यात्मना ॥ १ ॥ तारश्रीपरशक्तिकामवसुधारूपानुगं यं विदुस्तस्मै स्तात्प्रणतिर्गणाधिपतये यो रागिणाभ्यर्थ्यते । आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं स्वामिन्मे वशमानयेति सततं स्वाहादिभिः पूजितः ॥ २ ॥ कल्लोलाञ्चलचुम्बिताम्बुदतताविक्षुद्रवाम्भोनिधौ द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि । मूले कल्पतरोर्महामणिमये पीठेऽक्षराम्भोरुहे षट्कोणाकलितत्रिकोणरचनासत्कर्णिकेऽमुं भजे ॥ ३ ॥ चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विजव्रीह्यग्रोत्पलपाशपङ्कजकरं शुण्डाग्रजाग्रद्धटम् । आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद्भूषया माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ॥ ४ ॥ दानाम्भःपरिमेदुरप्रसृमरव्यालम्बिरोलम्बभृत्सिन्दूरारुणगण्डमण्डलयुगव्याजात्प्रशस्तिद्वयम् । त्रैलोक्येष्टविधानवर्णसुभगं यः पद्मरागोपमं धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ॥ ५ ॥ भ्राम्यन्मन्दरघूर्णनापरवशक्षीराब्धिवीचिच्छटास-

च्छागाश्लचामरव्यतिकरश्रीगर्वसर्वंकषाः । दिक्कान्तावनसा-

रचन्दनरसासाराश्रयन्तां मनः स्वच्छन्दप्रसरप्रलिप्तवियतो हेरम्बदन्तत्विषः ॥ ६ ॥ मुक्ताजालकरम्बितप्रविकसन्माणिक्यपुञ्जच्छटा कान्ताः कम्बुकदम्बचुम्बितवनाभोगप्रवालोपमाः । ज्योत्स्नापूरतरङ्गमन्थरतरत्सन्ध्यावयस्याश्चिरं हेरम्बस्य जयन्ति दन्तकिरणाकीर्णाः शरीरत्विषः ॥ ७ ॥ शुण्डाग्राकलितेन हेमकलशेनावर्जितेन क्षरन्नानारत्नचयेन साधकजनान्संभावयन्कोटिशः । दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भवत्कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥ ८ ॥ हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया बिभ्रत्याम्बुरुहे समं मधुरिपुस्ते शङ्खचक्रे वहन् । न्यग्रोधस्य तले सहाद्रिसुतया शंभुस्तथा दक्षिणे बिभ्राणः परशुं त्रिशूलमितया देव्या धरण्या सह ॥ ९ ॥ पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले बिभ्रत्या सममैक्षवं धनुरिषून्पौष्पान्वहन्पञ्च च । वामे चक्रगदाधरः स भगवान्क्रोडः प्रियङ्गोस्तले हस्तोद्यच्छुकशालिमञ्जरिकया देव्या धरण्या सह ॥ १० ॥ षट्कोणाश्रिषु षट्सु षट्गजमुखाः पाशाङ्कुशाभीवरान्बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्मपुञ्जत्विषः । आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः पश्चात्पार्श्वगतोऽस्य विघ्न इति यो यो विघ्नकर्तेति च ॥ ११ ॥ आमोदादिगणेश्वरप्रियतमास्तत्रैव नित्यं स्थिताः कान्ताश्लेषरसज्ञमन्थरदृशः सिद्धिः समृद्धि-

स्ततः। कान्तिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते सान्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ॥ १२ ॥ आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सिता लोहितौ वर्षन्तौ वसु पार्श्वयोर्विलसतस्तौ शङ्खपद्मौ निधी। अङ्गान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रयास्तद्वाह्ये कुलिशादयः परिपतत्कालानलज्योतिषः ॥ १३ ॥ इत्थं विष्णुशिवादितत्त्वतनवे श्रीवक्रतुण्डाय हुंकाराक्षिप्तसमस्तदैत्यपृतनाव्राताय दीप्तत्विषे ॥ आनन्दैकरसावबोधलहरीविध्वस्तसर्वोर्मये सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ॥१४॥ सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटीकाटिव्याटीकमानद्युमणिसममणिश्रेणिभावेणिकानाम्। राजन्नीराजनश्रीसुखचरणनखद्योतविद्योतमानः श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः ॥ १५ ॥ एतेन प्रकटरहस्यमन्त्रमालागर्भेण स्फुटतरसंविदा स्तवेन। यः स्तौति प्रचुरतरं महागणेशं तस्येयं भवति वशंवदा त्रिलोकी ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीराघवचैतन्यविरचितं महागणपतिस्तोत्रं समाप्तम्।

---

## १६. गणपतिस्तवः।

श्रीगणेशाय नमः ॥ ऋषिरुवाच। अजं निर्विकल्पं निराकारमेकं निरानन्दमानन्दमद्वैतपूर्णम्। परं निर्गुणं निर्वि-

शेषं निरीहं परब्रह्मरूपं गणेशं भजेम ॥ १ ॥ गुणातीतमानं चिदानन्दरूपं चिदाभासकं सर्वगं ज्ञानगम्यम् । मुनिध्येयमाकाशरूपं परेशं परब्रह्मरूपं गणेशं भजेम ॥ २ ॥ जगत्कारणं कारणज्ञानरूपं सुरादिं सुखादिं गुणेशं गणेशम् । जगद्व्यापिनं विश्ववन्द्यं सुरेशं परब्रह्मरूपं गणेशं भजेम ॥३॥ रजोयोगतो ब्रह्मरूपं श्रुतिज्ञं सदा कार्यसक्तं हृदाऽचिन्त्यरूपम् । जगत्कारणं सर्वविद्यानिदानं परब्रह्मरूपं गणेशं नताः स्मः ॥ ४ ॥ सदा सत्ययोग्यं मुदा क्रीडमानं सुरारीन्हरन्तं जगत्पालयन्तम् । अनेकावतारं निजज्ञानहारं सदा विश्वरूपं गणेशं नमामः ॥ ५ ॥ तमोयोगिनं रुद्ररूपं त्रिनेत्रं जगद्धारकं तारकं ज्ञानहेतुम् । अनेकागमैः स्वं जनं बोधयन्तं सदा सर्वरूपं गणेशं नमामः ॥ ६ ॥ नमः स्तोमहारं जनाज्ञानहारं त्रयीवेदसारं परब्रह्मसारम् । मुनिज्ञानकारं विदूरे विकारं सदा ब्रह्मरूपं गणेशं नमामः ॥ ७ ॥ निजैरोषधीस्तर्पयन्तं कराद्यैः सुरौघान्कलाभिः सुधास्राविणीभिः । दिनेशांशुसंतापहारं द्विजेशं शशाङ्कस्वरूपं गणेशं नमामः ॥ ८ ॥ प्रकाशस्वरूपं नमो वायुरूपं विकारादिहेतुं कलाभारभूतम् । अनेकक्रियानेकशक्तिस्वरूपं सदा शक्तिरूपं गणेशं नमामः ॥ ९ ॥ प्रधानस्वरूपं महत्तत्त्वरूपं धराचारिरूपं दिगीशादिरूपम् । असत्सत्स्वरूपं जगद्धेतुरूपं सदा विश्वरूपं गणेशं नताः स्मः ॥ १० ॥ त्वदीये मनः स्थापये-

दङ्घ्रियुग्मे जनो विघ्नसंघातपीडां लभेत। लसत्सूर्यबिम्बे विशाले स्थितोऽयं जनो ध्वान्तपीडां कथं वा लभेत ॥११॥ वयं भ्रामिताः सर्वथाऽज्ञानयोगादलब्धास्तवाङ्घ्रिं बहून्वर्षपूगान्। इदानीमवाप्तास्तवैव प्रसादात्प्रपन्नान्सदा पाहि विश्वंभराद्य ॥ १२ ॥ एवं स्तुतो गणेशस्तु संतुष्टोऽभून्महामुने। कृपया परयोपेतोऽभिधातुमुपचक्रमे ॥ १३ ॥

इति श्रीमदृषिप्रणीतो गणपतिस्तवः संपूर्णः ॥ ६ ॥

---

## १७ छन्दोबोधकं गणेशस्तोत्रम्। *

श्रीगणेशाय नमः ॥ आर्या । जयति गणेशो देवो हर्ता विघ्नस्य सकलभक्तानाम्। अनुरक्तानां लोके सिद्धिप्रद एष विख्यातः ॥ १ ॥ गीतिः। अमलकमलदलनेत्रं शुण्डादण्डेन कमलपुष्पं यः। विनिवेशयन्तमास्ये नौमि गणेशं तथानिशं वन्दे ॥ २ ॥ उपगीतिः । देवासुरनरवृन्दैर्वन्दितपादाम्बुजः शीघ्रम्। संतनुते योऽभीष्टं तेन समः कोऽन्यदेवोऽस्ति ॥३॥

---

* स्तोत्रस्यास्य परापूजायाश्चाशुद्धिप्रचुरमेकमेव पुस्तकमुपलभमानैरपि तत्सौन्दर्यापहृतमानसैरस्माभिस्तन्मुद्रणमीहमानैर्यथामति परिशोधयद्भिः केषुचित्स्थलेष्वादर्शान्तरव्यतिरेकेण शुद्धपाठस्य दुरूहतां पश्यद्भिस्तत्र तत्र चिन्त्यतासूचकं चिह्नं निवेशितम्।

अक्षरपङ्क्तिः । मूषिकपत्रं सिन्धुरवक्त्रम् । भक्तजनानामभी-ष्टदमीडे ॥ ४ ॥ शशिवदना । गणपतिमीशं प्रणतजनानाम् । अभिलषितानि प्रददतमीडे ॥ ५ ॥ मदलेखा । प्रश्च्योतन्मदलेखं तं स्तम्बेरमवक्त्रम् । पूज्यं सर्वजनानां संपत्त्यायभिवन्दे ॥ ६ ॥ पथ्यम् । महागणपतिर्गौरीगिरीशकुलनायकः । सर्वैः सर्वत्र संपूज्यः सदा विजयतेतराम् ॥ ७ ॥ माणवकाक्रीडनकम् । यच्चरणाम्भोजरजो मूर्ध्नि निधाय त्रिदशाः । सिद्धमनोभीष्टवरास्तं शिरसाहं विनमे ॥ ८ ॥ नगस्वरूपिणी । नमद्विभूतिदायकं समस्तविघ्नदायकम् । स्वरक्तभक्तपायकं नमास्यहं विनायकम् ॥ ९ ॥ विद्युन्माला । उद्यद्भानुद्रुच्छद्वाभिस्तुल्याभायद्गात्रेर्भासः। विघ्नध्वान्तक्षोदे दक्षा हेरम्बोऽसौ पातात्पातात् ॥ १० ॥ चम्पकमाला । देवगणालीमूर्धिगतोद्युन्मणिमध्याभाभिरलम् । योऽविरतं नीराजनया भाति स नाथो मे गण्यः ॥ ११ ॥ मणिमध्या । चम्पकमालाश्रीयुतभाभिर्यस्य शरीरं भाति जरांसः । विघ्नतमोघ्नोऽसौ मम भूयाच्छ्रीगणनाथो मूषिकयानः ॥ १२ ॥ हंसी । विभ्राजद्भिश्चरणकुसुमैः पूर्णक्षैर्दशभिरमलैः । संस्मर्तॄणां दिशति नियतं ध्वान्तध्वंसं जयति गणपः ॥ १३ ॥ शालिनी । विद्वद्वृन्दैर्गीयमानाच्छकीर्तिः शुण्डादण्डभ्राजदाश्चर्यमूर्तिः । विच्छिन्नोद्यद्विघ्नसंतानमूर्तिर्मान्या तस्मात्सर्वकामस्य पूर्तिः ॥ १४ ॥ दोधकम् । मूषिकवाहनमीश्वरपुत्रं मोदकशो-

भितछन्दरवक्रमम् । भालगतामलवर्णविचित्रं नौम्यनिशं ननु विघ्नलवित्रम् ॥ १५ ॥ इन्द्रवज्रा । सिन्दूरपूरारुणभालदेशो नागोपवीताद्भुतभातवेशः । तुन्दोल्लसच्चारुपिचण्डदेशः शूर्पाभकर्णोड्डयिताघकेशः ॥ १६ ॥ उपजातिः । विलाससंतुष्यदुमामहेशो नागोपवीताद्भुतभातवेशः । तुन्दोल्लसच्चारुपिचण्डदेशः शूर्पाभकर्णोड्डयिताघकेशः ॥ १७ ॥ सिन्दूरपूरारुणभालदेशो नागोपवीताद्भुतभातवेशः। मनुष्ययक्षोरगदेवतेशः शूर्पाभकर्णोड्डयिताघकेशः ॥ १८ ॥ विलाससंतुष्यदुमामहेशो नागोपवीताद्भुतभातवेशः । मनुष्ययक्षोरगदेवतेशः शूर्पाभकर्णोड्डयिताघकेशः ॥ १९ ॥ सिन्दूरपूरारुणभालदेशो विधूतविघ्नावलिसन्निवेशः । मनुष्ययक्षोरगदेवतेशः शूर्पाभकर्णोड्डयिताघकेशः ॥ २० ॥ विलाससंतुष्यदुमामहेशो विधूतविघ्नावलिसन्निवेशः । मनुष्ययक्षोरगदेवतेशः शूर्पाभकर्णोड्डयिताघकेशः ॥ २१ ॥ विलाससंतुष्यदुमामहेशो नागोपवीताद्भुतभातवेशः । तुन्दोल्लसच्चारुपिचण्डदेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २२ ॥ विलाससंतुष्यदुमामहेशो नागोपवीताद्भुतभातवेशः । तुन्दोल्लसच्चारुपिचण्डदेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २३ ॥ सिन्दूरपूरारुणभालदेशो विधूतविघ्नावलिसन्निवेशः । तुन्दोल्लसच्चारुपिचण्डदेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २४ ॥ विलाससंतुष्यदुमामहेशो विधूतविघ्नावलिसन्निवेशः । तुन्दोल्लसच्चारुपिचण्डदेशः श्रुतौ

श्रुतो यो हि परावरेशः ॥ २५ ॥ सिन्दूरपूरारुणभालदेशो नागोपवीताद्भुतभातवेशः। मनुष्ययक्षोरगदेवतेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २६ ॥ विलाससंतुष्यदुमामहेशो नागोपवीताद्भुतभातवेशः । मनुष्ययक्षोरगदेवतेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २७ ॥ सिन्दूरपूरारुणभालदेशो विधूतविघ्नावलिसन्निवेशः। मनुष्यरक्षोरगदेवतेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २८॥ उपेन्द्रवज्रा । विलाससंतुष्यदुमामहेशो विधूतविघ्नावलिसन्निवेशः । मनुष्ययक्षोरगदेवतेशः श्रुतौ श्रुतो यो हि परावरेशः ॥ २९ ॥ रथोद्धता । पर्शुपाणिरखिलेष्टदायको विघ्नवारहरणो विनायकः। वज्रदन्तगतिरेकदन्तको मां प्रसीदतु सदापदन्तकः ॥ ३० ॥ स्वागता। विघ्नवृन्दतमसां दिननाथः पापपावकशमेम्बरपाथः। सर्वलोकहितसद्गुणनाथः सर्वदा विजयते गणनाथः ॥ ३१ ॥ वैश्वदेवी। विश्वैर्देवैर्यो वन्दिताङ्घ्र्यब्जयुग्मः शुण्डादण्डाग्रे मोदकं चारु गृह्णन्। श्च्योतद्दानालीलीनगुञ्जद्द्विरेफो (रेफोरेफाणां) सोऽस्ति गुण्यः शरण्यः ॥ ३२ ॥ तोटकम्। न वयं गिरिजां न गिरीशपदं विनमे गणये न सुरेन्द्रपदम्। मदयुक्तगजाननसेवनतः कलये किल सर्वविधं स्वशिवम् ॥ ३३ ॥ भुजङ्गप्रयातम्। यजामो गणेशं भजामो गणेशं जयामो गणेशं वदामो गणेशम्। सरामो गणेशं स्मरामो गणेशं नमामो गणेशं नमामो गणेशम् ॥ ३४ ॥ प्रमिताक्षरा। यदि पश्चि-

वक्त्रपदपद्मयुगं हृदि चिन्तयेय रुचियुक्तमनाः । न मनाक्-दान्यविबुधाभजनादकुतोभयस्य मम भीर्भवति ॥ ३५ ॥ द्रुतविलम्बितम् । गणपतेश्चरणौ करणौ मुदः सुजनताशरणे सततं श्रये । स्वभरणौ हरणौ नमतां हृदः प्रणमतां वरणौ सुखसंपदाम् ॥ ३६ ॥ हरिणप्लुता । विमलैक्षवभक्षणतोषि-तोऽभिनवकोमलदौर्विकपूजितः । सदयः सततं सदयः सतां विजयते सुरराड्हि गणाधिपः ॥३७॥ इन्द्रवंशा । प्रत्यूहतूला-लिकृशानुसन्निभः श्रेयस्तरुव्यामुदम्बुदप्रभः । विश्वेष्टपद्माकर-तिग्मदीधितिर्दुष्टौघविध्वंसनकालसंस्थितिः ॥ ३८ ॥ वंश-स्थम् । सदा समस्तैरमरैर्निषेवितो मनोरथास्यैः श्रुतिसूक्ति-देवितः । करैश्चतुर्भिश्चतुरिष्टदायको विभाति सोऽयं गणरा-ड्विनायकः ॥ ३९ ॥ प्रभावती । यस्याङ्घ्रियं जनपरायणा जनाः कुर्वन्ति नैव विबुधान्तराश्रयम् । सोऽयं मम प्रमथपते-रपत्यकं श्रोता सदा भवतु भवाब्धिपारदः ॥ ४० ॥ प्रहर्षिणी । यत्तेजः सकलजगन्निदानभूतं निर्दिष्टं मुनिभिरतिश्रु-तिप्रमाणैः । तल्लीलामनुविदधन्महेशसद्मन्यन्यत्र प्रचरति देहिनामिभास्यः ॥ ४१ ॥ वसन्ततिलका । ब्रह्माण्डख-ण्डयुगलानुकृतौ पटीयः कुम्भद्वयं यदयमीशसुतो बिभर्ति । मन्ये सुवस्य जगतः कृतये विपत्तेर्नाशाय चामृतविषैः परिपूरितं तत् ॥ ४२ ॥ मालिनी । मदनकदनकर्तुः सूनुरु-द्भिन्नपद्मायतदलनयनोऽयं लोककल्याणकर्ता । जगति न

तद्दतेऽस्ति ध्यायतः साध्यसिद्ध्यै प्रमथनपतुरीशः कोटि-
विघ्नव्रजानाम् ॥ ४३ ॥ शिखरिणी । समुज्जृम्भज्जृम्भाप्र-
कटविकटस्फारलपनोच्चलद्गण्डग्रावोद्गतमदनदीनिर्जररवः ।
समन्ताद्गुञ्जद्भिर्मधुकरचयैराहततनुर्गणेशश्शीत्कारैर्विदलित-
विपत्को विजयते ॥ ४४ ॥ हरिणी । विदलितमदासारा-
सक्तभ्रमद्भ्रमरावलीविलुलितलसच्छुण्डादण्डः प्रसन्नमना
मनाक् । अरुणनयनः सिन्दूरन्दुश्रियोर्जितविश्वसृड्विततथप-
रहरित्सन्ध्याशोभां जयद्द्विरदाननः ॥ ४५ ॥ पृथ्वी । अपा-
रविषयाम्बुधिप्रमथनोत्थसूक्ष्मक्षणप्रणश्वरसुखावलीविलुभितं
मनो मेऽधुना । विसारिकुसुमस्रजे विहितसेवदेवव्रजे गणे-
शपदपङ्कजेऽनिशमिदं मिलिन्दायताम् ॥ ४६ ॥ मन्दा-
क्रान्ता । मन्दं मन्दं धरति चरणौ मागमद्भूतलेखे बुद्ध्वा
बुद्ध्वा त्यजति न मितिं माच्युतत्वं स्वभावात् । स्मृत्वा
स्मृत्वा श्रुतिषु कथितामात्मनः कीर्तिमग्र्यां पोषं पोषं श्रित-
जगदयं कुञ्जरास्यो विभाति ॥ ४७ ॥ शार्दूलविक्रीडितम् ।
ब्रह्माण्डाखिलखण्डयुग्मसहजप्रोद्भासि कुम्भद्वयं तार्क्ष्याक्षा-
मच्छपक्षपक्षदलनप्रोल्लासि कर्णद्वयम् । बिभ्रद्बाहुचतुष्टयं शशि-
कलाकारं रदं चैकतस्तं वृन्दारकवृन्दवन्दितपदं श्रीमद्गणेशं
भजे ॥ ४८ ॥ स्रग्धरा । प्रोद्यत्तिग्मांशुरश्मिच्छुरितसरसि-
जव्रातसंघातगुञ्जद्रोलम्बैर्विश्यमानप्रकटकटघटोद्घातभूच्चण्ड-
प्रचण्डः । शुण्डादण्डप्रसारप्रशमितसुमहस्स्वीयपक्षान्तरायो

रायो विभ्राजदाया जनयतु जगतामीश्वरः कुञ्जरास्यः॥ ४९ ॥ चण्डवृष्टिप्रपातो दण्डकः । वसुशरभुजगेन्दुभिः १९५८ संमिते वैक्रमे वत्सरे माघमासे दले श्यामले । सरसिजतिथौ बुधे वासरे छन्दसां बोधनायात्मभूछन्दसा । अकृतविबुधमौलि- मध्यस्थचण्डांशुरश्मिप्रभाभानुनीराजना । महितगणपतेः स्तुतिं माथुरस्तत्कृपाचण्डदृष्टिप्रपातेन बुद्धिं भूयात् ॥ ५० ॥

इति श्रीमन्महागणपतिप्रेरितधिया मालवशुक्लमथुरानाथेन कृतं छन्दोबोधकं गणेशस्तोत्रं सम्पूर्णम् ।

---

## १८ गणेशस्तोत्रम् ॥

श्रीगणेशाय नमः ॥ जय देव गजानन प्रभो जय सर्वा- सुरगर्वभेदक । जय संकटपाशमोचन प्रणवाकार विनाय- काव माम् ॥ १ ॥ तव देव जयन्ति मूर्तयः कलितागण्यसु- पुण्यकीर्तयः । मनसा भजतां हतार्तयः कृतशीघ्राधिककाम- पूर्तयः ॥ २ ॥ तव रम्यकथास्वनादरः स नरो जन्मलयै- कमन्दिरम् । न परत्र न चेह सौख्यभाङ्निजदुष्कर्मवशा- द्विमोहभाक् ॥३॥ गजवक्त्र तवाङ्घ्रिपङ्कजे ध्वजवज्राङ्कुशुते सदा भजे । तव मूर्तिमहं परिष्वजे त्वयि हृन्मेऽस्तु सुमूप- कध्वजे ॥ ४ ॥ त्वदृते हि गजानन प्रभो नहि भक्तौघसुखौ- घदायकः । सुदृढा मम भक्तिरस्तु ते चरणाब्जे विबुधेश विश्वपाः ॥ ५ ॥ फलपूरगदेक्षुकार्मुकैर्युत रुक्चक्रधराब्ज-

पाशधृक् । अव वारिजशालिमञ्जरीरदधृग्घनघटाब्यशुण्ड माम् ॥ ६ ॥ करयुग्म छहेमशृङ्खल द्विजराजाब्यरू तुन्दि-लोदर । शशिसुप्रभ विघ्नया युत स्तनभारानमितेब्य रक्ष माम् ॥ ७ ॥ शशिभास्करवीतिहोत्रहक्शुभसिन्दूररुचे विनायक । द्विपवक्त्र महाहिभूषण त्रिदिवेशासुरवन्द्य पाहि माम् ॥ ८ ॥ सृणिपाशवरद्विजैर्युत द्विजराजार्धक मूषक-ध्वज । शुभलोहितचन्दनोक्षित श्रुतिविद्याभयदायकात्र माम् ॥ ९ ॥ स्मरणात्तव शंभुविष्ण्वजेन्द्रिनशक्रादिसुराः कृतार्थ-ताम् । गणपाऽऽसुरघौघभञ्जन द्विपराजास्य रुदैव पाहि माम् ॥ १० ॥ शरणं भगवान्विनायकः शरणं मे सततं च सिद्धिका । शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥ ११ ॥ गलद्दानगण्डं महाहस्तितुण्डं सुपर्वप्रचण्डं धृतार्धे-न्दुखण्डम् । करास्फोटिताण्डं महाहस्तदण्डं हताब्यारिसुण्डं भजे वक्रतुण्डम् ॥ १२ ॥ गणनाथ निबन्धसंस्तवौ कृप-याऽङ्गीकुरु मत्कृताविमौ । इदमेव सदा प्रदीयतां करुणा मय्यतुलाऽस्तु सर्वदा ॥ १३ ॥

इति श्रीगोपीनाथदीक्षितविरचितं गणेशस्तोत्रं संपूर्णम् ।

---

## १९ गणेशकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीगणपतिकवचस्तोत्रमन्त्रस्य भृगुर्ऋषिः । अनुष्टुप् छन्दः । गजाननो देवता । मम

सिद्ध्यर्थे जपे विनियोगः ॥ अथ ध्यानम् ॥ गजवदनमचिन्त्यं तीक्ष्णदंष्ट्रं त्रिनेत्रं बृहदुदरमशेषं भूतराजं पुराणम् । अमरवरसुपूज्यं रक्तवर्णं सुरेशं पशुपतिसुतमीशं विघ्नराजं नमामि ॥ १ ॥ शिरो महेशपुत्रस्तु भालं पातु विनायकः । त्रिनेत्रः पातु मे नेत्रे शूर्पकर्णस्तथा श्रुती ॥ २ ॥ हेरम्बो रक्षतु घ्राणं मुखं पातु गजाननः । जिह्वां पातु गणेशो मे कण्ठं श्रीकण्ठवल्लभः ॥ ३ ॥ स्कन्धौ महाबलः पातु भुजौ मे पातु विघ्नहा । करौ परशुभृत्पातु हृदयं स्कन्दपूर्वजः ॥४॥ मध्यं लम्बोदरः पातु नाभिं सिन्दूरभूषितः । जघने पार्वतीपुत्रो गुह्यं पातु च पाशभृत् ॥ ५ ॥ जानुनी जगतां नाथो जङ्घे मूषकवाहनः । गुल्फौ पद्मासनः पातु हृदयं दैत्यदर्पहा ॥ ६ ॥ एकदन्तोऽग्रतः पातु पृष्ठे पातु गणाधिपः । पार्श्वयोर्मोदकाहारो दिवि दिक्षु च सिद्धिदः ॥ ७ ॥ व्रजतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा । चतुर्थीवल्लभो देवः पातु मे भुक्तिमुक्तिदः ॥ ८ ॥ इदं पवित्रं यः स्तोत्रं चतुर्थ्यां नियतः पठेत् । सिन्दूररक्तपुष्पैश्च दूर्वया पूज्य विघ्नपम् ॥ ९ ॥ राजा राजसुतो वाऽपि राजपत्नी कुलं बलम् । तस्यावश्यं भवेद्वश्यं विघ्नराजप्रसादतः ॥ १० ॥ समन्त्रयन्त्रं यः स्तोत्रं करे संलिख्य धारयेत् । धनधान्यसमृद्धिश्च भवत्येव न संशयः ॥ ११ ॥ वाग्भवं कामराजस्य माया चादौ त्रिधीयताम् । हूमन्ते वक्रतुण्डाय मध्ये न्यस्य समुन्मनुम् ॥१२॥

रसलक्षसदैकाग्रं षडङ्गं न्यासपूर्वकम् । हुत्वा तदन्ते विधिवदष्टद्रव्यं पयोघृतम् ॥ १३ ॥ यं यं काममभिध्यायन्कुरुते कर्म किंचन । तं तं सर्वमवाप्नोति वक्रतुण्डप्रसादतः ॥ १४ ॥ भृगुप्रोक्तमिदं स्तोत्रं पठते भुवि मानवः । भवेदव्याधितैश्वर्यः स गणेशप्रसादतः ॥ १५ ॥

इति श्रीब्रह्माण्डपुराणे वक्रतुण्डकवचस्तोत्रं संपूर्णम् ।

---

## २० श्रीविघ्नेशमानसपूजास्तोत्रम् ।

श्रीगणेशाय नमः ॥ गृत्समद उवाच ॥ विघ्नेशवीर्याणि विचित्रकाणि बन्दीजनैर्मागधकैः स्मृतानि । श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मङ्गलकं कुरुष्व ॥ १ ॥ एवं मया प्रार्थितो विघ्नराजश्चित्तेन चोत्थाय बहिर्गणेशः । तं निर्गतं वीक्ष्य नमन्ति देवाः शम्भ्वादयो योगिमुखास्तथाऽहम् ॥ २ ॥ शौचादिकं ते परिकल्पयामि हेरम्ब वै दन्तविशुद्धिमेवम् । वस्त्रेण संप्रोक्ष्य मुखारविन्दं देवं सभायां विनिवेशयामि ॥ ३ ॥ द्विजादिसर्वैरभिवन्दितं च शुकादिभिर्मोदसुमोदकाद्यैः । संभाष्य चालोक्य समुत्थितं तं सुमण्डपं कल्प्य निवेशयामि ॥ ४ ॥ रत्नैः सुदीप्तैः प्रतिबिम्बितं तं पश्यामि चित्तेन विनायकं च । तत्रासनं रत्नसुवर्णयुक्तं संकल्प्य देवं विनिवेशयामि ॥ ५ ॥ सिद्ध्या च बुद्ध्या सह विघ्नराज पाद्यं कुरु प्रेमभरेण सर्वैः । सुवासितं नीरमथो गृहाण

चित्तेन दत्तं च सुखोष्णभावम् ॥ ६ ॥ ततः सुवस्त्रेण गणेशपादौ संप्रोक्ष्य दूर्वादिभिरर्चयामि। चित्तेन भावः प्रियदीनबन्धो मनोविलीनं कुरु ते पदाब्जे ॥ ७ ॥ कर्पूरएलादिसुवासितं तु सुकल्पितं तोयमथो गृहाण। आचम्य तेनैव गजानन त्वं कृपाकटाक्षेण विलोकयाऽऽशु ॥ ८ ॥ प्रवालमुक्ताफलहारकाद्यैः सुसंस्कृतं ह्यन्तरभावकेन। अनर्घ्यमर्घ्यं सफलं कुरुष्व मया प्रदत्तं गणराज ढुण्ढे ॥ ९ ॥ सौधं त्रियुक्तं मधुपर्कमाद्यं संकल्पितं भावयुतं गृहाण। पुनस्तथाऽऽचम्य विनायक त्वं भक्तांश्च भक्तेश सुरक्षयाशु ॥ १० ॥ सुवासितं चम्पकजातिकाद्यैस्तैलं मया कल्पितमेव ढुण्ढे। गृहाण तेन प्रविमर्दयामि सर्वाङ्गमेवं तव सेवनाय ॥ ११ ॥ ततः सुखोष्णेन जलेन चाहमनेकतीर्थाहृतकेन ढुण्ढिम्। चित्तेन शुद्धेन च स्नापयामि स्नानं मया दत्तमथो गृहाण ॥ १२ ॥ ततः पयःस्नानमचिन्त्यभाव गृहाण तोयस्य तथा गणेश। पुनर्दधिस्नानमनामयत्वं चित्तेन दत्तं च जलस्य चैत्रम् ॥ १३ ॥ ततो घृतस्नानमपारवन्द्य सुतीर्थजं विघ्नहर प्रसीद। गृहाण चित्तेन सुकल्पितं तु ततो मधुस्नानमथो जलस्य ॥ १४ ॥ सुशर्करायुक्तमथो गृहाण स्नानं मया कल्पितमेव ढुण्ढे। ततो जलस्नानमघापहन्तृविघ्नेश मायाभ्रमं वारयाशु ॥ १५ ॥ सुयक्षपङ्क त्वमथो गृहाण स्नानं परेशाधिपते ततश्च। कौमण्डली-

संभवजं कुरुष्व विशुद्धमेवं परिकल्पितं तु ॥ १६ ॥ ततस्तु सूक्तैर्मनसा गणेशं संपूज्य दूर्वादिभिरल्पभावैः । अपारकैर्मण्डलभूतब्रह्मणस्पत्यकैस्तं ह्यभिषेचयामि ॥ १७ ॥ ततः सुवस्त्रेण तु प्रोञ्छनं त्वं गृहाण चित्तेन मया सुकल्पितम् । ततो विशुद्धेन जलेन ढुण्ढे ह्याचान्तमेवं कुरु विघ्नराज ॥ १८ ॥ अग्नौ विशुद्धं तु गृहाण वस्त्रे ह्यनर्घ्यमौल्ये मनसा मया ते । दत्ते परिच्छाद्य निजात्मदेहं ताभ्यां मयूरेश जनांश्च रक्ष ॥ १९ ॥ आचम्य विघ्नेश पुनस्तथैव चित्तेन दत्तं सुखमुत्तरीयम् । गृहाण भक्तप्रतिपालक त्वं नमोऽथ ते तारक संयुतं तु ॥ २० ॥ यज्ञोपवीतं त्रिगुणस्वरूपं सौवर्णमेवं ह्यहिनाथभूतम् । भावेन दत्तं गुणनाथ तत्त्वं गृहाण भक्तोद्धरकारणाय ॥ २१ ॥ आचान्तमेवं मनसा प्रदत्तं कुरुष्व शुद्धेन जलेन ढुण्ढे । पुनश्च कौमण्डलकेन पाहि विश्वं प्रभो खेलकरं सदा ते ॥ २२ ॥ उद्यद्दिनेशाभमथो गृहाण सिन्दूरकं ते मनसा प्रदत्तम् । सर्वाङ्गसंलेपनमादराद्वै कुरुष्व हेरम्ब च तेन पूर्णम् ॥ २३ ॥ सहस्रशीर्षं मनसा मया त्वं दत्तं किरीटं तु सुवर्णजं वै । अनेकरत्नैः खचितं गृहाण ब्रह्मेश ते मस्तकशोभनाय ॥ २४ ॥ विचित्ररत्नैः कनकेन ढुण्ढे युतानि चित्तेन मया परेश । दत्तानि नानापदकुण्डलानि गृहाण शूर्पश्रुतिभूषणाय ॥ २५ ॥ शुण्डाविभूषार्थमनन्तखेलिन् सुवर्णजं कञ्चुकमागृहाण । रत्नैश्च युक्तं

मनसा मया यद्दत्तं प्रभो तत्सफलं कुरुष्व ॥ २६ ॥ सुवर्ण-रत्नैश्च युतानि ढुण्ढे सदैकदन्ताभरणानि कल्प्य । गृहाण चूडाकृतये परेश दत्तानि दन्तस्य च शोभनार्थम् ॥ २७ ॥ रत्नैः सुवर्णेन कृतानि तानि गृहाण चत्वारि मया प्रकल्प्य । संभूषय त्वं कटकानि नाथ चतुर्भुजेषु ह्यज विघ्नहारिन् ॥ २८ ॥ विचित्ररत्नैः खचितं सुवर्णसंभूतकं गृह्य मया प्रदत्तम् । तथाङ्गुलीष्वाङ्गुलिकं गणेश चित्तेन संशोभय तत्परेश ॥ २९ ॥ विचित्ररत्नैः खचितानि ढुण्ढे केयूरकाणि ह्यथ कल्पितानि । सुवर्णजानि प्रमथाधिनाथ गृहाण दत्तानि तु बाहुषु त्वम् ॥ ३० ॥ प्रवालमुक्ताफलरत्नजास्त्वं सुवर्णसूत्रैश्च गृहाण कण्ठे । चित्तेन दत्ता विविधाश्च माला उरोदरे शोभय विघ्नराज ॥ ३१ ॥ चन्द्रं ललाटे गणनाथ पूर्णं वृद्धिक्षयाभ्यां तु विहीनमाद्यम् । संशोभय त्वं वरसंयुतं ते भक्तिप्रियत्वं प्रकटीकुरुष्व ॥ ३२ ॥ चिन्तामणिं चिन्तितदं परेश हृद्देशगं ज्योतिर्मयं कुरुष्व । मणिं सदानन्दसुखप्रदं च विघ्नेश दीनानथ पालयस्व ॥ ३३ ॥ नाभौ फणीशं च सहस्रशीर्षं संवेष्टनेनैव गणाधिनाथ । भक्तं सुभूषं कुरु भूषणेन वरप्रदानं सफलं परेश ॥ ३४ ॥ कटीतटे रत्नसुवर्णयुक्तां काञ्चीं सुचित्तेन च धारयामि । विघ्नेश ज्योतिर्गणदीपनीं ते प्रसीद भक्तं कुरु मां दयाब्धे ॥ ३५ ॥ हेरम्ब ते रत्नसुवर्णयुक्ते सुनूपुरे मञ्जिरके तथैव । सुकिङ्किणीनादयुते सुबुद्ध्या सुपा-

दयोः शोभय मे प्रदत्ते ॥ ३६ ॥ इत्यादिनानाविधभूषणानि तवेच्छया मानसकल्पितानि । संभूषयाम्येव त्वदङ्गकेषु विचित्रधातुप्रभवाणि ढुण्ढे ॥ ३७ ॥ सुचन्दनं रक्तममोघवीर्यं सुघर्षितं ह्यष्टकगन्धमुख्यैः । युक्तं मया कल्पितमेकदन्त गृहाण ते त्वङ्गविलेपनार्थम् ॥ ३८ ॥ लिप्तेषु वैचित्र्यमथाष्टगन्धैरङ्गेषु तेऽहं प्रकरोमि चित्रम् । प्रसीद चित्तेन विनायक त्वं ततः सुरक्तं रविमेव भाले ॥ ३९ ॥ घृतेन वै कुङ्कुमकेन रक्तान्सुतन्दुलांस्ते परिकल्पयामि । भाले गणाध्यक्ष गृहाण पाहि भक्तान्सुभक्तिप्रिय दीनबन्धो ॥ ४० ॥ गृहाण भो चम्पकमालतीनि सुपङ्कजानि स्थलपङ्कजानि । चित्तेन दत्तानि च मल्लिकानि पुष्पाणि नानाविधवृक्षजानि ॥ ४१ ॥ पुष्पोपरि त्वं मनसा गृहाण हेरम्ब मन्दारशमीदलानि । मया सुचित्तेन प्रकल्पितानि ह्यपारकाणि प्रणवाकृते तु ॥ ४२ ॥ दूर्वाङ्कुरान्वै मनसा प्रदत्तांस्त्रिपञ्चपत्रैर्युतकार्द्रभूतान् । गृहाण विघ्नेश्वर संख्यया त्वं हीनांश्च सर्वोपरि वक्रतुण्ड ॥ ४३ ॥ दशाङ्गभूतं मनसा मया ते धूपं प्रदत्तं गणराजमग्रे । गृहाण सौरभ्यकरं परेश सिद्ध्या च बुद्ध्या सह भक्तपाल ॥ ४४ ॥ दीपं सुवर्त्या युतमादरात्ते दत्तं मया मानसकं गणेश । गृहाण नानाविधजं घृतादितैलादिसंभूतममोघदृष्टे ॥ ४५ ॥ भोज्यं तु लेह्यं गणराज पेयं चोष्यं च नानाविधषड्रसाढ्यम् । गृहाण नैवेद्यमथो

मया ते सुकल्पितं पुष्टिपते महात्मन् ॥ ४६ ॥ सुवासितं भोजनमध्यभागे जलं मया दत्तमथो गृहाण । कौमण्डलीजं मनसा गणेश पिबस्व विश्वादिकतृप्तिकारिन् ॥ ४७ ॥ ततः करोद्वर्तनकं गृहाण सौगन्ध्ययुक्तं मुखमार्जनाय । सुवासितेनैव सुतीर्थजेन सुकल्पितं नाथ गृहाण ढुण्ढे ॥ ४८ ॥ पुनस्तथाचम्य सुवासितं च दत्तं मया तीर्थजलं पिबस्व । प्रकल्प्य विघ्नेश ततः परं ते संप्रोञ्छनं हस्तमुखे करोमि ॥ ४९ ॥ द्राक्षादिरम्भाफलचूतकानि खार्जूरकार्कन्धुकदाडिमानि । सुस्वादयुक्तानि मया प्रकल्प्य गृहाण दत्तानि फलानि ढुण्ढे ॥ ५० ॥ पुनर्जलेनैव करादिकं ते संक्षालयामि मनसा गणेश । सुवासितं तोयमथो पिबस्व मया प्रदत्तं मनसा परेश ॥ ५१ ॥ अष्टाङ्गयुक्तं गणनाथ दत्तं ताम्बूलकं ते मनसा मया वै । गृहाण विघ्नेश्वर भावयुक्तं सदाऽसकृत्तुण्डविशोधनार्थम् ॥ ५२ ॥ ततो मया कल्पितके गणेश महासने रत्नसुवर्णयुक्ते । मन्दारकूर्पासकयुक्तवस्त्रैरनर्घ्यसंछादितके प्रसीद ॥ ५३ ॥ ततस्त्वदीयावरणं परेश संपूजयामि मनसा यथावत् । नानोपचारैः परमप्रियैस्तु त्वत्प्रीतिकामार्थमनाथबन्धो ॥ ५४ ॥ गृहाण लम्बोदर दक्षिणां ते ह्यसंख्यभूतां मनसा प्रदत्ताम् । सौवर्णमुद्रादिकमुख्यभावां पाहि प्रभो विश्वमिदं गणेश ॥ ५५ ॥ राजोपचारान्विविधान्गृहाण हस्त्यश्वछत्रादिकमादराद्वै । चित्तेन

दत्तान्गणनाथ ढुण्ढे ह्यपारसंख्यान् स्थिरजङ्गमांस्ते ॥ ९६ ॥ दानस्य नानाविधरूपकांस्ते गृहाण दत्तान्मनसा मया वै । पदार्थभूतान् स्थिरजङ्गमांश्च हेरम्ब मां तारय मोहभावात् ॥ ९७ ॥ मन्दारपुष्पाणि शमीदलानि दूर्वाङ्कुरांस्ते मनसा ददामि । हेरम्ब लम्बोदर दीनपाल गृहाण भक्तं कुरु मां पदे ते ॥ ९८ ॥ ततो हरिद्रामबिरं गुलालं सिन्दूरकं ते परिकल्पयामि । सुवासितं वस्तु सुवासभूतैर्गृहाण ब्रह्मेश्वर शोभनार्थम् ॥ ९९ ॥ ततः शुकाद्याः शिवविष्णुमुख्या इन्द्रादयः शेषमुखास्तथाऽन्ये । मुनीन्द्रकाः सेवकभावयुक्तास्तथासनस्थं प्रणमन्ति ढुण्ढिम् ॥ ६० ॥ वामाङ्कके भक्तियुता गणेशं सिद्धिस्तु नानाविधसिद्धिभिस्तम् । अत्यन्तभावेन सुसेवते तु मायास्वरूपा परमार्थभूता ॥ ६१ ॥ गणेश्वरं दक्षिणभागसंस्था बुद्धिः कलाभिश्च सुबोधकाभिः । विद्याभिरेवं भजते परेशा मायासुसांख्यप्रदचित्तरूपा ॥ ६२ ॥ प्रमोदमोदादयः पृष्ठभागे गणेश्वरं भावयुता भजन्ते । भक्तेश्वरा मुद्गलशम्भुमुख्याः शुकादयस्तं स्म पुरो भजन्ते ॥ ६३ ॥ गन्धर्वमुख्या मधुरं जगुश्च गणेशगीतं विविधस्वरूपम् । नृत्यं कलायुक्तमथो पुरस्ताच्चक्रुस्तथा ह्यप्सरसो विचित्रम् ॥ ६४ ॥ इत्यादिनानाविधभावयुक्तैः संसेवितं विघ्नपतिं भजामि । चित्तेन ध्यात्वा तु निरञ्जनं वै करोमि नानाविधदीपयुक्तम् ॥ ६५ ॥ चतु-

भुजं पाशधरं गणेशं तथाङ्कुशं दन्तयुतं तमेवम् । त्रिनेत्रयुक्तं त्वभयंकरं तं महोदरं चैकरदं गजास्यम् ॥ ६६ ॥ सर्पोपवीतं गजकर्णधारं विभूतिभिः सेवितपादपद्मम् । ध्याये गणेशं विविधप्रकारैः सुपूजितं शक्तियुक्तं परेशम् ॥ ६७ ॥ ततो जपं वै मनसा करोमि स्वमूलमन्त्रस्य विधानयुक्तम् । असंख्यभूतं गणराजहस्ते समर्पयाम्येव गृहाण ढुण्ढे ॥ ६८ ॥ आरार्तिकां कर्पुरकादिभूतामपारदीपां प्रकरोमि पूर्णाम् । चित्तेन लम्बोदर तां गृहाण ह्यज्ञानध्वान्ताघहरां निजानाम् ॥ ६९ ॥ वेदेषु विघ्नेश्वरकैः सुमन्त्रैः सुमन्त्रितं पुष्पदलं प्रभूतम् । गृहाण चित्तेन मया प्रदत्तमपारवृत्त्या त्वथ मन्त्रपुष्पम् ॥ ७० ॥ अपारवृत्त्या स्तुतिमेकदन्त गृहाण चितेन कृतां गणेश । युक्तां श्रुतिस्मार्तभवैः पुराणैः सर्वैः परेशाधिपते मया ते ॥ ७१ ॥ प्रदक्षिणा मानसकल्पितास्ता गृहाण लम्बोदर भावयुक्ताः । संख्याविहीना विविधस्वरूपा भक्तान्सदा रक्ष भवार्णवाद्वै ॥ ७२ ॥ नतिं ततो विघ्नपते गृहाण साष्टाङ्गकाद्यां विविधस्वरूपाम् । संख्याविहीनां मनसा कृतां ते सिद्ध्या च बुद्ध्या परिपालयाशु ॥ ७३ ॥ न्यूनातिरिक्तं तु मया कृतं चेत्तदर्थमन्ते मनसा गृहाण । दूर्वाङ्कुरान्विघ्नपते प्रदत्तान् संपूर्णमेवं कुरु पूजनं मे ॥ ७४ ॥ क्षमस्व विघ्नाधिपते मदीयान्सदाऽपराधान्विविधस्वरूपान् । भक्तिं मदीयां

सफलां कुरुष्व संप्रार्थयामि मनसा गणेश ॥ ७५ ॥ ततः प्रसन्नेन गजाननेन दत्तं प्रसादं शिरसाभिवन्द्य । स्वमस्तके तं परिधारयामि चित्तेन विघ्नेश्वरमानतोऽस्मि ॥ ७६ ॥ उत्थाय विघ्नेश्वर एव तस्माद्गतस्ततस्त्वन्तरधानशक्त्या । शिवादयस्तं प्रणिपत्य सर्वे गताः सुचित्तेन च चिन्तयामि ॥ ७७ ॥ सर्वान्नमस्कृत्य ततोऽहमेव भजामि चित्तेन गणाधिपं तम् । स्वस्थानमागत्य महानुभावैर्भक्तैर्गणेशस्य च खेलयामि ॥ ७८ ॥ एवं त्रिकालेषु गणाधिपं तं चित्तेन नित्यं परिपूजयामि । तेनैव तुष्टः प्रददातु भावं विश्वेश्वरो भक्तिमयं तु मह्यम् ॥ ७९ ॥ गणेशपादोदकपानकं च ह्युच्छिष्टगन्धस्य सुलेपनं तु । निर्माल्यसंधारणकं सुभोज्यं लम्बोदरस्यास्तु हि भुक्तशेषम् ॥ ८० ॥ यं यं करोम्येव तदेव दीक्षा गणेश्वरस्यास्तु सदा गणेश । प्रसीद नित्यं तव पादभक्तं कुरुष्व मां ब्रह्मपते दयालो ॥ ८१ ॥ ततस्तु शय्यां परिकल्पयामि मन्दारकूर्पासकवस्त्रयुक्ताम् । सुवासपुष्पादिभिरर्चितां ते गृहाण निद्रां कुरु विघ्नराज ॥ ८२ ॥ सिद्धया च बुद्धया सहितं गणेशं सुनिद्रितं वीक्ष्य तथाऽहमेव । गत्वा स्ववासं च करोमि निद्रां ध्यात्वा हृदि ब्रह्मपतिं तदीयः ॥ ८३ ॥ एतादृशं सौख्यममोघशक्ते देहि प्रभो मानसजं गणेश । मह्यं च तेनैव कृतार्थरूपो भवामि भक्त्या रसलाललोऽस्मि ॥ ८४ ॥ गार्ग्य उवाच ॥ एवं नित्यं महाराज

गृत्समदो महायशाः । चकार मानसीं पूजां योगीन्द्राणां गुरुः स्वयम् ॥ ८५ ॥ य एतां मानसीं पूजां करिष्यति नरोत्तमः । पठिष्यति सदा सोऽपि गाणपत्यो भविष्यति ॥ ८६ ॥ श्रावयिष्यति यो मर्त्यः श्रोष्यति भावसंयुतः । स क्रमेण महीपाल ब्रह्मभूतो भविष्यति ॥ ८७ ॥ यद्यदिच्छति तत्तद्वै सफलं तस्य जायते । अन्ते स्वानन्दगः सोऽपि योगिवन्द्यो भविष्यति ॥ ८८ ॥

इति श्रीमदान्त्ये मौद्गल्ये विघ्नेशमानसपूजा समाप्ता ।

---

## २१ गणपतिस्तवराजः ।

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥ गणेशस्य स्तवं वक्ष्ये कलौ झटिति सिद्धिदम् । न न्यासो न च संस्कारो न होमो न च तर्पणम् ॥ १ ॥ न मार्जनं च पञ्चाशत्सहस्रजपमात्रतः । सिध्यत्यर्चनतः पञ्चशतब्राह्मणभोजनात् ॥ २ ॥ अस्य श्रीमहागणपतिस्तोत्रमन्त्रस्य भगवान्सदाशिव ऋषिः । अनुष्टुप् छन्दः । श्रीमहागणपतिर्देवता । श्रीमहागणपतिप्रीत्यर्थे जपे विनियोगः ॥ विनायकैकभावनासमर्चनासमर्पितं प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम् । यदर्पितं सदर्पितं नवान्यधान्यनिर्मितं न कण्डितं न खण्डितं न खण्डमण्डनं कृतम् ॥ १ ॥ सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं निरञ्जनं च निर्गुणं निराकृतिप्रनिष्क्रियम् ।

सदात्मकं चिदात्मकं सुखात्मकं परं पदं भजामि तं गजाननं स्वमायया॑ऽऽत्तविग्रहम् ॥ २ ॥ गणाधिप त्वमष्टमूर्तिरीशसू-नुरीश्वरस्त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः। त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरश्चराचरप्रचारहेतुरन्तराय-शान्तिकृत् ॥ ३ ॥ अनेकदं तमालनीलमेकदन्तसुन्दरं गजाननं नमोऽगजाननामृताब्धिचन्द्रिरम् । समस्तवेद-वादसत्कलाकलापमन्दिरं महान्तरायकृत्तमोऽर्कमाश्रितोन्दुरुं परम् ॥ ४ ॥ सरत्नहेमघण्टिकानिनादनूपुरस्वनंमृदङ्गताल-नादभेदसाधनानुरूपतः। धिमिद्धिमित्तथोङ्गथोङ्गथेयिथेयि-शब्दतो विनायकः शशाङ्कशेखरः प्रहृष्य नृत्यति ॥ ५ ॥ सदा नमामि नायकैकनायकं विनायकं कलाकलापकल्पना-निदानमादिपूरुषम् । गणेश्वरं गुणेश्वरं महेश्वरात्मसंभवं स्वपादपद्मसेविनामपारवैभवप्रदम् ॥ ६ ॥ भजे प्रचण्ड-तुन्दिलं सदन्दशूकभूषणं सनन्दनादिवन्दितं समस्तसिद्ध-सेवितम् । सुरासुरौघयोः सदा जयप्रदं भयप्रदं समस्त-विघ्नघातिनं स्वभक्तपक्षपातिनम् ॥७॥ कराम्बुजातकङ्कणः पदाब्जकिङ्किणीगणो गणेश्वरो गुणार्णवः फणीश्वराङ्ग-भूषणः। जगत्त्रयान्तरायशान्तिकारकोऽस्तु तारको भवा-र्णवस्थघोरदुर्गहा चिदेकविग्रहः ॥ ८ ॥ यो भक्तिप्रवण-श्चराचरगुरोः स्तोत्रं गणेशाष्टकं शुद्धः संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान्। तस्य श्रीरतुला स्वसिद्धिसहिता

श्रीशारदा सर्वदा स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ॥ ९ ॥

इति श्रीरुद्रयामले गणेशस्तवराजस्तोत्रं संपूर्णम् ।

---

## २२ चिन्तामणिषट्पदी ।

श्रीगणेशाय नमः ॥ द्विरदवदन विषमरद वरद जयेशान शान्तवरसदन । सदनवसादन सादनमन्तरायस्य रायस्य ॥ १ ॥ इन्दुकलकलितालिक सालिकशुम्भत्कपोलपालियुग । विकटस्फुटकटधाराधाराधारोऽस्य प्रपञ्चस्य ॥ २ ॥ वरपरशुपाशपाणे पणितपणायः पणायितोऽसि यतः । आरुह्य वज्रदन्तं भिन्धःसि विपदन्तम् ॥ ३ ॥ लम्बोदर दूर्वालन शयधृतसामोदमोदकाशनक । शनकैरवलोकय मां यमान्तरायापहारिदृशा ॥ ४ ॥ आनन्दतुन्दिलाखिलवृन्दारकवृन्दवन्दिताङ्घ्रियुग । सुराप्रदण्डरमालो नागजभालोऽतिभासि विभो ॥ ५ ॥ अगणेयगुणेशात्मज चिन्तकचिन्तामणे गणेशान । स्वचरणशरणं करुणावरुणालय पाहि मां दीनम् ॥ ६ ॥ रुचिरवचोमृतरावोन्नीता नीता दिवस्तुतिः स्फीता। इति षट्पदी मदीया गणपतिपादाम्बुजे विशतु ॥७॥

इति श्रीमन्मालवीयशुक्लमथुरानाथविरचिता चिन्तामणिषट्पदी समाप्ता ।

## २३ गणेशशतनामार्चनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ काश्यां तु बहवो विघ्नाः काशीवासवियोजकाः । तच्छान्त्यर्थं ढुण्ढिराजः पूजनीयः प्रयत्नतः ॥ १ ॥ अष्टोत्तरशतैर्दिव्यैर्गणेशस्यैव नामभिः । कर्तव्यमतियत्नेन नवदूर्वाङ्कुरार्पणम् ॥ २ ॥ हिरण्मयतनुं शुद्धं सर्वार्तिहरमव्ययम् । वरदं गणपं ध्यात्वा पूजा कार्या प्रयत्नतः ॥ ३ ॥ ऋषिर्विघ्नेश इत्यादिनाम्नां सर्वेश्वरः शिवः । देवता विघ्नराजोऽत्र छन्दोऽनुष्टुप् शुभप्रदम् ॥ ४ ॥ सर्वप्रत्यूहशमनं फलं शक्तिः सुधात्मिका । कीलकं गणनाथस्य पूजा कार्येति कामदा ॥ ५ ॥ विघ्नेशो विश्ववदनो विश्वचक्षुर्जगत्पतिः । हिरण्यरूपः सर्वात्मा ज्ञानरूपो जगन्मयः ॥ ६ ॥ ऊर्ध्वरेता महाबाहुरमेयोऽमितविक्रमः । वेदवेद्यो महाकायो विद्यानिधिरनामयः ॥ ७ ॥ सर्वज्ञः सर्वगः शान्तो गजास्यो विगतज्वरः । विश्वमूर्तिरमेयात्मा विश्वाधारः सनातनः ॥ ८ ॥ सामगानप्रियो मन्त्री सत्वाधारः सुराधिपः । समस्तसाक्षिनिर्द्वन्द्वो निर्लिप्तोऽमोघविक्रमः ॥ ९ ॥ नियतो निर्मलः पुण्यः कामदः कान्तिदः कविः । कामरूपी कामवेपो कमलाक्षः कलाधरः ॥ १० ॥ सुमुखः शर्मदः शुद्धो मूषकाधिपवाहनः । दीर्घतुण्डधरः श्रीमाननन्तो मोहवर्जितः ॥ ११ ॥ वक्रतुण्डः शूर्पकर्णः पवनः पावनो वरः । योगीशो योगिवन्द्याङ्घ्रिरुमासुतरघापहः ॥ १२ ॥

एकदन्तो महाग्रीवः शरण्यः सिद्धिसेवितः । सिद्धिदः करुणासिन्धुर्भगवान्भव्यविग्रहः ॥ १३ ॥ विकटः कपिलो ढुण्ढिरुग्रो भीमो हरः शुभः । गणाध्यक्षो गणाराध्यो गणेशो गणनायकः ॥ १४ ॥ ज्योतिःस्वरूपो भूतात्मा धूम्रकेतुरनाकुलः । कुमारगुरुरानन्दो हेरम्बो वेदसंस्तुतः ॥ १५ ॥ नागोपवीती दुर्धर्षो बालदूर्वाङ्कुरप्रियः । भालचन्द्रो विश्वधामा शिवपुत्रो विनायकः ॥ १६ ॥ लीलावलम्बितवपुः पूर्णः परमसुन्दरः । विघ्नान्धकारमार्तण्डो विघ्नारण्यदवानलः ॥ १७ ॥ सिन्दूरवदनो नित्यो विष्णुः प्रमथपूजितः । शरण्यदिव्यपादाब्जो भक्तमन्दारभूरुहः ॥ १८ ॥ रत्नसिंहासनासीनो मणिकुण्डलमण्डितः । भक्तकल्याणदोऽमेयकल्याणगुणसंश्रयः ॥ १९ ॥ एतानि दिव्यनामानि गणेशस्य महात्मनः । पठनीयानि यत्नेन सर्वदा सर्वदेहिभिः ॥ २० ॥ नाम्नामेकैकमेतेषां सर्वसिद्धिप्रदायकम् । सर्वविघ्नेशनाम्नां तु फलं वक्तुं न शक्यते ॥२१॥ एकैकमेव तन्नाम दिव्यं जप्त्वा मुनीश्वराः । प्रत्यूहमात्ररहितास्तिष्ठन्ति शिवपूजकाः ॥२२॥ दूर्वायुग्मानि संगृह्य नूतनान्यतियत्नतः । पूजनीयो गणाध्यक्षो नाम्नामेकैकसंख्यया ॥ २३ ॥ नभस्यशुक्लपक्षस्य चतुर्थ्यां विधिपूर्वकम् । वक्रतुण्डेशकुण्डे तु स्नानं कृत्वा प्रयत्नतः ॥ २४ ॥ वक्रतुण्डेशमाराध्यं सर्वाभीष्टप्रदायकम् । ध्यायेदघहरं शुद्धं काञ्चनाभमनामयम् ॥ २५ ॥ ततः

पूजां यथाशास्त्रं कृत्वा दूर्वाङ्कुरैर्नवैः पूजा कार्या विशेषेण नामोच्चारणपूर्वकम् ॥ २६ ॥ ततश्च मोदकैर्दिव्यैः सुगन्धैर्घृतपाचितैः । नैवेद्यं कल्पयेदिष्टं गणेशाय शुभावहम् ॥ २७ ॥ अन्यैश्च परमान्नाद्यैर्भक्ष्यैर्भोज्यैर्मनोहरैः । तोषणीयः प्रयत्नेन वक्रतुण्डो विनायकः ॥ २८ ॥ प्रदक्षिणनमस्कारा दिव्यतन्नामसंख्यया । कर्तव्या नियतं शुद्धैर्मौनव्रतपरायणैः ॥२९॥ ततः संतर्प्य विविधच्छैवान्ब्राह्मणसत्तमान् । पुनरभ्यर्च्य विघ्नेशमिमं मन्त्रमुदीरयेत् ॥३०॥ वक्रतुण्ड सुराराध्य सूर्यकोटिसमप्रभ । निर्विघ्नेनैव सततं काशीवासं प्रयच्छ मे ॥ ३१ ॥ इति संप्रार्थ्य विधिवत्पूजां कृत्वा पुनर्मुदा । नमस्कृत्वा प्रसाद्यैनं गच्छेद्ढुण्ढिविनायकम् ॥ ३२ ॥ ढुण्ढिराजार्चनं सम्यक्कर्तव्यं विधिपूर्वकम् । तत्रैव च विशेषेण पूजां कृत्वा ततः परम् ॥ ३३ ॥ पूजनीयाः प्रयत्नेन सर्वदा मोदकप्रियाः । शिवप्रीतिकरा नित्यं शुद्धाः पञ्च विनायकाः ॥ ३४ ॥ क्षिप्रसिद्धिप्रदं क्षिप्रगणेशं सुरवन्दितम् । संपूज्य पूर्ववत्सम्यग्गच्छेदाशाविनायकम् ॥३५॥ आशाविनायकं सम्यक् पूजयित्वा ततः परम् । अर्कविघ्नेश्वरः सम्यक्पूजनीयः प्रयत्नतः ॥ ३६ ॥ पूर्ववत्पूजनीयः स्यात् ततः सिद्धिविनायकः । पूजनीयस्ततः सम्यक् चिन्तामणिविनायकः ॥ ३७ ॥ सेनाविनायकोऽप्येवं संपूज्यस्तदनन्तरम् । दुर्गाविनायकस्यापि पूजा कार्या ततः परम्

॥ ३८ ॥ एवं संपूज्य विधिवद्भक्तिश्रद्धासमन्वितैः । शैवाः शङ्करतत्त्वज्ञा भोजनीयाः प्रयत्नतः ॥३९॥ एवं संपूजिताः सम्यक्प्रीतास्ते गणनायकाः । काशीवासं प्रयच्छन्ति निर्विघ्नेनैव सादरम् ॥४०॥ आज्येन कापिलेनैव सार्धलक्षत्रयाहुतीः । हुत्वैतन्नामभिः सम्यक्सर्वविद्याधिपो भवेत् ॥४१॥ एतानि दिव्यनामानि प्रतिवासरमादरत् । पठित्वा गणनाथस्य पूजा कार्या प्रयत्नतः ॥४२॥ यस्य कस्यापि संतुष्टो गणपः सर्वसिद्धिदः । अत एव सदा पूज्यो गणनाथो विचक्षणैः ॥ ४३ ॥ गणेशादपरो लोके विघ्नहर्ता न विद्यते । तस्मादन्वहमाराध्यो गणेशः सर्वसिद्धिदः ॥ ४४ ॥ काशीनिवाससिद्ध्यर्थं विष्णुना पूजितः पुरा । पुरा विघ्नेश्वरः सम्यक्पूजितो दण्डपाणिना ॥ ४५ ॥ कर्कोटकेन नागेन गणेशः पूजितः पुरा । शेषेण पूजितः पूर्वं गणेशः सिद्धिदायकः ॥४६॥ काशीयात्रार्थसंयुक्तो विधिर्विघ्नकुलाकुलः । पूजयामास विघ्नेशं विधिवद्भक्तिपूर्वकम् । ॥४७॥ सूर्येणाभ्यर्चितः पूर्वं चन्द्रेणेन्द्रेण च प्रिये । देवैरन्यैश्च विधिपूजितो गणनायकः ॥४८॥ मर्त्यानाममराणां च मुनीनां वा वरानने । न सिध्यन्त्येव कार्याणि गणेशाभ्यर्चनं विना ॥४९॥

इति श्रीशिवरहस्ये काशीमाहात्म्ये हरगौरीसंवादे एकादशाध्याये गणेशशतनामार्चनविधिः संपूर्णः ।

## २४ गणेशपञ्चरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मुदा करात्तमोदकं सदा विमुक्तिसाधकं कलाधरावतंसकं विलासिलोकरक्षकम् । अनायकैकनायकं विनाशितेभदैत्यकं नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १ ॥ नतेतरातिभीकरं नवोदितार्कभास्वरं नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् । सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ २ ॥ समस्तलोकशंकरं निरस्तदैत्यकुञ्जरं दरेतरोदरं वरं वरेभवक्त्रमक्षरम् । कृपाकरं क्षमाकरं मुदाकरं यशस्करं मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३ ॥ अकिंचनार्तिमार्जनं चिरन्तनोक्तिभाजनं पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् । प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं कपोलदानवारणं भजे पुराणवारणम् ॥४॥ नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजमचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् । हृदन्तरे निरन्तरं वसन्तमेव योगिनां तमेकदन्तमेव तं विचिन्तयामि संततम् ॥ ५ ॥ महागणेशपञ्चरत्नमादरेण योऽन्वहं प्रजल्पति प्रभातके हृदि स्मरन्गणेश्वरम् । अरोगतामदोषतां सुसाहितीं सुपुत्रतां समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥ ६ ॥

इति श्रीगणेशपञ्चरत्नस्तोत्रं संपूर्णम् ।

## २५ गणेशभुजङ्गम् ।

श्रीगणेशाय नमः ॥ रणत्क्षुद्रघण्टानिनादाभिरामं चलत्ताण्डवोद्दण्डवत्पद्मतालम् । लसत्तुन्दिलाङ्गोपरिव्यालहारं गणाधीशमीशानसूनुं तमीडे ॥ १ ॥ ध्वनिध्वंसवीणालयोल्लासिवक्त्रं स्फुरच्छुण्डदण्डोल्लसद्बीजपूरम् । गलद्दर्पसौगन्ध्यलोलालिमालं गणाधीशमीशानसूनुं तमीडे ॥ २ ॥ प्रकाशज्जपारक्तरत्नप्रसूनप्रवालप्रभातारुणज्योतिरेकम् । प्रलम्बोदरं वक्रतुण्डैकदन्तं गणाधीशमीशानसूनुं तमीडे ॥ ३ ॥ विचित्रस्फुरद्रत्नमालाकिरीटं किरीटोल्लसच्चन्द्ररेखाविभूषम् । विभूषैकभूषं भवध्वंसहेतुं गणाधीशमीशानसूनुं तमीडे ॥ ४ ॥ उदञ्चद्भुजावल्लरीदृश्यमूलोच्चलद्भ्रूलताविभ्रमभ्राजदक्षम् । मरुत्सुन्दरीचामरैः सेव्यमानं गणाधीशमीशानसूनुं तमीडे ॥ ५ ॥ स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं कृपाकोमलोदारलीलावतारम् । कलाबिन्दुगं गीयते योगिवर्यैर्गणाधीशमीशानसूनुं तमीडे ॥ ६ ॥ यमेकाक्षरं निर्मलं निर्विकल्पं गुणातीतमानन्दमाकारशून्यम् । परं पारमोंकारमाम्नायगर्भं वदन्ति प्रगल्भं पुराणं तमीडे ॥ ७ ॥ चिदानन्दसान्द्राय शान्ताय तुभ्यं नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् । नमोऽनन्तलीलाय कैवल्यभासे नमो विश्वबीज प्रसीदेशसूनो ॥ ८ ॥ इमं सुस्तवं प्रातरुत्थाय भक्त्या पठेद्यस्तु मर्त्यो

लभेत्सर्वकामान् । गणेशप्रसादेन सिध्यन्ति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने ॥ ९ ॥

इति श्रीगणेशभुजङ्गस्तोत्रं संपूर्णम् ।

## २६ गणेशद्वादशनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ २ ॥ गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः । प्रसन्नो भव मे नित्यं वरदाता विनायक ॥ ३ ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ ४ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि गणेशस्य समाहितः ॥५॥ विद्यार्थी लभते विद्यां धनार्थी विपुलं धनम् । इष्टकामं तु कामार्थी धर्मार्थी मोक्षमक्षयम् ॥ ६ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ७ ॥

इति श्रीगणेशद्वादशनामस्तोत्रं संपूर्णम् ।

## २७ ढुण्ढिभुजङ्गस्तोत्रम् ।



श्रीगणेशाय नमः ॥ उमाङ्गोद्भवं दन्तिवक्त्रं गणेशं भुजे

कङ्कणैः शोभितं धूम्रकेतुम् । गले हारमुक्तावलीशोभितं तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ १ ॥ गणेशैकदन्तं शुभं सर्वकार्ये स्मरन्मन्मुखं ज्ञानदं सर्वसिद्धिम् । मनश्चिन्तितं कार्यसिद्धिर्भवेत्तं नमो बुद्धिकान्तं गणेशं नमस्ते ॥ २ ॥ कुठारं धरन्तं कृतं विघ्नराजं चतुर्भिर्मुखैरेकदन्तैकवर्णम् । इदं देवरूपं गणं सिद्धिनाथं नमो भालचन्द्रं गणेशं नमस्ते ॥ ३ ॥ शिरःसिन्दुरं कुङ्कुमं देहवर्णं शुभैभादिकं प्रीयते विघ्नराजम् । महासंकटच्छेदने धूम्रकेतुं नमो गौरिपुत्रं गणेशं नमस्ते ॥ ४ ॥ यथा पातकं छेदितुं विष्णुनाम तथा ध्यायतां शंकरं पापनाशम् । यथा पूजितं षण्मुखं शोकनाशं नमो विघ्ननाशं गणेशं नमस्ते ॥ ५ ॥ सदा सर्वदा ध्यायतामेकदन्तं सदा पूजितं सिन्दुरारक्तपुष्पैः । सदा चर्चितं चन्दनैः कुङ्कुमाक्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ६ ॥ नमो गौरिदेहमलोत्पन्न तुभ्यं नमो ज्ञानरूपं नमः सिद्धिपं तं । नमो ध्यायतामर्चतां बुद्धिदं तं नमो गौर्यपत्यं गणेशं नमस्ते ॥७॥ भुजङ्गप्रयातं पठेद्यस्तु भक्त्या प्रभाते पठेच्छुद्धचैकाग्रचित्तः । क्षयं यान्ति विघ्ना दिशः शोभयन्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ८ ॥

इति श्रीढुण्ढिराजभुजङ्गप्रयातस्तोत्रं संपूर्णम् ।

# ब्रह्मस्तोत्रे ।

## २८ ब्रह्मस्तोत्रम् ।

श्रीगणेशायनमः ॥ हिरण्यकशिपुरुवाच । कल्पान्ते कालसृष्टेन योऽन्धेन तमसा वृतम् । अभिव्यनक् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ १ ॥ आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति । रजःसत्त्वतमोधाम्ने पराय महते नमः ॥ २ ॥ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये । प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ ३ ॥ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् । चित्तस्य चित्तेर्मनइन्द्रियाणां पतिर्महान्भूतगुणाशयेशः ॥ ४ ॥ त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च । त्वमेक आत्मात्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥ ५ ॥ त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि । कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ६ ॥ त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद्व्यतिरिक्तमस्ति । विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ७ ॥ व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् । भुङ्क्षे स्थितो धाम नि पारमेष्ठ्य अव्यक्त आत्मा पुरुषः पुराणः ॥ ८ ॥

अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् । चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ९ ॥

इति हिरण्यकशिपुकृतब्रह्मस्तोत्रं संपूर्णम् ।

---

## २९ हिरण्यगर्भस्तोत्रम् ।

श्रीगणेशाय नमः । ऋग्वेद आद्यमुखतोऽस्ति विनिर्गतः प्राक् दक्षास्यतः परयजुस्त्वथ पश्चिमास्यात् । सामोत यस्य वदनाच्चरमादथर्वा तन्नौमि विश्वसृजमग्र्यहिरण्यगर्भम् ॥ १ ॥ आदौ तु भूप्रभृतिका ननु सप्त लोकान्पातालसप्तकमथो विदिशो दिशश्च । सप्तार्णवाद्रिसरितः सुससर्ज धाता तन्नौमि० ॥ २ ॥ पुत्रान्महर्षिसनकादिकनारदाद्यान्सृष्ट्वापि ते स्म न सृजन्त्यत आत्मनिष्ठाः । सत्रीककश्यपमुखानसृजत्पुनर्यस्तन्नौमि० ॥ ३ ॥ प्राजीजनत्सुमनसो मघवत्पुरोगान्गान्धर्वयक्षमनुजानृतुमासपक्षान् । मन्वादिमर्त्यमृगनागखगांस्तरून्यस्तं नौमि० ॥ ४ ॥ यः पाकशासनयमादिसुरान्प्रजेशो ज्ञानं प्रदर्शयति चर्षिवरांस्तथाद्य । यत्सत्यलोकगमनाच्च पुनर्निवृत्तिस्तन्नौमि० ॥५॥ विद्यारतः शमदमादिभिरप्युपेतो विद्वान् सदा परशिवं परिचिन्तयेद्यः । स्थानं स याति सुरयानसमास्थितोऽस्य तन्नौमि० ॥ ६ ॥ भूत्वार्चिराप्यदिनमेत्य सितं च पक्षं लोकानुरवीन्दुतडितां क्रमशो व्रजेद्यः । तत्रैत्य तन्नयति कश्च न यस्य

लभेत्सर्वकामान् । गणेशप्रसादेन सिध्यन्ति वाचो गणेशे विभौ दुर्लभं किं प्रसन्ने ॥ ९ ॥

इति श्रीगणेशभुजङ्गस्तोत्रं संपूर्णम् ।

## २६ गणेशद्वादशनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ २ ॥ गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः । प्रसन्नो भव मे नित्यं वरदाता विनायक ॥ ३ ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ ४ ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि गणेशस्य समाहितः ॥५॥ विद्यार्थी लभते विद्यां धनार्थी विपुलं धनम् । इष्टकामं तु कामार्थी धर्मार्थी मोक्षमक्षयम् ॥ ६ ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ७ ॥

इति श्रीगणेशद्वादशनामस्तोत्रं संपूर्णम् ।

## २७ ढुण्ढिभुजङ्गस्तोत्रम् ।

श्रीगणेशाय नमः ॥ उमाङ्गोद्भवं दन्तिवक्त्रं गणेशं भुजे

कङ्कणैः शोभितं धूम्रकेतुम् । गले हारमुक्तावलीशोभितं तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ १ ॥ गणेशैकदन्तं शुभं सर्वकार्ये स्मरन्मन्मुखं ज्ञानदं सर्वसिद्धिम् । मनश्चिन्तितं कार्यसिद्धिर्भवेत्तं नमो बुद्धिकान्तं गणेशं नमस्ते ॥ २ ॥ कुठारं धरन्तं कृतं विघ्नराजं चतुर्भिर्मुखैरेकदन्तैकवर्णम् । इदं देवरूपं गणं सिद्धिनाथं नमो भालचन्द्रं गणेशं नमस्ते ॥ ३ ॥ शिरःसिन्दुरं कुङ्कुमं देहवर्णं शुभैभादिकं प्रीयते विघ्नराजम् । महासंकटच्छेदने धूम्रकेतुं नमो गौरिपुत्रं गणेशं नमस्ते ॥ ४ ॥ यथा पातकं छेदितुं विष्णुनाम तथा ध्यायतां शंकरं पापनाशम् । यथा पूजितं षण्मुखं शोकनाशं नमो विघ्ननाशं गणेशं नमस्ते ॥ ५ ॥ सदा सर्वदा ध्यायतामेकदन्तं सदा पूजितं सिन्दुरारक्तपुष्पैः । सदा चर्चितं चन्दनैः कुङ्कुमाक्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ६ ॥ नमो गौरिदेहमलोत्पन्न तुभ्यं नमो ज्ञानरूपं नमः सिद्धिपं तं । नमो ध्यायतामर्चतां बुद्धिदं तं नमो गौर्यपत्यं गणेशं नमस्ते ॥७॥ भुजङ्गप्रयातं पठेद्यस्तु भक्त्या प्रभाते पठेच्छुद्धचैकाग्रचित्तः । क्षयं यान्ति विघ्ना दिशः शोभयन्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ८ ॥

इति श्रीढुण्ढिराजभुजङ्गप्रयातस्तोत्रं संपूर्णम् ।

# ब्रह्मस्तोत्रे ।

## २८ ब्रह्मस्तोत्रम् ।

श्रीगणेशायनमः ॥ हिरण्यकशिपुरुवाच । कल्पान्ते कालसृष्टेन योऽन्धेन तमसा वृतम् । अभिव्यनक् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ १ ॥ आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति । रजःसत्त्वतमोधाम्ने पराय महते नमः ॥ २ ॥ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये । प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ ३ ॥ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् । चित्तस्य चित्तेर्मनइन्द्रियाणां पतिर्महान्भूतगुणाशयेशः ॥ ४ ॥ त्वं सप्ततन्तून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च । त्वमेक आत्मात्मवतामनादिरनन्तपारः कविरन्तरात्मा ॥ ५ ॥ त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि । कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ६ ॥ त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद्व्यतिरिक्तमस्ति । विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ७ ॥ व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् । भुङ्क्षे स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः ॥ ८ ॥

अनन्ताव्यक्तरूपेण येनेदमखिलं ततम्। चिदचिच्छक्ति-युक्ताय तस्मै भगवते नमः ॥ ९ ॥

इति हिरण्यकशिपुकृतब्रह्मस्तोत्रं संपूर्णम्।

## २९ हिरण्यगर्भस्तोत्रम्।

श्रीगणेशाय नमः। ऋग्वेद आद्यमुखतोऽस्ति विनिर्गतः प्राक् दक्षास्यतः परयजुस्त्वथ पश्चिमास्यात्। सामोत्त यस्य वदनाचरमादथर्वा तन्नौमि विश्वसृजमग्र्यहिरण्यगर्भम् ॥ १ ॥ आदौ तु भूप्रभृतिका ननु सप्त लोकान्पातालसप्तक-मथो विदिशो दिशश्च। सप्तार्णवाद्रिसरितः सुससर्ज धाता तन्नौमि० ॥ २ ॥ पुत्रान्महर्षिसनकादिकनारदाद्यान्सृष्ट्वापि ते स्म न सृजन्त्यत आत्मनिष्ठाः। सत्रीककश्यप-मुखानसृजत्पुनर्यस्तन्नौमि० ॥ ३ ॥ प्राजीजनत्सुमनसो मघवत्पुरोगान्गान्धर्वयक्षमनुजानृतुमासपक्षान्। मन्वादि-मर्त्यमृगनागखगांस्तरून्यस्तं नौमि० ॥ ४ ॥ यः पाकशा-सनयमादिसुरान्प्रजेशो ज्ञानं प्रदर्शयति चर्षिवरांस्तथाशु। यत्सत्यलोकगमनान्न पुनर्निवृत्तिस्तन्नौमि० ॥५॥ विद्यारतः शमदमादिभिरप्युपेतो विद्वान् सदा परशिवं परिचिन्त-येद्यः। स्थानं स याति सुरयानसमास्थितोऽस्य तन्नौमि० ॥ ६ ॥ भूत्वार्चिराप्यदिनमेत्य सितं च पक्षं लोकानूर-



वीन्दुतडितो क्रमशो व्रजन्यः। तत्रैत्य तन्नयति कश्च न यस्य

भृत्यस्तन्नौमि० ॥ ७ ॥ योगी पितामहपुरं शुभदिव्यदेहो गत्वा यथेप्सितमथो विपुलांश्च भोगान् । भुक्त्वा चिरं वसति यन्निकटे मुदेत्र तन्नौमि० ॥ ८ ॥ तत्त्वार्थबोधमपरोक्षमवाप्य तस्मिन्नंधाय सद्रमति सत्यसभालयेऽस्य । अन्ते विमुञ्चति यति खलु येन सार्धं तन्नौमि० ॥ ९ ॥ अस्मात्तृतीयदिवि पूरपराजिताख्या यस्यैव मण्डपवरः सुहिरण्मयश्च । वृक्षो हि सोम सवनो ननु पिप्पलोऽस्ति तन्नौमि० ॥ १० ॥ ऐराभिधानकमरोजनहपकं च तीर्त्वादिमभिधमरसंज्ञमुनेतरण्यम् । उल्लंघ्य यस्य सदनं व्रतिनो व्रजन्ति तन्नौमि० ॥ ११ ॥ यस्मिन् जरामृतिशुचः सुकृतं न चान्यत्पाप्मा हि दूरमखिलो विनिवर्ततेऽस्मात् । श्रुत्या स्वयं निगदितं स्विति यस्य धिष्ण्यं तन्नौमि० ॥ १२ ॥ शीतन्न जातु न च घर्मसमुद्गमोऽपि क्षुत्तृण्न यत्र सततं सुतरां विरामः । आस्ते यदीयकसदस्तदुदीरयन्ति तन्नौमि० ॥ १३ ॥ स्तम्भैर्विनापि सुदृढा बत सुस्थिरा या भास्वत्प्रभां प्रकुरुतेऽधिगतिप्रकाशा । ब्राह्मी सभा मणिमयी अमिता यदीया तन्नौमि० ॥ १४ ॥ भृग्वादिकाश्च मुनयः श्रुतयोऽपि साङ्गा वस्वादिदेवगणसिद्धपिशाचसाध्याः । आरादजस्रमखिला समुपासते यं तन्नौमि० ॥ १५ ॥ भूतानि कालमनवो गिरयो द्रुमाश्च नद्यः सरांसि नदसागरपन्नगाद्याः । सूत्रात्मकं यमभि-



देहभृतोऽवयवास्ते तन्नौमि० ॥ १६ ॥ ...

मणयः कलाश्च छन्दांसि यज्ञनिवहो ग्रहदक्षिणाश्च । स्तोमा-दयो यन्तुरयान्ति सविग्रहास्तं तन्नौमि० ॥ १७ ॥ एवं कृतं जडधियापि मया कथंचित्स्तोत्रं क्षमस्व चतुरानन सर्व-विन्मे । तत्त्वं प्रकाश्य भवजालमिदं मदीयं भित्त्वा नय-स्व भुवनं परमं त्वदीयम् ॥ १८ ॥ इत्थं स्तुवन्ति पुरुषा अनिशं मुदा त्वं तेभ्यश्च देहि चिरमायुरनामयत्वम् । नित्या-न्यवस्तु मननं च शमादिषट्कं मोक्षस्पृहां च विषयेषु विरा-गतां च ॥ १९ ॥ रानडोपाख्यरामाह्वसूनुनाल्पधियापि यत् । रचितं तत्कृपादृष्ट्या शोध्यं विद्भिर्बुधैः पुनः ॥ २० ॥

इति श्रीहिरण्यगर्भस्तोत्रं समाप्तम् ।

# विष्णुस्तोत्राणि ।

## ३० नारायणवर्म ।

श्रीगणेशाय नमः ॥ राजोवाच । येन गुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान् । क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् । यथाततायिनः शत्रून्येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच । वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायानुपृच्छते । नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच । धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः । कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारा-

यणमयं वर्म संनह्येदूय आगते । दैवभूतात्मकर्मभ्यो नारायणमयः पुमान् ॥ ५ ॥ पादयोर्जान्वोरूर्वोरुदरे हृद्यथोरसि । मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ६ ॥ ॐनमो नारायणायेति विपर्ययमथापि वा । करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ ७ ॥ प्रणवादि यकारान्तमङ्गुल्यङ्गुष्ठपर्वसु । न्यसेद्धृदय ॐकारं विकारमनु मूर्धनि ॥ ८ ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया न्यसेत् । वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु ॥ ९ ॥ मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेद्बुधः । सविसर्गं फडन्तं तत्सर्वदिक्षु विनिर्दिशेत् ॥ १० ॥ ॐविष्णवे नमः । इत्यात्मानं परं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् । विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ ११ ॥ ॐहरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे । दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥ १२ ॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् । स्थलेषु मायावटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥ १३ ॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः । विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ १४ ॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः । रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम् ॥ १५ ॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् । दत्तस्त्वयोगादथ योगनाथः

पायाद्गुणेशः कपिलः कर्मबन्धात् ॥ १६ ॥ सनत्कुमारोऽवतु कामदेवाद्धयाननो मां पथि देवहेलनात् । देवर्षिवर्यः पुरुषार्चनान्तरात्कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥ धन्वन्तरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भयादृषभो निर्जितात्मा । यज्ञश्च लोकादुत्तताज्जनान्ताद्बलो गणात्क्रोधवशादहीन्द्रः ॥ १८ ॥ द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाषण्डगणात्प्रमादात् । कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥ मां केशवो गदया प्रातरव्याद्गोविन्द आसङ्गव आत्तवेणुः । नारायणः प्राह्ण उदात्तशक्तिर्मध्यंन्दिने विष्णुररीन्द्रपाणिः ॥ २० ॥ देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामावतु माधवो माम् । दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥ श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः । दामोदरोऽव्यादनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥ २२ ॥ चक्रं युगान्तानलतिग्मनेमि भ्रमत्समंताद्भगवत्प्रयुक्तम् । दन्दग्धि दन्दग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥ गदेऽशनिस्पर्शनविस्फुलिङ्गे निष्पिण्ढि निष्पिण्ढ्यजितप्रियासि । कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ॥ २४ ॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् । नरेन्द्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कम्पयन् ॥ २५ ॥ त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो

मम छिन्धि छिन्धि । चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघानां हर पापचक्षुषाम् ॥ २६ ॥ यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च । सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ॥ २७ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् । प्रयान्तु संक्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ॥ २८ ॥ गरुडो भगवांस्तोत्रस्तोभश्छन्दोमयः प्रभुः । रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनस्य वाहनम् ॥ २९ ॥ सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः । बुद्धीन्द्रियमनःप्राणान् पान्तु पार्षदभूषणाः ॥ ३० ॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् । भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥ विदिक्षु दिक्षूर्ध्वमधः समन्तादन्तर्बहिर्भगवान्नारसिंहः । प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥ मघवन्निदमाख्यातं वर्म नारायणात्मकम् । विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥ एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा । पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३६ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् । राजदस्युग्रहादिभ्यो व्याघ्र्यादिभ्यश्च कर्हिचित् ॥ ३७ ॥ इमां विद्यां पुरा कश्चि-

स्कौशिको धारयन्द्विजः । योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ३८ ॥ तस्योपरि विमानेन गन्धर्वपतिरेकदा । ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः । स वालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ ४० ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् । य इदं शृणुयात्काले यो धारयति चादृतः । तं नमस्यन्ति भूतानि मुच्यते सर्वतो भयात् ॥ ४१ ॥ श्रीशुक उवाच । एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः । त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४२॥

इति श्रीमद्भागवते महापुराणे षष्ठस्कन्धे नारायणवर्मकथनं नामाष्टमोऽध्यायः ।

---

## ३१ विष्णुपञ्जरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीविष्णुपञ्जरस्तोत्रमन्त्रस्य नारद ऋषिः । अनुष्टुप्छन्दः । श्रीविष्णुः परमात्मा देवता । अहं बीजम् । सोऽहं शक्तिः । ॐ ह्रीं कीलकम् । मम सर्वदेहरक्षणार्थं जपे विनियोगः । नारदऋषये नमः मुखे । श्रीविष्णुपरमात्मदेवतायै नमः हृदये । अहं बीजं गुह्ये । सोऽहं शक्तिः पादयोः । ॐ ह्रीं कीलकं पादाग्रे । ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति मन्त्रः । ॐ ह्रां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः । ॐ ह्रूं मध्यमाभ्यां नमः । ॐ ह्रैं अनामि-

काभ्यां नमः। ॐह्रौं कनिष्ठिकाभ्यां नमः। ॐह्रः करतलकरपृष्ठाभ्यां नमः। इति करन्यासः। अथ हृदयादिन्यासः ॐह्रां हृदयाय नमः। ॐह्रीं शिरसे स्वाहा। ॐह्रूं शिखायै वषट्। ॐह्रैं कवचाय हुम्। ॐह्रौं नेत्रत्रयाय वौषट्। ॐह्रः अस्त्राय फट्। इति अङ्गन्यासः। अर्हंबीजप्राणायामं मन्त्रत्रयेण कुर्यात्। अथ ध्यानम्। परं परस्मात्प्रकृतेरनादिमेकं निविष्टं बहुधा गुहायाम्। सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम् ॥ १ ॥ ॐविष्णुपञ्जरकं दिव्यं सर्वदुष्टनिवारणम्। उग्रतेजो महावीर्यं सर्वशत्रुनिकृन्तनम् ॥ २ ॥ त्रिपुरं दहमानस्य हरस्य ब्रह्मणोदितम्। तदहं संप्रवक्ष्यामि आत्मरक्षाकरं नृणाम् ॥ ३ ॥ पादौ रक्षतु गोविन्दो जङ्घे चैव त्रिविक्रमः। ऊरू मे केशवः पातु कटिं चैव जनार्दनः ॥ ४ ॥ नाभिं चैवाच्युतः पातु गुह्यं चैव तु वामनः। उदरं पद्मनाभश्च पृष्ठं चैव तु माधवः ॥ ५ ॥ वामपार्श्वं तथा विष्णुर्दक्षिणं मधुसूदनः। बाहू वै वासुदेवश्च हृदि दामोदरस्तथा ॥ ६ ॥ कण्ठं रक्षतु वाराहः कृष्णश्च मुखमण्डलम्। माधवः कर्णमूले तु हृषीकेशश्च नासिके ॥ ७ ॥ नेत्रे नारायणो रक्षेल्ललाटं गरुडध्वजः। कपोलौ केशवो रक्षेद्वैकुण्ठः सर्वतोदिशम् ॥ ८ ॥ श्रीवत्साङ्कश्च सर्वेषामङ्गानां रक्षको भवेत्। पूर्वस्यां पुण्डरीकाक्ष आग्नेय्यां श्रीधरस्तथा ॥ ९ ॥ दक्षिणे नारसिंहश्च नैरृत्यां

माधवोऽवतु । पुरुषोत्तमो मे वारुण्यां वायव्यां च जनार्दनः ॥ १० ॥ गदाधरस्तु कौवेर्यामीशान्यां पातु केशवः । आकाशे च गदा पातु पाताले च सुदर्शनम् ॥ ११ ॥ सन्नद्धः सर्वगात्रेषु प्रविष्टो विष्णुपञ्जरः । विष्णुपञ्जरविष्टोऽहं विचरामि महीतले ॥ १२ ॥ राजद्वारेऽपथे घोरे संग्रामे शत्रुसंकटे । नदीषु च रणे चैव चोरव्याघ्रभयेषु च ॥ १३ ॥ डाकिनीप्रेतभूतेषु भयं तस्य न जायते । रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर ॥ १४ ॥ रक्षन्तु देवताः सर्वा ब्रह्मविष्णु-महेश्वराः । जले रक्षतु वाराहः स्थले रक्षतु वामनः ॥ १५ ॥ अटव्यां नारसिंहश्च सर्वतः पातु केशवः । दिवा रक्षतु मां सूर्यो रात्रौ रक्षतु चन्द्रमाः ॥ १६ ॥ पन्थानं दुर्गमं रक्षेत्स-र्वमेव जनार्दनः । रोगविघ्नहतश्चैव ब्रह्महा गुरुतल्पगः ॥ १७ ॥ स्त्रीहन्ता बालघाती च सुरापो वृषलीपतिः । मुच्यते सर्वपापेभ्यो यः पठेन्नात्र संशयः ॥ १८ ॥ अपुत्रो लभते पुत्रं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां मोक्षार्थी लभते गतिम् ॥ १९ ॥ आपदो हरते नित्यं विष्णुस्तोत्रार्थ-संपदा । यस्त्विदं पठति स्तोत्रं विष्णुपञ्जरमुत्तमम् ॥ २० ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । गोसहस्रफलं तस्य वाजपेयशतस्य च ॥ २१ ॥ अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः । सर्वकामं लभेदस्य पठनान्नात्र संशयः

॥ २२ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ २३ ॥

इति श्रीब्रह्माण्डपुराणे इन्द्रनारदसंवादे श्रीविष्णु-
पञ्जरस्तोत्रं संपूर्णम् ।

---

## ३२ श्रीमदच्युताष्टकम् ।

श्रीगणेशाय नमः ॥ अच्युताच्युत हरे परमात्मन्राम कृष्ण पुरुषोत्तम विष्णो । वासुदेव भगवन्ननिरुद्ध श्रीपते शमय दुःखमशेषम् ॥ १ ॥ विश्वमङ्गल विभो जगदीश नन्दनन्दन नृसिंह नरेन्द्र । मुक्तिदायक मुकुन्द मुरारे श्रीपते शमय दुःखमशेषम् ॥२॥ रामचन्द्र रघुनायक देव दीननाथ दुरितक्षयकारिन् । यादवेन्द्र यदुभूषण यज्ञ श्रीपते शमय दुःखमशेषम् ॥ ३ ॥ देवकीतनय दुःखदवाग्ने राधिकारमण रम्यसुमूर्ते । दुःखमोचन दयार्णव नाथ श्रीपते शमय दुःखमशेषम् ॥ ४ ॥ गोपिकावदनचन्द्रचकोर नित्य निर्गुण निरञ्जन जिष्णो । पूर्णरूप जय शंकर सर्व श्रीपते शमय दुःखमशेषम् ॥ ५ ॥ गोकुलेश गिरिधारण धीर यामुनाच्छतटखेलन वीर । नारदादिमुनिवन्दितपाद श्रीपते शमय दुःखमशेषम् ॥ ६ ॥ द्वारकाधिप दुरन्तगुणाब्धे प्राणनाथ परिपूर्ण भवारे । ज्ञानगम्य गुणसागर ब्रह्मन्श्रीपते शमय



दुःखमशेषम् ॥ ७ ॥ दुष्टनिर्दलन देव दयालो पद्मनाभ धर

णीधरधारिन् । रावणान्तक रमेश मुरारे श्रीपते शमय दुःखमशेषम् ॥ ८ ॥ अच्युताष्टकमिदं रमणीयं निर्मितं भवभयं विनिहन्तुम् । यः पठेद्विषयवृत्तिनिवृत्तिर्जन्मदुःखमखिलं स जहाति ॥ ९ ॥

इति श्रीशंकराचार्यविरचितमच्युताष्टकस्तोत्रं समाप्तम् ।

## ३३ अच्युताष्टकम् ।

श्रीगणेशाय नमः ॥ अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् । श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ॥ १ ॥ अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम् । इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दजं संदधे ॥ २ ॥ विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीजानये । वल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥ ३ ॥ कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे । अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥ राक्षसक्षोभितः सीतया शोभितो दण्डकारण्यभूपुण्यताकारणः । लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम् ॥ ५ ॥ धेनुकारिष्टकोऽनिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः । पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा

॥ ६ ॥ विद्युदुद्द्योतवान्प्रस्फुरद्वाससं प्रावृडम्भोदवत्प्रोल्लसद्विग्रहम् । वन्यया मालया शोभितोरःस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥ कुञ्चितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं लसत्कुण्डलं गण्डयोः । हारकेयूरकं कङ्कणप्रोज्ज्वलं किङ्किणीमञ्जुलं श्यामलं तं भजे ॥ ८ ॥ अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् । वृत्ततः सुन्दरं कर्तृ विश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥९॥

इति श्रीशंकराचार्यविरचितमच्युताष्टकं संपूर्णम् ।

---

## ३४ आचार्यकृतषट्पदी ।

श्रीगणेशाय नमः ॥ अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् । भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥ दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे । श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥२॥ सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥ ३ ॥ उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे । दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता वसुधाम् । परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥५॥ दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द । भवजलधिमथनमन्दर परमं दरमपनय त्वं

मे ॥ ६ ॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ । इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥७॥

इति श्रीमच्छंकराचार्यविरचितं षट्पदीस्तोत्रं संपूर्णम् ।

---

## ३५ विष्णुस्तवराजः ।

श्रीगणेशाय नमः ॥ पद्मोवाच । योगेन सिद्धविबुधैः परिभाव्यमानं लक्ष्म्यालयं तुलसिकाचितभक्तभृङ्गम् । प्रोत्तुङ्गरक्तनखराङ्गुलिपत्रचित्रं गङ्गारसं हरिपदाम्बुजमाश्रयेऽहम् ॥ १ ॥ गुम्फन्मणिप्रचयघट्टितराजहंससिञ्जत्सुनूपुरयुतं पदपद्मवृन्दम् । पीताम्बराञ्चलविलोलचलत्पताकं स्वर्णत्रिवक्रवलयं च हरेः स्मरामि ॥ २ ॥ जङ्घे सुपर्णगलनीलमणिप्रवृद्धे शोभास्पदारुणमणिद्युतिचञ्चुमध्ये । आरक्तपादतललम्बनशोभमाने लोकेक्षणोत्सवकरे च हरेः स्मरामि ॥ ३ ॥ ते जानुनी मखपतेर्भुजमूलसङ्गरङ्गोत्सवावृततडिद्वसने विचित्रे । चञ्चत्पतत्रिमुखनिर्गतसामगीतविस्तारितात्मयशसी च हरेः स्मरामि ॥ ४ ॥ विष्णोः कटिं विधिकृतान्तमनोजभूमिं जीवाण्डकोशगणसङ्गदुकूलमध्याम् । नानागुणप्रकृतिपीतविचित्रवस्त्रां ध्याये निबद्धवसनां खगपृष्ठसंस्थाम् ॥ ५ ॥ शान्तोदरं भगवतस्त्रिवलिप्रकाशमावर्तनाभिविकसद्विधिजन्म पद्मम् । नाडीनदीगणरसोत्थसितान्त्रसिन्धुं ध्यायेऽण्डकोशनिलयं तनुलोमरेखम् ॥ ६ ॥ वक्षः

पयोधितनयाकुचकुङ्कुमेन हारेण कौस्तुभमणिप्रभया विभा-
तम् । श्रीवत्सलक्ष्म हरिचन्दनजप्रसूनमालोचितं भगवतः
सुभगं स्मरामि ॥ ७ ॥ बाहू सुवेषसदनौ वलयाङ्गदादिशो-
भास्पदौ दुरितदैत्यविनाशदक्षौ । तौ दक्षिणौ भगवतश्च
गदासुनाभतेजोर्जितौ सुललितौ मनसा स्मरामि ॥ ८ ॥
वामौ भुजौ मुररिपोर्धृतपद्मशङ्खौ श्यामौ करीन्द्रकरवन्मणि-
भूषणाढ्यौ । रक्ताङ्गुलिप्रचयचुम्बितजानुमध्यौ पद्मालयाप्रि-
यकरौ रुचिरौ स्मरामि ॥ ९ ॥ कण्ठं मृणालममलं मुखप-
ङ्कजस्य लेखात्रयेण वनमालिकया निवीतम् । किंवा विमु-
क्तिवशमन्त्रकसत्फलस्य वृन्तं चिरं भगवतः सुभगं स्मरामि
॥ १० ॥ वक्राम्बुजं दशनहासविकासरम्यं रक्ताधरोष्ठवर-
कोमलवाक्सुधाढ्यम् । सन्मानसोद्भवचलेक्षणपत्रचित्रं लोका-
भिराममलं च हरेः स्मरामि ॥ ११ ॥ सूरात्मजावसथ-
गन्धमिदं सुनासं भ्रूपल्लवं स्थितिलयोदयकर्मदक्षम् । कामो-
त्सवं च कमलाहृदयप्रकाशं सञ्चिन्तयामि हरिवक्त्रविलास-
दक्षम् ॥ १२ ॥ कर्णौ लसन्मकरकुण्डलगन्धलोलौ नाना-
दिशां च नभसश्च विकासगेहम् । लोलालकप्रचयचुम्बन-
कुञ्चिताग्रौ लग्नौ हरेर्मणिकिरीटतटे स्मरामि ॥ १३ ॥
भालं विचित्रतिलकं प्रियचारुगन्धगोरोचनारचनया लल-
नाभिरामम् । ब्रह्मैकधाम मणिकान्तकिरीटयुग्मं ध्याये

मनोनयनहारकमीश्वरस्य ॥ १४ ॥ श्रीवासुदेवचिकुरं कुटिलं

निबद्धं नानासुगन्धिकुसुमैः स्वजनादरेण । दीर्घं रमाहृदयगाशमनं धुनन्तं ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये ॥१५॥ मेघाकारं सोमसूर्यप्रकाशं सुभ्रून्नासं शक्रचापैकमानम् । शोकातीतं पुण्डरीकायताक्षं विद्युच्चैलं चाश्रयेऽहं त्वपूर्वम् ॥ १६ ॥ दीनं हीनं सेवया दैवगत्या पापैस्तापैः पूरितं मे शरीरम् । लोभाक्रान्तं शोकमोहादिविद्धं कृपादृष्ट्या पाहि मां वासुदेव ॥ १७ ॥ ये भक्त्याद्यां ध्यायमानां मनोज्ञां व्यक्तिं विष्णोः षोडशश्लोकपुष्पैः । स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः शुद्धा मुक्ता ब्रह्मसौख्यं प्रयान्ति ॥ १८ ॥ पद्मेरितमिदं पुण्यं शिवेन परिभाषितम् । धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ १९ ॥ पठन्ति ये महाभागास्ते मुच्यन्तेंऽहसोऽखिलात् । धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम् ॥ २० ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये पद्माप्रोक्तो विष्णुस्तवराजः संपूर्णः ।

---

## ३६ नारायणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारायण नारायण जय गोविन्द हरे । नारायण नारायण जय गोपाल हरे ॥ ध्रु० ॥ करुणापारावारा वरुणालयगम्भीरा । नारायण० ॥ १ ॥ घननीरदसंकाशा कृतकलिकल्मषनाशा । नारायण० ॥ २ ॥

यमुनातीरविहारा धृतकौस्तुभमणिहारा । नारायण० ॥३॥
पीताम्बरपरिधाना सुरकल्याणनिधाना । नारायण० ॥४॥
मञ्जुलगुञ्जाभूषा मायामानुषवेषा । नारायण० ॥ ५ ॥
राधाऽधरमधुरसिका रजनीकरकुलतिलका । नारायण०
॥ ६ मुरलीगानविनोदा वेदस्तुतभूपादा । नारायण० ॥७॥
बर्हिनिबर्हापीडा नटनाटकफणिक्रीडा । नारायण० ॥ ८ ॥
वारिजभूषाभरणा राजीवरुक्मिणीरमणा । नारायण० ॥९॥
जलरुहदलनिभनेत्रा जगदारम्भकसूत्रा । नारायण० ॥१०॥
पातकरजनीसंहर करुणालय मामुद्धर । नारायण० ॥११॥
अघबकक्षयकंसारे केशव कृष्ण मुरारे । नारायण० ॥१२॥
हाटकनिभपीताम्बर अभयं कुरु मे मावर । नारायण०
॥ १३ ॥ दशरथराजकुमारा दानवमदसंहारा । नारायण०
॥ १४ ॥ गोवर्धनगिरिरमणा गोपीमानसहरणा । नारायण०
॥ १५ ॥ शरयूतीरविहारा सज्जनऋषिमन्दारा । नारायण०
॥ १६ ॥ विश्वामित्रमखत्रा विविधपरासुचरित्रा । नारायण०
॥ १७ ॥ ध्वजवज्राङ्कुशपादा धरणीसुतसहमोदा । नारायण०
॥ १८ ॥ जनकसुताप्रतिपाला जय जय संस्मृतिलीला ।
नारायण० ॥ १९ ॥ दशरथवाग्धृतिभारा दण्डकवनस-
ञ्चारा । नारायण० ॥ २० ॥ मुष्टिकचाणूरसंहारा मुनि-
मानसविहारा । नारायण० ॥ २१ ॥ वालिविनिग्रहशौर्या
वरसुग्रीवहितार्या । नारायण० ॥ २२ ॥ मां मुरलीकर धीवर

पालय पालय श्रीधर । नारायण० ॥ २३ ॥ जलनिधिबन्धनधीरा रावणकण्ठविदारा । नारायण० ॥ २४ ॥ ताटीमददलनाढ्या नटगुणविविधधनाढ्या । नारायण० ॥ २५ ॥ गौतमपत्नीपूजन करुणाघनावलोकन । नारायण० ॥ २६ ॥ संभ्रमसीताहारा साकेतपुरविहारा । नारायण० ॥ २७ ॥ अचलोद्धृतिचञ्चत्कर भक्तानुग्रहतत्पर । नारायण० ॥ २८ ॥ नैगमगानविनोदा रक्षःछतप्रह्लादा । नारायण० ॥ २९ ॥ भारतियतिवरशंकर नामामृतमखिलान्तर । नारायण नारायण जय गोपाल हरे ॥ ३० ॥

इति श्रीमच्छंकराचार्यविरचितं नारायणस्तोत्रं संपूर्णम् ।

---

## ३७ विष्णोरष्टाविंशतिनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अर्जुन उवाच । किं नु नामसहस्राणि जपते च पुनः पुनः । यानि नामानि दिव्यानि तानि चाचक्ष्व केशव ॥ १ ॥ श्रीभगवानुवाच । मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम् । गोविन्दं पुण्डरीकाक्षं माधवं मधुसूदनम् ॥२॥ पद्मनाभं सहस्राक्षं वनमालिं हलायुधम् । गोवर्धनं हृषीकेशं वैकुण्ठं पुरुषोत्तमम् ॥३॥ विश्वरूपं वासुदेवं रामं नारायणं हरिम् । दामोदरं श्रीधरं च वेदाङ्गं गरुडध्वजम् ॥ ४ ॥ अनन्तं कृष्णगोपालं जपतो नास्ति पातकम् । गवां कोटि-

प्रदानस्य अश्वमेधशतस्य च ॥ ५ ॥ कन्यादानसहस्राणां फलं प्राप्नोति मानवः । अमायां वा पौर्णमास्यामेकादश्यां तथैव च ॥ ६ ॥ संध्याकाले स्मरन्नित्यं प्रातःकाले तथैव च । मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥

इति श्रीकृष्णार्जुनसंवादे विष्णोरष्टाविंशतिनामस्तोत्रं संपूर्णम् ।

## ३८ मुकुन्दमाला ।

श्रीगणेशाय नमः ॥ वन्दे मुकुन्दमरविन्ददलायताक्षं कुन्देन्दुशङ्खदशनं शिशुगोपवेषम् । इन्द्रादिदेवगणवन्दितपादपीठं वृन्दावनालयमहं वसुदेवसूनुम् ॥ १ ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तिप्रियेति भवलुण्ठनकोविदेति । नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुन्द ॥ २ ॥ जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ ३ ॥ मुकुन्द मूर्ध्नां प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् । अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु तव प्रसादात् ॥ ४ ॥ श्रीगोविन्दपदाम्भोजमधुनो महदद्भुतम् । यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ ५ ॥



नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम् । रम्यारामामृदुतनुलतानन्दने नापि

कितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ २२ ॥

इति श्रीकुलशेखरेण राज्ञा विरचिता मुकुन्दमाला संपूर्णा ।

## ३९ श्रीविष्णोः षोडशनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ औषधे चिन्तयेद्विष्णुं भोजने च जनार्दनम् । शयने पद्मनाभं च विवाहे च प्रजापतिम् ॥१॥ युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमम् । नारायणं तनुत्यागे श्रीधरं प्रियसङ्गमे ॥२॥ दुःस्वप्ने स्मर गोविन्दं संकटे मधुसूदनम् । कानने नारसिंहं च पावके जलशायिनम् ॥३॥ जलमध्ये वराहं च पर्वते रघुनन्दनम् । गमने वामनं चैव सर्वकार्येषु माधवम् ॥४॥ षोडशैतानि नामानि प्रातरुत्थाय यः पठेत् । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ५ ॥

इति श्रीविष्णोः षोडशनामस्तोत्रं संपूर्णम् ।

## ४० विष्णुशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नारद उवाच । ॐवासुदेवं हृषीकेशं वामनं जलशायिनम् । जनार्दनं हरिं कृष्णं श्रीवक्षं गरुडध्वजम् ॥ १ ॥ वाराहं पुण्डरीकाक्षं नृसिंहं नरकान्तकम् । अव्यक्तं शाश्वतं विष्णुमनन्तमजमव्ययम् ॥ २ ॥ नारायणं गदाध्यक्षं गोविन्दं कीर्तिभाजनम् । गोवर्धनोद्धरं देवं भूधरं

भुवनेश्वरम् ॥ ३ ॥ वेत्तारं यज्ञपुरुषं यज्ञेशं यज्ञवाहकम् । चक्रपाणिं गदापाणिं शङ्खपाणिं नरोत्तमम् ॥ ४ ॥ वैकुण्ठं दुष्टदमनं भूगर्भं पीतवाससम् । त्रिविक्रमं त्रिकालज्ञं त्रिमूर्तिं नन्दकेश्वरम् ॥ ५ ॥ रामं रामं हयग्रीवं भीमं रौद्रं भवोद्भवम् । श्रीपतिं श्रीधरं श्रीशं मङ्गलं मङ्गलायुधम् ॥ ६ ॥ दामोदरं दमोपेतं केशवं केशिसूदनम् । वरेण्यं वरदं विष्णुमानन्दं वसुदेवजम् ॥ ७ ॥ हिरण्यरेतसं दीप्तं पुराणं पुरुषोत्तमम् । सकलं निष्कलं शुद्धं निर्गुणं गुणशाश्वतम् ॥ ८ ॥ हिरण्यतनुसंकाशं सूर्यायुतसमप्रभम् । मेघश्यामं चतुर्बाहुं कुशलं कमलेक्षणम् ॥ ९ ॥ ज्योतीरूपमरूपं च स्वरूपं रूपसंस्थितम् । सर्वज्ञं सर्वरूपस्थं सर्वेशं सर्वतोमुखम् ॥१०॥ ज्ञानं कूटस्थमचलं ज्ञानदं परमं प्रभुम् । योगीशं योगनिष्णातं योगिनं योगरूपिणम् ॥ ११ ॥ ईश्वरं सर्वभूतानां वन्दे भूतमयं प्रभुम् । इति नामशतं दिव्यं वैष्णवं खलु पापहम् ॥ १२ ॥ व्यासेन कथितं पूर्वं सर्वपापप्रणाशनम् । यः पठेत्प्रातरुत्थाय स भवेद्वैष्णवो नरः ॥ १३ ॥ सर्वपापविशुद्धात्मा विष्णुसायुज्यमाप्नुयात् । चान्द्रायणसहस्राणि कन्यादानशतानि च ॥१४॥ गवां लक्षसहस्राणि मुक्तिभागी भवेन्नरः । अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः ॥१५॥

इति श्रीविष्णुपुराणे विष्णुशतनामस्तोत्रं संपूर्णम् ।

## ४१ परमेश्वरस्तुतिसारस्तोत्रम् ।

श्रीगणेशाय: ॥ त्वमेकः शुद्धोऽसि त्वयि निगमबाह्या-मलमयं प्रपञ्चं पश्यन्ति भ्रमपरवशाः पापनिरताः । बहि-स्तेभ्यः कृत्वा स्वपदशरणं मानय विभो गजेन्द्रे दृष्टं ते शरणद वदान्यं स्वपददम् ॥ १ ॥ न सृष्टेस्ते हानिर्यदि हि कृपयातोऽवसि च मां त्वयानेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे । अतो मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां न रिक्तां मे याञ्चां स्वजनरत कर्तुं भव हरे ॥ २ ॥ कदाऽहं भोः स्वामिन्नियतमनसा त्वां हृदि भजन्नभद्रे संसारे ह्यन-वरतदुःखेऽतिविरसः । लभेयं तां शान्तिं परममुनिभिर्या ह्यधिगता दयां कृत्वा मे त्वं वितर परशान्तिं भवहर ॥ ३ ॥ विधाता चेद्विश्वं सृजति सृजतां मे शुभकृतिं विधु-श्चेत्पाता माऽवतु जनिमृतेर्दुःखजलधेः । हरः संहर्ता संहरतु मम शोकं सजनकं यथाऽहं मुक्तः स्यां किमपि तु तथा ते विदधताम् ॥४॥ अहं ब्रह्मानन्दस्त्वमपि च तदाख्यः सुवि-दितस्ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुतिदृशा । तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं स्वमायां संवार्य प्रभव मम भेदं निरसितुम् ॥ ५ ॥ कदाहं हे स्वामिञ्जनिमृतिमयं दुःखनिबिडं भवं हित्वा सत्येऽनवरतसुखे स्वात्मवपुषि । रमे तस्मिन्नित्यं निखिलमुनयो ब्रह्मरसिका रमन्ते यस्मिंस्ते कृतसकलकृत्या यतिवराः ॥६॥ पठन्त्येके शास्त्रं निगममपरे

तत्परतया यजन्त्यन्ये त्वां वै ददति च पदार्थांस्तव हितान्। अहं तु स्वामिंस्ते शरणमगमं संसृतिभयाद्यथा ते प्रीतिः स्याद्धितकर तथा त्वं कुरु विभो ॥ ७ ॥ अहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः श्रुतिः सिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि विधुतः । इति ज्ञाते तत्त्वे भवति च परः संसृतिलयादतस्तत्त्वज्ञानं मयि विघटयेस्त्वं हि कृपया ॥ ८ ॥ अनादौ संसारे जनिमृतिमये दुःखितमना मुमुक्षुः सन्कश्चिद्व्रजति हि गुरुं ज्ञानपरमम् । ततो ज्ञात्वा यं वै तुदति न पुनः क्लेशनिवहैर्भजेऽहं तं देवं भवति च परो यस्य भजनात् ॥९॥ विवेको वैराग्यं न च शमदमाद्याः षडपरे मुमुक्षा मे नास्ति प्रभवति कथं ज्ञानममलम् । अतः संसाराब्धेस्तरणसरणिं मामुपदिशन्स्वबुद्धिं श्रौतीं मे वितर भगवंस्त्वं हि कृपया ॥ १० ॥ कदाऽहं भो स्वामिन्निगममतिवेद्यं शिवमयं चिदानन्दं नित्यं श्रुतिहृतपरिच्छेदनिवहम् । त्वमर्थाभिन्नं त्वामभिरम इहात्मन्यविरतं मनीषामेवं मे सफलय वदान्य स्वकृपया ॥ ११ ॥ यदर्थं सर्वं वै प्रियमसुधनादि प्रभवति स्वयं नान्यार्थो हि प्रिय इति च वेदे प्रविदितम् । स आत्मा सर्वेषां जनिमृतिमतां वेदगदितस्ततोऽहं तं वेद्यं सततममलं यामि शरणम् ॥ १२ ॥ मया त्यक्तं सर्वं कथमपि भवेत्स्वात्मनि मतिस्त्वदीया माया मां प्रति तु विपरीतं कृतवती । ततोऽहं किं कुर्यां नहि मम मतिः क्वापि

चरति दयां कृत्वा नाथ स्वपदशरणं देहि शिवदम् ॥१३॥ नगा दैत्याः कीशा भवजलधिपारं हि गमितास्त्वया चान्ये स्वामिन्किमिति समयेऽस्मिन्छयितवान् । न हेलां त्वं कुर्यास्त्वयि निहितसर्वे मयि विभो नहि त्वाऽहं हित्वा कमपि शरणं चान्यमगमम् ॥ १४ ॥ अनन्ताद्या विज्ञा न गुणजलधेस्तेऽन्तमगमन्नलः पारं यायात्तव गुणगणानां कथमयम् । गृणन्यावद्धि त्वा जनिमृतिहरं याति परमां गतिं योगिप्राप्यामिति मनसि बुद्ध्वाहमनवम् ॥ १५ ॥

इति श्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मानन्दविरचितं परमेश्वरस्तुतिसारस्तोत्रं संपूर्णम् ।

---

## ४२ मुरारिपञ्चरत्नम् ।

श्रीगणेशाय नमः ॥ यत्सेवनेन पितृमातृसहोदराणां चित्तं न मोहमहिमा मलिनं करोति । इत्थं समीक्ष्य तव भक्तजनान्मुरारे मूकोऽस्मि तेऽङ्घ्रिकमलं तदतीव धन्यम् ॥ १ ॥ ये ये विलग्नमनसः सुखमाप्तुकामास्ते ते भवन्ति जगदुद्भवमोदशून्याः । दृष्ट्वा विनष्टधनधान्यगृहान्मुरारे मू० ॥ २ ॥ वस्त्राणि दिग्वलयमावसतिः श्मशाने पात्रं कपालमहिमुण्डविभूषणानि । रुद्रे प्रसादमचलं तव वीक्ष्य शौरे मू० ॥ ३ ॥ यत्कीर्तिगायनरतस्य विधातृलोकः कौपीनमेणमजिनं विपुलां विभूतिम् । स्वार्थं तु दिग्भ्रमणमीक्ष्य तु सार्व-

कालं मू० ॥ ४ ॥ यद्वीक्षणे धृतधियामशनं फलादि वासोऽपि निर्जनवने गिरिकन्दरासु । वासांसि वल्कलमयानि विलोक्य चैवं मू० ॥ ५ ॥ स्तोत्रं पादाम्बुजस्यैतच्छ्रीशस्य विजितेन्द्रियः । पठित्वा तत्पदं याति श्लोकार्थज्ञस्तु यो नरः ॥६॥

इति श्रीमालवशुक्लमथुरानाथपण्डितेन्द्रकृतं मुरारिपञ्चरत्नं संपूर्णम् ।

---

## ४३ विष्णोरष्टकम् ।

श्रीगणेशाय नमः ॥ पुरः स्रष्टाविष्टः पुरुष इति तत्प्रेक्षणमुखः सहस्राक्षो भुक्त्वा फलमनुशयी शास्ति तनुत । स्वयं शुद्धं शान्तं निरवधिसुखं नित्यमचलं नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥ १ ॥ अनन्तं सत्सत्यं भवभयहरं ब्रह्म परमं सदा भातं नित्यं जगदिदमितः कल्पितपरम् । मुहुर्ज्ञानं यस्मिन्रजतमिव शुक्तौ भ्रमहरं नमा० ॥ २ ॥ मतौ यत्सद्रूपं मृगयति बुधोऽतन्निरसनान्न रज्जौ सर्पोऽपि मुकुरजठरे नास्ति वदनम् । अतोऽपार्थं सर्वं नहि भवति यस्मिंश्च तमहं नमा० ॥ ३ ॥ भ्रमद्धीविक्षिप्तेन्द्रियपथमनुध्यैर्हृदि विभुं नयं वै वेदस्वेन्द्रियमपि वसन्तं निजसुखम् । सदा सेव्यं भक्तैर्मुनिमनसि दीप्तं सुनिनुतं नमा० ॥ ४ ॥ बुधा यत्तद्रूपं वदति नहि न निर्गुणयममलं यथा ये व्यक्तं ते सततमकलङ्कं श्रुतिनुतम् । यदाहुः सर्वत्रास्खलितगुणसत्ता-

कमण्डलुं नमा० ॥ ५ ॥ लयादौ यस्मिन्यद्विलयमपि उद्य-त्प्रभवति तथा जीवोपेतं गुरुकरुणया बोधजनने। गतं चात्यन्तान्तं व्रजति सहसा सिन्धुनदवन्नमा० ॥ ६ ॥ जडं सङ्घातं यन्निमिषलवलेशेन चपलं यथा स्वं स्वं कार्यं प्रथयति महामोहजनकम्। मनोवाग्जीवानां न निविशति यं निर्भयपदं नमा० ॥ ७ ॥ गुणाख्याने यस्मिन्प्रभवति न वेदोऽपि नितरां निषिध्यद्वाक्यार्थैश्चकितचकितं योऽस्य वचनम्। स्वरूपं यद्गत्वा प्रभुरपि च तूष्णीं भवति तं नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥ ८ ॥ विष्णव-ष्टकं यः पठति प्रभाते नरोऽप्यखण्डं सुखमश्नुते च। यन्नि-त्यबोधाय सुबुद्धिनोक्तं रघूत्तमाख्येन विचार्य सम्यक् ॥९॥

इति श्रीपण्डितरघुनाथशर्मणा विरचितं
श्रीविष्णवष्टकं समाप्तम्।

---

## ४४ श्रीमधुसूदनस्तोत्रम्।

श्रीगणेशाय नमः॥ ॐमिति ज्ञानमात्रेण रोगाजीर्णेन निर्जितः। कालनिद्रां प्रपन्नोऽस्मि त्राहि मां मधुसूदन ॥१॥ न गतिर्विद्यते चान्या त्वमेव शरणं मम। पापपङ्के निम-ग्नोऽस्मि त्रा० ॥ २ ॥ मोहितो मोहजालेन पुत्रदारगृहादिषु। तृष्णया पीड्यमानोऽस्मि त्रा० ॥ ३ ॥ भक्तिहीनं च दीनं च दुःखशोकातुरं प्रभो। अनाश्रयमनाथं च त्रा० ॥ ४ ॥

गतागतेन श्रान्तोऽस्मि दीर्घसंसारवर्त्मसु । येन भूयो न गच्छामि त्रा० ॥ ५ ॥ बहवो हि मया दृष्टा क्लेशाश्चैव पृथक् पृथक् । गर्भवासे महद्दुःखं त्रा० ॥ ६ ॥ तेन देव प्रपन्नोऽस्मि त्राणार्थं त्वत्परायणः । दुःखार्णवपरित्राणात्त्रा० ॥ ७ ॥ वाचा यत्र प्रतिज्ञातं कर्मणा नोपपादितम् । तत्पापार्जितमग्नोऽस्मि त्रा० ॥८॥ सुकृतं न कृतं किंचिद्दुष्कृतं च कृतं मया । संसारघोरे मग्नोऽस्मि त्रा० ॥ ९ ॥ देहान्तरसहस्रेषु चान्योन्यभ्रामितो मया । तिर्यक्त्वं मानुषत्वं च त्रा० ॥ १० ॥ वाचयामि यथोन्मत्तः प्रलपामि तवाग्रतः । जरामरणभीतोऽस्मि त्रा० ॥ ११ ॥ यत्र यत्र च यातोऽस्मि स्त्रीषु वा पुरुषेषु च । तत्र तत्राचला भक्तिस्त्रा० ॥ १२ ॥ गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः । अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥ १३ ॥ ऊर्ध्वपातालमर्त्येषु व्याप्तलोकजगत्त्रयम् । द्वादशाक्षरात्परं नास्ति वासुदेवेन भाषितम् ॥ १४ ॥ द्वादशाक्षरं महामन्त्रं सर्वकामफलप्रदम् । गर्भवासनिवासेन शुकेन परिभाषितम् ॥ १५ ॥ द्वादशाक्षरं निराहारो यः पठेद्धरिवासरे । स गच्छेद्वैष्णवं स्थानं यत्र योगेश्वरो हरिः ॥ १६ ॥

इति श्रीशुकदेवविरचितं मधुसूदनस्तोत्रं संपूर्णम् ।

## ४५ हरिमीडेस्तोत्रम्।

श्रीगणेशाय नमः ॥ स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम्। यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं तं संसारध्वान्तविनाशं हरिमीडे ॥ १ ॥ यस्यैकांशादित्थमशेषं जगदेतत्प्रादुर्भूतं येन पिनद्धं पुनरित्थम्। येन व्याप्तं येन विबुद्धं सुखदुःखैस्तं संसार० ॥ २ ॥ सर्वज्ञो यो यश्च हि सर्वः सकलो यो यश्चानन्दोऽनन्तगुणो यो गुणधामा। यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यस्तं संसार० ॥ ३ ॥ यस्मादन्यन्नास्त्यपि नैनं परमार्थं दृश्यादन्यो निर्विषयज्ञानमयत्वात्। ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञस्तं संसार० ॥ ४ ॥ आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना। भक्त्यैकाग्रध्यानपरा यं विदुरीशं तं संसार० ॥ ५ ॥ प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य। क्षीणे चित्ते भादृशिरस्मीति विदुर्यं तं संसार० ॥ ६ ॥ यं ब्रह्माख्यं देवमनन्यं परिपूर्णं हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम्। ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं तं संसार० ॥ ७ ॥ मात्रातीतं स्वात्मविकाशात्मविबोधं ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम्। भावग्राह्यानन्दमनन्यं च विदुर्यं तं संसार० ॥ ८ ॥



यद्यद्वेद्यं वस्तु सतत्त्वं विषयाख्यं तत्तद्ब्रह्मैवेति विदित्वा

तदहं च । ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं तं संसार० ॥ ९ ॥ यद्यद्वेद्यं तत्तदहं नेति विहाय स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य । तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं तं संसार० ॥ १० ॥ हित्वा हित्वा दृश्यमशेषं सविकल्पं मत्वा शिष्टं भादृशिमात्रं गगनाभम् । त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्तास्तं संसार० ॥ ११ ॥ सर्वत्रास्ते सर्वशरीरी न च सर्वः सर्वं वेत्त्येवेह न यं वेत्ति च सर्वः । सर्वत्रान्तर्यामितयेत्थं यमनन्यस्तं संसार० ॥ १२ ॥ सर्वं दृष्ट्वा स्वात्मनि युक्त्वा जगदेतद्दृष्ट्वात्मानं चैवमजं सर्वजनेषु । सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं तं संसार० ॥ १३ ॥ सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते प्रष्टा श्रोता बुद्ध्यति चेत्याहुरिमं यम् । साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये तं संसार० ॥ १४ ॥ पश्यञ्शृण्वन्नत्र विजानन्रसयन् सन्जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम् । इत्यात्मानं यं विदुरीशं विषयज्ञं तं संसार० ॥१५॥ जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम् । इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये तं संसार० ॥ १६ ॥ पश्यञ्शुद्धोऽप्यक्षर एको गुणभेदान्नानाकारान्स्फाटिकवद्भाति विचित्रः । भिन्नश्छिन्नश्चायमजः कर्मफलैर्यस्तं संसार० ॥ १७ ॥ ब्रह्मा विष्णू रुद्रहुताशौ रविचन्द्राविन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य । एकं सन्तं यं बहुधा दुर्मतिभेदास्तं संसार० ॥१८॥

सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कलमानन्दमनन्यम्। इत्याहादौ यं वरुणोऽसौ भृगवेऽजं तं संसार० ॥१९॥ कोशानेतान्पञ्च रसादीनतिहाय ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थः। पित्रादिष्टो वेद भृगुर्यं यजुरन्ते तं संसार० ॥ २० ॥ येनाविष्टो यस्य च शक्त्या यदधीनः क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः। कर्ता भोक्ताऽऽत्मात्र हि चिच्छक्त्यधिरूढस्तं संसार० ॥ २१ ॥ सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम्। सच्च त्यच्चाभूत्परमात्मा स य एकस्तं संसार० ॥ २२ ॥ वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः शास्त्रैश्चान्यैः सात्वततन्त्रैश्च यमीशम्। दृष्ट्वाथान्तश्चेतसि बुद्ध्या विविशुर्यं तं संसार० ॥ २३ ॥ श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैर्ज्ञातुं शक्यो देव इहैवाशु य ईशः। दुर्विज्ञेयो जन्मशतैश्चापि विना तैस्तं संसार० ॥ २४ ॥ यस्यातर्क्यं स्वात्मविभूतेः परमार्थं सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः। तज्जातित्वादब्धितरङ्गाभमभिन्नं तं संसार० ॥ २५ ॥ दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं भक्त्या गुर्व्यालभ्य हृदिस्थं दृशिमात्रम्। ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं तं संसार० ॥ २६ ॥ क्षेत्रज्ञत्वं प्राप्य विभुः पञ्चमुखैर्यो भुङ्क्तेऽजस्रं भोग्यपदार्थान्प्रकृतिस्थः। क्षेत्रे क्षेत्रेऽप्स्विन्दुवदेको बहुधाऽऽस्ते तं संसार० ॥ २७ ॥ युक्त्यालोच्य व्यासवचांस्यत्र हि लभ्यः क्षेत्रक्षेत्र-

नवं दृढम् । अव्रणं कलशं शुद्धं स्थापयेत्तण्डुलोपरि ॥ १७ ॥ तत्रोदकं समानीय शुद्धं निर्मलमेव च । शतमेकं कुशान् साग्रान्स्थापयेत्कलशोपरि ॥१८॥ पूजयेत्तत्र कलशमुपचारैः समन्त्रकैः । विरिञ्चिना सहोत्पन्न परमेष्ठीनिसर्गज ॥ १९ ॥ नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव । कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ॥ २० ॥ कुशाग्रे शंकरं विद्यात्रयो देवाः कुशे स्थिताः । गृहीत्वैतान् समूलाग्रान् कुशान् शुद्धानुपस्पृशेत् ॥ २१ ॥ मार्जयेत्सर्वगात्राणि कुशाग्रैर्दाल्भ्य शान्तिकृत् । शरीरे यस्य तिष्ठन्ति कुशोत्था जलबिन्दवः । नश्यन्ति तस्य पापानि गरुडेनेव पन्नगाः ॥ २२ ॥ विष्णुभक्तो विशेषेण शुचिस्तद्गतमानसः । रोगग्रहविपातीनां कुर्याच्छान्तिमिमां शुभाम् ॥ २३ ॥ वाराहं नारसिंहं च वामनं विष्णुमेव च । ध्यात्वा समाहितो भूत्वा दिक्षु नामानि विन्यसेत् ॥२४॥ नारसिंहं समभ्यर्च्य शुचौ देशे कुशासने । मन्त्रैरेतैर्यथालिङ्गं कुर्याद्दिग्बन्धमादितः ॥ २५ ॥ पूर्वं नारायणः पातु वारिजाक्षस्तु दक्षिणे । प्रद्युम्नः पश्चिमे पातु वामदेवस्तथोत्तरे ॥ २६ ॥ ईशान्यां वामनः पातु ह्याग्नेय्यां तु जनार्दनः । नैर्ऋत्यां पद्मनाभस्तु वायव्यां मधुसूदनः ॥ २७ ॥ ऊर्ध्वं गोवर्धनधरो ह्यधरायां त्रिविक्रमः। एताभ्यो दशदिग्भ्यस्तु सर्वतः पातु केशवः ॥२८॥ जले रक्षतु



वाराहः स्थले रक्षतु वामनः । अटव्यां नारसिंहश्च सर्वतः पातु

केशवः ॥२९॥ एवं कृत्वा तु दिग्बन्धं विष्णुं सर्वत्र संस्मरेत् । आत्मनश्च परस्यापि विधिरेष उदाहृतः ॥ ३० ॥ अव्यग्रचित्तः कुर्वीत न्यासकर्म यथाविधि । एतत्समस्तं विन्यस्य पश्चान्मन्त्रं प्रयोजयेत् ॥३१॥ करन्यासं पुरा कृत्वा ततोऽङ्गन्यासमारभेत् । अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम् ॥ ३२ ॥ मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् । कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये तु माधवम् ॥ ३३ ॥ हृन्मध्ये चिन्तयेद्देवं परमात्मानमीश्वरम् । नृसिंहं मणिबन्धे च करपृष्ठे जनार्दनम् ॥ ३४ ॥ कृते च वैष्णवे न्यासे सर्वपापैः प्रमुच्यते । एवं कृत्वा करन्यासं सर्वं तस्याक्षयं भवेत् । एवं न्यासं करे कृत्वा पश्चादङ्गेषु विन्यसेत् ॥ ३५ ॥ शिखायां केशवं न्यस्य मूर्ध्नि नारायणं न्यसेत् । मालाधरं ललाटे च गोविन्दं तु भ्रुवोर्न्यसेत् ॥ ३६ ॥ चक्षुर्मध्ये न्यसेद्विष्णुं श्रोत्रयोर्मधुसूदनम् । त्रिविक्रमं कपोले तु वामनं कर्णमूलयोः ॥ ३७ ॥ नासारन्ध्रद्वये चैव श्रीधरं कल्पयेद्बुधः । उत्तरोष्ठे हृषीकेशं पद्मनाभं तथाधरे ॥ ३८ ॥ दामोदरं दन्तपङ्क्तौ वाराहं चिबुके तथा । जिह्वायां वासुदेवं च तालौ च गरुडध्वजम् ॥ ३९ ॥ वैकुण्ठं कण्ठदेशे तु अनन्तं नासिकोपरि । दक्षिणे च भुजे विप्र विन्यसेत्पुरुषोत्तमम् ॥ ४० ॥ वामे भुजे महाभागं राघवं हृदि विन्यसेत् । कुक्ष्योः श्रीवत्सं



चैव पार्श्वयोरमितौजसम् ॥ ४१ ॥ स्तनयोः पीतवसनं हरिं

नाभ्यां तु विन्यसेत् । करे तु दक्षिणे विप्र ततः संकर्षणं न्यसेत् ॥ ४२ ॥ वामे रिपुहरं विद्यात्कटिमध्येऽपराजितम् । पृष्ठे क्षितिधरं विद्यादच्युतं स्कन्धयोर्द्वयोः ॥ ४३ ॥ वक्षःस्थले माधवं च कक्षयोर्योगशायिनम् । वामकुक्षे माधवं च दक्षिणे जलशायिनम् ॥ ४४ ॥ योगीशं दक्षिणे पार्श्वे वामपार्श्वे श्रियः पतिम् । आन्त्रेषु वासुदेवं च गुदमध्येऽव्ययं न्यसेत् ॥ ४५ ॥ स्वयंभुवं मेढ्रमध्ये ऊर्वोश्चैव गदाधरम् । जानुमध्ये चक्रधरं जङ्घयोरच्युतं न्यसेत् ॥ ४६ ॥ पादयोः पुष्कराक्षं च सर्वतो विश्वरूपिणम् । गुल्फयोर्नारसिंहं च पादपृष्ठेऽमितौजसम् । अङ्गुल्यां श्रीधरं विद्यात्पद्माक्षं सर्वसन्धिषु ॥ ४७ ॥ नखेषु घननीलाङ्गं न्यसेत्पादतलेऽच्युतम् । रोमकूपे गुडाकेशं कृष्णं रक्तास्थिमज्जसु ॥ ४८ ॥ मनोबुद्ध्योरहंकारं चित्ते न्यस्य जनार्दनम् । पादमूले तु देवस्य शङ्खं विन्यस्य निर्मलम् ॥ ४९ ॥ वनमालां हृदि न्यस्य सर्वदेवाभिपूजिताम् । गदां वक्षःस्थले न्यस्य चक्रं चैव तु पृष्ठतः ॥ ५० ॥ श्रीवत्साङ्कं न्यसेन्मूर्ध्नि पङ्कजं कवचे न्यसेत् । आपादमस्तकं चैव विन्यसेत्पुरुषोत्तमम् ॥५१॥ विष्णुरूर्ध्वमधो रक्षेद्वैकुण्ठो विदिशो दिशः । पातु मां सर्वतो रामो धन्वी चक्री च केशवः ॥ ५२ ॥ अथ ध्यानं प्रवक्ष्यामि शृणु पापप्रणाशनम् । वराहरूपिणं देवं

संस्मरन्नर्चयन् जपेत् ॥५३॥ बृहत्तनुं बृहद्गात्रं बृहद्दंष्ट्रं सुशो-

अनम् । समस्तवेदवेदाङ्गैर्युक्ताङ्गं भूषणैर्युतम् ॥९४॥ उद्धृत्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम् । उद्धृत्य भूमिं पाताले हस्ताभ्यामुपगृह्य ताम् ॥ ९५ ॥ आलिङ्ग्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम् । रत्नवैडूर्यमुक्तादिभूषणैरुपशोभितम् ॥ ९६ ॥ पीताम्बरधरं देवं शुक्लमाल्यानुलेपनम् । त्रयस्त्रिंशत्कोटिदेवैः स्तूयमानं दिवानिशम् ॥ ९७ ॥ नृत्यद्भिरप्सरोभिश्च गीयमानं च किन्नरैः । इत्थं ध्यात्वा तथाऽऽत्मानं जपेन्नित्यमतन्द्रितः ॥ ९८ ॥ सुवर्णमण्डपान्तस्थं पद्मं ध्यायेत्सकेसरम् । सकर्णिकैर्दलैश्चैव ह्यष्टभिः परिशोभितम् ॥ ९९ ॥ कलङ्करहितं देवं पूर्णचन्द्राम्बुजप्रभम् । तडित्समजटाशोभिकण्ठनालेन शोभितम् ॥ ६० ॥ श्रीवत्साङ्कितवक्षस्थं तीक्ष्णदंष्ट्रं सुलोचनम् । वनमालाविशोभाढ्यं मुक्ताहारोपशोभितम् ॥ ६१ ॥ सपङ्कजं चतुर्हस्तं तत्प्रख्यातं सुशोभनम् । प्रातः सूर्यसमाभ्यां वै कुण्डलाभ्यां विराजितम् ॥ ६२ ॥ जानूपरिन्यस्तकरद्वन्द्वरत्ननखाङ्कितम् । जङ्घाभरणसंस्पर्धि शुभालंकरणं त्विषः ॥ ६३ ॥ चतुर्थीचन्द्रसंकाशं सुदंष्ट्रमुखपङ्कजम् । अतिरक्तोष्ठवदनं व्यक्तं समतिभीषणम् ॥ ६४ ॥ वामाङ्कस्थश्रिया युक्तं शान्तिदां तुङ्गरोहिणीम् ॥ ६५ ॥ अर्हणां रक्तपादां च सभासां शुभलक्षणाम् । सुभ्रूं सुकेशीं सुश्रोणीं सुमुखां सुप्रभाननाम् ॥ ६६ ॥ सुप्रतिष्ठां च सुदतीं चतुर्हस्तां

विचिन्तयेत् । दुकूलं चैव चार्वङ्गीं हरिणीं सर्वकामदाम् ॥ ६७ ॥ तप्तकाञ्चनसंकाशां सर्वाभरणभूषिताम् । सुवर्णकलशप्रख्यपीनोन्नतपयोधराम् ॥ ६८ ॥ गृहीतमातुलुङ्गाभ्यामुद्बाहुभ्यामथान्ययोः । गृहीतपद्मयुगलां जाम्बूनदकरां तथा ॥ ६९ ॥ एवं देवीं नृसिंहस्य वामाङ्कोपरि संस्मरेत् ॥ ७० ॥ अतिसुविमलगात्रं रुक्मपात्रस्थमन्नं सुललितदधिखण्डं पाणिना दक्षिणेन । कलशममृतपूर्णं वामहस्ते दधानं तरति सकलदुःखं वामनं भावयेद्यः ॥ ७१ ॥ अजिनदण्डकमण्डलुमेखलारुचिरपावनवामनमूर्तये । इति जगत्त्रितयाय जितारये निगमवाक्पटवे वटवे नमः ॥७२॥ शान्तं पद्मासनस्थं सकलशशिनिभं श्रीपतिं कोमलाङ्गं हस्ते पीयूषकुम्भं दधियुतकलशं पद्महस्तं तथान्यैः । पीतं वस्त्रं दधानं कटकमुकुटके हारकेयूरमालां नानालंकारयुक्तं स्फटिकमणिनिभं वामनं नौमि दान्तम् ॥ ७३ ॥ अभ्रश्यामः शुभ्रयज्ञोपवीती लसत्कौपीनो जातकृष्णाजिनश्रीः । छत्री दण्डी पुण्डरीकायताक्षः पायान्मायावामनो ब्रह्मचारी॥७४॥ क्षीरसागरकल्लोलसीकरौघविभूषितम् । मणिमुक्तामये रम्ये सैकते संस्थितं शुभम् ॥ ७५ ॥ शुभ्रमेघविनिर्मुक्तं सुधासिक्तं सुसुन्दरम् । एवं वामनमात्मानं ध्यात्वाऽपामार्जनं जपेत् ॥ ७६ ॥ ॐ नमः परमार्थाय पुरुषाय महात्मने । अरूपबहुरूपाय व्यापिने परमात्मने ॥७७॥ निष्कल्मषाय शुद्धाय

ध्यातृपापहराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ७८ ॥ वराहाय नृसिंहाय वामनाय महात्मने । नमः कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ७९ ॥ चिकित्सानन्तरूपाय योगिने परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८० ॥ नारायणाय विश्वाय विश्वेशायेश्वराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८१ ॥ गोविन्दपद्मनाभाय वासुदेवाय शार्ङ्गिणे । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८२ ॥ दामोदराय देवाय अनन्ताय महात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८३ ॥ विष्टरश्रवसे तस्मै क्षीराम्भोनिधिशायिने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८४ ॥ भक्तिप्रियाय देवाय विष्वक्सेनाय शार्ङ्गिणे । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥८५॥ कृष्णाय वासुदेवाय हरये परमात्मने । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः॥८६॥ हिरण्यगर्भपतये हिरण्यकशिपुच्छिदे । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८७ ॥ चक्रहस्ताय शूराय तार्क्ष्यपत्राय धीमते । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८८ ॥ अधोक्षजाय भद्राय श्रीधरायात्ममूर्तये । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ८९ ॥ त्रिविक्रमाय रामाय वैकुण्ठाय वराय च । नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ९० ॥ सच्चिदानन्दरूपाय योगिने परमात्मने । नम-

स्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ९१ ॥ योगेश्वराय गुह्याय गूढाय परमात्मने। नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ९२ ॥ वाराहेश नृसिंहेश वामनेश त्रिविक्रम। हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥ ९३ ॥ अपराजित-चक्राद्यैश्चतुर्भिः परमायुधैः। अखण्डितप्रभावैस्त्वं सर्वदुःख-हरो भव ॥ ९४ ॥ हराशुक्रस्य दुरितं दुष्कृतं दुरुपासितम्। मृत्युबाधार्तिभयदं दुरिष्टस्य च यत्फलम् ॥ ९५ ॥ पराप-ध्यानसंस्थानप्रयुक्तं चाभिचारिकम्। गरस्पर्शमहायोगं प्रयोगं जरया जर ॥ ९६ ॥ हरये वासुदेवाय नमः कृष्णाय शार्ङ्गिणे। नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥९७॥ नमः कमलकिञ्जल्कपीतनिर्मलवाससे। महाहवरिपुस्कन्धघृष्टचक्राय चक्रिणे ॥ ९८ ॥ दंष्ट्रोद्धृतक्षितिभृते त्रिमूर्तिपतये नमः। महायज्ञवराहाय शेषभोगोरुशायिने ॥ ९९ ॥ तप्तहाटकके-शान्त ज्वलत्पावकलोचन। वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥१००॥ तीक्ष्णैर्नखाग्रैर्यदुरो विदार्य त्रातुं सुरा-न्दैत्यपतिं जघान। सुदर्शनं पद्मगदे च शङ्खं बिभ्रन्नृसिंहोऽस्तु ममाभयाय ॥१॥ काश्यपायातिह्रस्वाय ऋग्यजुःसाममूर्तये। तुभ्यं वामनरूपाय क्रमते गां नमो नमः ॥ २ ॥ वराहाशे-षदुष्टानि सर्वपापफलानि च। मर्द मर्द महादंष्ट्र मर्द मर्द महीधर ॥ ३ ॥ नरसिंह करालास्य दन्तप्रान्तनखोज्ज्वल। भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्तिनाशन ॥ ४ ॥ ऋग्यजुः-

सामगर्भाभिर्वाग्भिर्वामनरूपधृक् । प्रशमं सर्वदुःखानि नयत्वाशु जनार्दनः ॥ ५ ॥ आद्यन्तवन्तः कवयः पुराणाः सूक्ष्मा बृहन्तोऽप्यनुशासितारः । सर्वान् ज्वरान् घ्नन्तु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ॥ ६ ॥ त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः । स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः ॥७॥ ज्वरमन्त्रस्य कालाग्निर्ऋषिः । महाज्वरो देवता । गायत्री छन्दः । रोगप्रशमार्थे जपे विनियोगः ॥ ८ ॥ ॐ भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि । तन्नो ज्वरः प्रचोदयात् । अङ्गवङ्गकलिङ्गेषु हूणेषु मगधेषु च । वाराणस्यां च यज्जातं तत्र स्मरसि रे ज्वर ॥ ९ ॥ एकाहिकं द्व्याहिकं च तथा त्रिदिवसज्वरम् । चातुर्थिकं तथाऽत्युग्रं तथैव सततज्वरम् ॥ १० ॥ दोषोत्थं सन्निपातोत्थं तथैवागन्तुकज्वरम् । शमं नयाशु गोविन्द छिन्धि छिन्ध्याशु वेदनाम् ॥ ११ ॥ नेत्रदुःखं शिरोदुःखं दुःखं चोदरसंभवम् । अतिकासमतिश्वासमतितापं सवेपथुम् ॥ १२ ॥ गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगं तथा क्षयम् । कामलादींस्तथा रोगान्प्रमेहांश्चातिदारुणान् ॥ १३॥ भगन्दरातिसारांश्च मुखरोगान्सवल्गुलीन् । श्वित्रादीन्नखरोगांश्च त्वगस्थ्यन्तर्बहिःस्थितान् ॥ १४ ॥ अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् । ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥ १५ ॥ कफोद्भवाश्च ये रोगा ये केचित्सान्निपातिकाः । आगन्तुकाश्च ये रोगा लूताविस्फोटकादयः

॥ १६ ॥ ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः। विलयं यान्तु सर्वे ते विष्णोरुच्चारणेन तु ॥ १७ ॥ क्षयं गच्छन्तु शेषास्ते चक्रेणाभिहता हरेः । अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ॥ १८ ॥ नश्यन्तु सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ १९ ॥ अच्युतेति मनः पूतमनन्तेति वचः पुनः । गोविन्देति तनुः पूता त्वज्ञातज्ञातपातकैः ॥ १२० ॥ अच्युतानन्त गोविन्द पद्मानन्द माधव । ॐ नमः संपुटीकृत्य जपन्नेवमधोक्षजम् ॥ २१ ॥ सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते । वेदशास्त्रात्परं नास्ति न देवः केशवात्परः ॥ २२ ॥ स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम् । दन्तोद्भूतं नखोद्भूतमाकाशप्रभवं विषम् ॥ २३ ॥ लूतादिप्रभवं चैव विषमत्यन्तदुःखदम् । शमं नयाशु तत्सर्वं कीर्तितोऽसि जनार्दन ॥ २४ ॥ ग्रहान्प्रेतग्रहांश्चैव तथा वै डाकिनीग्रहान् । वेतालांश्च पिशाचांश्च गन्धर्वान्यक्षराक्षसान् ॥ २५ ॥ शाकिनीपूतनादींश्च तथा वैनायकग्रहान् । मुखमण्डलिकान् क्रूरान् रेवतीं वृद्धरेवतीम् ॥ २६ ॥ वृद्धिकाख्यांस्तथा चोग्रांस्तथा मातृग्रहानपि । बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ २७ ॥ सटाकरालनरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने । सटाकरालवक्त्रो नरसिंहो महाबलः ॥ २८ ॥ ग्रहानशेषान्निःशेषान्करोतु जगतो हि सः ॥ २९ ॥ नरसिंह महासिंह ज्वाला-

मालोज्ज्वलानन । ग्रहानशेषान्निःशेषान् खाद खादाग्निलोचन ॥ ३० ॥ ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः । यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ ३१ ॥ व्याघ्रसिंहवराहेषु ग्रहभूतभयेषु च । शस्त्रक्षतेषु ये रोगा जालगर्दभकादयः ॥ ३२ ॥ यानि च क्रूरभूतानि प्राणिपीडाकराणि च । तानि सर्वाणि सर्वात्मन् परमात्मन् जनार्दन ॥ ३३ ॥ किंचिद्रूपं समाश्रित्य वासुदेवाशु नाशय । क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम् ॥ ३४ ॥ सर्वदुष्टप्रशमनं कुरु देववराच्युत । सुदर्शन महाज्वाल छिन्धि छिन्धि महायुध ॥ ३५ ॥ तीक्ष्णधार महावेग सूर्यकोटिसमप्रभ । त्रैलोक्यरक्षाकर्तस्त्वं दानवान्वयमर्दन ॥ ३६ ॥ ज्वलत्पावकसंकाश छिन्धि छिन्ध्याशु वेदनाम् । छिन्धि वातं च लूताश्च छिन्धि रोगं महद्विषम् ॥ ३७ ॥ छिन्धि छिन्धि महाव्याधीन् छिन्धि छिन्धि महाग्रहान् । रुजं दाहं च शूलं च निमिषजालगर्दभौ ॥ ३८ ॥ सुधन्वाखण्डपरशुर्दारुणो द्रविणप्रदः । ह्रां ह्रां हुं हुं फट्कारेण ठद्वयेन हन द्विपः ॥ ३९ ॥ सुदर्शनस्य मन्त्रेण ग्रहा यान्ति दिशो दश ॥ ४० ॥ ॐ नमो भगवते भो भो सुदर्शन मम दुष्टं दारय दारय दुरितं हन हन पापं मथ मथ आरोग्यं कुरु ह्रां ह्रां हुं हुं कुरु फट् स्वाहा ॥ ४१ ॥ त्रैलोक्यरक्षाकर्तस्त्वं पाहि माधव जनार्दन । सर्वदुष्टानि रक्षांसि क्षपयारिविभीषण ॥ ४२ ॥ प्राच्यां

रक्ष प्रतीच्यां च दक्षिणोत्तरतस्तथा । ईशान्यां च तथाऽऽ-
ग्नेय्यां नैर्ऋत्यां वायुदिश्यपि ॥ ४३ ॥ अवरायां तथोर्ध्वायां
सदा रक्षां करोत्वसौ । रक्षां करोतु भगवान्नरसिंहः स्वग-
र्जितैः ॥ ४४ ॥ भुव्यन्तरिक्षे च तथा पृष्ठतः पार्श्वतोऽग्रतः ।
रक्षां करोतु भगवान्बहुरूपी जनार्दनः ॥ ४५ ॥ यथा
यज्ञेश्वरो विष्णुर्वेदान्तेष्वपि गीयते । तेन सत्येन सकलं
दुष्टमस्य प्रशाम्यतु ॥ ४६ ॥ परमात्मा यथा विष्णुर्वेदा-
न्तेष्वपि धीयते । तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु
॥ ४७ ॥ यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् । तेन
सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४८ ॥ यथा विष्णौ
स्मृते सद्यः संक्षयं याति पातकम् । तेन सत्येन सकलं
यन्मयोक्तं तथाऽस्तु तत् ॥ ४९ ॥ शान्तिरस्तु शिवं चास्तु
दुष्टमस्य प्रशाम्यतु । स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य
कीर्तनात् ॥ १५० ॥ यत एवागतं पापं तत्रैव प्रतिगच्छतु ।
यदस्य दुःखं तत्सर्वं शमं नयतु माधवः ॥ ५१ ॥ वासुदेव-
शरीरोत्थैः कुशैः संमार्जिता मया । अपामार्जितगोविन्दो
नरो नारायणो भवेत् ॥ ५२ ॥ ममास्तु सर्वदुःखानां
प्रशमो वचनाद्धरेः । शान्ताः समस्तरोगास्ते ग्रहाः सर्वे
विषादयः ॥ ५३ ॥ भूतानि प्रशमं यान्तु स्मृते च मधुसू-
दने । एतत्समस्तरोगेषु भूतग्रहभयेषु च ॥ ५४ ॥ अपा-
मार्जनकं शस्त्रं विष्णोर्नामाभिमन्त्रितम् । एते कुशा विष्णु-

शरीरसंभवा जनार्दनाग्रे स्वयमेव चागताः ॥ ९५ ॥ हतं मया दुष्टमशेषमस्य स्वस्थो भवत्वेष यथा वचो हरेः ॥९६॥ शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु । यदस्य दुरितं किंचित्तत्क्षिप्तं लवणार्णवे ॥ ९७ ॥ स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात् । यत एवागतं पापं तत्रैव प्रतिगच्छतु ॥ ९८ ॥ एतद्रोगादिपीडासु जन्तूनां हितकाम्यया । विष्णुभक्तेन कर्तव्यमपामार्जनकं परम् ॥ ९९ ॥ अनेन सर्वदुःखानि प्रशमं यान्त्यसंशयम् । सर्वभूतहितार्थाय कुर्यात्तस्मात्सदैव हि ॥ १६० ॥ य इदं धारयेद्विद्वान् श्रद्धाभक्तिसमन्वितः । ग्रहास्तं नोपसर्पन्ति न रोगा न च राक्षसाः ॥ ६१ ॥ धन्यो यशस्वी शत्रुघ्नः स्तवोऽयं मुनिसत्तम । पठतां शृण्वतां चैव ददाति परमां गतिम् ॥ १६२ ॥

इति विष्णुधर्मोत्तरे विष्णुरहस्ये पुलस्त्यदाल्भ्यसंवादे श्रीविष्णोरपामार्जनस्तोत्रं संपूर्णम् ।

---

## ६४ कमलापत्यष्टकम् ।

श्रीगणेशाय नमः ॥ भुजगतल्पगतं घनसुन्दरं गरुडवाहनमम्बुजलोचनम् । नलिनचक्रगदाकरमव्ययं भजत रे मनुजाः कमलापतिम् ॥ १ ॥ अलिकुलासितकोमलकुन्तलं विमलपीतदुकूलमनोहरम् । जलधिजाङ्कितवामकलेवरं भजत० ॥ २ ॥ किमु जपैश्च तपोभिरुताध्वरैरपि किमुत्तमतीर्थनिषे-

वर्णैः । किमुत शास्त्रकदम्बविलोकनैर्भजत० ॥ ३ ॥ मनुज-देहमिमं भुवि दुर्लभं समधिगम्य सुरैरपि वाञ्छितम् । विषयलम्पटतामपहाय वै भजत० ॥ ४ ॥ न वनिता न सुतो न सहोदरो नहि पिता जननी न च बान्धवः । व्रजति साकमनेन जनेन वै भजत० ॥ ५ ॥ सकलमेव चलं सचराचरं जगदिदं सुतरां धनयौवनम् । समवलोक्य विवेकदृशा द्रुतं भजत० ॥ ६ ॥ विविधरोगयुतं क्षणभङ्गुरं परवशं नवमार्गमलाकुलम् । परिनिरीक्ष्य शरीरमिदं स्वकं भजत० ॥ ७ ॥ मुनिवरैरनिशं हृदि भावितं शिवविरिञ्चिमहेन्द्रनुतं सदा । मरणजन्मजराभयमोचनं भजत रे मनुजाः कमलापतिम् ॥ ८ ॥ हरिपदाष्टकमेतदनुत्तमं परमहंसजनेन समीरितम् । पठति यस्तु समाहितचेतसा व्रजति विष्णुपदं स नरो ध्रुवम् ॥ ९ ॥

इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं कमला-पत्यष्टकं संपूर्णम् ।

---

## ६५ न्यासदशकम् ।

श्रीगणेशाय नमः॥ अहं मद्रक्षणपरो मद्रक्षणफलं तथा। न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः ॥ १ ॥ न्यस्याम्यकिञ्चनः श्रीमन्ननुकूलोऽन्यवर्जितः । विश्वासप्रार्थनापूर्वमात्मरक्षाभरं त्वयि ॥ २ ॥ स्वामी स्वशेषं स्ववशं स्वभरत्वेन

निर्भरम् । स्वदत्तस्वधिया स्वार्थं स्वस्मिन्न्यस्यति मां स्वयम् ॥ ३ ॥ श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः । एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥ ४ ॥ त्वच्छेषत्वे स्थिरधियं त्वत्प्राप्त्येकप्रयोजनम् । निषिद्धकाम्यरहितं कुरु मां नित्यकिङ्करम् ॥ ५ ॥ देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव । नित्यं निरपराधेषु कैङ्कर्येषु नियुङ्क्ष्व माम् ॥ ६ ॥ मां मदीयं च निखिलं चेतनाचेतनात्मकम् । स्वकैङ्कर्योपकरणं वरद स्वीकुरु स्वयम् ॥ ७ ॥ त्वदेकरक्षस्य मम त्वमेव करुणाकर । न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥ ८ ॥ अकृत्यानां च करणं कृत्यानां वर्जनं च मे । क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥ ९ ॥ श्रीमान्नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् । अचीकरत्स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ॥ १० ॥

इति श्रीमद्वेङ्कटनाथस्य कृतिषु न्यासदशकं संपूर्णम् ।

---

## ६६ विष्णुभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चिदंशं विभुं निर्मलं निर्विकल्पं निरीहं निराकारमोङ्कारगम्यम् । गुणातीतमव्यक्तमेकं तुरीयं परं ब्रह्म यं वेद तस्मै नमस्ते ॥ १ ॥ विशुद्धं शिवं शान्तमाद्यन्तशून्यं जगज्जीवनं ज्योतिरानन्दरूपम् । अदिग्देशकालव्यवच्छेदनीयं त्रयी वक्ति यं वेद तस्मै नमस्ते ॥ २ ॥

महायोगपीठे परिभ्राजमाने धरण्यादितत्त्वात्मके शक्तियुक्ते । गुणाहस्करे वह्निबिम्बार्कमध्ये समासीनमोंकर्णिकेऽष्टाक्षराब्जे ॥ ३ ॥ समानोदितानेकसूर्येन्दुकोटिप्रभापूरतुल्यद्युतिं दुर्निरीक्षम् । न शीतं न चोष्णं सुवर्णावदातप्रसन्नं सदानन्दसंवित्स्वरूपम् ॥ ४ ॥ सुनासापुटं सुन्दरभ्रूललाटं किरीटोचिताकुञ्चितस्निग्धकेशम् । स्फुरत्पुण्डरीकाभिरामायताक्षं समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ५ ॥ लसत्कुण्डलामृष्टगण्डस्थलान्तं जपारागचोराधरं चारुहासम् । अलिव्याकुलामोदिमन्दारमालं महोरस्फुरत्कौस्तुभोदारहारम् ॥ ६ ॥ सुरत्नाङ्गदैरन्वितं बाहुदण्डैश्चतुर्भिश्चलत्कङ्कणालंकृताग्रैः । उदारोदरालंकृतं पीतवस्त्रं पदद्वन्द्वनिर्धूतपद्माभिरामम् ॥ ७ ॥ स्वभक्तेषु संदर्शिताकारमेवं सदा भावयन्सन्निरुद्धेन्द्रियाश्वः । दुरापं नरो याति संसारपारं परस्मै परेभ्योऽपि तस्मै नमस्ते ॥८॥ श्रिया शातकुम्भद्युतिस्निग्धकान्त्या धरण्या च दूर्वादलश्यामलाङ्ग्या । कलत्रद्वयेनामुना तोषिताय त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥ ९ ॥ शरीरं कलत्रं सुतं बन्धुवर्गं वयस्यं धनं सद्म भृत्यं भुवं च । समस्तं परित्यज्य हा कष्टमेको गमिष्यामि दुःखेन दूरं किलाहम् ॥ १० ॥ जरेयं पिशाचीव हा जीवतो मे वसामत्ति रक्तं च मांसं बलं च । अहो देव सीदामि दीनानुकम्पिन् किमद्यापि हन्त त्वयोदासितव्यम् ॥ ११ ॥ कफव्याहतोष्णोल्बणश्वासवेगव्यथा-

विस्फुरत्सर्वमर्मास्थिबन्धम् । विचिन्त्याहमन्त्यामसंख्यामवस्थां बिभेमि प्रभो किं करोमि प्रसीद ॥ १२ ॥ लपन्नच्युतानन्त गोविन्द विष्णो मुरारे हरे नाथ नारायणेति । यथाऽनुस्मरिष्यामि भक्त्या भवन्तं तथा मे दयाशील देव प्रसीद ॥ १३ ॥ भुजङ्गप्रयातं पठेद्यस्तु भक्त्या समाधाय चित्ते भवन्तं मुरारे । स मोहं विहायाशु युष्मत्प्रसादात्समाश्रित्य योगं व्रजत्यच्युतं त्वाम् ॥ १४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ विष्णुभुजङ्गप्रयातस्तोत्रं संपूर्णम् ।

## ६७ नारायणाष्टकम् ।

श्रीगणेशाय नमः ॥ वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् । सेव्यः श्रीपतिरेक एव जगतामेतेऽभवन्साक्षिणः प्रह्लादश्च विभीषणश्च करिराट् पाञ्चाल्यहल्या ध्रुवः ॥ १ ॥ प्रह्लादास्ति यदीश्वरो वद हरिः सर्वत्र मे दर्शय स्तम्भे चैवमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः । वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमापादयन्नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ २ ॥ श्रीरामोऽत्र विभीषणोऽयमनघो रक्षोभयादागतः सुग्रीवानय पालयैनमधुना पौलस्त्यमेवागतम् । इत्यु-

क्त्वाऽभयमस्य सर्वविदितं यो राघवो दत्तवानार्तत्राणपरायणः० ॥ ३ ॥ नक्रग्रस्तपदं समुद्धृतकरं ब्रह्मादयो भो सुराः पाल्यन्तामिति दीनवाक्यकरिणं देवेष्वशक्तेषु यः। मा भैषीरिति यश्च नक्रहनने चक्रायुधः श्रीधर आर्तत्राणपरायणः० ॥ ४ ॥ भो कृष्णाच्युत भोः कृपालय हरे भो पाण्डवानां सखे क्वासि क्वासि सुयोधनादपहृतां भो रक्ष मामातुराम्। इत्युक्तोऽक्षयवस्त्रसंभृततनुं योऽपालयद्द्रौपदीमार्तत्राणपरायणः स० ॥५॥ यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं यन्नामामृतपूरकं च पिबतां संसारसंतारकम्। पाषाणोऽपि यदङ्घ्रिपद्मरजसा शापान्मुनेर्मोचित आर्तत्राणपरायणः स० ॥ ६ ॥ पित्रा भ्रातरमुत्तमासनगतं चौत्तानपादिर्ध्रुवो दृष्ट्वा तत्सममारुरुक्षुरधृतो मात्रावमानं गतः। यं नत्वा शरणं यदाप तपसा हेमाद्रिसिंहासनमार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ७ ॥ आर्ता विषण्णा शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥ ८ ॥

इति श्रीकूरेशस्वामिविरचितं नारायणाष्टकं संपूर्णम्।

## ६८ जगन्नाथपञ्चकम्।

श्रीगणेशाय नमः ॥ रक्ताम्भोरुहदर्पभं जनमहासौन्दर्यनेत्रद्वयं मुक्ताहारविलम्बिहेममुकुटं रत्नोज्ज्वलत्कुण्डलम्। वर्षा-

मेघसमाननीलवपुषं ग्रैवेयहारान्वितं पार्श्वे चक्रधरं प्रसन्नवदनं नीलाद्रिनाथं भजे ॥ १ ॥ फुल्लेन्दीवरलोचनं नवघनश्यामाभिरामाकृतिं विश्वेशं कमलाविलासविलसत्पादारविन्दद्वयम् । दैत्यारिं सकलेन्दुमण्डितमुखं चक्राब्जतम्बद्वयं वन्दे श्रीपुरुषोत्तमं प्रतिदिनं लक्ष्मीनिवासालयम् ॥ २ ॥ उद्यन्नीरदनीलसुन्दरतनुं पूर्णेन्दुबिम्बाननं राजीवोत्पलपत्रनेत्रयुगलं कारुण्यवारां निधिम् । भक्तानां सकलार्तिनाशनकरं चिन्तार्थिचिन्तामणिं वन्दे श्रीपुरुषोत्तमं प्रतिदिनं नीलाद्रिचूडामणिम् ॥ ३ ॥ नीलाद्रौ शङ्खमध्ये शतदलकमले रत्नसिंहासनस्थं सर्वालंकारयुक्तं नवघनरुचिरं संयुतं चाग्रजेन । भद्रायां वामभागे रथचरणयुतं ब्रह्मरुद्रेन्द्रवन्द्यं वेदानां सारमीशं सुजनपरिवृतं ब्रह्मदारुं स्मरामि ॥ ४ ॥ दोर्भ्यां शोभितलाङ्गलं समुसलं कादम्बरीचञ्चलं रत्नाढ्यं वरकुण्डलं भुजबलैराक्रान्तभूमण्डलम् । वज्राभामलचारुगण्डयुगलं नागेन्द्रचूडोज्ज्वलं संग्रामे चपलं शशाङ्कधवलं श्रीकामपालं भजे॥५॥

इति श्रीजगन्नाथपञ्चकं संपूर्णम् ।

## ६९ मुकुन्दमालास्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति । नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिपदं कुरु मां मुकुन्द ॥ १ ॥

जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः। जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ २ ॥ मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् ।अविस्मृतिस्त्वच्चरणारविन्दे भवे भवे मेऽस्तु भवत्प्रसादात् ॥ ३ ॥ नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे नारकं नापनेतुम्। रम्यारामामृदुतनुलतानन्दने नाभिरन्तुं भावे भावे हृदयभवने भावयेयं भवन्तम् ॥ ४ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम् । एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेऽपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ५ ॥ दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥ ६ ॥ चिन्तयामि हरिमेव संततं मन्दहासमुदिताननाम्बुजम् । नन्दगोपतनयं परात्परं नारदादिमुनिवृन्दवन्दितम् ॥ ७ ॥ करचरणसरोजे कान्तिमन्नेत्रमीने श्रममुषि भुजवीचिव्याकुलेऽगाधमार्गे । हरिसरसि विगाह्याऽऽपीय तेजोजलौघं भवमरुपरिखिन्नः क्लेशमद्य त्यजामि ॥ ८ ॥ सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमस्व चित्त रन्तुम् । सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥ ९ ॥ मा भैर्मन्द मनो विचिन्त्य बहुधा यामीश्चिरं यातना नामी

नः प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः । आलस्यं व्यपनीय भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो दासस्य किं न क्षमः ॥ १० ॥ भवजलधिगतानां द्वन्द्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् । विषमविषयतोये मज्जतामप्लवानां भवतु शरणमेको विष्णुपोतो नराणाम् ॥ ११ ॥ भवजलधिमगाधं दुस्तरं निस्तरेयं कथमहमिति चेतो मा स्म गाः कातरत्वम् । सरसिजदृशि देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम् ॥१२ ॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तनयसहजग्राहसंघाकुले च । संसाराख्ये महति जलधौ मज्जतां नस्त्रिधामन् पादाम्भोजे वरद भवतो भक्तिभावं प्रयच्छ ॥ १३ ॥ पृथ्वीरेणुरणुः पयांसि कणिकाः फल्गुस्फुलिङ्गो लघुस्तेजोनिःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः । क्षुद्रा रुद्रपितामहप्रभृतयः कीटाः समस्ताः सुरा दृष्टो यत्र स तावको विजयते भूमाऽवधूतावधिः ॥ १४ ॥ हे लोकाः शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः । अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां तत्पीतं परमौषधं वितनुते निर्वाणमात्यन्तिकम् ॥ १५ ॥ हे मर्त्याः परमं हितं शृणुत वो वक्ष्यामि संक्षेपतः संसारार्णवमापदूर्मिबहुलं सम्यक्प्रविश्य स्थिताः । नानाज्ञानमपास्य चेतसि नमो

नारायणायेत्यमुं मन्त्रं सप्रणवं प्रणामसहितं प्रावर्तयध्वं मुहुः ॥ १६ ॥ नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति । यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥१७॥ बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः कण्ठेन स्वरगद्गदेन नयनेनोद्गीर्णबाष्पाम्बुना । नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनामस्माकं सरसीरुहाक्ष सततं संपद्यतां जीवितम् ॥ १८ ॥ यत्कृष्णप्रणिपातधूलिधवलं तद्वर्ष्म तद्वै शिरस्ते नेत्रे तमसोज्झिते सुरुचिरे याभ्यां हरिर्दृश्यते । सा बुद्धिर्विमलेन्दुशङ्खधवला या माधवध्यायिनी सा जिह्वाऽमृतवर्षिणी प्रतिपदं या स्तौति नारायणम् ॥ १९ ॥ जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व समर्चयाच्युतकथां श्रोत्रद्वय त्वं शृणु । कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥ २० ॥ आम्नायाभ्यसनान्यरण्यरुदितं वेदव्रतान्यन्वहं मेदश्छेदफलानि पूर्तविधयः सर्वं हुतं भस्मनि । तीर्थानामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्मृतिं विजयते देवः स नारायणः ॥२१॥ मदन परिहर स्थितिं मदीये मनसि मुकुन्दपदारविन्दधाम्नि । हरनयनकृशानुना कृशोऽसि स्मरसि न चक्रपराक्रमं मुरारेः ॥ २२ ॥ नाथे धातरि भोगिभोगशयने नारा-

यणे माधवे देवे देवकिनन्दने सुरवरे चक्रायुधे शार्ङ्गिणि। लीलाशेषजगत्प्रपञ्चजठरे विश्वेश्वरे श्रीधरे गोविन्दे कुरु चित्तवृत्तिमचलामन्यैस्तु किं वर्तनैः ॥ २३ ॥ मा द्राक्षं क्षीणपुण्यान् क्षणमपि भवतो भक्तिहीनान्पदाब्जे मा श्रौषं श्राव्यबन्धं तव चरितमपास्यान्यदाख्यानजातम्। मा स्प्राक्षं माधव त्वामपि भुवनपते चेतसाऽपह्नुवानान् मा भूवं त्वत्सपर्यापरिकररहितो जन्मजन्मान्तरेऽपि ॥ २४ ॥ मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीय मदनुग्रह एष एव। त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥२५॥ तत्त्वं ब्रुवाणानि परं परस्तान्मधु क्षरन्तीव मुदावहानि। प्रावर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥ २६ ॥ नमामि नारायणपादपङ्कजं करोमि नारायणपूजनं सदा। वदामि नारायणनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥ २७ ॥ श्रीनाथ नारायण वासुदेव गोविन्द दामोदर चक्रपाणे। श्रीपद्मनाभाच्युत कैटभारे कंसघ्न पद्माप्रिय शार्ङ्गपाणे ॥ २८ ॥ अनन्त वैकुण्ठ मुकुन्द राम जनार्दनानन्त निरामयेति। वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनाभिमुख्यम् ॥ २९ ॥ भक्तापायभुजङ्गगारुडमणिस्त्रैलोक्यरक्षामणिर्गोपीलोचनचातकाम्बुदमणिः सौन्दर्यमुद्रामणिः। यः कान्तामणिरुक्मिणीघनकुचद्वन्द्वैकभूषामणिः श्रेयो देवशिखामणिर्दिशतु नो गोपालचूडा-

मणिः ॥ ३० ॥ शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसंपूज्यमन्त्रं संसारोच्छेदमन्त्रं समुचिततमसः संघनिर्याणमन्त्रम् । सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसंदष्टसंत्राणमन्त्रं जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥ ३१ ॥ व्यामोहप्रशमौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्येन्द्रार्तिकरौषधं त्रिभुवने संजीवनैकौषधम् । भक्तात्यन्तहितौषधं भवभयप्रध्वंसनैकौषधं श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णदिव्यौषधम् ॥ ३२ ॥ कृष्ण त्वदीयपदपङ्कजपञ्जरान्तमद्यैव मे विशतु मानसराजहंसः । प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ३३ ॥ चेतश्चिन्तय कीर्तयस्व रसने नम्रीभव त्वं शिरो हस्तावञ्जलिसंपुटं रचयतं वन्दस्व दीर्घं वपुः । आत्मन् संश्रय पुण्डरीकनयनं नागाचलेन्द्रस्थितं धन्यं पुण्यतमं तदेव परमं दैवं हि संसिद्धये ॥ ३४ ॥ शृण्वन् जनार्दनकथागुणकीर्तनानि देहे न यस्य पुलकोद्गमरोमराजिः । नोत्पद्यते नयनयोर्विमलाम्बुमाला धिक् तस्य जीवितमहो पुरुषाधमस्य ॥ ३५ ॥ अन्धस्य मे हृतविवेकमहाधनस्य चोरैः प्रभो बलिभिरिन्द्रियनामधेयैः । मोहान्धकूपकुहरे विनिपातितस्य देवेश देहि कृपणस्य करावलम्बम् ॥ ३६ ॥ इदं शरीरं शतसन्धिजर्जरं पतत्यवश्यं परिणामपेशलम् । किमौषधं पृच्छसि मूढ दुर्मते निरामयं कृष्णरसायनं पिब ॥ ३७ ॥ आश्चर्यमेतद्धि मनुष्यलोके सुधां

परित्यज्य विषं पिबन्ति । नामानि नारायणगोचराणि त्यक्त्वाऽन्यवाचः कुहकाः पठन्ति ॥३८॥ त्यजन्तु बान्धवाः सर्वे निन्दन्तु गुरवो जनाः । तथापि परमानन्दो गोविन्दो मम जीवनम् ॥३९॥ सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहुर्यो यो मुकुन्द नरसिंह जनार्दनेति । जीवो जपत्यनुदिनं मरणे रणे वा पाषाणकाष्ठसदृशाय ददात्यभीष्टम् ॥ ४० ॥ नारायणाय नम इत्यमुमेव मन्त्रं संसारघोरविषनिर्हरणाय नित्यं । शृण्वन्तु भव्यमतयो यतयोऽनुरागादुच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ॥ ४१ ॥ चित्तं नैव निवर्तते क्षणमपि श्रीकृष्णपादाम्बुज।निन्दन्तु प्रियबान्धवाः गुरुजना गृह्णन्तु मुञ्चन्तु वा । दुर्वारं परिघोषयन्तु मनुजा वंशे कलङ्कोऽस्तु वा तादृक्प्रेमभरानुरागमधुना मत्तायमानं तु मे ॥ ४२ ॥ कृष्णो रक्षतु नो जगत्त्रयगुरुः कृष्णं नमध्वं सदा कृष्णेनाखिलशत्रवो विनिहताः कृष्णाय तस्मै नमः । कृष्णादेव समुत्थितं जगदिदं कृष्णस्य दासोऽस्म्यहं कृष्णे तिष्ठति विश्वमेतदखिलं हे कृष्ण रक्षस्व माम् ॥ ४३ ॥ हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव । हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥ ४४ ॥ दारा वाराकरवरसुता ते तनूजो विरिञ्चिः स्तोता वेदस्तव सुरगणा भृत्यवर्गः प्रसादः । मुक्तिर्माया जगदविकलं तावकी

देवकी ते माता मित्रं बलरिपुसुतस्तत्त्वदन्यं न जाने ॥४५॥
प्रणाममीशस्य शिरःफलं विदुस्तदर्चनं पाणिफलं दिवौकसः । मनःफलं तद्गुणतत्त्वचिन्तनं वाचःफलं तद्गुणकीर्तनं बुधाः ॥ ४६ ॥ श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्राप्ता वाञ्छितं पापिनोऽपि । हा नः पूर्वं वाक्प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुःखम् ॥ ४७ ॥ ध्यायन्ति ये विष्णुमनन्तमच्युतं हृत्पद्ममध्ये सततं व्यवस्थितम् । उपासकानां प्रभुमीश्वरेश्वरं ते यान्ति सिद्धिं परमां तु वैष्णवीम् ॥ ४८ ॥ सत्त्वं प्रसीद भगवन् कुरु मय्यनाथे विष्णो कृपां परमकारुणिकः खलु त्वम् । संसारसागरनिमग्नमनन्त दीनमुद्धर्तुमर्हसि हरे पुरुषोत्तमोऽसि ॥ ४९ ॥ क्षीरसागरतरङ्गसीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ ५० ॥ अलमलमलमेका प्राणिनां पातकानां निरसनविषये या कृष्ण कृष्णेति वाणी । यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा करतलकलिता सा मोक्षसाम्राज्यलक्ष्मीः ॥ ५१ ॥ यस्य प्रियौ श्रुतिधरौ कविलोकवीरा मित्रे द्विजन्मवरपार्श्वचरावभूताम् । तेनाम्बुजाक्षचरणाम्बुजषट्पदेन राज्ञा कृता कृतिरियं कुलशेखरेण ॥५२॥
मुकुन्दमालां पठतां नराणामशेषसौख्यं लभते न कः स्वित् । समस्तपापक्षयमेत्य देही प्रयाति विष्णोः परमं पदं तत् ॥५३॥

इति श्रीकुलशेखरकृतं मुकुन्दमालास्तोत्रं संपूर्णम् ।

## ७० अभीतिस्तवः ।

श्रीगणेशाय नमः ॥ अभीतिरिह यज्जुषां यदवधीरितानां भयं भयाभयविधायिनो जगति यन्निदेशे स्थिताः। तदेतदतिलङ्घितद्रुहिणशम्भुशक्रादिके रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥ १ ॥ दयाशिशिरिताशया मनसि मे सदा जागृयुः श्रियाध्युषितवक्षसः श्रितमरुद्वृधा सैकताः । जगदुरितघस्मरा जलधिडिम्भडम्भस्पृहः सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥ २ ॥ यदद्य मितबुद्धिना बहुलमोहभाजा मया गुणग्रथितकायवाङ्मनसि वृत्तिवैचित्र्यतः । अतर्कितहिताहितक्रमविशेषमारभ्यते तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥३॥ मरुत्तरणिपावकत्रिदशनाथकालादयः स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः। महत्किमपि वज्रमुद्यतमिवेति यच्छ्रूयते तरत्यनघ यद्भयं य इह तावकस्तावकः ॥ ४ ॥ भवन्तमिह यः सुधीर्नियतचेतनाचेतनं पनायति नमस्यति स्मरति वक्ति पर्यंति वा । गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥ ५ ॥ स्थिते मनसि विग्रहे गुणिनि धातुसाम्ये सति स्मरेदखिलदेहिनं य इह जातुचित्त्वामजम् । तथैव खलु संयया तमथ दीर्घनिद्रावशं स्वयं विहितसंस्मृतिर्नयसि धाम तैः श्रेयसम्



॥ ६ ॥ रमादयित रङ्गभूरमण कृष्ण विष्णो हरे त्रिविक्रम

जनार्दन त्रियुगनाथ नारायण। इतीव शुभदायिनः पठति नामधेयानि ते न तस्य यमवश्यता नरकपातभीतिः कुतः ॥ ७ ॥ कदाचिदपि रङ्गभूरसिक यत्र देशे वशी त्वदेकनियताशयस्त्रिदशवन्दितो वर्तते। तदक्षततपोवनं तव च राजधानी स्थिरा सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥८॥ त्रिवर्गपथवर्तिनां त्रिगुणलङ्घिनोयोगिनां द्विषत्प्रमथनार्थिनामपि च रङ्गदृश्योदयः। स्खलत्समयकातरीहरणजागरूकाः प्रभो करग्रहणदीक्षिताः क इह तेन दिव्या गुणाः ॥ ९ ॥ बिभेति भवभृत्प्रभो त्वदुपदेशतीव्रौपधात्कदध्वरसदुर्विषे बडिशभक्षवत्प्रीयते। अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी तमप्यवसरे क्रमादवति वत्सला त्वद्दया ॥ १० ॥ अपार्थ इति निश्चितप्रहरणादियोगस्तव स्वयं वदसि निर्भयस्तदपि रङ्ग पृथ्वीपते। स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं यदात्थ परमार्थविन्नियतमन्तरात्मेति ते ॥ ११ ॥ कथिद्धसुखसङ्गतैः स्वकृतकर्मनिर्वर्तितैः कलत्रसुतसोदरानुचरबन्धुसंबन्धिभिः। धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरैर्न बिभ्रति धृतिं विभो त्वदनुभूतिभोगार्थिनः ॥ १२ ॥ न वक्तुमपि शक्यते नरकगर्भवासादिकं वपुश्च बहुधातुकं निपुणचिन्तने तादृशम्। त्रिविष्टपसुखं तथा तव पदस्य देदीप्यतः किमत्र न भयास्पदं भवति रङ्ग पृथ्वीपते ॥ १३ ॥ भवन्ति सुखभेदतो भयनिदानमेव प्रभो शुभाशुभविकल्पिता जगति देशकालादयः।

इति प्रथितसाध्वसे मयि दयिष्यसे त्वं न चेत्क इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ १४ ॥ सकृत्प्रपदनस्पृशामभयदाननित्यव्रती न च द्विरभिभाषसे त्वमिति विश्रुतस्वोक्तितः । यथोक्तकरणं विदुस्तव तु यातुधानादयः कथं वितथमस्तु तत्कृपणसार्वभौमे मयि ॥ १५ ॥ अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे यदि क्वचन निष्कृतिर्भवति सापि दोषाविला । तदित्थमगतौ मयि प्रतिविधानमाधीयतां स्वबुद्धिपरिकल्पितं किमपि रङ्गधुर्य त्वया ॥ १६ ॥ विषादबहुलादहं विषयवर्गतो दुर्जयाद्बिभेमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः । मया नियतनाथवानयमिति त्वमथापन्दयाघन जगत्पते दयितरङ्ग संरक्ष माम् ॥१७॥ निसर्गनिरनिष्टता तव निरम्भसः श्रूयते ततस्त्रियुगसृष्टिवद्भवति संहतिः क्रीडितम् । तथाऽपि शरणागतप्रणयभङ्गभीतो भवान्मदिष्टमिह यद्भवेत्किमपि मा स्म तज्जल्पः ॥ १८ ॥ कद्याधुसुततन्तुवायसद्विरदपुङ्गवद्रौपदीविभीषणभुजङ्गमव्रजगणाम्बरीषादयः । भवत्पदसमाश्रिता भयविमुक्तिमापुर्यथा लभेमहि तथा वयं सपदि रङ्गधुर्य त्वया ॥ १९ ॥ भयं शमय रङ्गधन्यनितराभिलाषस्पृशां श्रियं बहुलय प्रभो श्रितविपक्षमुन्मूलय । स्वयं समुदितं वपुस्तव निशामयन्तः सदा वयं त्रिदशनिर्वृतिं भुवि मुकुन्द विन्देमहि ॥ २० ॥ श्रियः परिवृढे त्वयि श्रितजनस्य संरक्षके सदद्भुतगुणोदधाविति समर्पितोऽयं

भरः । प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥ २१ ॥ कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैस्तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम् । प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात् ॥ २२ ॥ दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं तमःप्रमथनं प्रभो समुदितावनन्दं स्वतः । स्वनत्तिवशवर्तितत्रिदशवृत्तिचक्रं पुनः प्रवर्तयतु धाम्नि ते महति धर्मचक्रस्थितिम् ॥ २३ ॥ मनुप्रभृतिमानिते महतिरङ्गधामादिके दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः । प्रकृष्टगुणकः श्रिया वसुधया च सन्धुक्षितः प्रयुक्तकरुणोदधे प्रशमय स्वशक्त्या स्वयम् ॥ २४ ॥ भुजङ्गमविहङ्गमप्रवरसैन्यनाथाः प्रभो तथैव कुमुदादयो नगरगोपुरद्वारपाः । अचिन्त्यबलविक्रमास्त्वमिव रङ्ग संरक्षका जितं त इति वादिनो जगदनुग्रहे जाग्रति ॥ २५ ॥ विधित्रिपुरमर्दनत्रिदशपुङ्गवः पावको यमप्रभृतयोऽपि यद्विमतरक्षणे न क्षमाः । रिरक्षिषति यत्र च प्रतिभयं न किंचित्क्वचित्स नः प्रतिभटान्प्रभो शमय रङ्गधामादिके ॥ २६ ॥ स कैटभतमोरविर्मधुपरागझञ्झामरुद्धिरण्यगिरिदारणत्रुटितकालनेमिद्रुमः । किमत्र बहुना भजद्भवपयोधिमुष्टिन्धयत्रिविक्रम भवत्क्रमः क्षिपतु मङ्क्षु रङ्गद्विषः ॥ २७ ॥ यतिप्रवरभारतीरसभरेण नीतं वयः प्रफुल्लपलितं शिरः पदमिह क्षमं प्रार्थये । निरस्तरिपुसंभवे क्वचन

रङ्गस्थले विभो परस्परहितैषिणां परिसरेषु मां वर्तय ॥२८॥
प्रबुद्धगुरुवीक्षणप्रथितवेङ्कटेशोद्भवामिमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् । भयं त्यजत भद्रमित्यभिदधत्स वः केशवः स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥ २९ ॥

इति श्रीमद्वेङ्कटनाथस्य कृतिषु अभीतिस्तवः समाप्तः ।

# शिवस्तोत्राणि ।

## ७१ शिवकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशिवकवचस्तोत्रमन्त्रस्य ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । श्रीसदाशिवरुद्रो देवता । ह्रीं शक्तिः । रं कीलकम् । श्रीं ह्रीं क्लीं बीजम् । श्रीसदाशिवप्रीत्यर्थे शिवकवचस्तोत्रजपे विनियोगः । अथ न्यासः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐह्रां सर्वशक्तिधाम्ने ईशानात्मने अङ्गुष्ठाभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐनं रिं नित्यतृप्तिधाम्ने तत्पुरुषात्मने तर्जनीभ्यां नमः । ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ मं रुं अनादिशक्तिधाम्ने अघोरात्मने मध्यमाभ्यां नमः । ॐनमो भगवते ज्वलज्वा-

लामालिने ॐ शिं रैं स्वतन्त्रशक्तिधाम्ने वामदेवात्मने अना-
मिकाभ्यां नमः। ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ
वां रौं अलुप्तशक्तिधाम्ने सद्योजातात्मने कनिष्ठिकाभ्यां नमः।
ॐनमो भगवते ज्वलज्ज्वालामालिने ॐ यं रः अनादिश-
क्तिधाम्ने सर्वात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि।
अथ ध्यानम्। वज्रदंष्ट्रं त्रिनयनं कालकण्ठमरिन्दमम्। सह-
स्रकरमत्युग्रं वन्दे शंभुमुमापतिम् ॥ १ ॥ अथापरं सर्वपुरा-
णगुह्यं निःशेषपापौघहरं पवित्रम्। जयप्रदं सर्वविपत्प्रमोचनं
वक्ष्यामि शैवं कवचं हिताय ते ॥२॥ ऋषभ उवाच। नमस्कृत्य
महादेवं विश्वव्यापिनमीश्वरम्। वक्ष्ये शिवमयं वर्म सर्वरक्षा-
करं नृणाम् ॥३॥ शुचौ देशे समासीनो यथावत्कल्पितासनः।
जितेन्द्रियो जितप्राणश्चिन्तयेच्छिवमव्ययम् ॥ ४ ॥ हृत्पु-
ण्डरीकान्तरसन्निविष्टं स्वतेजसा व्याप्तनभोवकाशम्। अती-
न्द्रियं सूक्ष्ममनन्तमाद्यं ध्यायेत्परानन्दमयं महेशम् ॥ ५ ॥
ध्यानावधूताखिलकर्मबन्धश्चिरं चिदानन्दनिमग्नचेताः। षड-
क्षरन्याससमाहितात्मा शैवेन कुर्यात्कवचेन रक्षाम् ॥ ६ ॥
मां पातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे।
तन्नाम दिव्यं वरमन्त्रमूलं धुनोतु मे सर्वमघं हृदिस्थम् ॥७॥
सर्वत्र मां रक्षतु विश्वमूर्तिर्ज्योतिर्मयानन्दघनश्चिदात्मा।

अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भयादशेषात् ॥ ८॥
या भूस्वरूपेण बिभर्ति विश्वं पायात्स भूमेर्गिरिशोऽष्टमूर्तिः।

योऽपां स्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्यः ॥ ९ ॥ कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः । स कालरुद्रोऽवतु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥ १० ॥ प्रदीप्तविद्युत्कनकावभासो विद्यावराभीतिकुठारपाणिः । चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यां स्थितं रक्षतु मामजस्रम् ॥ ११ ॥ कुठारवेदाङ्कुशपाशशूलकपालढक्काक्षगुणान्दधानः । चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥ १२ ॥ कुन्देन्दुशङ्खस्फटिकावभासो वेदाक्षमालावरदाभयाङ्कः । त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योधिजातोऽवतु मां प्रतीच्याम् ॥ १३ ॥ वराक्षमालाभयटङ्कहस्तः सरोजकिञ्जल्कसमानवर्णः । त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ॥ १४ ॥ वेदाभयेष्टाङ्कुशपाशटङ्ककपालढक्काक्षकशूलपाणिः । सितद्युतिः पञ्चमुखोऽवतान्मामीशान ऊर्ध्वं परमप्रकाशः ॥ १५ ॥ मूर्धानमव्यान्मम चन्द्रमौलिर्भालं ममाव्यादथ भालनेत्रः । नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥ १६ ॥ पायाच्छ्रुती मे श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली । वक्त्रं सदा रक्षतु पञ्चवक्त्रो जिह्वां सदा रक्षतु वेदजिह्वः ॥ १७ ॥ कण्ठं गिरीशोऽवतु नीलकण्ठः पाणिद्वयं पातु पिनाकपाणिः । दोर्मूलमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखान्तकोऽव्यात् ॥ १८ ॥ ममोदरं पातु गिरीन्द्रधन्वा मध्यं मम-

ष्यान्मदनान्तकारी । हेरम्बतातो मम पातु नाभिं पाया-
त्कटिं धूर्जटिरीश्वरो मे ॥ १९ ॥ ऊरुद्वयं पातु कुबेरमित्रो
जानुद्वयं मे जगदीश्वरोऽव्यात् । जङ्घायुगं पुङ्गवकेतुरव्या-
त्पादौ ममाव्यात्सुरवन्द्यपादः ॥ २० ॥ महेश्वरः पातु दिना-
दियामे मां मध्ययामेऽवतु वामदेवः । त्रिलोचनः पातु
तृतीययामे वृषध्वजः पातु दिनान्त्ययामे ॥ २१ ॥ पाया-
न्निशादौ शशिशेखरो मां गङ्गाधरो रक्षतु मां निशीथे ।
गौरीपतिः पातु निशावसाने मृत्युञ्जयो रक्षतु सर्वकालम्
॥ २२ ॥ अन्तःस्थितं रक्षतु शंकरो मां स्थाणुः सदा पातु
बहिःस्थितं माम् । तदन्तरे पातु पतिः पशूनां सदाशिवो
रक्षतु मां समन्तात् ॥ २३ ॥ तिष्ठन्तमव्याद्भुवनैकनाथः
पायाद्व्रजन्तं प्रमथाधिनाथः । वेदान्तवेद्योऽवतु मां निषण्णं
मामव्ययः पातु शिवः शयानम् ॥२४॥ मार्गेषु मां रक्षतु नील-
कण्ठः शैलादिदुर्गेषु पुरत्रयारिः । अरण्यवासादिमहाप्रवासे
पायान्मृगव्याध उदारशक्तिः ॥२५॥ कल्पान्तकाटोपपटुप्रको-
पस्फुटाट्टहासोच्चलिताण्डकोशः । घोरारिसेनार्णवदुर्निवारम-
हाभयाद्रक्षतु वीरभद्रः ॥२६॥ पत्त्यश्वमातङ्गघटावरूथसहस्रल-
क्षायुतकोटिभीषणम् । अक्षौहिणीनां शतमाततायिनां छिन्द्या-
न्मृडो घोरकुठारधारया ॥ २७ ॥ निहन्तु दस्यून्प्रलयानला-
र्चिर्ज्वलत्त्रिशूलं त्रिपुरान्तकस्य । शार्दूलसिंहर्क्षवृकादिहिंस्रा-
न्संत्रासयत्वीशधनुः पिनाकः ॥ २८ ॥ दुःस्वप्नदुःशकुनदुर्गति-

दौर्मनस्यदुर्भिक्षदुर्व्यसनदुःसहदुर्यशांसि । उत्पाततापविषभीतिमसद्ग्रहार्तिंव्याधींश्च नाशयतु मे जगतामधीशः ॥ २९ ॥
ॐनमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सर्वमन्त्रस्वरूपाय सर्वयन्त्राधिष्ठिताय सर्वतन्त्रस्वरूपाय सर्वतत्त्वविदूराय ब्रह्मरुद्रावतारिणे नीलकण्ठाय पार्वतीमनोहरप्रियाय सोमसूर्याग्निलोचनाय भस्मोद्धूलितविग्रहाय महामणिमुकुटधारणाय माणिक्यभूषणाय सृष्टिस्थितिप्रलयकालरौद्रावताराय दक्षाध्वरध्वंसकाय महाकालभेदनाय मूलाधारैकनिलयाय तत्त्वातीताय गङ्गाधराय सर्वदेवाधिदेवाय षडाश्रयाय वेदान्तसाराय त्रिवर्गसाधनायानन्तकोटिब्रह्माण्डनायकायानन्तवासुकितक्षककर्कोटकशङ्खकुलिकपद्ममहापद्मेत्यष्टमहानागकुलभूषणाय प्रणवस्वरूपाय चिदाकाशायाकाशदिक्स्वरूपाय ग्रहनक्षत्रमालिने सकलाय कलङ्करहिताय सकललोकैककर्त्रे सकललोकैकभर्त्रे सकललोकैकसंहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षिणे सकलनिगमगुह्याय सकलवेदान्तपारगाय सकललोकैकवरप्रदाय सकललोकैकशङ्कराय शशाङ्कशेखराय शाश्वतनिजावासाय निराभासाय निरामयाय निर्मलाय निर्लोभाय निर्मदाय निश्चिन्ताय निरहङ्काराय निरङ्कुशाय निष्कलङ्काय निर्गुणाय निष्कामाय निरुपप्लवाय निरवद्याय निरन्तराय निष्कारणाय निरन्तकाय निष्प्रपञ्चाय निःसङ्गाय निर्द्वन्द्वाय निराधाराय

नीरागाय निष्क्रोधाय निर्मलाय निष्पापाय निर्भयाय निर्विकल्पाय निर्भेदाय निष्क्रियाय निस्तुलाय निःसंशयाय निरञ्जनाय निरुपमविभवाय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानन्दाद्वयाय परमशान्तस्वरूपाय तेजोरूपाय तेजोमयाय जय जय रुद्र महारौद्र भद्रावतार महाभैरव कालभैरव कल्पान्तभैरव कपालमालाधर खट्वाङ्गखड्गचर्मपाशाङ्कुशडमरुशूलचापबाणगदाशक्तिभिन्दिपालतोमरमुसलमुद्गरपाशपरिघभुशुण्डीशतघ्नीचक्राद्यायुधभीषणकर सहस्रमुख दंष्ट्राकरालवदन विकटाट्टहासविस्फारितब्रह्माण्डमण्डल नागेन्द्रकुण्डल नागेन्द्रहार नागेन्द्रवलय नागेन्द्रचर्मधर मृत्युञ्जय त्र्यम्बक त्रिपुरान्तक विश्वरूप विरूपाक्ष विश्वेश्वर वृषभवाहन विषविभूषण विश्वतोमुख सर्वतो रक्ष रक्ष मां ज्वल ज्वल महामृत्युमपमृत्युभयं नाशय नाशय चोरभयमुत्सादयोत्सादय विषसर्पभयं शमय शमय चोरान्मारय मारय मम शत्रूनुच्चाटयोच्चाटय त्रिशूलेन विदारय विदारय कुठारेण भिन्धि भिन्धि खड्गेन छिन्धि छिन्धि खट्वाङ्गेन विपोथय विपोथय मुसलेन निष्पेषय निष्पेषय बाणैः संताडय संताडय रक्षांसि भीषय भीषयाशेषभूतानि विद्रावय विद्रावय कूष्माण्डवेतालमारीचब्रह्मराक्षसगणान् संत्रासय संत्रासय ममाभयं कुरु कुरु वित्रस्तं मामाश्वासयाश्वासय नरकमहाभयान्मामुद्धरोद्धर संजीवय संजीवय क्षुत्तृड्भ्यां मामाप्याययाप्यायय दुःखातुरं

मामानन्दयानन्दय शिवकवचेन मामाच्छादयाच्छादय मृत्युंजय त्र्यम्बक सदाशिव नमस्ते नमस्ते । ऋषभ उवाच । इत्येतत्कवचं शैवं वरदं व्याहृतं मया । सर्वबाधाप्रशमनं रहस्यं सर्वदेहिनाम् ॥ ३० ॥ यः सदा धारयेन्मर्त्यः शैवं कवचमुत्तमम् । न तस्य जायते क्वापि भयं शंभोरनुग्रहात् ॥ ३१ ॥ क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपि वा । सद्यः सुखमवाप्नोति दीर्घमायुश्च विन्दति ॥ ३२ ॥ सर्वदारिद्र्यशमनं सौमङ्गल्यविवर्धनम् । यो धत्ते कवचं शैवं स देवैरपि पूज्यते ॥ ३३ ॥ महापातकसंघातैर्मुच्यते चोपपातकैः । देहान्ते मुक्तिमाप्नोति शिववर्मानुभावतः ॥ ३४ ॥ त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम् । धारयस्व मया दत्तं सद्यः श्रेयो ह्यवाप्स्यसि ॥ ३५ ॥ सूत उवाच । इत्युक्त्वा ऋषभो योगी तस्मै पार्थिवसूनवे । ददौ शङ्खं महारावं खड्गं चारिनिषूदनम् ॥ ३६ ॥ पुनश्च भस्म संमन्त्र्य तदङ्गं परितोऽस्पृशत् । गजानां षट्सहस्रस्य द्विगुणस्य बलं ददौ ॥ ३७ ॥ भस्मप्रभावात्संप्राप्तबलैश्वर्यधृतिस्मृतिः । स राजपुत्रः शुशुभे शरदर्क इव श्रिया ॥ ३८ ॥ तमाह प्राञ्जलिं भूयः स योगी नृपनन्दनम् । एष खड्गो मया दत्तस्तपोमन्त्रानुभावितः॥३९॥ शितधारमिमं खड्गं यस्मै दर्शयसे स्फुटम् । स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम् ॥ ४० ॥ अस्य शङ्खस्य निर्ह्रादं ये शृण्वन्ति तवाहिताः । ते मूर्छिताः पतिष्यन्ति न्यस्तशस्त्रा

विचेतनाः ॥ ४१ ॥ खड्गशङ्खाविमौ दिव्यौ परसैन्यविनाशिनौ । आत्मसैन्यस्य पक्षाणां शौर्यतेजोविवर्धनौ ॥ ४२ ॥ एतयोश्च प्रभावेण शैवेन कवचेन च । द्विषट्सहस्रनागानां बलेन महतापि च ॥ ४३ ॥ भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि । प्राप्य सिंहासनं पित्र्यं गोप्तासि पृथिवीमिमाम् ॥ ४४ ॥ इति भद्रायुषं सम्यगनुशास्य समातृकम् । ताभ्यां संपूजितः सोऽथ योगी स्वैरगतिर्ययौ ॥ ४५ ॥

इति श्रीस्कन्दपुराणे ब्रह्मोत्तरखण्डे शिवकवचं समाप्तम् ।

---

## ७२ शिवमानसपूजा ।

श्रीगणेशाय नमः ॥ रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं नानारत्नविभूषितं मृगमदामोदाङ्कितं चन्दनम् । जातीचम्पकबिल्वपत्ररचितं पुष्पं च धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥ १ ॥ सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं भक्ष्यं पञ्चविधं पयोदधियुतं रम्भाफलं पानकम् । शाकानाममृतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥ २ ॥ छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं वीणाभेरिमृदंगकाहलकलागीतं च नृत्यं तथा । साष्टाङ्गं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया संकल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥ ३ ॥ आत्मा त्वं गिरिजा

मतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः । संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम् ॥ ४ ॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् । विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शंभो ॥ ५ ॥

इति श्रीशिवमानसपूजा समाप्ता ।

---

## ७३ शिवाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शिवो महेश्वरः शंभुः पिनाकी शशिशेखरः । वामदेवो विरूपाक्षः कपर्दी नीललोहितः ॥१॥ शंकरः शूलपाणिश्च खट्वाङ्गी विष्णुवल्लभः । शिपिविष्टोऽम्बिकानाथः श्रीकण्ठो भक्तवत्सलः ॥ २ ॥ भवः शर्वस्त्रिलोकेशः शितिकण्ठः शिवाप्रियः । उग्रः कपाली कामारिरन्धकासुरसूदनः ॥३॥ गङ्गाधरो ललाटाक्षः कालकालः कृपानिधिः । भीमः परशुहस्तश्च मृगपाणिर्जटाधरः ॥४॥ कैलासवासी कवची कठोरस्त्रिपुरान्तकः । वृषाङ्को वृषभारूढो भस्मोद्धूलितविग्रहः ॥ ५ ॥ सामप्रियः स्वरमयस्त्रयीमूर्तिरनीश्वरः । सर्वज्ञः परमात्मा च सोमसूर्याग्निलोचनः ॥६॥ हविर्यज्ञमयः सोमः पञ्चवक्त्रः सदाशिवः । विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥ ७ ॥ हिरण्यरेता दुर्धर्षो गिरीशो गिरिशोऽनघः ।

भुजङ्गभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥ कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः। मृत्युञ्जयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः ॥ ९ ॥ व्योमकेशो महासेनजनकश्चारुविक्रमः। रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगम्बरः ॥ १० ॥ अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः। शाश्वतः खण्डपरशुरजः पाशविमोचनः ॥ ११ ॥ मृडः पशुपतिर्देवो महादेवोऽव्ययो हरिः। पूषदन्तभिदव्यग्रो दक्षाध्वरहरो हरः ॥ १२ ॥ भगनेत्रभिदव्यक्तः सहस्राक्षः सहस्रपात्। अपवर्गप्रदोऽनन्तस्तारकः परमेश्वरः ॥ १३ ॥

इति श्रीशिवाष्टोत्तरशतनामस्तोत्रं संपूर्णम्।

## ७४ शिवमहिम्नस्तोत्रम्।

श्रीगणेशाय नमः ॥ श्रीविष्णुरुवाच। महेशानन्ताद्य त्रिगुणरहितामेय विमल स्वराकारापारामितगुणगणाकारनिवृते। निराधाराधारामरवर निराकार परम प्रभापूराकारावर पर नमो वेद्य शिव ते ॥ १ ॥ नमो वेदावेद्याखिलजगदुपादाननियतं स्वतन्त्रासामन्तानवधुतिनिजाकारविरते। निवर्तन्ते वाचः शिवभजनमप्राप्य मनसा यतोऽशक्ताः स्तोतुं सकृदपि गुणातीतशिव ते ॥ २ ॥ त्वदन्यं वस्त्वेकं नहि भव समस्तत्रिभुवने विभुस्त्वं विश्वात्मा न च परममस्तीश भवतः। ध्रुवं मायातीतस्त्वमसि सततं नात्र

विपयो न ते कृत्यं सत्यं क्वचिदपि विपर्येति शिव ते ॥३॥ त्वयैवेमं लोकं निखिलममलं व्याप्य सततं तथैवान्यां लोकस्थितिमनघ देवोत्तम विभो। त्वयैवैतत्सृष्टं जगदखिलमीशान भगवन्विलासोऽयं कश्चित्तव शिव नमो वेद्य शिव ते ॥ ४ ॥ जगत्सृष्टेः पूर्वं यदभवदुमाकान्त सततं त्वया लीलामात्रं तदपि सकलं रक्षितमभूत् । तदेवाग्रे भालप्रकटनयनादद्भुतकराज्जगद्दग्ध्वा स्थास्यस्यज हर नमो वेद्य शिव ते ॥ ५ ॥ विभूतीनामन्तो भव न भवतो भूतिविलसन्निजाकार श्रीमन्नगणगुणसीमाप्यवगता । अतद्व्यावृत्त्याद्धा त्वयि सकलवेदाश्च चकिता भवन्त्येवासामप्रकृतिकनमोधर्ष शिव ते ॥६॥ विराड्रूपं यत्ते सकलनिगमागोचरमभूत्तदेवेदं रूपं भवति किमिदं भिन्नमथवा । न जाने देवेश त्रिनयन सुराराध्यचरण त्वमोङ्कारो वेदस्त्वमसि हि नमोऽघोर शिव ते ॥७॥ यदन्तस्तत्त्वज्ञा मुनिवरगुणा रूपमनघं तवेदं संचिन्त्य स्वमनसि सदा सङ्गविहताः । ययुर्दिव्यानन्दं तदिदमथवा किंतु न तथा किमेतज्जानेऽहं शरणद नमः शर्व शिव ते ॥८॥ यथा शक्त्या सृष्ट्वा जगदथ च संरक्ष्य बहुधा ततः संहृत्यैतन्निवससि तदाधारमथवा । इदं ते किं रूपं निरुपम न जाने हर विभो विसर्गः को वा ते तमपि हि नमो भव्य शिव ते ॥९॥ तवानन्तान्याहुः शुचिपरमरूपाणि निगमास्तदन्तर्भूतं सत्सदसदनिरुक्तं पदमपि । निरुक्तं छन्दोभिर्निलयनमिदं चानिलयनं न विज्ञा

ज्ञातं सकृदपि नमो ज्येष्ठ शिव ते ॥ १० ॥ तवाभूतसत्यं चानृतमपि च सत्यं कृतमभूद्दतं सत्यं सत्यं तदपि च यथा रूपमखिलम् । यतः सत्यं सत्यं शममपि समस्तं तव विभो कृतं सत्यं सत्यानृतमपि नमो रुद्र शिव ते ॥ ११ ॥ तवामेयं मेयं यदपि तदमेयं विरचितं न वामेयं मेयं रचितमपि मेयं विरचितुम् । न मेयं मेयं ते न खलु परमेयं परमयं न मेयं नामेयं वरमपि नमो देव शिव ते ॥ १२ ॥ तवाहारं हारं विदितमविहारं विरहसं नवाहारं हारं हर हरसि हारं न हरसि । न वाहारं हारं परतरविहारं परतरं परं पारं जाने नहि खलु नमो विश्वशिव ते ॥ १३ ॥ यदेतत्तत्त्वं ते सकलमपि तत्त्वेन विदितं न ते तत्त्वं तत्त्वं विदितमपि तत्त्वेन विदितम् । नचैतत्तत्त्वं चेन्नियतमपि तत्त्वं किन्तु भवे न ते तत्त्वं तत्त्वं तदपि च नमो वेद्य शिव ते ॥ १४ ॥ इदं रूपं रूपं सदसदमलं रूपमपि चेन्न जाने रूपं ते तरतमविभिन्नं परतरम् । यतो नान्यद्रूपं नियतमपि वेदैर्निंगदितं न जाने सर्वात्मन्कश्चिदपि नमोऽनन्त शिव ते ॥ १५ ॥ महद्भूतं भूतं यदपि न च भूतं तव विभो सदा भूतं भूतं किन्तु न भवतो भूतविषये । यदाभूतं भूतं भवति हि न भव्यं भगवतो भवाभूतं भाव्यं भवति न नमो ज्येष्ठ शिव ते ॥ १६ ॥ यदीभूता भूताः सततमपि भूतास्त्वकतया न ते भूताभूतास्तव यदपि भूता विभुतया । यतो भूता भूता-

स्तव तु नहि भूतात्मकतया न वा भूता भूताः क्वचिदपि नमो भूत शिव ते ॥ १७ ॥ न ते मायामाया सततमपि मायामयतया ध्रुवं मायामाया त्वयि वर न मायामयमपि । यदा माया माया त्वयि न खलु मायामयतया न मायामाया वा परमय नमस्ते शिव नमः ॥ १८ ॥ यदन्तः संवेद्यं विदितमपि वेदैर्न विदितं न वेद्यं वेद्यं चेन्नियतमपि वेद्यं न विदितम् । तदेवेदं वेद्यं विदितमपि वेदान्तनिकरैः करावेद्यं वेद्यं जितमिति नमोऽतर्क्य शिव ते ॥ १९ ॥ शिवं सेव्यं भावं शिवमतिशिवाकारमशिवं न सत्यं शैवं तच्छिवमिति शिवं सेवमनिशम् । शिवं शान्तं मत्वा शिवपरमतत्त्वं शिवमयं न जाने रूपत्वं शिवमिति नमो वेद्य शिव ते ॥२०॥ यदज्ञात्वा तत्त्वं सकलमपि संसारपतितं जगज्जन्मावृत्तिं वहति सततं दुःखनिलयम् । यदेतज्ज्ञात्वैवावहति च निवृत्तिं परतरां न जाने तत्तत्त्वं परमिति नमो वेद्य शिव ते ॥ २१ ॥ न वेदं यद्रूपं निगमविषयं मङ्गलकरं न दृष्टं केनापि ध्रुवमिति विजाने शिव विभो । ततश्चित्ते शंभो नहि मम विषादोऽघविकृतिः प्रयत्नाल्लब्धेऽस्मिन्न किमपि नमः पूर्ण शिव ते ॥ २२ ॥ तवाकर्ण्यागूढं यदपि परतत्त्वं श्रुतिपरं तदेवापीतं सन्नयनपदवीं नात्र तनुते । कदाचित्किंचिद्वा स्फुरतु कतिधा चेतसि तव स्फुरद्रूपं भव्यं भवहर परावेद्य शिव ते ॥ २३ ॥ त्वमिन्दुर्भानुस्त्वं हुतभुगसि वायुश्च सलिलं

त्वमेवाकाशोऽसि क्षितिरसि तथात्मासि भगवन् । ततः सर्वाकारस्त्वमसि भवतो भिन्नमनघान्न तत्सत्यं सत्यत्रिनयन नमोऽनन्त शिव ते ॥ २४ ॥ विधुं धत्से नित्यं शिरसि मृदुकण्ठेऽपि गरलं नवं नागाहारं भसितममलं भाच्छरतनुम् । करे शूलं भाले ज्वलनमनिशं तत्किमिति ते न तत्त्वं जानेऽहं भवहर नमः कूर्प शिव ते ॥ २५ ॥ तवापाङ्गः शुद्धो यदि भवति भव्ये शुभकरः कदाचित्कस्मिंश्चिल्लघुतरनरे विप्रभवति । स एवैताँल्लोकान् रचयितुमलं सापि च महान्कृपाधारोऽयं ते सुखयति नमोऽनन्त शिव ते ॥ २६ ॥ भवन्तं देवेशं शिवमितरगीर्वाणसदृशं प्रमादाद्यः कश्चिद्यदि वदति चित्तेऽपि मनुते । स दुःखं लब्ध्वान्ते नरकमपि याति ध्रुवमिदं ध्रुवं देवाराध्यामितगुण नमोऽनन्त शिव ते ॥ २७ ॥ प्रदोषे रत्नाढ्ये मृदुलतरसिंहासनवरे भवानीमारूढामसकृदपि संवीक्ष्य भवता । कृतं सम्यङ्नाट्यं प्रथितमिति वेदोऽपि वदति प्रभावः को वायं तव हर नमो दीप शिव ते ॥२८॥ श्मशाने संचारः किन्तु शिव न ते क्वापि गमनं यतो विश्वं व्याप्याखिलमपि सदा तिष्ठति भवान् । विभुं नित्यं शुद्धं शिवमुपहतं व्यापकमिति श्रुतिः साक्षाद्वक्ति स्वयमपि नमः शुद्ध शिव ते ॥ २९ ॥ धनुर्मेरुः शेषो धनुवरगुणो यानमवनिस्तवैवेदं चक्रं निगमनिकरा वाजिनिकराः । पुरी लक्ष्यं यन्ता विधिरिषुहरिश्चेति निगमः किमेवं त्वन्वेष्यो निगदति नमः

पूर्ण शिव ते ॥ ३० ॥ मृदुः सत्त्वं त्वेतद्भवमनघयुक्तं च रजसा तमोयुक्तं शुद्धं हरमपि शिवं निष्कलमिति । वदत्येको वेदस्त्वमसि तदुपास्यं ध्रुवमिदं त्वमोंकाराकारो ध्रुवमिति नमोऽनन्त शिव ते ॥ ३१ ॥ जगत्सुप्तिं बोधं व्रजति भवतो निर्गतमपि प्रवृत्तिं व्यापारं पुनरपि सुपुप्तिं च सकलम् । त्वदन्यं त्वत्प्रेक्ष्यं व्रजति शरणं नेति निगमो वदत्यद्धा सर्वं शिव इति नमः स्तुत्य शिव ते ॥३२॥ त्वमेवालोकानामधिपतिरुमानाथ जगतां शरण्यः प्राप्यस्त्वं जलनिधिरिवानन्तपयसाम् । त्वदन्यो निर्वाणं तट इति च निर्वाणयतिरप्यतः सर्वोत्कृष्टस्त्वमसि हि नमो नित्य शिव ते ॥३३॥ तवैवांशो भानुस्तपति विधुरप्येति पवनः पवत्येपोऽग्निश्च ज्वलति सलिलं च प्रवहति । तवाज्ञाकारित्वं सकलसुरवर्गस्य सततं त्वमेकः स्वातन्त्र्यं वहसि हि नमोऽनन्त शिव ते ॥ ३४ ॥ स्वतन्त्रोऽयं सोमः सकलभुवनैकप्रभुरयं नियन्ता देवानामपि हर नियन्तासि न परः । शिवः शुद्धो मायारहित इति वेदोऽपि वदति स्वयं तामाशास्य व्यहर नमोऽनन्त शिव ते ॥ ३५ ॥ नमो रुद्रानन्तामरवर नमः शंकर विभो नमो गौरीनाथ त्रिनयन शरण्याङ्घ्रिकमल । नमः सर्वः श्रीमन्ननघ महैश्वर्यनिलय स्मरारे पापारे जय जय नमः सेव्य शिव ते ॥ ३६ ॥ महादेवामेयानघगुणगणग्राममवतन्नमो भूयो भूयः पुनरपि नमस्ते पुनरपि । पुरारातिः शंभो पुनरपि

नमस्ते शिव विभो नमो भूयो भूयः शिव शिव नमोऽनन्त शिव ते ॥३७॥ कदाचिद्गण्यन्ते निबिडनियतं वृष्टिकणिकाः कदाचित्तत्क्षेत्राण्यपि सिकतलेशं कुशलिना। अनन्तैराकल्पं शिव गुणगणाश्चारुरसनैर्न शक्यं ते नूनं गणयितुमुपित्त्वापि सततम् ॥ ३८ ॥ मया विज्ञायैवानिशमपि कृता जेतुमनसा सकामेनामेया सततमपराधा बहुविधाः। त्वयैते क्षन्तव्याः क्वचिदपि शरीरेण वचसा कृतैर्नैतैर्नूनं शिव शिव कृपासागर विभो ॥ ३९ ॥ प्रमादाद्यं केचिद्वितत्तमपराधा विधिहताः कृताः सर्वे तेऽपि प्रशममुपयान्तु स्फुटतरम्। शिवः श्रीमच्छम्भो शिव शिव महेशेति च जपन् क्वचिल्लिङ्गाकारे शिव हर वसामि स्थिरतरम् ॥ ४० ॥ इति स्तुत्वा शिवं विष्णुः प्रणम्य च मुहुर्मुहुः। निर्विण्णो न्यवसन्नूनं कृताञ्जलिपुटः स्थिरम् ॥४१॥ तदा शिवः शिवं रूपमादायोवाच सर्वगः। भीषयन्नखिलान्भूतान्घनगम्भीरया गिरा ॥ ४२ ॥ मदीयं रूपममलं कथं ज्ञेयं भवादृशैः। यत्तु वेदैरविज्ञातमित्युक्त्वान्तर्दधे शिवः ॥४३॥ ततः पुनर्विधिस्तत्र तपस्तप्तुं समारभत्। विष्णुश्च शिवतत्त्वस्य ज्ञानार्थमतियत्नतः ॥ ४४ ॥ तादृशी शिव मे वाञ्छा पूजयित्वा वदाम्यहम्। नान्यो मयार्च्यो देवेषु विना शंभुं सनातनम् ॥४५॥ त्वयापि शांकरं लिङ्गं पूजनीयं प्रयत्नतः। विहायैतानदेवानां पूजनं मेऽस्तु सर्वदा ॥४६॥



इति श्रीस्कन्दपुराणे विष्णुविरचितं महिमस्तोत्रं संपूर्णम्।

---

॥ ४ ॥ त्वं विश्वसाक्षी जगतोऽस्य कर्ता निगूढधामा हृदि संनिविष्टः । अतो विचिन्वन्ति धिया विपश्चितो योगैरनेकैः कृतचित्तरोधैः ॥ ५ ॥ एकात्मना भावयतां त्वमेको नानाधियां यस्त्वमनेकरूपः । अतीन्द्रियं शश्वदपास्तविभ्रमं मनःपथात्संध्रियते पदं ते ॥ ६ ॥ तं त्वां दुरापं वचसो धियश्च व्यपेतमोहं परमात्मरूपम् । गुणैकनिष्ठाः प्रकृतौ विलीना कथं पुनस्तोतुमलं गिरा मे ॥ ७ ॥ तथापि भक्त्याऽऽश्रयतामुपेयुषस्तवाङ्घ्रिपद्मं प्रणतार्तिभञ्जनम् । सुघोरसंसारदवाग्निपीडितो भजामि नित्यं भवभीतिशान्तये ॥ ८ ॥ नमस्ते देवदेवाय महादेवाय शंभवे । नमस्त्रिमूर्तिभेदाय सर्गस्थित्यन्तकारिणे ॥ ९ ॥ नमो विश्वादिरूपाय विश्वप्रत्ययसाक्षिणे । नमः सन्मात्रतत्त्वाय बोधानन्दघनाय ते ॥ १० ॥ सर्वक्षेत्रनिवासाय क्षेत्रभिन्नात्मशक्तये । असक्ताय नमस्तुभ्यं सक्ताभासाय भूयसे ॥ ११ ॥ निराभासाय नित्याय सत्यज्ञानान्तरात्मने । विशुद्धाय विदूराय विमुक्ताशेषकर्मणे ॥ १२ ॥ नमो वेदान्तवेद्याय वेदमूलनिवासिने । नमो विविक्तचेष्टाय निवृत्तगुणवृत्तये ॥ १३ ॥ नमः कल्याणवीर्याय कल्याणफलदायिने । नमोऽनन्ताय महते शान्ताय शिवरूपिणे ॥ १४ ॥ अघोराय सुघोराय घोराघौघविदारिणे । भगाय भवभीतानां भञ्जनाय नमोऽस्तु ते ॥ १५ ॥ नमो विध्वस्तमोहाय विशदात्मगुणाय ते । पाहि मां जगतां नाथ

पाहि शंकर शाश्वत । पाहि रुद्र विरूपाक्ष पाहि मृत्युञ्जयाव्यय ॥ १६ ॥ शम्भो शशाङ्ककृतशेखर शान्तमूर्ते गौरीश गोपतिनिवेश हुताशनेत्र । गङ्गाधरान्धकविदारण पुण्यमूर्ते भूतेश भूधरनिवास सदा नमस्ते ॥ १७ ॥

इति श्रीस्कन्दपुराणे ब्रह्मोत्तरखण्डे ऋषभयोगिनाऽनुप्रदिष्टेन भद्रायुना प्रोक्तं शिवस्तोत्रं संपूर्णम् ।

## १२३ चन्द्रचूडालाष्टकम् ।

श्रीगणेशाय नमः ॥ ॥ यमनियमाद्यङ्गयुतैर्योगैर्यत्पादपङ्कजं द्रष्टुम् । प्रयतन्ते मुनिवर्यास्तमहं प्रणमामि चन्द्रचूडालम् ॥१॥ यमगर्वभञ्जनचणं नमतां सर्वेष्टदानधौरेयम् । शमदमसाधनसंपल्लभ्यं प्रणमामि चन्द्रचूडालम् ॥ २ ॥ यं द्रोणबिल्वमुख्यैः पूजयतां द्वारि मत्तमातङ्गाः । कण्ठे लसन्ति विद्यास्तमहं प्रणमामि चन्द्रचूडालम् ॥ ३ ॥ नलिनभवपद्मनेत्रप्रमुखामरसेव्यमानपदपद्मम् । नतजनविद्यादानप्रवणं प्रणमामि चन्द्रचूडालम् ॥ ४ ॥ श्रुतिभिर्देववराणां मुखरीकृतमन्दिरद्वारम् । स्तुतमादिमवाक्ततिभिः सततं प्रणमामि चन्द्रचूडालम् ॥ ५ ॥ जन्तोस्तव पादपूजनकरणात्करपद्मगाः पुमर्थाः स्युः । मुरहरपूजितपादं तमहं प्रणमामि चन्द्रचूडालम् ॥ ६ ॥ चेतसि चिन्तयतां यत्पद्मयां सत्वरं वक्त्रात् । निःसरति वाक्सुधामा तमहं प्रणमामि चन्द्र-

चूडालम् ॥७॥ नम्राज्ञानतमस्ततिदूरीकरणाय नेत्रलक्ष्माय्यः । धत्तेऽग्निचन्द्रसूर्यांस्तमहं प्रणमामि चन्द्रचूडालम् ॥ ८ ॥ अष्टकमेतत्पठतां स्पष्टतरं कष्टनाशनं पुंसाम् । अष्ट ददाति हि सिद्धीरिष्टसमष्टीश्च चन्द्रचूडालः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदभिनवनृसिंहभारती-स्वामिना विरचितं चन्द्रचूडालाष्टकं संपूर्णम् ।

## १२४ गौरीशकल्याणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चन्द्रार्धप्रविभासिमस्तकतटौ तन्द्राविहीनौ सदा भक्तौघप्रतिपालने निजतनुच्छायाजिताकांयुतौ । शृङ्गाद्रिस्थविवाहमण्डपगतौ कारुण्यवारांनिधी कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ १ ॥ अन्योन्यार्चनतत्परौ मधुरवाक्संतोषितान्योन्यकौ चन्द्रार्धाञ्चितशेखरौ प्रणमतामिष्टार्थदौ सत्वरम् । शृङ्गाद्रिस्थविवाहमण्डपगतौ शृङ्गारजन्मावनी कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ २ ॥ सौन्दर्येण परस्परं प्रमुदितावन्योन्यचित्तस्थितौ राकाचन्द्रसमानवक्त्रकमलौ पादाब्जकालंकृतौ । शृङ्गाद्रिस्थविवाहमण्डपगतौ गङ्गातटावासिनौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ३ ॥ सिंहोक्षाग्र्यगती महोन्नतपदं संप्रापयन्तौ नतानंहोराशिनिवारणैकनिपुणौ ब्रह्मोग्रविष्ण्वर्चितौ । शृङ्गाद्रिस्थविवाहमण्ड-

पगतौ गाङ्गेयभूषोज्ज्वलौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ४ ॥ कस्तूरीघनसारचर्चिततनू प्रस्तूयमानौ सुरैरस्तूक्त्या प्रणतेष्टपूरणकरौ वस्तूपलब्धिप्रदौ। शृङ्गाद्रिस्थविवाहमण्डपगतावङ्गावधूतेन्दुभौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ५ ॥ वाणीनिर्जितहंसकोकिलरवौ पाणीकृताम्भोरुहौ वेणीकेशविनिर्जिताहिचपलौ क्षोणीसमानक्षमौ। शृङ्गाद्रिस्थविवाहमण्डपगतौ तुङ्गेष्टजालप्रदौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ६ ॥ कामापत्तिविभूतिकारणदृशौ सोमार्धभूषोज्ज्वलौ सामाम्नायसुगीयमानचरितौ रामार्चिताङ्घ्रिद्वयौ। शृङ्गाद्रिस्थविवाहमण्डपगतौ माणिक्यभूषान्वितौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ७ ॥ दम्भाहंकृतिदोषशून्यपुरुषैः संभावनीयौ सदा जम्भारातिमुखामरेन्द्रविनुतौ कुम्भात्मजाद्यर्चितौ। शृङ्गाद्रिस्थविवाहमण्डपगतौ वाग्दानदीक्षाधरौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ८ ॥ शापानुग्रहशक्तिदाननिपुणौ तापापनोदक्षमौ सोपानक्रमतोऽधिकारिभिरहप्राप्यौ क्षमासागरौ। शृङ्गाद्रिस्थविवाहमण्डपगतौ लावण्यपाथोनिधी कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ ९ ॥ शोणाम्भोरुहतुल्यपादयुगलौ बाणार्चनातोषितौ वीणाधृङ्मुनिगीयमानविभवौ बालारुणाभास्वरौ। शृङ्गाद्रिस्थविवाहमण्डपगतौ

तुल्याधिकैर्वर्जितौ कल्याणं तनुतां समस्तजगतां गौरीगिरीशौ मुदा ॥ १० ॥

इति श्रीमत्परमहंसेत्यादिसमस्तबिरुदाङ्कितश्रीजगद्गुरुशृङ्गगिरिश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिना विरचितं गौरीशकल्याणस्तोत्रं संपूर्णम् ।

## १२५ कालभैरवाष्टकम् ।

श्रीगणेशाय नमः ॥ अङ्गसुन्दरत्वनिन्दिताङ्गजातवैभवं भृङ्गसर्वगर्वहारिभेदकान्तिशोभितम् । मङ्गलौघदानदक्षपादपद्मसंस्मृतिं शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ १ ॥ पादनम्रमूकलोकवाक्प्रदानदीक्षितं वेदवेद्यमीशमोदवार्धिशुभ्रदीधितिम् । आदरेण देवताभिरर्चिताङ्घ्रिपङ्कजं शृङ्ग० ॥ २ ॥ अम्बुजाक्षमिन्दुवक्त्रमिन्दिरेशनायकं कम्बुकण्ठमिष्टदानधूतकल्पपादपम् । अम्बरादिभूतरूपमम्बरायिताम्बरं शृङ्ग० ॥ ३ ॥ मन्दभाग्यमप्यरं सुरेन्द्रतुल्यवैभवं सुन्दरं च कामतोऽपि संविधीय संततम् । पालयन्तमात्मजातमादरात्पिता यथा शृङ्ग० ॥ ४ ॥ नम्रकष्टनाशदक्षमष्टसिद्धिदायकं कम्रहासिशोभितुण्डमच्छगण्डदर्पणम् । कुन्दपुष्पमानचौरदन्तकान्तिभासुरं शैलशृङ्ग० ॥ ५ ॥ काशिकादिदिव्यदेशवासलोलमानसं पाशिवायुकिन्नरेशमुख्यदिग्धवार्चितम् । नाशिताघवृन्दमङ्घ्रिनम्रलोकयोगदं शैलशृङ्ग० ॥६॥

सारमागमस्य तुङ्गसारमेयवाहनं दारितान्तरान्ध्यमाशु नैज-मन्त्रजापिनः। पूरिताखिलेष्टमष्टमूर्तिदेहसंभवं शृङ्ग० ॥ ७ ॥ कालभीतिवारणं कृपालशोभिपाणिनं खण्डितामरारिभि-न्दुबालशोभिमस्तकम् । चण्डबुद्धिदानदक्षमक्षतात्मशासनं शृङ्गशैलवासिनं नमामि कालभैरवम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदभिनवनृसिंहभार-तीविरचितं कालभैरवाष्टकं संपूर्णम् ।

---

## १२६ शिवाष्टकम् ।

श्रीगणेशाय नमः ॥ आशावशादष्टदिगन्तराले देशान्तर-भ्रान्तमशान्तबुद्धिम् । आकारमात्रादवनीसुरं मामकृत्यकृत्यं शिव पाहि शम्भो ॥१॥ मांसास्थिमज्जामलमूत्रपात्रगात्राभि-मानोज्झितकृत्यजालम् । मद्भावनं मन्मथपीडिताङ्गं माया-मयं मां शिव० ॥२॥ संसारमायाजलधिप्रवाहसंमग्नमुद्भ्रा-न्तमशान्तबुद्धिम् । त्वत्पादसेवाविमुखं सकामं सुदुर्जयं मां शिव० ॥ ३ ॥ इष्टानृतं भ्रष्टमनिष्टधर्मं नष्टात्मबोधं नयलेश-हीनम् । कष्टारिषड्वर्गनिपीडिताङ्गं दुष्टोत्तमं मां शिव० ॥४॥ वेदागमाभ्यासरसानभिज्ञं पादारविन्दं तव नार्चयन्तम् । वेदोक्तकर्माणि विलोपयन्तं वेदाकृते मां शिव० ॥५॥ अन्या-न्यायवित्तार्जनसक्तचित्तम[illegible] नारी[illegible]मितम् । अन्या-न्नभोक्तारमशुद्धदेहमाचारहीनं शिव० ॥ ६ ॥ पुरात्तताप-

त्रयतप्तदेहं परां गतिं गन्तुमुपायवर्जम् । परावमानैकपरा- त्मभावं नराधमं मां शिव० ॥ ७ ॥ पिता यथा रक्षति पुत्रमीश जगत्पिता त्वं जगतः सहायः। कृतापराधं तव सर्वकार्ये कृपानिधे मां शिव पाहि शम्भो ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदभिनवनृसिं- हभारतीस्वामिना विरचितं शिवाष्टकं संपूर्णम्।

## १२७ शिवभक्तिकल्पलतिका।

श्रीगणेशाय नमः ॥ श्रीकान्तपद्मजमुखैर्हृदि चिन्तनीयं श्रीमत्क शंकर भवच्चरणारविन्दम् । क्वाहं तदेतदुपसेवितु- मीहमानो हा हन्त कस्य न भवाम्युपहासपात्रम् ॥ १ ॥ अद्राक्षमङ्घ्रिकमलं न तवेति यन्मे दुःखं यदप्यनवमृश्य दुरामतां स्वाम् । पादाम्बुजं तव दिदृक्ष इतीदृगागः पातोऽ- नले प्रतिकृतिर्गिरिशैतयोर्मे ॥ २ ॥ दौरात्म्यतो मम भवत्पद- दर्शनेच्छा मन्तुस्तथापि तव सा भजनात्मिकेति। स्यादी- शितुर्मयि दयैव दयामकार्षीरश्मादिभिः प्रहृतवत्स्व न किं विभो त्वम् ॥ ३ ॥ दुःखानलोदरनिपातनधूर्वदेष्वेष्वर्थाङ्ग- नासुतमुखेष्वनुराग आगः । स्यात्ते रुषे तव दयालुतया त्वदानत्यावैर्विभो तदवधूय विभर्षि चास्मान् ॥ ४ ॥ ईशान रक्षितुमिमान्यदपेक्षसे त्वं नत्यादिकं तदपनेतुमतिप्रसङ्गम्। किं हीयते तदनुपाधिकृपालुता ते संवित्सुखस्य न हि ते

प्रियमप्रियं वा ॥ ५ ॥ अप्याहर प्रहर संहर वाग्वदस्य त्राता-स्युपात्तमनुना मम नाम हीति । एवं विभो तनुभृतामवनेऽप्युपायान्वेषी कथं परमकारुणिकोऽसि न त्वम् ॥६॥ त्राता दयाजलनिधिः स्मृतिमात्रलभ्यः क्षन्ताऽऽगसामिति भवद्यशसा हृतात्मा । त्वामस्मरन्वत मलीमसतामलज्जो भक्तिं भवत्यभिलपामि धिगस्तु यन्माम् ॥ ७ ॥ शर्माप्तिरार्तिविहतिश्च भवत्प्रसादं शम्भोर्विना न हि नृणां स च नान्तरा याम् । यस्यां विधिः श्वभुगपि क्षमते समं तां त्वद्भक्तिमिच्छतु न कः स्वविनाशभीरुः ॥ ८ ॥ भक्तिर्विभात्ययि महत्यपरं तु फल्गित्वयेत्रं ग्रहो ननु भवत्कृपयैव लभ्यः । लब्धस्त्वसौ फलममुष्य लभे न किं वा तां हन्त ते तदयशो मम हृद्रुजा च ॥ ९ ॥ त्वद्भक्त्यसंभवशुचं प्रतिकारशून्यामन्तर्वहन्निखिलमीश सुखं च दुःखम् । उद्बन्धलग्न इव दुःखतयैव मन्ये सन्तास्यतीति मयि हन्त कदा दयेथाः ॥ १० ॥ भक्तिं भवत्यविहितां वहतस्तु तद्विशेषोपलम्भविरहाहितमस्तु दुःखम् । तस्याः प्रतीपततिभिर्हतिजं कथं वा दुःखं सहे मयि कदेश कृपा भवेत्ते ॥ ११ ॥ लग्नः कृतान्तवदनेऽस्मि लभे च नाद्याप्यच्छां रतिं त्वयि शिवेत्यवसीदतो मे । त्वद्विस्मृतिं कुविपयाभिरतिप्रचारैस्तन्वन्हि मां हसपदं तनुपे ब्रुवे किम् ॥ १२ ॥ बद्धस्पृहं



रुचिरकाञ्चनभूषणादौ बालं फलादिभिरिव त्वयि भक्ति-

योगे । आशाभराकुलमहो करुणानिधे मामर्थान्तरैर्हतधियं कुरुषे किमेवम् ॥ १३ ॥ तिक्तग्रहोऽपि मधुरं मधुरग्रहोऽपि तिक्तं यथा भुजगदष्टतनोस्तथाऽहम् । त्वय्यस्तरक्तिरितरत्र तु गाढमग्नः शोच्योऽस्मनोऽपि हि भवामि किमन्यदीश ॥ १४ ॥ त्वत्संस्मृतित्वदभिधानसमीरणादिसम्भावनास्पदममी मम सन्तु शोकाः । मा सन्तु च त्वदनुपक्तिमुपः प्रहर्षा मा त्वत्पुरःस्थितिपुपेश दृशाऽनुपश्य ॥१५॥ संपातनं ननु सुखेषु निपातनं वा दुःखेष्वथान्यदपि वा भवदेकतानम् । यत्कल्पयेर्ननु धिया शिव तद्विधेहि नावैम्यहं मम हितं शरणं गतस्त्वाम् ॥ १६ ॥ दुःखं प्रदित्सुरयि मे यदि न प्रदद्या दुःखापहं पुरहर त्वयि भक्तियोगम् । त्वद्भक्त्यलाभपरिचिन्तनसम्भवं मे दुःखं प्रदेहि तव कः पुनरत्र भारः ॥१७॥ भक्त्या त्वयीश कति नाश्रुपरीतदृष्ट्या संजातगद्गदगिरोत्पुलकाङ्गयष्ट्या । धन्याः पुनन्ति भुवनं मम सा न हीति दुःखेऽपि का नु तव दुर्लभता विधित्सा ॥ १८ ॥ त्वद्भक्तिरेव तदनवाप्तिशुगप्युदारा श्रीः सा च तावकजनाश्रयणे च लभ्या । उल्लङ्घ्य तावकजनान् हि तदर्थनागस्त्वय्याः सहस्व तदिदं भगवन्नमस्ते ॥ १९ ॥ सेवा त्वदाश्रयवतां प्रणयश्च तेषु सिध्येद्दृढो मम यथाऽऽशु तथा दयार्द्राम् । दृष्टिं तवार्पय म[illegible]श दयाम्बुराशे मैवं विभो विमुखता मयि दीनबन्धो ॥ २० ॥ गौरीसखं हिम-

करप्रभमम्बुदाभं श्रीजानि वा शिववपुस्तव तज्जुषो ये । ते त्वां श्रिता वहन्ति मूर्ध्नि तदङ्घ्रिरेणुं तत्सेवनं मम कथं नु दयां विना ते ॥ २१ ॥ त्वद्भक्तिकल्पलतिकां कृपयार्पयेश मच्चित्तसीम्नि भवदीयकथासुधाभिः । तां वर्धय त्वदनुराग-फलाढ्यमौलिं तन्मूल एव खलु मुक्तिफलं चकास्ति ॥२२॥ निःस्वो धनागम इव त्वदुपाश्रितानां संदर्शने प्रमुदित-स्त्वयि सान्द्रहार्दः। आलोकयन् जगदशेषमिदं भवन्तं कार्य-स्त्वयेश कृपयाऽहमपास्तखेदः ॥ २३ ॥ यो भक्तिकल्पल-तिकाभिधमिन्दुमौलेरेवं स्तवं पठति तस्य तदैव देवः । तुष्टः स्वभक्तिमखिलेष्टदुहं ददाति यां प्राप्य नारदमुखैरुप-याति साम्यम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदभिनवनृसिंहभारती-स्वामिना विरचितं भक्तिकल्पलतिकास्तोत्रं संपूर्णम् ।

---

## १२८. शिवभुजङ्गम् ।

श्रीगणेशाय नमः ॥ गलद्दानगण्डं मिलद्भृङ्गषण्डं चलच्चा-रुशुण्डं जगत्त्राणशौण्डम् । कनद्दन्तकाण्डं विपद्भङ्गचण्डं शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥ १ ॥ अनाद्यन्तमाद्यं परं तत्त्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम् । हरिब्रह्ममृग्यं पर-ब्रह्मरूपं मनोवागतीतं महः शैवमीडे ॥ २ ॥ स्वशक्त्यादि-शक्त्यन्तसिंहासनस्थं मनोहारिसर्वाङ्गरत्नोरुभूषम् । जटा-

हीन्दुगङ्गास्थिशम्याकमौलिं पराशक्तिमित्रं नुमः पञ्चवक्त्रम् ॥ ३ ॥ शिवेशानतत्पूरुषाघोरवामादिभिः पञ्चभिर्हृन्मुखैः षड्भिरङ्गैः । अनौपम्य षट्त्रिंशतं तत्त्वविद्यामतीतं परं त्वां कथं वेत्ति को वा ॥ ४ ॥ प्रवालप्रवाहप्रभाशोणमर्धं मरुत्वन्मणिश्रीमहःश्याममर्धम् । गुणस्यूतमेतद्वपुः शैवमन्तःस्मरामि स्मरापत्तिसंपत्तिहेतोः ॥ ५ ॥ स्वसेवासमायातदेवासुरेन्द्रानमन्मौलिमन्दारमालाभिषिक्तम् । नमस्यामि शम्भो पदाम्भोरुहं ते भवाम्भोधिपोतं भवानीविभाव्यम् ॥ ६ ॥ जगन्नाथ मन्नाथ गौरीसनाथ प्रपन्नानुकम्पिन्विपन्नार्तिहारिन् । महःस्तोममूर्ते समस्तैकबन्धो नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥ ७ ॥ विरूपाक्ष विश्वेश विश्वादिदेव त्रयीमूल शम्भो शिव त्र्यम्बक त्वम् । प्रसीद स्मर त्राहि पश्याव मुक्त्यै क्षमां प्राप्नुहि त्र्यक्ष मां रक्ष मोहात् ॥ ८ ॥ महादेव देवेश देवादिदेव स्मरारे पुरारे यमारे हरेति । ब्रुवाणः स्मरिष्यामि भक्त्या भवन्तं ततो मे दयाशील देव प्रसीद ॥ ९ ॥ त्वदन्यः शरण्यः प्रपन्नस्य नेति प्रसीद स्मरन्नेव हन्यास्तु दैन्यम् । न चेत्ते भवेद्भक्तवात्सल्यहानिस्ततो मे दयालो सदा संनिधेहि ॥ १० ॥ अयं दानकालस्त्वहं दानपात्रं भवानेव दाता त्वदन्यं न याचे । भवद्भक्तिमेव स्थिरां देहि मह्यं कृपाशील शम्भो कृतार्थोऽस्मि तस्मात् ॥ ११ ॥ पशुं वेत्सि चेन्मां तमेवाधिरूढः कलङ्कीति वा मूर्ध्नि धत्से तमेव । द्विजिह्वः पुनः

सोऽपि ते कण्ठभूषा त्वदङ्गीकृताः शर्व सर्वेऽपि धन्याः ॥ १२ ॥ न शक्नोमि कर्तुं परद्रोहलेशं कथं प्रीयसे त्वं न जाने गिरीश । तथा हि प्रसन्नोऽसि कस्यापि कान्तासुतद्रोहिणो वा पितृद्रोहिणो वा ॥ १३ ॥ स्तुतिं ध्यानमर्चां यथावद्विधातुं भजन्नप्यजानन्महेशावलम्बे । त्रसन्तं सुतं त्रातुमग्रे मृकण्डोर्यमप्राणनिर्वापणं त्वत्पदाब्जम् ॥ १४ ॥ शिरोदृष्टिहृद्रोगशूलप्रमेहज्वरार्शोजरायक्ष्महिक्काविषार्तान् । त्वमाद्यो भिषग्भेषजं भस्म शम्भो त्वमुल्लाघयास्मान्वपुर्लाघवाय ॥ १५ ॥ दरिद्रोऽस्म्यभद्रोऽस्मि मग्नोऽस्मि दूये विषण्णोऽस्मि सन्नोऽस्मि खिन्नोऽस्मि चाहम् । भवान्प्राणिनामन्तरात्मासि शम्भो ममाधिं न वेत्सि प्रभो रक्ष मां त्वम् ॥ १६ ॥ त्वदक्ष्णोः कटाक्षः पतेत्त्र्यक्ष यत्र क्षणं क्ष्मा च लक्ष्मीः स्वयं तं वृणाते । किरीटस्फुरच्चामरच्छत्रमालाकलाचीगजक्षौमभूषाविशेषैः ॥ १७ ॥ भवान्यै भवायापि मात्रे च पित्रे मृडान्यै मृडायाप्यघघ्न्यै मखघ्ने । शिवाङ्ग्यै शिवाङ्गाय कुर्मः शिवायै शिवायाम्बिकायै नमस्त्र्यम्बकाय ॥ १८ ॥ भवद्गौरवं मल्लघुत्वं विदित्वा प्रभो रक्ष कारुण्यदृष्ट्यानुगं माम् । शिवात्मानुभावस्तुतावक्षमोऽहं स्वशक्त्या कृतं मेऽपराधं क्षमस्व ॥ १९ ॥ यदा कर्णरन्ध्रं व्रजेत्कालवाहद्विषत्कण्ठघण्टाघणात्कारनादः । वृषाधीशमारुह्य देवौपवाह्यं तदा वत्स मा भीरिति प्रीणय त्वम् ॥ २० ॥ यदा दारुणाभाषणा

भीषणा मे भविष्यन्त्युपान्ते कृतान्तस्य दूताः । तदा मन्मनस्त्वत्पदाम्भोरुहस्थं कथं निश्चलं स्यान्नमस्तेऽस्तु शम्भो ॥ २१ ॥ यदा दुर्निवारव्यथोऽहं शयानो लुठन्निःश्वसन्निःसृताव्यक्तवाणिः । तदा जह्नुकन्याजलालंकृतं ते जटामण्डलं मन्मनोमन्दिरं स्यात् ॥ २२ ॥ यदा पुत्रमित्रादयो मत्सकाशे रुदन्त्यस्य हा कीदृशीयं दशेति । तदा देवदेवेश गौरीश शम्भो नमस्ते शिवायेत्यजस्रं ब्रवाणि ॥ २३ ॥ यदा पश्यतां मामसौ वेत्ति नास्मानयं श्वास एवेति वाचो भवेयुः । तदा भूतिभूषं भुजङ्गावनद्धं पुरारे भवन्तं स्फुटं भावयेयम् ॥२४॥ यदा यातनादेहसंदेहवाही भवेदात्मदेहे न मोहो महान्मे । तदाकाशशीतांशुसंकाशमीश स्मरारे वपुस्ते नमस्ते स्मराणि ॥ २५ ॥ यदा पारमच्छायमस्थानमद्भिर्जनैर्वा विहीनं गमिष्यामि मार्गम् । तदा तं निरुन्धन्कृतान्तस्य मार्गं महादेव मह्यं मनोज्ञं प्रयच्छ ॥ २६ ॥ यदा रौरवादि स्मरन्नेव भीत्या व्रजाम्यत्र मोहं महादेव घोरम् । तदा मामहो नाथ कस्तारयिष्यत्यनाथं पराधीनमर्धेन्दुमौले ॥ २७ ॥ यदा श्वेतपत्रायतालङ्घ्यशक्तेः कृतान्ताद्भयं भक्तवात्सल्यभावात् । तदा पाहि मां पार्वतीवल्लभान्यं न पश्यामि पातारमेतादृशं मे ॥ २८ ॥ इदानीमिदानीं मृतिर्मे भवित्रीत्यहो संततं चिन्तया पीडितोऽस्मि । कथं नाम मा भून्मृतौ भीतिरेषा नमस्ते



गतीनां गते नीलकण्ठ ॥ २९ ॥ अमर्यादमेवाहमाबालवृद्धं

हरन्तं कृतान्तं समीक्ष्यास्मि भीतः । मृतौ तावकाङ्घ्र्य-ब्जदिव्यप्रसादाद्भवानीपते निर्भयोऽहं भवानि ॥३०॥ जरा-जन्मगर्भाधिवासादिदुःखान्यसह्यानि जह्यां जगन्नाथ देव । भवन्तं विना मे गतिर्नैव शंभो दयालो न जागर्ति किं वा दया ते ॥ ३१ ॥ शिवायेति शब्दो नमःपूर्व एष स्मरन्मुक्तिकृन्मृत्युहा तत्त्ववाची । महेशान मा गान्मनस्तो वचस्तः सदा मह्यमेतत्प्रदानं प्रयच्छ ॥ ३२ ॥ त्वमप्यम्ब मां पश्य शीतांशुमौलिप्रिये भेषजं त्वं भवव्याधिशान्तौ । बहुक्लेशभाजं पदाम्भोजपोते भवाब्धौ निमग्नं नयस्वाद्य पारम् ॥ ३३ ॥ अनुद्यल्ललाटाक्षिवह्निप्ररोहैरवामस्फुरच्चारुवामोरुशोभैः । अनङ्गभ्रमद्भोगिभूषाविशेषैरचन्द्रार्धचूडैरलं दैवतैर्नः ॥ ३४ ॥ अकण्ठे कलङ्कादनङ्गे भुजङ्गादपाणौ कपालादफालेऽनलाक्षात् । अमौलौ शशाङ्कादवामे कलत्रादहं देवमन्यं न मन्ये न मन्ये ॥ ३५ ॥ महादेव शम्भो गिरीश त्रिशूलिंस्त्वदीयं समस्तं विभातीति यस्मात् । शिवादन्यथा दैवतं नाभिजाने शिवोऽहं शिवोऽहं शिवोऽहं शिवोऽहम् ॥ ३६ ॥ यतोऽजायतेदं प्रपञ्चं विचित्रं स्थितिं याति यस्मिन्यदेकान्तमन्ते: । स कर्मादिहीनः स्वयंज्योतिरात्मा शिवोऽहं शिवोऽहं शिवोऽहं शिवोऽहम् ॥ ३७ ॥ किरीटे निशेशो ललाटे हुताशो भुजे भोगिराजो गले कालिमा च । तनौ कामिनी यस्य तत्तुल्यदेवं न जाने न जाने न जाने न जाने ॥ ३८ ॥ अनेन स्तवे-

नादरादम्बिकेशं परां भक्तिमासाद्य यं ये नमन्ति। मृतौ निर्भयास्ते जनास्तं भजन्ते हृदम्भोजमध्ये सदाऽऽसीनमीशम् ॥ ३९ ॥ भुजङ्गप्रियाकल्प शम्भो मयैवं भुजङ्गप्रयातेन वृत्तेन क्लृप्तम् । नरः स्तोत्रमेतत्पठित्वोरुभक्त्या सुपुत्रायुरारोग्यमैश्वर्यमेति ॥ ४० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शिवभुजङ्गस्तोत्रं संपूर्णम् ।

---

## १२९ सुवर्णमालास्तुतिः ।

श्रीगणेशाय नमः ॥ अथ कथमपि मद्रसनां त्वद्गुणलेशैर्विशोधयामि विभो । साम्ब सदाशिव शम्भो शंकर शरणं मे तव चरणयुगम् ॥ १ ॥ आखण्डलमदखण्डनपण्डित तण्डुप्रिय चण्डीश विभो । साम्ब० ॥ २ ॥ इभचर्माम्बर शम्बररिपुवपुरपहरणोज्ज्वलनयन विभो । साम्ब० ॥ ३ ॥ ईश गिरीश नरेश परेश महेश बिलेशयभूषण भो । साम्ब० ॥ ४ ॥ उमया दिव्यसुमङ्गलविग्रहयाऽऽलिङ्गितवामाङ्ग विभो । साम्ब० ॥ ५ ॥ ऊरीकुरु मामज्ञमनाथं दूरीकुरु मे दुरितं भो । साम्ब० ॥ ६ ॥ ऋषिवरमानसहंस चराचरजननस्थितिकारण भो । साम्ब० ॥ ७ ॥ ऋक्षाधीशकिरीट महोक्षारूढ विधृतरुद्राक्ष विभो । साम्ब० ॥ ८ ॥ लृवर्णद्वन्द्वमवृन्त-

सुकुसुममिवाङ्घ्रौ तवार्पयामि विभो। साम्ब० ॥ ९॥ एकं सद्दिति श्रुत्या त्वमेव सदसीत्युपास्महे मृड भो। साम्ब० ॥ १०॥ ऐक्यं निजभक्तेभ्यो वितरसि विश्वम्भरोऽत्र साक्षी भो। साम्ब० ॥ ११ ॥ ओमिति तव निर्देष्ट्री मायाऽस्माकं मृडोपकर्त्री भो। साम्ब० ॥ १२ ॥ औदास्यं स्फुटयति विषयेषु दिगम्बरता च तवैव विभो । साम्ब० ॥ १३ ॥ अन्तःकरणविशुद्धिं भक्तिं च त्वयि सतीं प्रदेहि विभो । साम्ब० ॥१४॥ अस्तोपाधिसमस्तव्यस्तै रूपैर्जगन्मयोऽसि विभो। साम्ब० ॥ १५ ॥ करुणावरुणालय मयि दास उदासस्तवोचितो न हि भो। साम्ब० ॥ १६ ॥ खलसहवासं विघटय सतामेव सङ्गमनिशं भो। साम्ब० ॥ १७ ॥ गरलं जगदुपकृतये गिलितं भवता समोऽस्ति कोऽत्र विभो । साम्ब० ॥ १८ ॥ घनसारगौरगात्र प्रचुरजटाजूटबद्धगङ्ग विभो। साम्ब० ॥ १९ ॥ ज्ञप्तिः सर्वशरीरेष्वखण्डिता या विभाति सा त्वयि भो। साम्ब० ॥ २० ॥ चपलं मम हृदयकपिं विषयद्रुचरं दृढं बधान विभो। साम्ब० ॥ २१ ॥ छाया स्थाणोरपि तव तापं नमतां हरत्यहो शिव भो। साम्ब० ॥ २२॥ जय कैलासनिवास प्रमथगणाधीश भूसुरार्चित भो। साम्ब० ॥ २३ ॥ झणुतकझङ्किणुझणुतत्किटतकशब्दैर्नटसि महानट भो। साम्ब० ॥ २४ ॥ ज्ञानं



विक्षेपावृतिरहितं कुरु मे गुरुस्त्वमेव विभो। साम्ब० ॥२५॥

टङ्कारस्तव धनुषो दलयति हृदयं द्विषामशनिरिव भो । साम्ब० ॥ २६ ॥ ठाकृतिरिव तव माया बहिरन्तः शून्यरूपिणी खलु भो । साम्ब० ॥ २७ ॥ डम्बरमम्बुरुहामपि दलयत्यनघं त्वदङ्घ्रियुगलं भो । साम्ब० ॥ २८ ॥ ढक्काक्षसूत्रशूलद्रुहिणकरोटीसमुल्लसत्कर भो । साम्ब० ॥ २९ ॥ णाकारगर्भिणी चेच्छुभदा ते शरणगतिर्नृणामिह भो । साम्ब० ॥ ३० ॥ तव मन्वतिसंजपतः सद्यस्तरति नरो हि भवाब्धिं भो । साम्ब० ३१ ॥ थूत्कारस्तस्य मुखे भूयात्ते नाम नास्ति यस्य विभो । साम्ब० ॥ ३२ ॥ दयनीयश्च दयालुः कोऽस्ति मदन्यस्त्वदन्य इव वद भो । साम्ब० ॥ ३३ ॥ धर्मस्थापनदक्ष त्र्यक्ष गुरो दक्षयज्ञशिक्षक भो । साम्ब० ॥ ३४ ननु ताडितोऽसि धनुषा लुब्धधिया त्वं पुरा नरेण विभो । साम्ब० ॥ ३५ ॥ परिमातुं तव मूर्तिं नालमजस्तत्परात्परोऽसि विभो । साम्ब० ॥ ३६ ॥ फलमिह नृतया जनुषस्त्वत्पदसेवा सनातनेश विभो । साम्ब० ॥ ३७ ॥ बलमारोग्यं चायुस्त्वद्गुणरुचितां चिरं प्रदेहि विभो । साम्ब० ॥ ३८ ॥ भगवन्भर्ग भयापह भूतपते भूतिभूषिताङ्ग विभो । साम्ब० ॥ ३९ ॥ महिमा तव नहि माति श्रुतिषु हिमानीधरात्मजाधव भो । साम्ब० ॥ ४० ॥ यमनियमादिभिरङ्गैर्यमिनो हृदये भवन्ति स त्वं भो । साम्ब० ॥ ४१ ॥



रमया[illegible] ... [illegible] विभो ।

साम्ब० ॥४२ ॥ लब्ध्वा भवत्प्रसादाच्चक्रं विधुरवति लोकमखिलं भो । साम्ब० ॥ ४३ ॥ वसुधातद्धरतच्छयरथमौर्वीशर पराकृतासुर भो । साम्ब० ॥ ४४ ॥ शर्व देव सर्वोत्तम सर्वद दुर्वृत्तगर्वहरण विभो । साम्ब० ॥ ४५ ॥ षड्रिपुषड्रर्मिषड्विकारहर सन्मुख षण्मुखजनक विभो । साम्ब० ॥ ४६ ॥ सत्यं ज्ञानमनन्तं ब्रह्मेत्येतल्लक्षणलक्षित भो । साम्ब० ॥ ४७ ॥ हाहाहूहूमुखसुरगायकगीतापदानपद्य विभो । साम्ब० ॥ ४८ ॥ ळादिर्न हि प्रयोगस्तदन्यमिह मङ्गलं सदाऽस्तु विभो । साम्ब० ॥४९॥ क्षणमिव दिवसान्नेष्यति त्वत्पदसेवाक्षणोत्सुकः शिव भो । साम्ब सदाशिव शम्भो शंकर शरणं मे तव चरणयुगम् ॥ ५० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ सुवर्णमालास्तुतिः संपूर्णा ।

---

## १३० साम्बदशकम् ।

श्रीगणेशाय नमः ॥ साम्बो नः कुलदैवतं पशुपते साम्ब त्वदीया वयं साम्बं स्तौमि सुरासुरोरगगणाः साम्बेन संतारिताः । साम्बायास्तु नमो मया विरचितं साम्बात्परं नो भजे साम्बस्यानुचरोऽस्म्यहं मम रतिः साम्बे परब्रह्मणि ॥ १ ॥ विष्ण्वाद्याश्च पुरत्रयं सुरगणा जेतुं न शक्ता स्वयं

यं शम्भुं भगवन्वयं तु पशवोऽस्माकं त्वमेवेश्वरः । स्वस्वस्थाननियोजिताः सुमनसः स्वस्था बभूवुस्ततस्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ २ ॥ क्षोणी यस्य रथो रथाङ्गयुगलं चन्द्रार्कबिम्बद्वयं कोदण्डः कनकाचलो हरिरभूद्बाणो विधिः सारथिः । तूणीरो जलधिर्हयाः श्रुतिचयो मौर्वी भुजङ्गाधिपस्तस्मिन्मे० ॥ ३ ॥ येनापादितमङ्गजाङ्गभसितं दिव्याङ्गरागैः समं येन स्वीकृतमब्जसंभवशिरः सौवर्णपात्रैः समम् । येनाङ्गीकृतमच्युतस्य नयनं पूजारविन्दैः समं तस्मिन्मे० ॥ ४ ॥ गोविन्दादधिकं न दैवतमिति प्रोचार्य हस्तावुभावुद्धृत्याथ शिवस्य संनिधिगतो व्यासो मुनीनां वरः । यस्य स्तम्भितपाणिरानतिकृता नन्दीश्वरेणाभवत्तस्मिन्मे० ॥ ५ ॥ आकाशश्चिकुरायते दशदिशाभोगो दुकूलायते शीतांशुः प्रसवायते स्थिरतरानन्दः स्वरूपायते । वेदान्तो निलयायते सुविनयो यस्य स्वभावायते तस्मिन्मे० ॥ ६ ॥ विष्णुर्यस्य सहस्रनामनियमादम्भोरुहाण्यार्चयन्नेकोनोपचितेषु नेत्रकमलं नैजं पदाब्जद्वये । संपूज्यासुरसंहतिं विदलयंस्त्रैलोक्यपालोऽभवत्तस्मिन्मे० ॥ ७ ॥ शौरिं सत्यगिरं वराहवपुषं पादाम्बुजादर्शने चक्रे यो दयया समस्तजगतां नाथं शिरोदर्शने । मिथ्यावाचमपूज्यमेव सततं हंसस्वरूपं विधिं तस्मिन्मे० ॥ ८ ॥ यस्यासन्धरणीजलाग्निपवनव्योमार्कचन्द्रादयो विख्यातास्तनवोऽष्टधा परिणता नान्यत्ततो

वर्तते । ओङ्कारार्थविवेचनी श्रुतिरियं चाचष्ट तुर्यं शिवं तस्मिन्मे० ॥ ९ ॥ विष्णुब्रह्मसुराधिपप्रभृतयः सर्वेऽपि देवा यदा संभूताज्जलधेर्विषात्परिभवं प्राप्तास्तदा सत्वरम् । तानार्ताञ्छरणागतानिति सुरान्योऽरक्षदर्धक्षणात्तस्मिन्मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ दशश्लोकीस्तुतिः संपूर्णा ।

---

## १३१ उमामहेश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नमः शिवाभ्यां नवयौवनाभ्यां परस्पराश्लिष्टवपुर्धराभ्याम् । नगेन्द्रकन्यावृषकेतनाभ्यां नमो नमः शंकरपार्वतीभ्याम् ॥ १ ॥ नमः शिवाभ्यां सरसोत्सवाभ्यां नमस्कृताभीष्टवरप्रदाभ्याम् । नारायणेनार्चितपादुकाभ्यां नमो नमः० ॥ २ ॥ नमः शिवाभ्यां वृषवाहनाभ्यां विरिञ्चिविष्ण्विन्द्रसुपूजिताभ्याम् । विभूतिपाटीरविलेपनाभ्यां नमो नमः० ॥ ३ ॥ नमः शिवाभ्यां जगदीश्वराभ्यां जगत्पतिभ्यां जयविग्रहाभ्याम् । जम्भारिमुख्यैरभिवन्दिताभ्यां नमो नमः० ॥ ४ ॥ नमः शिवाभ्यां परमौषधाभ्यां पञ्चाक्षरीपञ्जररञ्जिताभ्याम् । प्रपञ्चसृष्टिस्थितिसंहृताभ्यां नमो नमः० ॥ ५ ॥
[illegible]

अशेषलोकैकहितङ्कराभ्यां नमो नमः० ॥६॥ नमः शिवाभ्यां कलिनाशनाभ्यां कङ्कालकल्याणवपुर्धराभ्याम् । कैलासशैलस्थितदेवताभ्यां नमो नमः० ॥ ७ ॥ नमः शिवाभ्यामशुभापहाभ्यामशेषलोकैकविशेषिताभ्याम् । अकुण्ठिताभ्यां स्मृतिसंभृताभ्यां नमो नमः० ॥८॥ नमः शिवाभ्यां रथवाहनाभ्यां रवीन्दुवैश्वानरलोचनाभ्याम् । राकाशशाङ्काभमुखाम्बुजाभ्यां नमो नमः० ॥९॥ नमः शिवाभ्यां जटिलन्धराभ्यां जरामृतिभ्यां च विवर्जिताभ्याम् । जनार्दनाब्जोद्भवपूजिताभ्यां नमो नमः० ॥१०॥ नमः शिवाभ्यां विषमेक्षणाभ्यां बिल्वच्छदामल्लिकदामभृद्भ्याम् । शोभावतीशान्तवतीश्वराभ्यां नमो नमः० ॥ ११ ॥ नमः शिवाभ्यां पशुपालकाभ्यां जगत्रयीरक्षणबद्धहृद्भ्याम् । समस्तदेवासुरपूजिताभ्यां नमो नमः शंकरपार्वतीभ्याम् ॥ १२ ॥ स्तोत्रं त्रिसंध्यं शिवपार्वतीभ्यां भक्त्या पठेद्द्वादशकं नरो यः । स सर्वसौभाग्यफलानि भुङ्क्ते शतायुरन्ते शिवलोकमेति ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ उमामहेश्वरस्तोत्रं संपूर्णम् ।

---

## १३२ शिवपञ्चाक्षरनक्षत्रमालास्तोत्रम् ।



श्रीगणेशाय नमः ॥ श्रीमदात्मने गुणैकसिन्धवे नमः

शिवाय धामलेशधूतकोकबन्धने नमः शिवाय । नामशेषितानमद्भवान्धवे नमः शिवाय पामरेतरप्रधानबन्धवे नमः शिवाय ॥ १ ॥ कालभीतविप्रबालपाल ते नमः शिवाय शूलभिन्नदुष्टदक्षफाल ते नमः शिवाय । मूलकारणाय कालकाल ते नमः शिवाय पालयाधुना दयालवाल ते नमः शिवाय ॥ २ ॥ इष्टवस्तुमुख्यदानहेतवे नमः शिवाय दुष्टदैत्यवंशधूमकेतवे नमः शिवाय । सृष्टिरक्षणाय धर्मसेतवे नमः शिवाय अष्टमूर्तये वृषेन्द्रकेतवे नमः शिवाय ॥ ३ ॥ आपदद्रिभेदटङ्कहस्त ते नमः शिवाय पापहारिदिव्यसिन्धुमस्त ते नमः शिवाय । पापदारिणे लसन्नमस्तते नमः शिवाय शापदोषखण्डनप्रशस्त ते नमः शिवाय ॥ ४ ॥ व्योमकेश दिव्यभव्यरूप ते नमः शिवाय हेममेदिनीधरेन्द्रचाप ते नमः शिवाय । नाममात्रदग्धसर्वपाप ते नमः शिवाय कामनैकतानहृद्दुराप ते नमः शिवाय ॥ ५ ॥ ब्रह्ममस्तकावलीनिबद्ध ते नमः शिवाय जिह्मगेन्द्रकुण्डलप्रसिद्ध ते नमः शिवाय । ब्रह्मणे प्रणीतवेदपद्धते नमः शिवाय जिह्मकालदेहदत्तपद्धते नमः शिवाय ॥ ६ ॥ कामनाशनाय शुद्धकर्मणे नमः शिवाय सामगानजायमानशर्मणे नमः शिवाय । हेमकान्तिचाकचक्यवर्मणे नमः शिवाय सामजासुराङ्गलब्धचर्मणे नमः शिवाय ॥ ७ ॥ जन्ममृत्युघोरदुःखहारिणे नमः शिवाय चिन्मयैकरूपदेहधारिणे नमः शिवाय । मन्मनो-

रथावपूर्तिकारिणे नमः शिवाय सन्मनोगताय कामवैरिणे नमः शिवाय ॥ ८ ॥ यक्षराजबन्धवे दयालवे नमः शिवाय दक्षपाणिशोभिकाञ्चनालये नमः शिवाय । पक्षिराजवाहहृच्छयालवे नमः शिवाय अक्षिफालवेदपूततालवे नमः शिवाय ॥ ९ ॥ दक्षहस्तनिष्ठजातवेदसे नमः शिवाय अक्षरात्मने नमद्बिडौजसे नमः शिवाय । दीक्षितप्रकाशितात्मतेजसे नमः शिवाय उक्षराजवाह ते सतां गते नमः शिवाय ॥१०॥ राजताचलेन्द्रसानुवासिने नमः शिवाय राजमाननित्यमन्दहासिने नमः शिवाय । राजकोरकावतंसभासिने नमः शिवाय राजराजमित्रताप्रकाशिने नमः शिवाय ॥ ११ ॥ दीनमानवालिकामधेनवे नमः शिवाय सूनबाणदाहकृत्कृशानवे नमः शिवाय । स्वानुरागभक्तरत्नसानवे नमः शिवाय दानवान्धकारचण्डभानवे नमः शिवाय ॥ १२ ॥ सर्वमङ्गलाकुचाग्रशायिने नमः शिवाय सर्वदेवतागणातिशायिने नमः शिवाय । पूर्वदेवनाशसंविधायिने नमः शिवाय सर्वमन्मनोजभङ्गदायिने नमः शिवाय ॥ १३ ॥ स्तोकभक्तितोऽपि भक्तपोषिणे नमः शिवाय माकरन्दसारवर्षिभाषिणे नमः शिवाय । एकबिल्वदानतोऽपि तोषिणे नमः शिवाय नैकजन्मपापजालशोषिणे नमः शिवाय ॥ १४ ॥ सर्वजीवरक्षणैकशीलिने नमः



शिवाय पार्वतीप्रियाय भक्तपालिने नमः शिवाय । दुर्विदग्धदैत्यसैन्यदारिणे नमः शिवाय शर्वरीशधारिणे कपालिने

नमः शिवाय ॥ १५ ॥ पाहि मामुमामनोज्ञदेह ते नमः शिवाय देहि मे वरं सिताद्रिगेह ते नमः शिवाय । मोहितर्षिकामिनीसमूह ते नमः शिवाय स्वेहितप्रसन्न कामदोह ते नमः शिवाय ॥ १६ ॥ मङ्गलप्रदाय गोतुरङ्ग ते नमः शिवाय गङ्गया तरङ्गितोत्तमाङ्ग ते नमः शिवाय । सङ्गरप्रवृत्तवैरिभङ्ग ते नमः शिवाय अङ्गजारये करेकुरङ्ग ते नमः शिवाय ॥ १७ ॥ ईहितक्षणप्रदानहेतवे नमः शिवाय आहिताग्निपालकोक्षकेतवे नमः शिवाय । देहकान्तिधूतरौप्यधातवे नमः शिवाय गेहदुःखपुञ्जधूमकेतवे नमः शिवाय ॥ १८ ॥ त्र्यक्ष दीनसत्कृपाकटाक्ष ते नमः शिवाय दक्षसप्ततन्तुनाशदक्ष ते नमः शिवाय । ऋक्षराजभानुपावकाक्ष ते नमः शिवाय रक्ष मां प्रपन्नमात्ररक्ष ते नमः शिवाय ॥ १९ ॥ न्यङ्कुपाणये शिवङ्कराय ते नमः शिवाय संकटाब्धितीर्णकिङ्कराय ते नमः शिवाय । पङ्कभीषिताभयंकराय ते नमः शिवाय पङ्कजाननाय शंकराय ते नमः शिवाय ॥ २० ॥ कर्मपाशनाश नीलकण्ठ ते नमः शिवाय शर्मदाय नर्यभस्मकण्ठ ते नमः शिवाय । निर्ममर्षिसेवितोपकण्ठ ते नमः शिवाय कुर्महे नतीर्नमद्विकुण्ठ ते नमः शिवाय ॥ २१ ॥ विष्टपाधिपाय नम्रविष्णवे नमः शिवाय शिष्टविप्रहृद्गुहाचरिष्णवे नमः शिवाय । इष्टवस्तुनित्यतुष्टजिष्णवे नमः शिवाय कष्टनाशनाय लोकजिष्णवे नमः शिवाय ॥ २२ ॥ अप्रमेयदिव्यसु-

प्रभावते नमः शिवाय सत्प्रपञ्चरक्षणस्वभाव ते नमः शिवाय।
स्वप्रकाश निस्तुलानुभाव ते नमः शिवाय विप्रडिम्भदर्शिता-
र्द्रभाव ते नमः शिवाय ॥ २३ ॥ सेवकाय मे मृड प्रसीद
ते नमः शिवाय भावलभ्य तावकप्रसाद ते नमः शिवाय ।
पावकाक्ष देवपूज्यपाद ते नमः शिवाय तावकाङ्घ्रिभक्त-
दत्तमोद ते नमः शिवाय ॥ २४ ॥ भुक्तिमुक्तिदिव्यभोगदा-
यिने नमः शिवाय शक्तिकल्पितप्रपञ्चभागिने नमः शिवाय।
भक्तसंकटापहारयोगिने नमः शिवाय युक्तसन्मनःसरोज-
योगिने नमः शिवाय ॥ २५ ॥ अन्तकान्तकाय पापहारिणे
नमः शिवाय शन्तमाय दन्तिचर्मधारिणे नमः शिवाय ।
संतताश्रितव्यथाविदारिणे नमः शिवाय जन्तुजातनित्यसौ-
ख्यकारिणे नमः शिवाय ॥२६॥ शूलिने नमो नमः कपालिने
नमः शिवाय पालिने विरिञ्चितुण्डमालिने नमः शिवाय ।
लीलिने विशेषरुण्डमालिने नमः शिवाय शीलिने नमः
प्रपुण्यशालिने नमः शिवाय ॥ २७ ॥ शिवपञ्चाक्षरमुद्रां
चतुष्पदोल्लासपद्यमणिघटिताम् । नक्षत्रमालिकामिह दधदुप-
कण्ठं नरो भवेत्सोमः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्य-
पादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शिवपञ्चा-

क्षरनक्षत्रमालास्तोत्रं संपूर्णम् ।

## १३३ विश्वेश्वरलहरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सिद्धिबुद्धिपतिं वन्दे श्रीगणाधीश्वरं मुदा । तस्य यो वन्दनं कुर्यात्स धीनां योगमिन्वति ॥१॥ वन्दे काशीपतिं काशी जाता यत्कृपया पुरी । प्रकाशनार्थं भक्तानां होतारं रत्नधातमम् ॥२॥ भक्तावनं करोमीति मा गर्वं वह शंकर । तेभ्यः स्वपूजाग्रहणात्तवैतत्सत्यमङ्गिरः ॥ ३ ॥ बुधा लक्ष्मीं कामयन्ते चञ्चलां सकला जनाः । काशीरूपां कामयेऽहं लक्ष्मीमनपगामिनीम् ॥४॥ प्राप्नुवन्तु जना लक्ष्मीं मदान्धनृपसेवनात् । लभे विश्वेशसेवातो गामश्वं पुरुषानहम् ॥ ५ ॥ न मत्कुटुम्बरक्षार्थं माह्वयामि श्रियं बुधाः । विश्वेश्वराराधनार्थं श्रियं देवीमुपह्वये ॥ ६ ॥ आपातरमणीयेयं श्रीर्मदान्धकरी चला । असारसंसृतौ काशी सा हि श्रीरमृता सताम् ॥ ७ ॥ काशी गङ्गान्नपूर्णा च विश्वेशाद्याश्च देवताः । अवन्तु बालमज्ञं मामुशतीरिव मातरः ॥ ८ ॥ सदैव दुःखकारिणीं न संसृतिं हि कामये शिवप्रियां सुखप्रदां परां पुरीं हि कामये । स्वभक्तदुःखहारकं मनोरथप्रपूरकं शिवं सदा मुदा भजे महेरणाय चक्षसे ॥ ९ ॥ स्वसेवकसुतादीनां पालनं कुर्वते नृपाः । पास्येवास्मांस्तु विश्वेश गीर्वाणः पाहि नः सुतान् ॥१०॥ निषेव्य काशिकां पुरीं सदाशिवं प्रपूज्य तं गुरोर्मुखारविन्दतः सदादिरूपमद्वयम् । विचार्य रूपमात्मनो निषेध्य

नश्वरं जडं चिदात्मना तमोभिदं घनेन हन्मि वृश्चिकम् ॥११॥ हे भागीरथि हे काशि हे विश्वेश्वर ते सदा । कल्पयामि स्तवं श्रेष्ठमेष रारन्तु ते हृदि ॥१२॥ विश्वनाथ सदा काश्यां देह्यस्मभ्यं धनं परम् । पुरा युद्धेषु दैत्यानां विघ्नहे त्वां धनञ्जयम् ॥१३॥ अविनाशि पुरा दत्तं भक्तेभ्यो द्रविणं त्वया । काशिविश्वेशगङ्गे त्वामथ ते स्तुम्नमीमहे ॥ १४ ॥ संसारदाववह्नौ मां पतितं दुःखितं तव । विश्वेश पाहि गङ्गाद्यैरागत्य वृषभिः स्नुतम् ॥ १५ ॥ काशीं प्रति वयं याम दयया विश्वनाथ ते । तत्रैव वासं कुर्याम वृक्षे न वसतिं वयः ॥१६॥ हे सरस्वति हे गङ्गे हे कालिन्दि सदा वयम् । भजामामृतरूपं तं यो वः शिवतमो रसः ॥ १७ ॥ विश्वनाथदमेव त्वां याचाम सततं वयम् । स्थित्वा काश्याम-ध्वरे त्वां हविष्मन्तो जरामहे ॥ १८ ॥ सर्वासु सोम-संस्थासु काश्यामिन्द्रस्वरूपिणे । हे विश्वेश्वर ते नित्यं सोमं चोदामि पीतये ॥१९॥ काश्यां रौद्रेषु चान्येषु यजाम त्वां मखेषु वै । हे विश्वेश्वर देवैस्त्वं रारन्धि सवनेषु नः ॥२०॥ मां मोहाद्या दुर्जनाश्च बाधन्ते निष्प्रयोजनम् । विश्वेश्वर ततो मे त्वां वरूत्रीं धिषणां वह ॥२१॥ रुद्राक्षभस्मधारी त्वां काश्यां स्तौमीश संस्तवैः । त्वत्पादाम्बुजभृङ्गं मां न स्तोतारं निदेकरः ॥ २२ ॥ विहाय चञ्चलं वधूसुतादिकं हि दुःखदं त्वदीयकामसंयुता भवेम काशिकापुरी । स्वसेवकार्ति-

नाशक प्रकृष्टसंविदर्पक भवैव देव सन्ततं ह्युतत्वमस्मगुर्वसो ॥२३॥ विश्वेश काश्यां गङ्गायां स्नात्वा त्वां रम्यवस्तुभिः। पूजयाम वयं भक्त्या कुशिकासो अवस्यवः ॥२४॥ विश्वेश नित्यमस्मभ्यं भयमुत्पादयन्ति ये । तेषां विधायोपमर्दं ततो नो अभयं कृधि ॥२५॥ राक्षसानां स्वभावोऽयं बाध्या विश्वेश जीवकाः। भक्तानुकम्पया शंभो सर्वं रक्षो निबर्हय ॥ २६ ॥ विश्वेश्वर सदा भीतः संसारार्णवमज्जनात् । मां पालय सदेती त्वां पुरुहूतमुपब्रुवे ॥२७॥ इदं विमृश्य नश्वरं जडं सदैव दुःखदं समर्चितुं शिवं गताः परां पुरीं यतो द्विजाः। ततोऽभिगम्य तां पुरीं समर्च्य वस्तुभिः परैः शिवं स्वभक्तमुक्तिदं तमित्यखित्व ईमहे ॥ २८ ॥ काश्यां वयं सदैव त्वां यजाम सकलैर्मखैः। विश्वेश्वर त्वं समग्रैर्देवै-रासत्सि बर्हिषि ॥ २९ ॥ यक्षेश्वरेण रक्षितं श्रेष्ठं धनमखेषु ते । देहि व्ययाय शंकर ह्यस्मभ्यमप्रतिष्कृतः ॥ ३० ॥ मत्पूर्वजा महाशैवा भस्मरुद्राक्षधारिणः। विश्वेश्वर सुरेषु त्वामद्दशमिव येमिरे ॥ ३१ ॥ शम्भोर्विधाय येऽर्चनं ति-ष्ठन्ति तत्परा यदा। ताञ्छंकरो गिरे द्रुतं यूथेन वृष्णिरे-जति ॥ ३२ ॥ त्वां पूजयामीश सुरं मानसैर्दिव्यवस्तुभिः। हे विश्वेश्वर देवैस्त्वं सोम रारन्धि नो हृदि ॥ ३३ ॥ प्रादु-र्भवसि यत्रेत्थं कृपया भक्तजने यदा। ततोऽहं क्लेशवान्कुर्वे सद्योजाताय वै नमः ॥ ३४ ॥ वामदेवेति मन्त्र रम्यतां

वस्य जगौ । ईशस्तस्मात्क्रियते वामदेवाय नमः ॥ ३५ ॥ दयासिन्धो दीनबन्धो योऽस्तीश वरदः करः । अस्माकं वरदानेन स युक्तस्तेऽस्तु दक्षिणः ॥३६॥ दुष्टभीतस्य मे नित्यं करस्तेऽभयदायकः । महेशाभयदाने स्यादुत सव्यः शतक्रतो ॥ ३७ ॥ महेश्वरीयपदपद्मसेवकः पुरन्दरादिपदनिस्पृहः सदा । जनोऽस्ति यः सततदुर्गतः प्रभो पृणक्षि वसुना भवीयसा ॥ ३८ ॥ रक्षणाय नास्ति मे त्वां विनेश साधनम् । निश्चयेन हे शिव त्वामवस्युराचके ॥ ३९ ॥ रोगैर्दुःखैर्वैरिगणैश्च युक्तास्त्वद्दासत्वाच्छंकर तत्सहस्व । रम्यं स्तोत्रं रोपकरं वचो वा यत्किंचाहं त्वायुरिदं वदामि ॥४०॥ ध्यायाम वस्तु शंकरं याचाम धाम शंकरम् । कुर्याम कर्म शंकरं वोचेम शंतमं हृदे ॥ ४१ ॥ माता तातः स्वादिष्ठं च पौष्टिकं मन्वाते वाक्यं बालस्य कुत्सितम् । यद्वत्तद्वाक्यं मेऽस्तु शंभवे स्वादोः स्वादीयो रुद्राय बन्धनम् ॥४२॥ शिवं सुगन्धिसंयुतं स्वभक्तपुष्टिवर्धनम् । सुदीनभक्तपालकं त्रियम्बकं यजामहे ॥ ४३ ॥ देव देव गिरिजावल्लभ त्वं पाहि पाहि शिव शंभो महेश । यद्वदामि सततं स्तोत्रवाक्यं तज्जुपस्व कृधि मा देववन्तम् ॥ ४४ ॥ त्यक्त्वा सदा निष्फलकार्यभारं धृत्वा सदा शंकरनामसारम् । हे जीव जन्मान्तकनाशकारं गध्यामहे सौमनसाय रुद्रम् ॥ ४५ ॥



स्थित्वा काश्यां निर्मलगङ्गातीये स्नात्वा संपूज्य त्रिदशेश्वरं

वे । तस्य स्तोत्रं पापहरैस्तु देव भद्रं कर्णेभिः शृणुयाम देवाः ॥ ४६ ॥ वाराणस्यां शंकरं सुराढ्यं संपूज्येशं वस्तुभिः सुकान्तैः । अग्रे नृत्यन्तः शिवस्य रूपं भद्रं पश्येमाक्षभिर्यजत्राः ॥ ४७ ॥ इच्छामस्त्वां पूजयितुं वयं विश्वेश सन्ततम् । प्रयच्छ नो धनं श्रेष्ठं यशसं वीरवत्तमम् ॥ ४८ ॥ काश्यामुषित्वा गङ्गायां स्नात्वा संपूज्य शंकरम् । ध्यात्वा तच्चरणौ नित्यमलक्ष्मीर्नाशयाम्यहम् ॥४९॥ असत्पदं स्वहर्षदं न चान्यहर्षदायकं सदा मुदा प्रसूर्यथा शृणोति भाषितं शिशोः । शिवापगाशिवाचलाशिवालयासमन्वितस्तथा शिवेश नः सुरँगिरामुपश्रुतिं चर ॥ ५० ॥ सगरस्यात्मजा गङ्गे मताः सन्तारितास्त्वया । अगरस्यात्मजा तस्मात् किं न तारयसि ध्रुवम् ॥ ५१ ॥ प्रायिकोऽयं प्रवादोऽस्तु तरन्ति तव सन्निधौ । तारकं नाम ते गङ्गे सन्निधेः किं प्रयोजनम् ॥५२॥ मीनैरायतलोचने वक्त्रसुखीवाब्जेन रोमावलीयुक्तो राजवतीव पद्ममुकुलैः शैवालवल्ल्या युतैः । उद्भास्वज्जघनेन वालपुलिनैरुच्चद्भुजेवोर्मिभिर्गर्तेनोज्ज्वलनाभिकेव विलसत्येषा परं जाह्नवी ॥ ५३ ॥ भृङ्गारितां जलधरैः शिवसुन्दराङ्गसङ्गां सदाऽपहृतविश्वध्वान्तरङ्गाम् । भृङ्गाकुलाम्बुजगलन्मकरन्दतुन्दभृङ्गावलीविलसितां कलयेऽयं गङ्गाम् ॥ ५४ ॥ विश्वेशोऽपि [illegible]प्रियसखा किं ह्यन्नपूर्णापतिर्ज्ञाता धरणीभृतो निरुपमाष्टैश्वर्ययुक्तः

स्वयम् । चत्वार्येव तथाऽपि दास्यसि फलान्यात्माश्रयान्ते चिरं तेभ्योऽसौ बत युज्यते पशुपते लब्धाऽवतारस्तव ॥ ५५ ॥ दोषाकरं वहसि मूर्ध्नि कलङ्कवन्तं कण्ठे द्विजिह्वमतिवक्रगतिं सुघोरम् । पापीत्ययं मयि कुतो न कृपां करोषि युक्तैव ते विषमदृष्टिरतो महेश ॥ ५६ ॥ अस्ति त्रिनेत्रमुडुराजकला ममेति गर्वायते ह्यतितरां बत विश्वनाथ । त्वद्वासिनो जननकाशिशशाङ्कचूडाभालेक्षणाश्च न भवन्ति जनाः कियन्तः ॥ ५७ ॥ कामं संत्यज नश्वरेऽत्र विषये वामं पदं मा विश क्षेमं चात्मन आचर त्वमदयं कामं स्मरस्वान्तकम् । भीमं दण्डधरस्य योगिहृदयारामं शिरप्रोल्लसत्सोमं भावय विश्वनाथमनिशं सोमं सखे मानसे ॥५८॥ सम्पूज्य त्रिदशवरं सदाशिवं यो विश्वेशस्तुतिलहरीं सदा पठेद्वै । कैलासे शिवपदकञ्जराजहंस आकल्पं स हि निवसेच्छिवस्वरूपः ॥ ५९ ॥ अनेन प्रीयतां देवो भगवान्काशिकापतिः । श्रीविश्वनाथः पूर्वेषामस्माकं कुलदैवतम् ॥६०॥ इयं विश्वेशलहरी रचिता खण्डयज्वना । विश्वेशतुष्टिदा नित्यं वसतां हृदये सताम् ॥६१॥ नाम्ना गुणैश्चापि शिवैव माता तातः शिवत्र्यम्बकयज्वनामा । मल्लारिदेवः कुलदैवतं मे श्रीकौशिकस्यास्ति कुले च जन्म ॥ ६२ ॥

इति श्रीगणेशदीक्षितात्मजत्र्यम्बकदीक्षिततनूजखण्डराजदीक्षितविरचिता विश्वेश्वरलहरी संपूर्णा ।

## १३४ मृत्युञ्जयस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कैलासस्योत्तरे शृङ्गे शुद्धस्फटिकसंनिभे । तमोगुणविहीने च जराव्याधिविवर्जिते ॥ १ ॥ सर्वार्थसंपदाधारे सर्वज्ञानकृतालये । कृताञ्जलिपुटो भूत्वा ब्रह्मा ध्यानासिनं शिवम् ॥ २ ॥ पप्रच्छ प्रयतो भूत्वा जानुभ्यामवनिं गतः । केनोपायेन देवेश चिरायुर्लोमशो भवेत् ॥ ३ ॥ तन्मे ब्रूहि महादेव देवानां हितकाम्यया ॥ ४ ॥ अथ मृत्युञ्जयस्तोत्रमन्त्रस्य लोमश ऋषिः । सदाशिवो देवता । अनुष्टुप् छन्दः । मृत्युञ्जयप्रीतिद्वारा सर्वारिष्टविनाशार्थं जपे विनियोगः ॥ श्रीसदाशिव उवाच ॥ शृणु ब्रह्मन् प्रवक्ष्यामि चिरायुर्मुनिसत्तम । संजातकर्मणा येन जराव्याधिविवर्जितः ॥ ५ ॥ तस्मिन्नेकार्णवे घोरे सलिलौघपरिप्लुते । कृतान्तभयनाशाय नतो मृत्युञ्जयः शिवः ॥ ६ ॥ तस्य संकीर्तनात्सत्यं मुनिना मृत्युरुज्झितः । त्वमेव कीर्तय ब्रह्मन् मृत्युं जेतुं न संशयः ॥ ७ ॥ देवाधिदेव देवेश सर्वप्राणभृतां वर । प्राणिनामपि नाथस्त्वं मृत्युञ्जय नमोऽस्तु ते ॥ ८ ॥ देवानां जीवभूतोऽसि जीवबीजस्य कारणम् । जगतां रक्षकस्त्वं हि मृत्युं जेतुं न संशयः ॥ ९ ॥ हिमाद्रिशिखराभाससुधावीचिमनोहर । पुण्डरीकाकरज्योतिर्मृत्युं जेतुं न संशयः ॥ १० ॥ ध्यानाहार सदाध्यान सदा ज्ञानै-

कारकः । परित्रातासि लोकानां मृत्युं जेतुं न संशयः ॥११॥ निहता येन कालेन सदेवासुरमानवाः । गन्धर्वाप्सरसश्चैव सिद्धविद्याधरोरगाः ॥ १२ ॥ साध्याश्च वसवो रुद्रा मरुतश्चाश्विनावुभौ । जितासौ न तु या ध्यानान्मृत्युं जेतुं न संशयः ॥ १३ ॥ ये ध्यायन्ति परां मूर्तिं पूजयन्त्यमरादयः । न ते मृत्युवशं यान्ति मृत्युं जेतुं न संशयः ॥ १४ ॥ त्वमोंकारश्च वेदानां देवानां च सदाशिवः । आधारशक्तिः शक्तीनां मृत्युं जेतुं न संशयः ॥ १५ ॥ स्थावरे जङ्गमे वापि यावत्तिष्ठसि देहिकः । जीवजीवाहुलोकोऽयं मृत्युं जेतुं न संशयः ॥१६॥ सोमसूर्याग्निमध्यस्थो व्योमवासाः सदाशिवः । कारणं सर्वभूतानां मृत्युं जेतुं न संशयः ॥ १७ ॥ प्रबुद्धे वाऽप्रबुद्धे वा स्वात्मैव सृजते जगत् । सृष्टिरूपेण देवेश मृत्युं जेतुं न संशयः ॥ १८ ॥ व्योम्नि च व्योमरूपोऽसि तेजः सर्वत्र तेजसि । ज्ञानिनां ज्ञानरूपोऽसि मृत्युं जेतुं न संशयः ॥१९॥ जगज्जीव जगत्प्राण स्रष्टा त्वं जगतः प्रभुः । कारणं सर्वभूतानां मृत्युं जेतुं न संशयः ॥ २० ॥ तेन त्वमिन्द्रियाणां हि सर्वज्ञानप्रबोधकः । साङ्ख्यं योगश्च हंसश्च मृत्युं जेतुं न संशयः ॥२१॥ रूपातिगस्वरूपश्च पिण्डस्थपदमेव च । चतुर्योगकलाधार मृत्युं जेतुं न संशयः ॥२२॥ रेचके वह्निरूपोऽसि सोमरूपोऽसि पूरके । कुम्भके शिवरूपोऽसि मृत्युं जेतुं न संशयः ॥२३॥ क्षयंकरोऽसि पापानां पुण्यानामपि वर्धनम् ।

त्वं हेतुः श्रेयसां नित्यं मृत्युं जेतुं न संशयः ॥ २४ ॥ त्वं प्रबोधस्त्वमाधारस्त्वं बीजं भुवनत्रये । सत्त्वं रजस्तमश्चैव मृत्युं जेतुं न संशयः ॥ २५ ॥ त्वं सोमश्च दिनेशश्च त्वमात्मा प्रकृतेः परः । अच्छत्रिंशत्कलाधार मृत्युं जेतुं न संशयः ॥ २६ ॥ सर्वेन्द्रियगुणाधार गुह्यानां त्वमधीश्वरः । सर्वज्ञानमयाधार मृत्युं जेतुं न संशयः ॥ २७ ॥ रूपं गन्धो रसः स्पर्शः शब्दः संस्कार एव च । तत्त्वं प्रकाश एतेषां मृत्युं जेतुं न संशयः ॥२८॥ त्वमनादिरनन्तश्च त्वं नित्यो नित्यभावनः । मुक्तिस्त्वमेव भुक्तिस्त्वं मृत्युं जेतुं न संशयः ॥ २९ ॥ त्वमेको विश्रुतो देव सकले भुवनत्रये । अतिसूक्ष्मादिरूपस्त्वं मृत्युं जेतुं न संशयः ॥ ३० ॥ एवं कीर्तयते यस्तु शुचिः प्रयतमानसः । भक्त्या शृणोति वा ब्रह्मन् न मृत्युवशगो भवेत ॥ ३१ ॥ नापमृत्युर्भवेत्तस्य प्राप्तकालं च लङ्घयेत् । व्याधयो नोपपीड्यन्ति नोपसर्गभयं भवेत् ॥ ३२ ॥ प्रत्यासन्नचिरे काले शतैकावर्तने कृते । मृत्युर्न जायते तस्य रोगान्मुञ्चति निश्चितम् ॥ ३३ ॥ पञ्चम्यां वा दशम्यां वा पूर्णिमायामथाऽपि वा । इदं रहस्यं ध्यातव्यं शिवस्य हंसयोगिनः ॥ ३४ ॥

इति श्रीब्रह्मसंवादे मुनिलोमशविरचितं मृत्युञ्जयस्तोत्रं संपूर्णम् ।

## १३५ अथ विष्णुकृतशिवस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच ॥ ॐ नमो भगवते महापुरुषाय सर्वगुणसंख्यानायानंतायाव्यक्ताय नम इति ॥ १ ॥ भजे भवान्यारणपादपंकजं भगस्य कृत्स्नस्य परं परायणम् । भक्तेष्वलं भावितभूतभावनं भवापहं त्वा भवभावमीश्वरम् ॥ २ ॥ न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते । ईशे यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः ॥३॥ असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः । न नागवध्वोऽर्हण ईशिरे ह्रिया यत्पादयोः स्पर्शनधर्षितेन्द्रियाः ॥ ४ ॥ यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनंतमृषयः । न वेदसिद्धार्थमिव क्वचित्स्थितं भूमंडलं मूर्धसहस्रधामसु॥५॥ यस्याद्य आसीद्गुणविग्रहो महान्विज्ञानधिष्ण्यो भगवानजः किल। यत्संभवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैन्द्रियं सृजे ॥ ६ ॥ एते वयं यस्य वशे महात्मनः स्थिताः शकुन्ता इव सूत्रयन्त्रिताः । महानहं वैकृततामसेन्द्रियाः सृजाम सर्वं यदनुग्रहादिदम् ॥ ७ ॥ यन्निर्मितां कर्ह्यपि कर्मपर्वणीं मायां जनोऽयं गुणसर्गमोहितः । न वेद निस्तारणयोगमञ्जसा तस्मै नमस्ते विलयोदयात्मने ॥ ८ ॥

इति श्रीभगवते विष्णुकृतशिवस्तोत्रं समाप्तम् ॥

## १३६ श्रीचन्द्रमौलीशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ओंकारजपरतानामोंकारार्थं मुदा विदधानम् । ओजःप्रदं नतेभ्यस्तमहं प्रणमामि चन्द्रमौलीशम् ॥ १ ॥ नम्रसुरासुरनिकरं नलिनाहंकारहारिपदयुगलम् । नमदिष्टदानधीरं सततं प्रणमामि चंद्रमौलीशम् ॥ २ ॥ मननाद्यत्पदयोः खलु महतीं सिद्धिं जवात्प्रपद्यन्ते । मन्देतरलक्ष्मीप्रदमनिशं प्रणमामि चन्द्रमौलीशम् ॥ ३ ॥ शितिकण्ठमिन्दुदिनकरशुचिलोचनमम्बुजाक्षविधिसेव्यम् । नतमतिदानधुरीणं सततं प्रणमामि चन्द्रमौलीशम् ॥ ४ ॥ वाचो विनिवर्तन्ते यस्मादप्राप्य सह हृदैवेति । गीयन्ते श्रुतिततिभिस्तमहं प्रणमामि चन्द्रमौलीशम् ॥ ५ ॥ यच्छन्ति यत्पदाम्बुजभक्ताः कुतुकात्स्वभक्तेभ्यः । सर्वानपि पुरुषार्थांस्तमहं प्रणमामि चन्द्रमौलीशम् ॥ ६ ॥ पञ्चाक्षरमनुवर्णैरादौ क्लृप्तां स्तुतिं पठन्नेनाम् । प्राप्य दृढां शिवभक्तिं भुक्त्वा भोगाँल्लभेत मुक्तिमपि ॥ ७ ॥

इति श्रीचन्द्रमौलीशस्तोत्रं संपूर्णम् ।

---

## १३७ श्रीकामेश्वरस्तोत्रम् ।



श्रीगणेशाय नमः ॥ कमारूपाय करासपाशसुणीक्षुपुष्पाय कलेद्धराय । काकोदरस्रग्विलसद्गलाय कामे-

श्वरायास्तु नतः सहस्रम् ॥ १ ॥ कनत्सुवर्णाभजटाधराय सनत्कुमारादिमुनीडिताय । नमत्कलादानधुरंधराय कामेश्वरायास्तु नतः सहस्रम् ॥ २ ॥ कराम्बुजातम्रदिमावधूतप्रवालगर्वाय दयामयाय । दारिद्र्यदावामृतवृष्टये ते कामेश्वरायास्तु० ॥ ३ ॥ कल्याणशैलेषुधयेऽहिराजगुणाय लक्ष्मीधवसायकाय । पृथ्वीरथायागमसैन्धवाय कामेश्व० ॥ ४ ॥ कल्याय बल्याशरसंघभेदे तुल्या न सन्त्येव हि यस्य लोके । शल्यापहर्त्रे विनतस्य तस्मै कामेश्वरा० ॥ ५ ॥ कान्ताय शैलाधिपतेः सुतायाः घटोद्भवात्रेयमुखार्चिताय । अघौघविध्वंसनपण्डिताय कामेश्वरा० ॥ ६ ॥ कामारये कांक्षितदाय शीघ्रं त्रात्रे सुराणां निखिलाद्भयाच्च । चलत्फणीन्द्रश्रितकंधराय कामेश्वराया० ॥ ७ ॥ कालान्तकाय प्रणतार्तिहन्त्रे तुलाविहीनास्यसरोरुहाय । निजाङ्गसौन्दर्यजिताङ्गजाय कामे० ॥ ८ ॥ कैलासवासादरमानसाय कैवल्यदाय प्रणतव्रजस्य । पदाम्बुजानम्रसुरेश्वराय कामेश्व० ॥ ९ ॥ हतारिषड्वैरनुभूयमाननिजस्वरूपाय निरामयाय । निराकृतानेकविधामयाय कामेश्वरा० ॥ १० ॥ हतासुराय प्रणतेष्टदाय प्रभाविनिर्धूतजपासुमाय । प्रकर्षदाय प्रणमज्जनानां कामे० ॥ ११ ॥ हराय ताराधिपशेखराय तमालसङ्काशगलोज्ज्व-
[illegible]लाय । तापत्रयाम्भोनिधिवाडवाय कामे० ॥ १२ ॥ [illegible]

पद्यानि विनिःसरन्ति मुखाम्बुजाद्यत्पदपूजकानाम् । विना प्रयत्नं कमपीह तस्मै कामेश्वरायास्तु नतेः सहस्रम् ॥ १३ ॥

इति कामेश्वरस्तोत्रं संपूर्णम् ।

---

## १३८ श्रीमदृश्यशृंगेश्वरस्तुतिः ।

श्रीगणेशाय नमः ॥ कष्टारिवर्गदलनं शिष्टालिसमर्चिताङ्घ्रिपाथोजम् । नष्टाविद्यैर्गम्यं पुष्टात्माराधकालिमाकलये ॥ १ ॥ प्राणायामैर्ध्यानैर्नष्टं चित्तं विधाय मुनिवर्याः । यत्पश्यन्ति हृदब्जे शान्ताभाग्यं नमामि तत्किञ्चित् ॥ २ ॥ वेदोत्तमाङ्गगेयं नादोपास्त्यादिसाधनात्माख्यम् । खेदोन्मूलनदक्षं भेदोपाध्यादिवर्जितं नौमि ॥ ३ ॥ शान्तामानसहंसं कान्तारासक्तमुनिवरैः सेव्यम् । शान्ताहंकृतिवेद्यं कान्तार्धं नौमि शृङ्गशिवम् ॥ ४ ॥

इति श्रीमदृश्यशृङ्गेश्वरस्तुतिः संपूर्णा ।

---

## १३९ श्रीकण्ठेशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ आर्द्रान्तःकरणस्त्वं यस्मादीशान भक्तवृन्देषु । आर्द्रोत्सवप्रियोऽतः श्रीकण्ठात्रास्ति नैव संदेहः ॥ १ ॥ द्रष्टुंस्तवोत्सवस्य हि लोकान्पापात्तथा मृत्योः । मा भीरस्त्विति शंभो मत्वेति [illegible] ॥ २ ॥ प्रकरोति



करुणयार्द्रान्छंभुर्नम्रानिति प्रबोधाय । घर्मोऽङ्कं किल लोका-

नार्द्रान्कुरुतेऽस्य गौरीश ॥ ३ ॥ आर्द्रा नटेशस्य मनोऽब्ज-वृत्तिरित्यर्थसंबोधकृते जनानाम् । आर्द्रर्क्ष एवोत्सवमाह शस्तं पुराणजालं तव पार्वतीश ॥ ४ ॥ बाणार्चने भगवतः परमेश्वरस्य प्रीतिर्भवेन्निरुपमेति यतः पुराणैः । संबोध्यते परशिवस्य ततः करोति बाणार्चनं जगति भक्तियुता जनालिः ॥ ५ ॥ यथान्धकं त्वं विनिहत्य शीघ्रं लोकस्य रक्षामकरोः कृपाब्धे । तथाज्ञतां मे विनिवार्य शीघ्रं विद्यां प्रयच्छाशु सभाधिनाथ ॥ ६ ॥

इति श्रीकण्ठेशस्तोत्रं संपूर्णम् ।

## १४० श्रीकण्ठाष्टकम् ।

श्रीगणेशाय नमः ॥ यः पादपपिहिततनुः प्रकाशतां परशुरामेण । नीतः सोऽव्यात्सततं श्रीकण्ठः पादनम्रकल्प-तरुः ॥ १ ॥ यः कालं जितगर्वं कृत्वा क्षणतो मृकण्डुमुनि-सुतम् । निर्भयमकरोत्सोऽव्याच्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ २ ॥ कुष्ठापस्मारमुखा रोगा यत्पादसेवनात्सहसा । प्रशमं प्रयान्ति सोऽव्याच्छ्रीकण्ठः पादनम्रकल्पतरुः ॥ ३ ॥ यद-विद्यैव जगदिदमखिलं प्रतिभाति सत्यवत्पूर्वम् । ज्ञानात्सोऽ-व्यात्सततं श्रीकण्ठः पादनम्रकल्पतरुः ॥ ४ ॥ यमिन्द्र-वन्द्यचरणः क्रमिता धरणीधरेन्द्रतनयायाः । श्रीशादिवन्दि-



तोऽव्याच्छ्रीकण्ठः पादनम्रकल्पतरुः ॥५॥ यो दक्षिणास्यरूपं

धृत्वा विज्ञानदानकृतदीक्षः । मुग्धेभ्योऽपि स पायाच्छ्री-
कण्ठः पादनम्रकल्पतरुः ॥ ६ ॥ अन्धोऽपि यत्करुणया
चक्षुष्मान्भवति सत्वरं लोके । करुणानिधिः स पायाच्छ्री-
कण्ठः पादनम्रकल्पतरुः ॥ ७ ॥ कपिलातटाहृतगतिः कपि-
लादिमुनीन्द्रवन्द्यपदपद्मः । श्रीदः पायात्सततं श्रीकण्ठः
पादनम्रकल्पतरुः ॥ ८ ॥ श्रीकण्ठाष्टकमेतत्पठति जनो यः
कृतादरः सततम् । श्रीविद्यासदनं स प्रभवेन्नैवात्र संदेहः ॥९॥

इति श्रीकण्ठाष्टकं संपूर्णम् ।

---

## १४१ श्रीकालान्तकाष्टकम् ।

श्रीगणेशाय नमः ॥ कमलापतिमुखसुरवरपूजित काको-
लभासितग्रीव । काकोदरपतिभूषण कालान्तक पाहि पार्व-
तीनाथ ॥ १ ॥ कमलाभिमानवारणदक्षाङ्घ्रे विमलशेमुषी-
दायिन् । नतकामितफलदायक कालान्तक पाहि पार्वतीनाथ
॥२॥करुणासागर शंभो शरणागतलोकरक्षणधुरीण । कारण
समस्तजगतां कालान्तक पाहि पार्वतीनाथ ॥ ३ ॥ प्रण-
तार्तिहरणदक्ष प्रणवप्रतिपाद्य पर्वतावास । प्रणमामि तव
पदाब्जे कालान्तक पाहि पार्वतीनाथ ॥ ४ ॥ मन्दार
नतजनानां वृन्दारकवृन्दगेयसुचरित्र । मुनिपुत्रमृत्युहारि-
न्कालान्तक पाहि पार्वतीनाथ ॥ ५ ॥ [illegible]
मायावाराशिकुम्भसंजात । मातङ्गचर्मवासः कालान्तक पाहि

पार्वतीनाथ ॥ ६ ॥ मोहान्धकारभानो मोदितगिरिजा-मनःसरोजात । मोक्षप्रद प्रणमतां कालान्तक पाहि पार्व-तीनाथ ॥ ७ ॥ विद्यानायक मह्यं विद्यां दत्त्वा निवार्य चाविद्याम् । विद्याधरादिसेवित कालान्तक पाहि पार्वती-नाथ ॥ ८ ॥ कालान्तकाष्टकमिदं पठति जनो यः कृतादरो लोके । कालान्तकप्रसादात्कालकृता भीर्न संभवेत्तस्य ॥९॥

इति श्रीकालान्तकाष्टकं संपूर्णम् ।

## १४२ श्रीभवबन्धविमोचनशिवस्तुतिः ।

श्रीगणेशाय नमः ॥ रदच्छदाधःकृतबिम्बगर्वः पदप्रण-म्राहितसर्वविद्यः । कैलासश्रृङ्गाहृतनित्यवासो धुनोतु शीघ्रं भवबन्धमीशः ॥ १ ॥ राकाशशाङ्कप्रतिमानकान्तिः कोका-हितप्रोल्लसदुत्तमाङ्गः । शैलेन्द्रजालिङ्गितवामभागो धुनोतु शीघ्रं भवबन्धमीशः ॥ २ ॥

इति श्रीभवबन्धविमोचनशिवस्तुतिः संपूर्णा ।

## १४३ श्रीशंभुस्तवः ।

श्रीगणेशाय नमः ॥ कैलासशैलनिलयात्कलिकल्मषघ्ना-च्चन्द्रार्धभूषितजटाह्कुटमूलवासात् । नम्रोत्तमाङ्गविनिवेशित-हस्तपद्माच्छंभोः परं किमपि दैवमहं न जाने ॥ १ ॥ नाका-[illegible]

गात् । निर्व्याजपूर्णकरुणान्निखिलामरेड्याच्छंभोः परं किमपि दैवमहं न जाने ॥ २ ॥ मौनीन्द्ररक्षणकृते जितकालगर्वात्पापाब्धिशोषणविधौ जितवाडवाग्नेः । माराङ्गभस्मपरिलेपनशुक्लगात्राच्छंभोः परं किमपि दैवमहं न जाने ॥३॥ विज्ञानमुद्रितकराच्छरदिन्दुशुभ्राद्विज्ञानदाननिरताज्जडपङ्क्‍येऽपि । वेदान्तगेयचरणाद्विधिविष्णुसेव्याच्छंभोः परं किमपि दैवमहं न जाने ॥ ४ ॥

इति श्रीशंभुस्तवः संपूर्णः ।

## १४४ श्रीधीरगुरुभूतेश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ माङ्गल्यदाननिरत प्रणमज्जनानां मान्धातृमुख्यधरणीपतिचिन्तिताङ्घ्रे । मान्द्यान्धकारविनिवारणचण्डभानो मां पाहि धीरगुरुभूत शशाङ्कमौले ॥१॥ मां प्राप्नुयादखिलसौख्यकरी सुधीश्च माकन्दतुल्यकविता सकलाः कलाश्च । काचित्कयत्पदसरोजनतेर्हि स त्वं मां पाहि धीरगुरुभूत शशाङ्कमौले ॥ २ ॥ मातङ्गकृत्तिवसन प्रणतार्तिहारिन्मायासरित्पतिविशोषणवाडवाग्ने । मानोन्नतिप्रद निजाङ्घ्रिजुषां नराणां मां पाहि धीरगुरुभूत शशाङ्कमौले ॥ ३ ॥

इति श्रीधीरगुरुभूतेश्वरस्तोत्रं संपूर्णम् ।

## १४५ श्रीमल्लिकार्जुनप्रश्नमालिकास्तवः ।

श्रीगणेशाय नमः ॥ का संबुद्धिर्नक्षत्रेशः केन विराजति मात्रुत्सङ्गः । गिरिवरपुत्र्याः पत्युः शीर्षं केन विराजति वदत कवीन्द्राः ॥ १ ॥ का भाति रमणीशीर्षे को हन्ता शल्यसारथेः । भ्रमराम्बापतिः को वा वदन्तु विबुधोत्तमाः ॥२॥ षट्चरणस्य च का संबुद्धिर्लोके जन्तोः का हितजननी । साध्व्याश्चित्ते भाति च को वा श्रीशैलाग्रे राजति कश्च ॥३॥

इति श्रीमल्लिकार्जुनप्रश्नमालिकास्तवः संपूर्णः ।

## १४६ श्रीगिरिपल्लवनाथेश्वरस्तुतिः ।

श्रीगणेशाय नमः ॥ पल्लवसदृक्षतावकपदविन्यासाज्जगाम पल्लवताम् । यद्गिरिरसौ ततस्त्वं गिरिपल्लवनाथशब्दवाच्योऽभूः ॥ १ ॥ वृक्षलतानां पल्लवमिह सिद्धं नैव भूमिधर्तुर्हि । शक्तिस्तवाद्भुतातो गिरिपल्लवमत्र दृष्टमतिचित्रम् ॥ २ ॥ गङ्गाधर करुणाकर बिम्बाधर बालकुमुदबन्धुधर । गरलाम्बरविनिवारण पादसरोजे नमस्ये ते ॥ ३ ॥

इति श्रीगिरिपल्लवनाथेश्वरस्तुतिः संपूर्णा ।

## १४७ श्रीदूर्वेशस्तोत्रम् ।

श्रीगणेशाय नमः ॥ गणनाथषण्मुखयुतो गिरिजासंश्लेषतुष्टहृदयाब्जः । दूर्वाभिख्यपुरस्थाँल्लोकान्परिपातु भक्ति-

विनययुतान् ॥ १ ॥ विद्यानाथ विनीतिभक्तिसहिताँल्लोकान्कृपावारिधे दूर्वाभिख्यपुरस्थितान्करुणया पाहीभवन्नं यथा। विद्यायुःसुखयुक्तिशक्तिभिरलंयुक्तान्विधायानिशं शान्त्याद्यैरपि दिव्यमुक्तिपदवीसंदर्शकैः शंकर ॥ २ ॥

इति श्रीदूर्वेशस्तोत्रं संपूर्णम्।

## १४८ श्रीशिवनवरत्नमालास्तवः।

श्रीगणेशाय नमः ॥ कलय कलावित्प्रवरं कलया नीहारदीधितेः शीर्षम्। सततमलंकुर्वाणं प्रणतावनदीक्ष यक्षराजसख ॥ १ ॥ कान्तागेन्द्रसुतायाः शान्ताहंकारचिन्त्यचिद्रूप। कान्तारखेलनरुचे शान्तान्तःकरणमेनमव शंभो ॥ २ ॥ दाक्षायणीमनोऽम्बुजभानो वीक्षावितीर्णविनतेष्ट। द्राक्षामधुरिममदभरशिक्षाकर्त्रीं प्रदेहि मम वाचम् ॥ ३ ॥ पारदसमानवर्णो नीरदनीकाशदिव्यगलदेशः। पादनतदेवसङ्घः पशुमनिशं पातु मामीशः ॥ ४ ॥ प्रत्यक्षो भव शंभो गुरुरूपेणाशु मेऽद्य करुणाब्धे। चिरतरमिह वासं कुरु जगतीं रक्षन्प्रबोधदानेन ॥ ५ ॥ यक्षाधिपसखमनिशं रक्षाचतुरं समस्तलोकानाम्। वीक्षादापितकवितं दाक्षायण्याः पतिं नौमि ॥ ६ ॥ यमनियमनिरतलभ्यं शमदमसुखषट्कदानकृतदीक्षम्। रमणीयपदसरोजं शमनाहितमाश्रये सततम्



॥ ७ ॥ [illegible]

ताशुःप्रदपूजं कमितारं नौमि शैलतनयायाः ॥ ८ ॥ येन कृतमिन्दुमौले मानववर्येण तावकस्मरणम् । तेन जितं जगदखिलं को न ब्रूते सुरार्यतुल्येन ॥ ९ ॥

इति शिवनवरत्नमालास्तवः संपूर्णः ।

## १४९ श्रीशिवस्तुतिकदम्बम् ।

श्रीगणेशाय नमः ॥ आह्लादजनकस्याथ सांनिध्यात्तव शंकर । चन्द्रश्चन्द्रत्वमापेदे जाने चन्द्रकसज्जट ॥ १ ॥ कालकूटं निगृह्यादावरक्षः सकलं जगत् । को वात्र विस्मयः शंभो कालस्यैकस्य निग्रहे ॥ २ ॥ अभवस्त्वं सूचयितुं लोकानामर्धनारीशः । अर्धौ वेत्याम्नायः स्वार्थपरो नार्थवाद इति ॥ ३ ॥ जडताविदलनदीक्षित जडतापद्धतिं करोषि नो चेन्मे । दीक्षाभङ्गो न भवेद्दाक्षायण्याश्रिताङ्ग किंतु तेन ॥ ४ ॥ पशुपतिमव मां शंभो पशुपतिरसि गिरिश यस्मा-त्वम् । श्रुतिरप्येवं ब्रूते कर्तव्या ह्यात्मरक्षेति ॥ ५ ॥ शीर्षो-परि चन्द्रस्ते लोके शास्त्रे च विख्यातः । कण्ठोपर्यकलङ्कः पूर्णः कोऽयं निशाकरो ब्रूहि ॥ ६ ॥ कवित्ववारशिशरन्निशेशं जडत्वनागेन्द्रविभेदसिंहम् । मृगत्वगाबद्धकटिप्रदेशं महत्त्वदं नौमि नताय शंभुम् ॥ ७ ॥ यदङ्घ्रिपाथोरुहसेवनेन प्रयाति सर्वोत्तमतां जडोऽपि । नमस्तिकामानसपद्महंसमाश्रये सत्वरचित्तशुद्धये ॥८॥ बहूनां जनानां मनोऽभीष्टजातं सुसूक्ष्मं

वितीर्याशु गर्वायसे त्वम् । महेशान यद्यस्ति शक्तिस्तवाहो महन्मन्मनोऽभीष्टमाशु प्रयच्छ ॥ ९ ॥ अपां पुष्पार्धस्य प्रतिदिनमहो धारणवशात्प्रभो किं निर्वेदाद्धरणिगतपुष्पा-लिमधुना । रसाद्धत्से शीर्षे शशधरकिरीटागतनयासहाय प्रब्रूहि प्रणतजनकारुण्यभरित ॥ १० ॥ बहोः कालात्किं वा शिरसि कृतवासं तव विधुं वियोगं किं पत्युर्भृशमसह-मानाः स्वयमहो । समालिङ्गन्त्येताः पतिमतिरसात्पुष्प-मिषतः प्रभो तारास्तस्मादसि द्युमकिरीटस्त्वमधुना ॥११॥ भक्तानां ह्यद्यथानां निजनिजपदवीप्राप्तये पार्वतीशः कारु-ण्यापारवाराांनिधिरगपतिजासंयुतः संभ्रमेण । आरुह्यैकं हि वाह्यं रथमिह निखिलांश्चालयन्किं पुरोक्तान्गर्वं पक्षी-शवाय्वोर्हरति करुणया शीघ्रनम्रेष्टदायी ॥ १२ ॥ मत्पा-पानां बहूनां परिमितिरधुनाधीश नास्त्येव नूनं त्वद्धत्पापो-पशान्तिप्रदमिह भुवने नास्ति दैवं च सद्यः । तस्मान्मत्पाप-राशिं दह दह तरसा देहि शुद्धां च बुद्धिं स्रोतः श्रेष्ठावतंस प्रणतभयहर प्राणनाथागजायाः ॥ १३ ॥ कामं सन्तु सुराः स्वपादनमनस्तोत्रार्चनाभिश्चिरं देहं कर्शयते जनाय फलदा-स्तान्नाश्रये जात्वपि । यो जात्वप्यवशात्स्वनाम वदते लोकाय शीघ्रेष्टदः सोऽव्याद्धेतुविहीनपूर्णकरुणः कान्तायितार्धः शिवः ॥ १४ ॥ नित्यानित्यविवेकभोगविरती शान्त्यादिषट्कं तथा मोक्षेच्छामनपायिनीं वितर मो शंभो कृपावारिधे ।

वेदान्तश्रवणं तदर्थमननं ध्यानं चिरं ब्रह्मणः सच्चिद्रूपतनोरखण्डपरमानन्दात्मनः शंकर ॥१५॥ मन्त्रीकांशतनुं प्रगृह्य करुणावारांनिधे सत्वरं शृङ्गाद्रौ वस मोदतः करुणया व्याख्यानसिंहासने । कुर्वँल्लोकततिं स्वधर्मनिरतां सौख्यैरशेषैर्युतामद्वैतात्मविबोधपूर्णहृदयां चातन्वपर्णापते ॥१६॥ यत्पदाम्बुजसमर्चनसक्तः सक्तिमाशु विषयेषु विहाय । सच्चिदात्मनि विलीनमनस्काः संभवन्ति तमहं शिवमीडे ॥ १७ ॥ रजनीवल्लभचूडो रजनीचरसेव्यपदपद्मः । राकाशशाङ्कधवलो राजति रमणीगृहीतवामाङ्गः ॥ १८ ॥ करवाणीतनुभिस्ते करवाणीशाङ्घ्रिसंनतिं मोदात् । करवाणीतत्त्वशुद्ध्यै करवाणीश्रीबहुत्वाय ॥ १९ ॥

इति श्रीशिवस्तवकदम्बं संपूर्णम् ।

---

## १५० श्रीशिवसुवर्णमालास्तवः ।

श्रीगणेशाय नमः ॥ अनेककोटिब्रह्माण्डजननीनायकप्रभो । अनेकषण्मुखस्कन्दपरिसेवित पाहि माम् ॥ १ ॥ आकरापारनिर्व्याजकरुणायाः सतीपते । आशाभिपूरकानम्रविततेः पाहि शंकर ॥ २ ॥ इभाश्वसुखसंपत्तिदानदक्षकृपालव । इष्टप्रालेयशैलेन्द्रपुत्र्याः पाहि गिरीश माम् ॥ ३ ॥ ईहाशून्यजनाप्राप्य नतानन्दाब्धिचन्द्रमः । ईशान सर्वविद्यानामिन्दुचूड सदाव माम् ॥ ४ ॥ उरगाधिपसंराजत्पदपङ्करु-

द्द्वय । उडुराजकृतोत्तंस गिरिजासख मामव ॥ ५ ॥ ऊरी-कृतविनम्रेष्टपूगसंपूरणव्रत । अखिलामरकोटीरनिघृष्टपद पाहि माम् ॥ ६ ॥ ऋद्धिदाम्भोजवासायाः काममाशु नमत्तते: । शैलेन्द्रतनयाश्लिष्ट शर्व मां पाहि सर्वदा ॥७॥ ॠस्वराख्येय-रूपाय भूतिदायादराद्दुतम् । षण्मुखेभास्यपूज्याय नमश्चन्द्रा-र्धमौलये ॥ ८ ॥ ऌकाराख्याय लक्ष्मीशद्रुहिणाद्यर्चिताङ्घ्रये । अपारकरुणाजन्मभूमये शंभवे नमः ॥९॥ ॡस्वरूप ललाटाक्ष लाकिन्यादिनिषेवित । लावण्याकर कारुण्यवारिधे पाहि मां प्रभो ॥ १० ॥ एणाङ्कचूड काणादशास्त्रप्रज्ञाप्र-दायक । शोणाधर नमस्यामि त्वत्पादाम्बुरुहद्वयम् ॥११॥ ऐहिकामुष्मिके पुंसां सुलभे यत्पदार्चनात् । चन्द्रार्धविलस-न्मौलिं नमामि तमुमापतिम् ॥ १२ ॥ ओमित्याख्यां यस्य वेदा वेदान्ताश्च जगुर्मुहुः । ओंकारजपतुष्टं तं नौमि चन्द्रा-र्धशेखरम् ॥ १३ ॥ औदासीन्यं समस्तेषु विषयेषु प्रकुर्व-ताम् । सुलभं जगदीशानं पार्वतीपतिमाश्रये ॥ १४ ॥ अंगशोभापराभूतकोटिराकानिशाकरम् । अन्धकान्तकका-मादिगर्वहारिणमाश्रये ॥ १५ ॥ अश्च उश्च मकारश्च यन्ना-मावयवाक्षराः । अशेषशुभदातारं तं नौमि शशिशेखरम् ॥ १६ ॥ कविता वृणुते रतीशतुल्यं पतिमास्थासहितेव मानिनी । तरसा पुरुषं यदङ्घ्रिनम्रं तमहं नौमि शशाङ्कबाल-



चूडम् ॥ १७ ॥ खण्डेन चान्द्रेण किरीटगेन विराजमानं

वृषभाधिरूढम् । खवायुतेजोऽम्बुधरादिरूपं नमामि शैलेन्द्रसुतासमेतम् ॥ १८ ॥ गद्यानि पद्यानि च शीघ्रमेव मूकस्य वक्त्रादपि निःसरन्ति । यदीयकारुण्यलवात्तमीशं नमामि चन्द्रार्भकभासिमौलिम् ॥१९॥ घटोद्भवाद्या मुनयो यदङ्घ्रिसमर्चनातो महतीं प्रपन्नाः । सिद्धिं तमानम्रजनेष्टदाननिबद्धदीक्षं प्रणमामि शंभुम् ॥ २० ॥ ङकारवाच्याय नमज्जनौघविद्याप्रदानप्रवणाय शीघ्रम् । वटागमूलैकनिकेतनाय श्रीदक्षिणास्याय नमः शिवाय ॥ २१ ॥ चयेन भासां वपुषश्चकोरबन्धुं जयन्तं जितपुष्पचापम् । प्रालेयशैलेन्द्रसुतामनोऽब्ज भार्कं भजे कंचन देववर्यम् ॥२२॥ छत्रं च वालव्यजने मनोज्ञे समुद्रकाञ्चीं पृथिवीं च लोकाः । जवाद्भजन्तेऽप्यतिकिंपचाना यदङ्घ्रिनम्रास्तमुमेशमीडे ॥२३॥ जन्मस्वनेकेषु विधाय धर्मान्स्ववर्णयोग्यान्मनुजोऽतिभक्त्या । जिज्ञासते यत्पदमादरेण तं नौमि सच्चित्सुखरूपमीशम्॥२४॥ झरीं दधानं दिविपत्तटिन्या झटित्ययोग्यानपि भक्तिपूर्णान् । पुनानमर्धेन्दुलसत्किरीटं युवानमीशं कलयामि चित्ते ॥२५॥ ञकाररूपाय रवीन्दुवह्निनेत्राय नानाविधरूपधर्त्रे । लोकावनायातिमनोहराय शैलेन्द्रकन्यापतये नमोऽस्तु ॥ २६ ॥ टवर्णवाच्याय तटित्प्रभाय यमादियोगाङ्गविदर्चिताय । शमादिसंपत्सहितात्यपादपद्माय गौरीपतये नमोऽस्तु ॥ २७ ॥



ठयुक्त्रिवर्णप्रतिपादिताय हराय निःशेषविघ्नघहर्त्रे । श्रीनी-

लकण्ठाय यमिप्रवीरध्येयाय कुर्मः प्रणतिं प्रमोदात् ॥२८॥ डामरप्रमुखदुःखसमूहध्वंसदक्षचरणस्मरणस्य । शैलजाहृदयपङ्कजभानोः शंकरस्य चरणौ प्रणतोऽस्मि ॥ २९ ॥ ढकारव्यवायश्रवणोत्सुकाय प्रौढाय कन्दर्पशरप्रभेदे । शिवाय चन्द्रार्धलसज्जटाय कुर्मः प्रमोदात्प्रणतेः सहस्रम् ॥ ३० ॥ णान्तदादिहरिदुन्मुखमूर्ते नाकनाथपरिसेवितपाद । वासलोल वटवृक्षतले मां वारणास्यमिव पाहि दयालो ॥ ३१ ॥ तप्ताः संसृतिवह्निना भुवि नराः संप्राप्य सद्देशिकं तस्यास्याच्छ्रुतिशीर्षवाक्यनिचयं श्रुत्वार्थयुक्तं मुहुः । युक्त्या श्रुत्यविरुद्धया तदनुसंचिन्त्यार्थमाद्योदितं ध्यात्वाजस्रमवाप्नुवन्ति यमहं तं नौमि गौरीपतिम् ॥ ३२ ॥ थाथैयेत्ति समस्तदेववनिता नृत्यं यदग्रेऽन्वहं कुर्वन्त्यम्बुजसंभवप्रभृतयः स्तुन्वन्ति वेदैश्च यम् । इन्द्राणीशरमाधवादिमसुरा यस्यार्चनां कुर्वते कल्पागप्रभवैः सुमैस्तमनिशं नौम्यद्रिजावल्लभम् ॥ ३३ ॥

इति श्रीशिवसुवर्णमालास्तवः संपूर्णः ।

---

## १५१ श्रीरामनाथस्तुतिः ।

श्रीगणेशाय नमः ॥ श्रीरामपूजितपदाम्बुज चापपाणे श्रीचक्रराजकृतवास कृपाम्बुराशे । श्रीसेतुमूलचरणप्रवणान्तरङ्ग श्रीरामनाथ लघु तारय जन्मवाधिम् ॥ १ ॥ नम्रा-

घवृन्दविनिवारणबद्धदीक्ष शैलाधिराजतनयापरिरब्धवर्ष्मन् । श्रीनाथमुख्यसुरवर्यनिषेविताङ्घ्रे श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ २ ॥ शूराहितेभवदनाश्रितपार्श्वभाग क्रूरारि-वर्गविजयप्रद शीघ्रमेव । साराखिलागमतदन्तपुराणपङ्क्तेः श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ ३ ॥ शब्दादिमेषु विषयेषु समीपगेष्वप्यासक्तिगन्धरहितान्निजपादनम्रान् । कुर्वाण कामदहनाक्षिलसल्ललाट श्रीरामनाथ लघु तारय जन्मवार्धिम् ॥ ४ ॥

इति श्रीरामनाथस्तुतिः संपूर्णा ।

# सूर्यस्तोत्राणि ।

## १५२ सूर्यकवचम् ।

श्रीगणेशाय नमः ॥ श्रीसूर्य उवाच । साम्ब साम्ब महाबाहो शृणु मे कवचं शुभम् । त्रैलोक्यमङ्गलं नाम कवचं परमाद्भुतम् ॥ १ ॥ यज्ज्ञात्वा मन्त्रवित्सम्यक् फलं प्राप्नोति निश्चितम् । यद्धृत्वा च महादेवो गणानामधिपोऽभवत् ॥२॥ पठनाद्धारणाद्विष्णुः सर्वेषां पालकः सदा । एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः ॥ ३ ॥ कवचस्य ऋषिर्ब्रह्मा छन्दोऽनुष्टुबुदाहृतः । श्रीसूर्यो देवता चात्र सर्वदेवनमस्कृतः ॥ ४ ॥ यशआरोग्यमोक्षेषु विनियोगः प्रकीर्तितः । प्रणवो मे शिरः पातु घृणिर्मे पातु भालकम् ॥ ५ ॥ सूर्योऽव्यान्नयनद्वन्द्वमादित्यः कर्णयुग्मकम् । अष्टाक्षरो महामन्त्रः सर्वाभीष्टफलप्रदः ॥ ६ ॥ ह्रीं बीजं मे मुखं पातु हृदयं भुवनेश्वरी । चन्द्रबिम्बं विंशदाद्यं पातु मे गुह्यदेशकम् ॥ ७ ॥ अक्षरोऽसौ महामन्त्रः सर्वतन्त्रेषु गोपितः । शिवो वह्निसमायुक्तो वामाक्षीबिन्दुभूषितः ॥ ८ ॥ एकाक्षरो महामन्त्रः श्रीसूर्यस्य प्रकीर्तितः । गुह्याद्गुह्यतरो मन्त्रो वाञ्छाचिन्तामणिः स्मृतः ॥९॥ शीर्षादिपादपर्यन्तं सदा पातु मनूत्तमः । इति ते कथितं दिव्यं त्रिषु लोकेषु दुर्लभम् ॥ १० ॥ श्रीप्रदं कान्तिदं नित्यं धनारो-

ग्यविवर्धनम् । कुष्ठादिरोगशमनं महाव्याधिविनाशनम् ॥ ११ ॥ त्रिसंध्यं यः पठेन्नित्यमरोगी बलवान्भवेत् । बहुना किमिहोक्तेन यद्यन्मनसि वर्तते ॥ १२ ॥ तत्तत्सर्वं भवेत्तस्य कवचस्य च धारणात् । भूतप्रेतपिशाचाश्च यक्षगन्धर्वराक्षसाः ॥ १३ ॥ ब्रह्मराक्षसवेताला न द्रष्टुमपि तं क्षमाः । दूरादेव पलायन्ते तस्य संकीर्तनादपि ॥ १४ ॥ भूर्जपत्रे समालिख्य रोचनागुरुकुङ्कुमैः । रविवारे च संक्रांत्यां सप्तम्यां च विशेषतः । धारयेत्साधकश्रेष्ठः श्रीसूर्यस्य प्रियो भवेत् ॥ १५ ॥ त्रिलोहमध्यगं कृत्वा धारयेद्दक्षिणे करे । शिखायामथवा कण्ठे सोपि सूर्यो न संशयः ॥ १६ ॥ इति ते कथितं साम्ब त्रैलोक्यमङ्गलाभिधम् । कवचं दुर्लभं लोके तव स्नेहात्प्रकाशितम् ॥ १७ ॥ अज्ञात्वा कवचं दिव्यं यो जपेत्सूर्यमुत्तमम् । सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ १८ ॥

इति श्रीब्रह्मयामले त्रैलोक्यमङ्गलं नाम सूर्यकवचं संपूर्णम् ।

---

## १५३ सूर्यकवचस्तोत्रम् ।

श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच । शृणुष्व मुनिशार्दूल सूर्यस्य कवचं शुभम् । शरीरारोग्यदं दिव्यं सर्वसौभाग्यदायकम् ॥ १ ॥ देदीप्यमानमुकुटं स्फुरन्मकरकुण्डलम् । ध्यात्वा सहस्रकिरणं स्तोत्रमेतदुदीरयेत् ॥ २ ॥



शिरो मे भास्करः पातु ललाटं मेऽमिततद्युतिः । नेत्रे दिनमणिः

पातु श्रवणे वासरेश्वरः ॥ ३ ॥ घ्राणं घर्मघृणिः पातु वदनं वेदवाहनः । जिह्वां मे मानदः पातु कण्ठं मे सुरवन्दितः ॥४॥ स्कन्धौ प्रभाकरः पातु वक्षः पातु जनप्रियः । पातु पादौ द्वादशात्मा सर्वाङ्गं सकलेश्वरः ॥ ५ ॥ सूर्यरक्षात्मकं स्तोत्रं लिखित्वा भूर्जपत्रके । दधाति यः करे तस्य वशगाः सर्व-सिद्धयः ॥ ६ ॥ सुस्नातो यो जपेत्सम्यग्योऽधीते स्वस्थमा-नसः । स रोगमुक्तो दीर्घायुः सुखं पुष्टिं च विन्दति ॥ ७ ॥

इति श्रीमद्याज्ञवल्क्यविरचितं सूर्यकवचस्तोत्रं संपूर्णम् ।

## १५४ आदित्यहृदयम् ।

श्रीगणेशाय नमः ॥ शतानीक उवाच । कथमादित्यमुद्यन्त-मुपतिष्ठेद्द्विजोत्तम । एतन्मे ब्रूहि विप्रेन्द्र प्रपद्ये शरणं तव ॥१॥ सुमन्तुरुवाच । इदमेव पुरा पृष्टः शङ्खचक्रगदाधरः । प्रणम्य शिरसा देवमर्जुनेन महात्मना ॥२॥ कुरुक्षेत्रे महाराज प्रवृत्ते भारते रणे । कृष्णनाथं समासाद्य प्रार्थयित्वाब्रवीदिदम् ॥३॥ अर्जुन उवाच । ज्ञानं च धर्मशास्त्राणां गुह्याद्गुह्यतरं तथा । मया कृष्ण परिज्ञातं वाङ्मयं सचराचरम् ॥४॥ सूर्यस्तुतिमयं न्यासं वक्तुमर्हसि माधव । भक्त्या पृच्छामि देवेश कथयस्व प्रसादतः ॥५॥ सूर्यभक्तिं करिष्यामि कथं सूर्यं प्रपूजयेत् । तदहं श्रोतु-मिच्छामि त्वत्प्रसादेन यादव ॥६॥ श्रीभगवानुवाच । रुद्रादि-दैवतैः सर्वैः पृष्टेन कथितं मया । वक्ष्येऽहं सूर्यविन्यासं शृणु

पाण्डव यत्नतः ॥७॥ अस्माकं यत्त्वया पृष्टमेकचित्तो भवार्जुन । तदहं संप्रवक्ष्यामि आदिमध्यावसानकम् ॥ ८ ॥ अर्जुन उवाच । नारायण सुरश्रेष्ठ पृच्छामि त्वां महायशाः । कथमादित्यमुद्यन्तमुपतिष्ठेत्सनातनम् ॥ ९ ॥ श्रीभगवानुवाच । साधु पार्थ महाबाहो बुद्धिमानसि पाण्डव । यन्मां पृच्छस्युपस्थानं तत्पवित्रं विभावसोः ॥ १० ॥ सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । सर्वरोगप्रशमनमायुर्वर्धनमुत्तमम् ॥ ११ ॥ अमित्रदमनं पार्थ संग्रामे जयवर्धनम् । वर्धनं धनपुत्राणामादित्यहृदयं शृणु ॥ १२ ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । त्रिषु लोकेषु विख्यातं निःश्रेयसकरं परम् ॥ १३ ॥ देवदेवं नमस्कृत्य प्रातरुत्थाय चार्जुन । विघ्नान्यनेकरूपाणि नश्यन्ति स्मरणादपि ॥१४॥ तस्मात्सर्वप्रयत्नेन सूर्यमावाहयेत्सदा । आदित्यहृदयं नित्यं जाप्यं तच्छृणु पाण्डव ॥ १५ ॥ यज्जपान्मुच्यते जन्तुर्दारिद्र्यादाशु दुस्तरात् । लभते च महासिद्धिं कुष्ठव्याधिविनाशिनीम् ॥ १६ ॥ अस्मिन्मन्त्रे ऋषिश्छन्दो देवता शक्तिरेव च । सर्वमेव महाबाहो कथयामि तवाग्रतः ॥ १७ ॥ मया ते गोपितं न्यासं सर्वशास्त्रप्रबोधितम् । अथ ते कथयिष्यामि उत्तमं मन्त्रमेव च ॥१८॥ ॐअस्य श्रीआदित्यहृदयस्तोत्रमन्त्रस्य । श्रीकृष्ण ऋषिः । श्रीसूर्यात्मा त्रिभुवनेश्वरो देवता । अनुष्टुप् छन्दः । हरितहयरथं दिवाकरं घृणि-

रिति बीजम्। ॐ नमो भगवते जितवैश्वानरजातवेदस इति शक्तिः। ॐ नमो भगवते आदित्याय नम इति कीलकम्। ॐ अग्निगर्भदेवता इति मन्त्रः। ॐ नमो भगवते तुभ्यमादित्याय नमो नमः। श्रीसूर्यनारायणप्रीत्यर्थं जपे विनियोगः। अथ न्यासः। ॐ ह्रां अङ्गुष्ठाभ्यां नमः। ॐ ह्रीं तर्जनीभ्यां नमः। ॐ ह्रूं मध्यमाभ्यां नमः। ॐ ह्रैं अनामिकाभ्यां नमः। ॐ ह्रौं कनिष्ठिकाभ्यां नमः। ॐ ह्रः करतलकरपृष्ठाभ्यां नमः। ॐ ह्रां हृदयाय नमः। ॐ ह्रीं शिरसे स्वाहा। ॐ ह्रूं शिखायै वषट्। ॐ ह्रैं कवचाय हुम्। ॐ ह्रौं नेत्रत्रयाय वौषट्। ॐ ह्रः अस्त्राय फट्। ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति दिग्बन्धः। अथ ध्यानम्। भास्वद्रत्नाढ्यमौलिः स्फुरदधररुचा रञ्जितश्चारुकेशो भास्वान्यो दिव्यतेजाः करकमलयुतः स्वर्णवर्णः प्रभाभिः। विश्वाकाशावकाशग्रहपतिशिखरे भाति यश्चोदयाद्रौ सर्वानन्दप्रदाता हरिहरनमितः पातु मां विश्वचक्षुः ॥१॥ पूर्वमष्टदलं पद्मं प्रणवादिप्रतिष्ठितम्। मायाबीजं दलाष्टाग्रे यन्त्रमुद्धारयेदिति ॥२॥ आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम्। मार्तण्डं तपनं चेति दलेष्वष्टसु योजयेत् ॥ ३ ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा। अमोघा विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥४॥ सर्वज्ञः सर्वगश्चैव सर्वकारणदेवता। सर्वेशं सर्वहृदयं नमामि सर्वसाक्षिणम् ॥५॥ सर्वात्मा सर्वकर्ता च सृष्टिजीवनपालकः।

हितः स्वर्गापवर्गस्य भास्करेश नमोऽस्तु ते ॥ ६ ॥ इति प्रार्थना । नमो नमस्तेऽस्तु सदा विभावसो सर्वात्मने सप्तहयाय भानवे । अनन्तशक्तिर्मणिभूषणेन ददस्व भुक्तिं मम मुक्तिमव्ययाम् ॥७॥ अर्कं तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत् । विन्यसेन्नेत्रयोः सूर्यं कर्णयोश्च दिवाकरम् ॥ ८ ॥ नासिकायां न्यसेद्भानुं मुखे वै भास्करं न्यसेत् । पर्जन्यमोष्ठयोश्चैव तीक्ष्णं जिह्वान्तरे न्यसेत् ॥ ९ ॥ सुवर्णरेतसं कण्ठे स्कन्धयोस्तिग्मतेजसम् । बाह्वोस्तु पूषणं चैव मित्रं वै पृष्ठतो न्यसेत् ॥१०॥ वरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे । हस्तावुष्णकरः पातु हृदयं पातु भानुमान् ॥ ११ ॥ उदरे तु यमं विद्यादादित्यं नाभिमण्डले । कट्यां तु विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् ॥ १२ ॥ जान्वोस्तु गोपतिं न्यस्य सवितारं तु जङ्घयोः । पादयोश्च विवस्वन्तं गुल्फयोश्च दिवाकरम् ॥ १३ ॥ बाह्यतस्तु तमोध्वंसं भगमभ्यन्तरे न्यसेत् । सर्वाङ्गेषु सहस्रांशुं दिग्विदिक्षु भगं न्यसेत् ॥१४॥ इति दिग्बन्धः । एष आदित्यविन्यासो देवानामपि दुर्लभः । इमं भक्त्या न्यसेत्पार्थ स याति परमां गतिम् ॥ १५ ॥ कामक्रोधकृतात्पापान्मुच्यते नात्र संशयः । सर्पादपि भयं नैव संग्रामेषु पथिष्वपि ॥ १६ ॥ रिपुसंघट्टकालेषु तथा घोरसमागमे । [illegible]
॥१७॥ विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवम् । शिरोरोगं

नेत्ररोगं सर्वव्याधिविनाशनम् ॥१८॥ कुष्ठव्याधिस्तथा दद्रु-रोगाश्च विविधाश्च ये । जपमानस्य नश्यन्ति शृणु भक्त्या तदर्जुन ॥१९॥ आदित्यो मन्त्रसंयुक्त आदित्यो भुवनेश्वरः । आदित्यान्नापरो देवो ह्यादित्यः परमेश्वरः ॥२०॥ आदित्य-मर्चयेद्ब्रह्मा शिव आदित्यमर्चयेत् । यदादित्यमयं तेजो मम तेजस्तदर्जुन॥२१॥आदित्यं मन्त्रसंयुक्तमादित्यं भुवनेश्वरम् । आदित्यं ये प्रपश्यन्ति मां पश्यन्ति न संशयः ॥ २२ ॥ त्रिसन्ध्यमर्चयेत्सूर्यं स्मरेद्भक्त्या तु यो नरः । न स पश्यति दारिद्र्यं जन्मजन्मनि चार्जुन ॥ २३ ॥ एतत्ते कथितं पार्थ आदित्यहृदयं मया । शृण्वन्मुक्तश्च पापेभ्यः सूर्यलोके महीयते ॥२४॥ नमो भगवते तुभ्यमादित्याय नमो नमः । आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ॥२५॥ सुवर्णः स्फटिको भानुः स्फुरितो विश्वतापनः । रविर्विश्वो महातेजा सुवर्णः सुप्रबोधकः ॥२६॥ हिरण्यगर्भस्त्रिशिरास्तपनो भास्करो रविः। मार्तण्डो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान् ॥२७॥ तमि-स्रहा भगो हंसो नासत्यश्च तमोनुदः । शुद्धो विरोचनः केशी सहस्रांशुर्महाप्रभुः ॥ २८ ॥ विवस्वान्पूषणो मृत्युर्मिहिरो जामदग्न्यजित् । घर्मरश्मिः पतङ्गश्च शरण्यो मित्रहा तपः ॥ २९ ॥ दुर्विज्ञेयगतिः शूरस्तेजोराशिर्महायशाः । शंभु-स्त्रिनयनः [illegible] कामप्रदायकः ॥ ३० ॥ अंशुमांस्तमो



देव ऋग्यजुः साम एव च । हरिदश्वस्तमोदारः सप्तसप्तिर्म-

रीचिमान् ॥ ३१ ॥ अग्निगर्भोऽदितेः पुत्रः शंभुस्तिमिरनाशनः । पूषा विश्वंभरो मित्रः सुवर्णः सुप्रतापवान् ॥३२॥ आतपी मण्डली भास्वांस्तपनः सर्वतापनः । कृतविश्वो महातेजाः सर्वरत्नमयोद्भवः ॥ ३३ ॥ अक्षरश्च क्षरश्चैव प्रभाकरविभाकरौ । चन्द्रश्चन्द्रांगदः सौम्यो हव्यकव्यप्रदायकः ॥ ३४ ॥ अङ्गारकी गदोऽगस्ती रक्ताङ्गश्चाङ्गवर्धनः । बुधो बुद्धासनो बुद्धिर्बुद्धात्मा बुद्धिवर्धनः ॥ ३५ ॥ बृहद्भानुर्बृहद्भासो बृहद्धामा बृहस्पतिः । शुक्रस्त्वं शुक्ररेतास्त्वं शुक्राङ्गः शुक्रभूषणः ॥ ३६ ॥ शनिमाञ्छनिरूपस्त्वं शनैर्गच्छसि सर्वदा । अनादिरादिरादित्यस्तेजोराशिर्महातपाः ॥ ३७ ॥ अनादिरादिरूपस्त्वमादित्यो दिक्पतिर्यमः । भानुमान् भानुरूपस्त्वं स्वर्भानुर्भानुदीप्तिमान् ॥ ३८ ॥ धूमकेतुर्महाकेतुः सर्वकेतुरनुत्तमः । तिमिरावरणः शंभुः स्रष्टा मार्तण्ड एव च ॥ ३९ ॥ नमः पूर्वाय गिरये पश्चिमाय नमो नमः । नमोत्तराय गिरये दक्षिणाय नमो नमः ॥ ४० ॥ नमो नमः सहस्रांशो ह्यादित्याय नमो नमः । नमः पद्मप्रबोधाय नमस्ते द्वादशात्मने ॥ ४१ ॥ नमो विश्वप्रबोधाय नमो भ्राजिष्णुजिष्णवे । ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो नमः ॥ ४२ ॥ प्रदीप्ताय प्रगल्भाय युगान्ताय नमो नमः । नमस्ते होतृपतये पृथिवीपतये नमः ॥ ४३ ॥ नमोंकार वषट्कार सर्वयज्ञ नमोऽस्तु ते । ऋग्वेदाय यजुर्वेद सामवेद नमोऽस्तु

ते ॥ ४४ ॥ नमो हाटकवर्णाय भास्कराय नमो नमः । जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ४५ ॥ दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः । नमस्ते शुचये नित्यं नमः कुरुकुलात्मने ॥ ४६ ॥ नमस्त्रैलोक्यनाथाय भूतानां पतये नमः । नमः कैवल्यनाथाय नमस्ते दिव्यचक्षुषे ॥ ४७ ॥ त्वं ज्योतिस्त्वं द्युतिर्ब्रह्मा त्वं विष्णुस्त्वं प्रजापतिः । त्वमेव रुद्रो रुद्रात्मा वायुरग्निस्त्वमेव च ॥ ४८ ॥ योजनानां सहस्रे द्वे शते द्वे द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ॥ ४९ ॥ नवयोजनलक्षाणि सहस्रद्विशतानि च । यावद्घटीप्रमाणेन क्रममाण नमोऽस्तु ते ॥ ५० ॥ अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः । पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा ॥ ५१ ॥ नमः सुरारिहन्त्रे च सोमसूर्याग्नि-चक्षुषे । नमो दिव्याय व्योमाय सर्वतन्त्रमयाय च ॥ ५२ ॥ नमो वेदान्तवेद्याय सर्वकर्मादिसाक्षिणे । नमो हरितवर्णाय सुवर्णाय नमो नमः ॥ ५३ ॥ अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा । चैत्रमासे तु वेदाङ्गो भानुर्वैशाखतापनः ॥ ५४ ॥ ज्येष्ठमासे तपेदिन्द्र आषाढे तपते रविः । गभस्तिः श्रावणे मासि यमो भाद्रपदे तथा ॥ ५५ ॥ इषे सुवर्णरेताश्च कार्तिके च दिवाकरः । मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः ॥ ५६ ॥ पुरुषस्त्वधिके मासि मासाधिक्ये तु कल्पयेत् । इत्येते द्वादशादित्याः काश्यपेयाः

प्रकीर्तिताः ॥ ५७ ॥ उग्ररूपा महात्मानस्तपन्ते विश्वरूपिणः । धर्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप ॥ ५८ ॥ सर्वपापहरं चैवमादित्यं संप्रपूजयेत् । एकधा दशधा चैव शतधा च सहस्रधा ॥ ५९ ॥ तपन्ते विश्वरूपेण सृजन्ति संहरन्ति च । एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥ ६० ॥ महेन्द्रश्चैव कालश्च यमो वरुण एव च । नक्षत्रग्रहताराणामधिपो विश्वतापनः ॥ ६१ ॥ वायुरग्निर्धनाध्यक्षो भूतकर्ता स्वयं प्रभुः । एष देवो हि देवानां सर्वमाप्यायते जगत् ॥ ६२ ॥ एष कर्ता हि भूतानां संहर्ता रक्षकस्तथा । एष लोकानुलोकाश्च सप्तद्वीपाश्च सागराः ॥ ६३ ॥ एष पातालसप्तस्था दैत्यदानवराक्षसाः । एष धाता विधाता च बीजं क्षेत्रं प्रजापतिः ॥ ६४ ॥ एक एव प्रजा नित्यं संवर्धयति रश्मिभिः । एष यज्ञः स्वधा स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः ॥ ६५ ॥ एष भूतात्मको देवः सूक्ष्मोऽव्यक्तः सनातनः । ईश्वरः सर्वभूतानां परमेष्ठी प्रजापतिः ॥ ६६ ॥ कालात्मा सर्वभूतात्मा वेदात्मा विश्वतोमुखः । जन्ममृत्युजराव्याधिसंसारभयनाशनः ॥ ६७ ॥ दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः । कीर्तनीयो विवस्वांश्च मार्तण्डो भास्करो रविः ॥ ६८ ॥ लोकप्रकाशकः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः । लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा ॥ ६९ ॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः । गभस्तिहस्तो ब्रह्मण्यः सर्वदेवनमस्कृतः ॥ ७० ॥

आयुरारोग्यमैश्वर्यं नरा नार्यश्च मन्दिरे । यस्य प्रसादात्संतुष्टिरादित्यहृदयं जपेत् ॥ ७१ ॥ इत्येतैर्नामभिः पार्थ आदित्यं स्तौति नित्यशः । प्रातरुत्थाय कौन्तेय तस्य रोगभयं नहि ७२ पातकान्मुच्यते पार्थ व्याधिभ्यश्च न संशयः । एकसंध्यं द्विसंध्यं वा सर्वपापैः प्रमुच्यते ॥ ७३ ॥ त्रिसंध्यं जपमानस्तु पश्येच्च परमं पदम् । यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते ॥ ७४ ॥ यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते । दद्रुस्फोटककुष्ठानि मण्डलानि विषूचिका ॥ ७५ ॥ सर्वव्याधिमहारोगभूतबाधास्तथैव च । डाकिनी शाकिनी चैव महारोगभयं कुतः ॥ ७६ ॥ ये चान्ये दुष्टरोगाश्च ज्वरातीसारकादयः । जपमानस्य नश्यन्ति जीवेच्च शरदां शतम् ॥ ७७ ॥ संवत्सरेण मरणं यदा तस्य ध्रुवं भवेत् । अशीर्षा पश्यति च्छायामहोरात्रं धनंजय ॥ ७८ ॥ यस्त्विदं पठते भक्त्या भानोर्वारे महात्मनः । प्रातःस्नाने कृते पार्थ एकाग्रकृतमानसः ॥ ७९ ॥ सुवर्णचक्षुर्भवति न चान्धस्तु प्रजायते । पुत्रवान्धनसंपन्नो जायते चारुजः सुखी ॥ ८० ॥ सर्वसिद्धिमवाप्नोति सर्वत्र विजयी भवेत् । आदित्यहृदयं पुण्यं सूर्यनामविभूषितम् ॥ ८१ ॥ श्रुत्वा च निखिलं पार्थ सर्वपापैः प्रमुच्यते । अतः परतरं नास्ति सिद्धिकामस्य पाण्डव ॥ ८२ ॥ एतज्जपस्व कौन्तेय येन श्रेयो ह्यवाप्स्यसि । आदित्यहृदयं नित्यं यः पठेत्सुसमाहितः ॥ ८३ ॥ भ्रूणहा मुच्यते

पापात्कृतघ्नो ब्रह्मघातकः । गोघ्नः सुरापो दुर्भोजी दुष्प्रतिग्रहकारकः ॥ ८४ ॥ पातकानि च सर्वाणि दहत्येव न संशयः । य इदं शृणुयान्नित्यं जपेद्वाऽपि समाहितः ॥ ८५ ॥ सर्वपापविशुद्धात्मा सूर्यलोके महीयते । अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् ॥ ८६ ॥ कुरोगी मुच्यते रोगाद्भक्त्या यः पठते सदा । यस्त्वादित्यदिने पार्थ नाभिमात्रजले स्थितः ॥८७॥ उदयाचलमारूढं भास्करं प्रणतः स्थितः । जपते मानवो भक्त्या शृणुयाद्वापि भक्तितः ॥८८॥ स याति परमं स्थानं यत्र देवो दिवाकरः । अमित्रदमनं पार्थ यदा कर्तुं समारभेत् ॥ ८९ ॥ तदा प्रतिकृतिं कृत्वा शत्रोश्चरणपांसुभिः । आक्रम्य वामपादेन ह्यादित्यहृदयं जपेत् ॥ ९० ॥ एतन्मन्त्रं समाहूय सर्वसिद्धिकरं परम् । ॐ ह्रीं हिमालीढं स्वाहा । ॐ ह्रीं निलीढं स्वाहा । ॐ ह्रींमालीढं स्वाहा । इति मन्त्रः । त्रिभिश्च रोगी भवति ज्वरी भवति पञ्चभिः । जपैस्तु सप्तभिः पार्थ राक्षसीं तनुमाविशेत् ॥ ९१ ॥ राक्षसेनाभिभूतस्य विकारान्शृणु पाण्डव । गीयते नृत्यते नग्न आस्फोटयति धावति ॥ ९२ ॥ शिवारुतं च कुरुते हसते क्रन्दते पुनः । एवं संपीड्यते पार्थ यद्यपि स्यान्महेश्वरः ॥ ९३ ॥ किं पुनर्मानुषः कश्चिच्छौचाचारविवर्जितः । पीडितस्य न संदेहो ज्वरो भवति दारुणः ॥ ९४ ॥ यदा चानुग्रहं तस्य कर्तुमिच्छेच्छुभंकरम् । तदा सलिलमादाय जपेन्मन्त्रमिमं बुधः

॥ ९५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः । जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ९६ ॥ स्नापयेत्तेन मन्त्रेण शुभं भवति नान्यथा । अन्यथा च भवेद्दोषो नश्यते नात्र संशयः ॥ ९७ ॥ अतस्ते निखिलः प्रोक्तः पूजां चैव निबोध मे । उपलिप्ते शुचौ देशे नियतो वाग्यतः शुचिः ॥ ९८ ॥ वृत्तं वा चतुरस्रं वा लिप्तभूमौ लिखेच्छुचि । त्रिधा तत्र लिखेत्पद्ममष्टपत्रं सकर्णिकम् ॥ ९९ ॥ अष्टपत्रं लिखेत्पद्मं लिप्तगोमयमण्डले । पूर्वपत्रे लिखेत्सूर्यमाग्नेय्यां तु रविं न्यसेत् ॥ १०० ॥ याम्यायां च विवस्वन्तं नैर्ऋत्यां तु भगं न्यसेत् । प्रतीच्यां वरुणं विद्याद्वायव्यां मित्रमेव च ॥ १ ॥ आदित्यमुत्तरे पत्रे ईशान्यां मित्रमेव च । मध्ये तु भास्करं विद्यात्क्रमेणैवं समर्चयेत् ॥२॥ अतः परतरं नास्ति सिद्धि-कामस्य पाण्डव । महातेजः समुद्यन्तं प्रणमेत्स कृताञ्जलिः ॥ ३ ॥ सकेसराणि पद्मानि करवीराणि चार्जुन । तिल-तण्डुलयुक्तानि कुशगन्धोदकानि च ॥४॥ रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने । धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं स्पृशेत् ॥ ५ ॥ मन्त्रपूतं गुडाकेश चार्घ्यं दद्याद्गभ-स्तये । सायुधं सरथं चैव सूर्यमावाहयाम्यहम् ॥ ६ ॥ स्वागतो भव । सुप्रतिष्ठितो भव । संनिधो भव । संनिहितो भव । संमुखो भव । इति पञ्च मुद्राः । स्फुटयित्वार्कयेत्ससां भुक्तिं मुक्तिं लभेन्नरः ॥ ७ ॥ ॐश्रीं त्रियाकिलिकिलिकट-

क्लेंदृसर्वार्थसाधनाय स्वाहा । ॐश्रीं ह्रीं हूं हंसः सूर्याय नमः स्वाहा । ॐश्रीं ह्रां ह्रीं हूं हः सूर्यमूर्तये स्वाहा । ॐश्रीं ह्रीं ह्रीं खं खः लोकाय सर्वमूर्तये स्वाहा । ॐ हूं मार्तण्डाय स्वाहा । नमोऽस्तु सूर्याय सहस्रभानवे नमोस्तु वैश्वानरजातवेदसे । त्वमेव चार्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते ॥ ८ ॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे । दत्तमर्घ्यं मया भानो त्वं गृहाण नमोस्तु ते ॥ ९ ॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां देव गृहाणार्घ्यं नमोऽस्तु ते ॥ ११० ॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे । ममेदमर्घ्यं गृह्ण त्वं देवदेव नमोऽस्तु ते ॥११॥ सर्वदेवाधिदेवाय आधिव्याधिविनाशिने । इदं गृहाण मे देव सर्वव्याधिर्विनश्यतु ॥ १२ ॥ नमः सूर्याय शान्ताय सर्वरोगविनाशिने । ममेप्सितं फलं दत्त्वा प्रसीद परमेश्वर ॥१३॥ ॐनमो भगवते सूर्याय स्वाहा । ॐशिवाय स्वाहा । ॐसर्वात्मने सूर्याय नमः स्वाहा । ॐअक्षय्यतेजसे नमः स्वाहा । सर्वसङ्कटदारिद्र्यं शत्रुं नाशय नाशय । सर्वलोकेषु विश्वात्मन्सर्वात्मन्सर्वदर्शक ॥१४॥ नमो भगवते सूर्य कुष्ठरोगान्विखण्डय । आयुरारोग्यमैश्वर्यं देहि देव नमोस्तु ते ॥ १५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः । ॐअक्षय्यतेजसे नमः । ॐसूर्याय नमः । ॐविश्वमूर्तये नमः । आदित्यं च शिवं विद्याच्छिवमादित्यरूपिणम् । उभयोरन्तरं

नास्ति आदित्यस्य शिवस्य च ॥ १६ ॥ एतदिच्छाम्यहं
श्रोतुं पुरुषो वै दिवाकरः । उदये ब्रह्मणो रूपं मध्याह्ने तु
महेश्वरः ॥ १७ ॥ अस्तमाने स्वयं विष्णुस्त्रिमूर्तिश्च दिवा-
करः । नमो भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥ १८ ॥
ममेदमर्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते । श्रीसू-
र्यनारायणाय साङ्गाय सपरिवाराय इदमर्घ्यं समर्पयामि
॥१९॥ हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः । कृताघ्नघ्नाय
सत्याय तस्मै सूर्यात्मने नमः ॥ १२० ॥ जयोऽजयश्च विजयो
जितप्राणो जितश्रमः । मनोजवो जितक्रोधो वाजिनः सप्त
कीर्तिताः ॥ २१ ॥ हरितहयरथं दिवाकरं कनकमयाम्बुज-
रेणुपिञ्जरम् । प्रतिदिनमुदये नवं नवं शरणमुपैमि हिरण्य-
रेतसम् ॥२२॥ न तं व्यालाः प्रबाधन्ते न व्याधिभ्यो भयं
भवेत् । न नागेभ्यो भयं चैव न च भूतभयं क्वचित् ॥२३॥
अग्निशत्रुभयं नास्ति पार्थिवेभ्यस्तथैव च । दुर्गतिं तरते
घोरां प्रजां च लभते पशून् ॥२४॥ सिद्धिकामो लभेत्सिद्धिं
कन्याकामस्तु कन्यकाम् । एतत्पठेत्स कौन्तेय भक्तियुक्तेन
चेतसा ॥ २९ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
कन्याकोटिसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ २६ ॥ इदमा-
दित्यहृदयं योऽधीते सततं नरः । सर्वपापविशुद्धात्मा सूर्य-
लोके महीयते ॥ २७ ॥ नास्त्यादित्यसमो देवो नास्त्यादि-

त्यसमा गतिः । प्रत्यक्षो भगवान्विष्णुर्येन विश्वं प्रतिष्ठितम्

॥२८॥ नवतिर्योजनं लक्षं सहस्राणि शतानि च । यावद्घटीप्रमाणेन तावच्चरति भास्करः॥२९॥गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् । तत्फलं लभते विद्वान् शान्तात्मा स्तौति यो रविम्॥१३०॥ योऽधीते सूर्यहृदयं सकलं सफलं भवेत् । अष्टानां ब्राह्मणानां च लेखयित्वा समर्पयेत्॥३१॥ ब्रह्मलोके ऋषीणां च जायते मानुषोऽपि वा । जातिस्मरत्वमाप्नोति शुद्धात्मा नात्र संशयः ॥ ३२ ॥ अजाय लोकत्रयपावनाय भूतात्मने गोपतये वृषाय । सूर्याय सर्वप्रलयान्तकाय नमो महाकारुणिकोत्तमाय ॥ ३३ ॥ विवस्वते ज्ञानभृदन्तरात्मने जगत्प्रदीपाय जगद्धितैषिणे । स्वयंभुवे दीप्तसहस्रचक्षुषे सुरोत्तमायामिततेजसे नमः ॥ ३४ ॥ सुरैरनेकैः परिसेविताय हिरण्यगर्भाय हिरण्मयाय । महात्मने मोक्षपदाय नित्यं नमोऽस्तु ते वासरकारणाय ॥३५॥ आदित्यश्चार्चितो देव आदित्यः परमं पदम् । आदित्यो मातृको भूत्वा ह्यादित्यो वाङ्मयं जगत् ॥ ३६ ॥ आदित्यं पश्यते भक्त्या मां पश्यति ध्रुवं नरः । नादित्यं पश्यते भक्त्या न स पश्यति मां नरः ॥३७॥ त्रिगुणं च त्रितत्त्वं च त्रयो देवास्त्रयोऽग्नयः । त्रयाणां च त्रिमूर्तिस्त्वं तुरीयस्त्वं नमोऽस्तु ते । ॥ ३८ ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशंकरात्मने ॥ ३९ ॥ यस्योदयेनेह जगत्प्रबुध्यते प्रवर्तते

चाखिलकर्मसिद्धये । ब्रह्मेन्द्रनारायणरुद्रवन्दितः स नः सदा यच्छतु मङ्गलं रविः ॥ ४० ॥ नमोऽस्तु सूर्याय सहस्ररश्मये सहस्रशाखान्वितसंभवात्मने । सहस्रयोगोद्भवभावभागिने सहस्रसंख्यायुगधारिणे नमः ॥ ४१ ॥ यन्मण्डलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् । दारिद्र्यदुःखक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ ४२ ॥ यन्मण्डलं देवगणैः सुपूजितं विप्रैः स्तुतं भावनमुक्तिकोविदम् । तं देवदेवं प्रणमामि सूर्यं पुनातु मां त० ॥ ४३ ॥ यन्मण्डलं ज्ञानघनं त्वगम्यं त्रैलोक्यपूज्यं त्रिगुणात्मरूपम् । समस्ततेजोमयदिव्यरूपं पुनातु मां त० ॥ ४४ ॥ यन्मण्डलं गूढमतिप्रबोधं धर्मस्य वृद्धिं कुरुते जनानाम् । यत्सर्वपापक्षयकारणं च पुनातु मां त० ॥ ४५ ॥ यन्मण्डलं व्याधिविनाशदक्षं यदृग्यजुःसामसु संप्रगीतम् । प्रकाशितं येन च भूर्भुवःस्वः पुनातु मां त० ॥ ४६ ॥ यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः । यद्योगिनो योगजुषां च संघाः पुनातु मां त० ॥ ४७ ॥ यन्मण्डलं सर्वजनेषु पूजितं ज्योतिश्च कुर्यादिह मर्त्यलोके । यत्कालकालादिमनादिरूपं पुनातु मां त० ॥ ४८ ॥ यन्मण्डलं विष्णुचतुर्मुखाख्यं यदक्षरं पापहरं जनानाम् । यत्कालकल्पक्षयकारणं च पुनातु मां त० ॥ ४९ ॥ यन्मण्डलं विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम् । यस्मिञ्जगत्संहरतेऽखिलं च

पुनातु मां त० ॥१५०॥ यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम् । सूक्ष्मान्तरैर्योगपथानुगम्यं पुनातु मां त० ॥५१॥ यन्मण्डलं ब्रह्मविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः । यन्मण्डलं वेदविदः स्मरन्ति पुनातु मां त० ॥ ५२ ॥ यन्मण्डलं वेदविदोपगीतं यद्योगिनां योगपथानुगम्यम् । तत्सर्ववेदं प्रणमामि सूर्यं पुनातु मां त० ॥ ५३ ॥ मण्डलाष्टमिदं पुण्यं यः पठेत्सततं नरः । सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥ ५४ ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः । केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ५५ ॥ सशङ्खचक्रं रविमण्डले स्थितं कुशेशयाक्रान्तमनन्तमच्युतम् । भजामि बुद्ध्या तपनीयमूर्तिं सुरोत्तमं चित्रविभूषणोज्ज्वलम् ॥ ५६ ॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ ५७ ॥ वेदवेदाङ्गशरीरं दिव्यदीप्तिकरं परम् । रक्षोघ्नं रक्तवर्णं च सृष्टिसंहारकारकम् ॥ ५८ ॥ एकचक्रो रथो यस्य दिव्यः कनकभूषितः । स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ॥ ५९ ॥ आदित्यः प्रथमं नाम द्वितीयं तु दिवाकरः । तृतीयं भास्करः प्रोक्तं चतुर्थं तु प्रभाकरः ॥ १६० ॥ पञ्चमं तु सहस्रांशुः षष्ठं चैव त्रिलोचनः । सप्तमं हरिदश्वश्च अष्टमं तु विभावसुः ॥ ६१ ॥ नवमं दिनकृत्प्रोक्तं

दशमं द्वादशात्मकम् । एकादशं त्रयीमूर्तिर्द्वादशं सूर्य एव च ॥ ६२ ॥ द्वादशादित्यनामानि प्रातःकाले पठेन्नरः । दुःखप्रणाशनं चैव सर्वदुःखं च नश्यति ॥ ६३ ॥ दद्रुकुष्ठहरं चैव दारिद्र्यं हरते ध्रुवम् । सर्वतीर्थप्रदं चैव सर्वकामप्रवर्धनम् ॥ ६४ ॥ यः पठेत्प्रातरुत्थाय भक्त्या नित्यमिदं नरः । सौख्यमायुस्तथाऽऽरोग्यं लभते मोक्षमेव च ॥ ६५ ॥ अग्निमीळे नमस्तुभ्यमिषेत्वोर्जस्वरूपिणे । अग्न आयाहि वीतस्त्वं नमस्ते ज्योतिषां पते ॥ ६६ ॥ शन्नो देवि नमस्तुभ्यं जगच्चक्षुर्नमोऽस्तु ते । पञ्चमायोपवेदाय नमस्तुभ्यं नमो नमः ॥ ६७ ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथसंयुक्तो द्विभुजः स्यात्सदा रविः ॥ ६८ ॥ आदित्यस्य नमस्कारं ये कुर्वन्ति दिने दिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥६९॥ उदयगिरिमुपेतं भास्करं पद्महस्तं निखिलभुवननेत्रं रत्नरत्नोपमेयम् । तिमिरकरिमृगेन्द्रं बोधकं पद्मिनीनां सुरवरमभिवन्दे सुन्दरं विश्ववन्द्यम् ॥ १७० ॥

इति श्रीभविष्योत्तरपुराणे श्रीकृष्णार्जुनसंवादे आदित्यहृदयस्तोत्रं संपूर्णम् ।

---

## १५५ आदित्यहृदयम् ।

श्रीगणेशाय नमः ॥ ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् । रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥१॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् । उपगम्याब्रवीद्राम-मगस्त्यो भगवाँस्तदा ॥ २ ॥ राम राम महाबाहो शृणु गुह्यं सनातनम् । येन सर्वानरीन्वत्स समरे विजयिष्यसे ॥ ३ ॥ आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् । जयावहं जपेन्नित्यमक्षयं परमं शिवम् ॥ ४ ॥ सर्वमङ्गलमाङ्गल्यं सर्व-पापप्रणाशनम् । चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥५॥ रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् । पूजयस्व विव-स्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥ सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः । एष देवासुरगणाल्लोकान्पातु गभ-स्तिभिः ॥ ७ ॥ एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजा-पतिः । महेन्द्रो धनदः कालो यमः सोमो ह्यपांपतिः ॥८॥ पितरो वसवः साध्या अश्विनौ मरुतो मनुः । वायुर्वह्निः प्रजाप्राणा ऋतुकर्ता प्रभाकरः ॥ ९ ॥ आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णस्तपनो भानुः स्वर्ण-रेता दिवाकरः ॥ १० ॥ हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरी-चिमान् । तिमिरोन्मथनः शंभुस्त्वष्टा मार्तण्डकोंऽशुमान् ॥११॥ हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः । अग्नि-गर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः ॥ १२ ॥ व्योमनाथ-स्तमोभेदी ऋग्यजुःसामपारगः । धनवृष्टिरपांमित्रो विन्ध्य-वीथी प्लवङ्गमः ॥ १३ ॥ आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः । कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः ॥१४॥

नक्षत्रग्रहताराणामधिपो विश्वभावनः। तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५ ॥ नमः पूर्वाय गिरये पश्चिमायाद्रये नमः। ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥ जयाय जयभद्राय हर्यश्वाय नमो नमः। नमो नमः सहस्रांशो आदित्याय नमो नमः॥ १७ ॥ नम उग्राय वीराय सारङ्गाय नमो नमः। नमः पद्मप्रबोधाय प्रचण्डाय नमोस्तु ते ॥ १८ ॥ ब्रह्मेशानाच्युतेशाय सूरायादित्यवर्चसे। भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥ तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने। कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥ तप्तचामीकराभाय हरये विश्वकर्मणे। नमस्तमोऽभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥ नाशयत्येष वै भूतं तदेव सृजति प्रभुः। पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥२२॥ ॥ एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः। एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥२३॥ देवाश्च क्रतवश्चैव क्रतूनां फलमेव च। यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ॥२४॥ एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च। कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥ पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम्। एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥ अस्मिन्क्षणे महाबाहो रावणं त्वं जहिष्यसि। एवमुक्त्वा ततोऽगस्त्यो

जगाम स यथागतम् ॥ २७ ॥ एतच्छ्रुत्वा महातेजा नष्ट-शोकोऽभवत्तदा । धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥ आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान् । त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥ रावणं प्रेक्ष्य हृष्टात्मा युद्धार्थं समुपागमत् । सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३० ॥ अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः । निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥

इत्यार्षे आदित्यहृदयस्तोत्रं समाप्तम् ।

## १५६ सूर्याष्टकम् ।

श्रीगणेशाय नमः ॥ प्रभाते यस्मिन्नभ्युदितसमये कर्मसु नृणां प्रवर्तन्ते चेतो गतिरपि च शीतापहरणम् । गतो मैत्र्यं पृथ्वीसुरकुलपतेर्यश्च तमहं नमामि श्रीसूर्यं तिमिरहरणं शान्तशरणम् ॥ १ ॥ त्रिनेत्रोऽप्यञ्जल्या सुरमुकुटसंघृष्टचरणो बलिं नीत्वा नित्यं स्तुतिमुदितकालास्तसमये । निधानं यस्यायं कुरुत इति धाम्नामधिपतिर्नमामि० ॥ २॥ मृगाङ्के मूर्तिस्त्वं ह्यमरगणभर्ताकृत इति नृणां वर्त्मात्मात्मेक्षिणितविदुषां यश्च यजताम् । क्रतुर्लोकानां यो लयभरभवेषु प्रभुरयं नमामि० ॥ ३ ॥ दिशः खं कालो भूरुदधिरचलं चाक्षुषमिदं विभागो येनायं निखिलमहसा दीपयति तान् । स्वयं शुद्धं संविनि-

रतिशयमानन्दमजरं नमामि० ॥४॥ नृपात्पञ्चस्थेत्यौढयति दिनमामन्दगमनस्तथा वृद्धिं रात्रैः प्रकटयति कीटाज्जव-गतिः। तुले मेषे यातो रचयति समानं दिननिशं नमामि० ॥ ५ ॥ वहन्ते यं ह्यश्वा अरुणविनियुक्ताः प्रमुदितास्त्रयी-रूपं साक्षाद्दधति च रथं मुक्तिसदनम्। न जीवानां यं वै विषयति मनो वागवसरो नमामि० ॥६॥ तथा ब्रह्मा नित्यं मुनिजनयुता यस्य पुरतश्चलन्ते नृत्यन्तोऽयुतमुत रसेनानु-गुणितम्। निबध्नन्तो नागा रथमपि च नागायुतबला नमामि० ॥ ७ ॥ प्रभाते ब्रह्माणं शिवतनुभृतं मध्यदिवसे तथा सायं विष्णुं जगति हितकारी सुखकरम्। सदा तेजो-राशिं त्रिविधमथ पापौघशमनं नमामि० ॥८॥ मतं शास्त्राणां यत्तदनु रघुनाथेन रचितं शुभं चुंराग्रामे तिमिरहरसूर्याष्टक-मिदम्। त्रिसंध्यायां नित्यं पठति मनुजोऽनन्यगतिमांश्चतु-र्वर्गप्राप्तौ प्रभवति सदा तस्य विजयम् ॥ ९ ॥ नन्देन्द्वङ्क-क्षितावब्दे ( १९१९ ) मार्गमासे शुभे दले। सूर्याष्टकमिदं प्रोक्तं दशम्यां रविवासरे ॥ १० ॥

इति श्रीपण्डितरघुनाथशर्मणा विरचितं श्रीसूर्याष्टकं संपूर्णम्।

---

## १५७ सूर्याष्टकम्।

श्रीगणेशाय नमः ॥ साम्ब उवाच। आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर। दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु

ते ॥ १ ॥ सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् । श्वेत-पद्मधरं देवं तं सूर्यं प्रणमाम्यहम् ॥ २ ॥ लोहितं रथमा-रूढं सर्वलोकपितामहम् । महापापहरं देवं तं० ॥ ३ ॥ त्रैगुण्यं च महाशूरं ब्रह्मविष्णुमहेश्वरम् । महापापहरं देवं तं० ॥ ४ ॥ बृंहितं तेजःपुञ्जं च वायुराकाशमेव च । प्रभुस्त्वं सर्वलोकानां तं० ॥ ५ ॥ बन्धूकपुष्पसंकाशं हारकुण्डलभू-षितम् । एकचक्रधरं देवं तं० ॥ ६ ॥ तं सूर्यं जगत्कर्तारं महातेजःप्रदीपनम् । महापापहरं देवं तं० ॥ ७ ॥ तं सूर्यं जगतां नाथं ज्ञानविज्ञानमोक्षदम् । महापापहरं देवं तं० ॥ ८ ॥ सूर्याष्टकं पठेन्नित्यं ग्रहपीडाप्रणाशनम् । अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत् ॥ ९ ॥ आमिषं मधुपानं च यः करोति रवेर्दिने । सप्तजन्म भवेद्रोगी जन्मजन्मद-रिद्रता ॥ १० ॥ स्त्रीतैलमधुमांसानि यस्त्यजेत्तु रवेर्दिने । न व्याधिशोकदारिद्र्यं सूर्यलोकं स गच्छति ॥ ११ ॥

इति श्रीशिवप्रोक्तं सूर्याष्टकं समाप्तम् ।

## १५८ सूर्यार्यास्तोत्रम् ।

श्रीगणेशाय नमः ॥ शुकतुण्डच्छवि सवितुश्चण्डरुचेः पुण्डरीकवनबन्धोः । मण्डलमुदितं वन्दे कुण्डलमाखण्डला-शायाः ॥ १ ॥ यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणक-मलोऽपि । कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः

॥ २ ॥ उदयाचलतिलकाय प्रणतोऽस्मि विवस्वते ग्रहेशाय। अम्बरचूडामणये दिग्वनिताकर्णपूराय ॥३॥ जयति जनानन्दकरः करनिकरनिरस्ततिमिरसंघातः। लोकालोकालोकः कमलारुणमण्डलः सूर्यः ॥ ४ ॥ प्रतिबोधितकमलवनः कृतघटनश्चक्रवाकमिथुनानाम्। दर्शितसमस्तभुवनः परहितनिरतो रविः सदा जयति ॥ ५ ॥ अपनयतु सकलकलिकृतमलपटलं सुप्रतप्तकनकाभः। अरविन्दवृन्दविघटनपटुतरकिरणोत्करः सविता ॥ ६ ॥ उदयाद्रिचारुचामर हरितहयखुरपरिहतरेणुराग। हरितहय हरितपरिकर गगनाङ्गनदीपक नमस्ते ॥ ७ ॥ उदितवति त्वयि विकसति मुकुलीयति समस्तमस्तमितबिम्बे। नह्यन्यस्मिन्दिनकर सकलं कमलायते भुवनम् ॥ ८ ॥ जयति रविरुदयसमये बालातपः कनकसंनिभो यस्य। कुसुमाञ्जलिरिव जलधौ तरन्ति रथसप्तयः सप्त ॥ ९ ॥ आर्याः साम्बपुरे सप्त आकाशात्पतिता भुवि। यस्य कण्ठे गृहे वापि न स लक्ष्म्या वियुज्यते ॥ १० ॥ आर्याः सप्त सदा यस्तु सप्तम्यां सप्तधा जपेत्। तस्य गेहं च देहं च पद्मा सत्यं न मुञ्चति ॥११॥ निधिरेष दरिद्राणां रोगिणां परमौषधम्। सिद्धिः सकलकार्याणां गाथेयं संस्मृता रवेः॥ १२ ॥



इति श्रीयाज्ञवल्क्यविरचितं सूर्यार्यास्तोत्रं संपूर्णम्।

## १५९ सूर्यस्तोत्रम्।

श्रीगणेशाय नमः ॥ ॐनमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि च आकाश इव उपाधिनाऽव्यवधीयमानो भगवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ १ ॥ यदुह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनभगवतः समभिधीमहि तपनमण्डलम् ॥ २ ॥ य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणानात्मनः स्वयंमात्मान्तर्यामी प्रचोदयति ॥ ३ ॥ य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रहगिलितं संमृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिकवीक्षयैवोत्थाप्याऽहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिव असाधूनां भयमुदीरयन्नटति ॥४॥ परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥५॥ अथ ह भगवंस्तव चरणनलिनयुगुलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ६ ॥

इति श्रीमद्भागवतद्वादशस्कन्धान्तर्गतं सूर्यस्तोत्रं संपूर्णम्।

## १६० सूर्याष्टकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ सप्ताश्वं समारूढ्यारुणसारथिमु-त्तमम् । श्वेतपद्मधरं देवं त्वां सूर्यं प्रणमाम्यहम् ॥ १ ॥ बन्धूकपुष्पसंकाशं हारकुण्डलभूषणम् । एकचक्रधरं देवं त्वां सू० ॥ २ ॥ लोहितस्वर्णसंकाशं सर्वलोकपितामहम् । सर्व-व्याधिहरं देवं त्वां सू० ॥ ३ ॥ त्वं देव ईश्वरः शक्रब्रह्म-विष्णुमहेश्वराट् । परं धर्मं परं ज्ञानं त्वां सू० ॥ ४ ॥ त्वं देवलोककर्ता च कीर्त्यात्मा करुणांशकम् । तेजो रुद्रधरं देवं त्वां सू० ॥ ५ ॥ त्वं पृथिव्यप्तेजो वायुश्चात्माप्याकाशमेव च । सर्वज्ञं श्रीजगन्नाथं त्वां सू० ॥ ६ ॥ अखण्डमण्डला-कारं व्याप्तं येन चराचरम् । गगनलिङ्गमाराध्यं त्वां सू० ॥ ७ ॥ निर्मलं निर्विकल्पं च निर्विकारं निरामयम् । जग-त्कर्ता जगद्धर्तस्त्वां सू० ॥ ८ ॥ सूर्यस्तोत्रं जपेन्नित्यं ग्रह-पीडाविनाशनम् । धनं धान्यं मनोवाञ्छां श्रियः प्राप्नोति नित्यशः ॥ ९ ॥ शिवरात्रीसहस्रेषु कृत्वा जागरणं भवेत् । यत्फलं लभते सर्वं तद्वै सूर्यस्य दर्शनात् ॥ १० ॥ एकाद-शीसहस्राणि संक्रान्त्ययुतमेव च । सप्तकोटिसुदर्शेषु तत्फलं सूर्यदर्शनात् ॥११॥ अश्वमेधसहस्राणि वाजपेयशतानि च । कोटिकन्याप्रदानानि तत्फलं सूर्यदर्शनात् ॥ १२ ॥ गया-पिण्डः परं दाने पितॄणां च समुद्धरम् । दृष्ट्वा ह्यर्घ्येश्वरं देवं



तत्फलं समवाप्नुयात् ॥ १३ ॥ अर्घ्येश्वरसमोपेतो सोमना-

धस्तथैव च । केदारमुदकं पीत्वा पुनर्जन्म न विद्यते ॥१४॥ सूर्यस्तोत्रं पठेन्नित्यमेकचित्तः समाहितः । दुःखदारिद्र्यनिर्मुक्तः सूर्यलोकं स गच्छति ॥ १५ ॥

इति श्रीसूर्याष्टकस्तोत्रं संपूर्णम् ।

## १६१ सूर्याष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजञ्छुचिर्भूत्वा समाहितः । क्षणं च कुरु राजेन्द्र गुह्यं वक्ष्यामि ते हितम् ॥ १ ॥ धौम्येन तु यथा प्रोक्तं पार्थाय सुमहात्मने । नाम्नामष्टोत्तरं पुण्यं शतं तच्छृणु भूपते ॥२॥ सूर्योऽर्यमा भगस्त्वष्टा पूषाऽर्कः सविता रविः । गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ ३ ॥ पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् । सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥४॥ इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः । ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥५॥ वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः । धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ६ ॥ कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः । कला काष्ठा मुहूर्तश्च क्षपा यामस्तथा क्षणः ॥ ७ ॥ संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः । पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ८ ॥ कालाध्यक्षः



प्रजाध्यक्षो विश्वकर्मा तमोनुदः । वरुणः सागरोंऽशश्च जीमूतो

जीवनोऽरिहा ॥९॥ भूताश्रयो भूतपतिः सर्वलोकनमस्कृतः। स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ॥ १० ॥ अनन्तः कपिलो भानुः कामदः सर्वतोमुखः। जयो विशालो वरदः सर्वधातुनिषेचिता ॥ ११ ॥ मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारकः। धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥१२॥ द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः। स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ १३ ॥ देहकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः। चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषाऽन्वितः ॥१४॥ एतद्वै कीर्तनीयस्य सूर्यस्यामततेजसः। नाम्नामष्टशतं पुण्यं प्रोक्तमेतत्स्वयम्भुवा ॥ १५ ॥ सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितम् । वरकनकहुताशनप्रभं प्रणिपतितोऽस्मि हिताय भास्करम् ॥ १६ ॥ सूर्योदये यः सुसमाहितः पठेत्स पुत्रदारान्धनरत्नसञ्चयान्। लभेत जातिस्मरतां नरः सदा धृतिं च मेधां च स विन्दते पुमान् ॥ १७ ॥ इमं स्तवं देववरस्य यो नरः प्रकीर्तयेच्छुचिसुमनाः समाहितः। विमुच्यते शोकदवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ॥ १८ ॥

इति महाभारतोक्तं सूर्याष्टोत्तरशतनामस्तोत्रं संपूर्णम्।

---

## १६२ युधिष्ठिरकृतं सूर्यस्तोत्रम्।



श्रीगणेशाय नमः॥ त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्व-

देहिनाम् । त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ॥ १ ॥ त्वं गतिः सर्वसांख्यानां योगिनां त्वं परायणम् । अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षताम् ॥ २ ॥ त्वया संधार्यते लोकस्त्वया लोकः प्रकाश्यते । त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥ ३ ॥ त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः । स्वशाखाविहितैर्मन्त्रैरर्चन्त्यृषिगणार्चित ॥ ४ ॥ तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः । सिद्धचारणगन्धर्वा यक्षगुह्यकपन्नगाः ॥ ५ ॥ त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः । सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः ॥ ६ ॥ उपयान्त्यर्चयित्वा तु त्वां वै प्राप्तमनोरथाः । दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः ॥ ७ ॥ गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः । ते पूजयित्वा त्वामेव गच्छन्त्याशु प्रधानताम् ॥८॥ वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः । वालखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः ॥ ९ ॥ सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च । न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ॥१०॥ सन्ति चान्यानि सत्त्वानि वीर्यवन्ति महान्ति च । न तु तेषां तथा दीप्तिः प्रभवो वा यथा तव ॥ ११ ॥ ज्योतींषि त्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः । त्वयि सत्यं च सत्त्वं च सर्वे भावाश्च सात्त्विकाः ॥ १२ ॥ त्वत्तेजसा कृतं चक्रं सुनाभं विश्वकर्मणा । देवारीणां मदो येन नाशितः

शार्ङ्गधन्वना ॥ १३ ॥ त्वमादायांशुभिस्तेजो निदाघे सर्वदेहिनाम् । सर्वौषधिरसानां च पुनर्वर्षासु मुञ्चसि ॥ १४ ॥ तपन्त्यन्ये दहन्त्यन्ये गर्जन्त्यन्ये यथा घनाः । विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः ॥ १५ ॥ न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः । शीतवातार्दितं लोकं यथा तव मरीचयः ॥१६॥ त्रयोदशद्वीपवर्ती गोभिर्भासयसे महीम् । त्रयाणामपि लोकानां हितायैकः प्रवर्तसे ॥ १७ ॥ तव यद्युदयो न स्यादन्धं जगदिदं भवेत् । न च धर्मार्थकामेषु प्रवर्तेरन्मनीषिणः ॥१८॥ आधानपशुबन्धेष्टिमन्त्रयज्ञतपःक्रियाः । त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्रविशां गणैः ॥ १९ ॥ यदहर्ब्रह्मणः प्रोक्तं सहस्रयुगसंमितम् । तस्य त्वनादिरन्तश्च कालज्ञैः परिकीर्तितः ॥ २० ॥ मनूनां मनुपुत्राणां जगतोऽमानवस्य च । मन्वन्तराणां सर्वेषामीश्वराणां त्वमीश्वरः ॥२१॥ संहारकाले संप्राप्ते तव क्रोधविनिःसृतः । संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ॥ २२ ॥ त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः । सैरावताः साशनयः कुर्वन्त्याभूतसंप्लवम् ॥ २३ ॥ कृत्वा द्वादशधाऽऽत्मानं द्वादशादित्यतां गतः । संहृत्यैकार्णवं सर्वं त्वं शोषयसि रश्मिभिः ॥ २४ ॥ त्वामिन्द्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः । त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्वं ब्रह्म शाश्वतम् ॥ २५ ॥ त्वं हंसः सविता भानुरंशुमाली वृषाकपिः । विवस्वान्मिहिरः पूषा मित्रो धर्मस्त-

थैत्र च ॥ २६ ॥ सहस्ररश्मिरादित्यस्तपनस्त्वं गवां पतिः । मार्तण्डोऽर्को रविः सूर्यः शरण्यो दिनकृत्तथा ॥ २७ ॥ दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः । आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ॥ २८ ॥ सप्तम्यामथवा षष्ठ्यां भक्त्या पूजां करोति यः । अनिर्विण्णोऽनहंकारी तं लक्ष्मीर्भजते नरम् ॥ २९ ॥ न तेषामापदः सन्ति नाधयो व्याधयस्तथा । ये तवानन्यमनसा कुर्वन्त्यर्चनवन्दनम् ॥ ३० ॥ सर्वरोगैर्विरहिताः सर्वपापविवर्जिताः । त्वद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ॥ ३१ ॥ त्वं ममापन्नकामस्य सर्वातिथ्यं चिकीर्षतः । अन्नमन्नपते दातुमभितः श्रद्धयाऽर्हसि ॥ ३२ ॥ ये च तेऽनुचराः सर्वे पादोपान्तं समाश्रिताः । माठरारुणदण्डाद्यास्तांस्तान्वन्देऽशनिक्षुभान् ॥ ३३ ॥ क्षुभया सहितो मैत्री याश्चान्या भूतमातरः । ताश्च सर्वा नमस्यामि पान्तु मां शरणागतम् ॥ ३४ ॥ एवं स्तुतो महाराज भास्करो लोकभावनः । ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ॥ ३५ ॥ दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः ॥ विवस्वानुवाच ॥ यत्तेऽभिलषितं किंचित्तत्त्वं सर्वमवाप्स्यसि ॥ ३६ ॥ अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः । गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ॥ ३७ ॥ यावद्वत्स्यति पाञ्चाली पात्रेणानेन सुव्रत । फलमूलामिषं शाकं संस्कृतं यन्महानसे ॥ ३८ ॥ चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ।

इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥ ३९ ॥ वैशम्पायन उवाच ॥ एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत । इमं स्तवं प्रयतमनाः समाधिना पठेदिहान्योऽपि वरं समर्थयन् ॥४०॥ तत्तस्य दद्याच्च रविर्मनीषितं तदाप्नुयाद्यद्यपि तत्सुदुर्लभम् । यश्चेदं धारयेन्नित्यं शृणुयाद्वाऽप्यभीक्ष्णशः ॥ ४१ ॥ पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां पुरुषोऽप्यथवा स्त्रियः ॥ ४२ ॥ उभे सन्ध्ये जपेन्नित्यं नारी वा पुरुषो यदि । आपदं प्राप्य मुच्येत बद्धो मुच्येत बन्धनात् ॥ ४३ ॥

इति श्रीमहाभारतान्तर्गतं युधिष्ठिरविरचितं सूर्यस्तोत्रं समाप्तम् ।

# देवीस्तोत्राणि ।

## १६३ परापूजा । *

श्रीगणेशाय नमः ॥ उषसि मागधमङ्गलगायनैर्झटिति जागृहि जागृहि जागृहि । अयि कृपार्द्रकटाक्षविलोकनैर्जगदिदं जगदम्ब सुखीकुरु ॥ १ ॥ कनककलशशोभमानशीर्षं जलधरचुम्बिसमुल्लसत्पताकम् । भगवति तव सन्निधानहेतोर्मणिमयमन्दिरमेतदर्पयामि ॥ २ ॥ कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुम्भयुक्तम् । मणिमयमण्ड-



* २९ पृष्ठस्था टिप्पनी द्रष्टव्या ।

पमर्घ्यमेहि मातर्मम कृपया हि समर्चनं ग्रहीतुम् ॥ ३ ॥ तपनीयमयी सुतूलिका कमनीया दुकूलोत्तरच्छदा । नवरत्नविभूषिता मया शिबिकेयं जगदम्ब तेऽर्पिता ॥४॥ कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे । भगवति रमणीये रत्नसिंहासनेऽस्मिन्नुपविश पदयुग्मं हेमपीठे निधेहि ॥ ५ ॥ मणिमौक्तिकनिर्मितं महार्घं कनकस्तम्भचतुष्टयेन युक्तम् । कमनीयतमं भवानि तुभ्यं नवमुल्लोचमहं समर्पयामि ॥ ६ ॥ दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् । पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥ ७ ॥ गन्धपुष्पयवसर्षपदूर्वासंयुतं तिलकुशाक्षतयुक्तम् । हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः॥८॥ जलजद्युतिनारिकेलजातीफलकङ्कोललवङ्गगन्धयुक्तैः । अमृतैरमृतैरिवातिशीतैर्भगवत्याचमनं विधीयतां हे ॥ ९ ॥ निहितं कनकस्य सम्पुटे पिहितं रत्नपिधानकेन यत् । तदिदं भवतीकरेऽर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥ १० ॥ एतच्चम्पकतैलमम्ब विविधैः पुष्पैर्मुहुर्वासितं न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम् । सानन्दं सुरसुन्दरीभिरभितो हस्तैर्धृतं तन्मया केशेषु भ्रमरप्रभेषु सकलेष्वङ्गेषु चालिप्यते ॥ ११ ॥ मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं भक्त्या हे कलयामि हेमरजसा संमिश्रितं केशरैः । केशानामलकैर्विशोध्य विशदं कस्तूरिकाद्यन्वितैः

स्नानं ते नवरत्नकुम्भसहितैः संकाशतोष्णोदकैः ॥ १२ ॥
दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमग्रतो जननि त्वां पुनरुष्णवारिभिः ॥१३॥
एलोशीरसुवासितैः सुकुसुमैर्गङ्गादितीर्थोदकैर्माणिक्यां मणि-
मौक्तिकामृतयुतैः स्वच्छैः सुवर्णादिकैः । मन्त्रान्वैदिकता-
न्त्रिकान्परिपठन्सानन्दमन्याहशं स्नानीयं परिकल्पयामि
जननि स्नानं त्वमङ्गीकुरु ॥ १४ ॥ बालार्कद्युतिदाडिमीयकुसु-
मप्रस्पर्द्धि सर्वोत्तमं मातस्त्वं परिधेहि दिव्यवसनं भक्त्या
मया कल्पितम् । मुक्ताभिर्ग्रथितं च कञ्चुकमिदं स्वीकृत्य
पीतप्रभं तप्तं स्वर्णसमानवर्णमतुलं प्रावर्णमङ्गीकुरु ॥१५॥
नवरत्नयुते मयार्पिते कमनीये तपनीयपादुके । सविलास-
मिदं पदद्वयं कृपया देवि तयोर्विधीयताम् ॥ १६ ॥ बहु-
भिरगुरुधूपैः सादरं धूपयित्वा भगवति तव केशान्कङ्कतो
मार्जयित्वा । सुरभिभिररविन्दैश्चम्पकैश्चार्चयित्वा झटिति
कनकसूत्रैर्जूटकं वेष्टयामि ॥ १७ ॥ सौवीराञ्जनमिदमम्ब
चक्षुषोस्ते विन्यस्तं कनकशलाकया मया यत् । तन्नूनं मलि-
नमपि त्वदक्षिसङ्गाद्ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥१८॥
मञ्जीरे पदयोर्निधाय रुचिरां विन्यस्य काञ्चीं कटौ मुक्ता-
हारमुरोजयोरनुपमं नक्षत्रमालां गले । केयूराणि भुजेषु
रत्नवलयश्रेणीः करेषु क्रमात्ताटङ्के तव कर्णयोर्विनिदधे



शीर्षे च चूडामणिम् ॥ १९ ॥ धम्मिल्ले तव देवि हेमकुसुमा-

न्याधाय भालस्थले मुक्तासङ्गविराजि हेमतिलकं नासापुटे मौक्तिकम् । मातर्मौक्तिकजालिकां च कुचयोः सर्वाङ्गुलीषूर्मिकाः कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ॥ २० ॥ मातः फालतले तवातिविमले काश्मीरकस्तूरिकाकर्पूरागुरुभिः करोमि तिलकं देहेङ्गरागं ततः । वक्षोजाजिषु यक्षकर्दमरसैः सिक्त्वार्द्रपुष्पद्रवैः पादौ कुङ्कुमलेपनादिभिरहं सम्पूजयामि क्रमात् ॥ २१ ॥ रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः । अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्काङ्किततन्दुलैर्वा ॥ २२ ॥ जननि चम्पकतैलमिदं पुरा मृगमदोऽयमयं पटवासकः । सुरभिगन्धमिदं च चतुष्टयं सपदि सर्वमिदं परिगृह्यताम् ॥२३॥ सीमन्ते ते भगवति मया सादरं न्यस्तमेतत्सिन्दूरं मे हृदयकमले देवि हर्षं तनोतु । बालादित्यद्युतिरिव सदा लोहिता यस्य कान्तिरन्तर्ध्वान्त हरतु जगतश्चेतसा चिन्त्यतापि ॥ २४ ॥ मन्दारकुन्दकरवीरलवङ्गपुष्पैस्त्वां देवि संततमहं परिपूजयामि । जातीजपाबकुलचम्पककेतकादिनानाविधानि कुसुमानि च तेऽर्पयामि ॥ २५ ॥ मालतीबकुलहेमपुष्पिकाकाञ्चनादिकरवीरकेतकैः । कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः ॥ २६ ॥ पारिजातकशतपत्रपाटलमल्लिकाबकुलचम्पकादिभिः । अम्बुजैश्च कुमुदैश्च सादरं पूजयामि जगदम्ब ते वपुः ॥ २७ ॥ लाक्षासंमिलितैः सिता-

न्नसहितैः श्रीवाससंमिश्रितैः कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषा लोडितैः । श्रीखण्डागुरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभिर्धूपं ते परिकल्पयामि जननि धूपं त्वमङ्गीकुरु ॥ २८ ॥ रत्नालंकृतहेमपात्रनिहितैर्गोसर्पिषोद्दीपितैर्दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः । आताम्रज्वलदुज्वलज्वलनवद्रत्नप्रदीपैस्तथा मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥ २९ ॥ महति कनकपात्रे स्थापयित्वा विशालान्डमरुसदृशरूपानुच्चगोधूमदीपान् । बहु घृतमथ तेषु न्यस्तदीपानुरूपान्भुवनजननि कुर्वे नित्यमारार्तिकं ते ॥ ३० ॥ सविनयमथ दत्त्वा जानुयुग्मं धरित्र्यां सपदि शिरसि धृत्वा पात्रमारार्तिकस्य । मुखकमलसमीपे तेन सार्धं त्रिवारं भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ॥ ३१ ॥ मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसन्तानकान्सूपापूपसिताघृतैः सुवटकैः सद्राक्षरम्भाफलैः । एलाजीरकहिङ्गुनागरनिशाकौस्तुम्बरैः संस्कृतैः शाकैः साकमहं सुधाधिकरसैः संतर्पयाम्यर्पयन् ॥ ३२ ॥ सापूपसूपदधिदुग्धसिताघृतानि सुस्वादुभक्तपरमान्नपुरःसराणि । शाकोल्लसन्मरिचजीरकबाह्लिकानि भक्ष्याणि भक्ष जगदम्ब मयार्पितानि ॥ ३३ ॥ क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्वलं मधु । मातरेतदमृतोपमं पयः संभ्रमेण परिपीयतां मुहुः ॥ ३४ ॥ कणोरकैः



पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे । कर्पूरमिश्रेण

सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन ॥ ३५ ॥ अतिशीतमुशीरवासितं तव पानाय मया निवेदितम् । पटपूतमिदं जितामृतं शुचि गङ्गामृतमम्ब पीयताम् ॥ ३६ ॥ ताम्राम्लरम्भाफलसंयुतानि द्राक्षाफलाक्षोटसमन्वितानि । सनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि ॥ ३७ ॥ कूष्माण्डकोशातकसंयुतानि जम्बीरनारिङ्गसमन्वितानि । सबीजपूराणि सयावनानि फलानि ते देवि समर्पयामि ॥ ३८ ॥ कर्पूरेण युतैर्लवङ्गसहितैः कङ्कोलचूर्णान्वितैः सुस्वादुक्रमुकैः सगौरखदिरैः सस्निग्धजातीफलैः । मातः केतकपत्रपाण्डुरुचिभिस्ताम्बूलवल्लीदलैः सानन्दं मुखवासनार्थमतुलं ताम्बूलमङ्गीकुरु ॥ ३९ ॥ एलालवङ्गादिसमन्वितानि कङ्कोलकर्पूरविमिश्रितानि । ताम्बूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि ॥ ४० ॥ ताम्बूलवल्लिदलनिर्जितहेमवर्णं स्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् । रत्नस्थनिस्थितमिदं खदिरेण सार्धं ताम्बूलमम्ब वदने कुरु हे गृहाण ॥ ४१ ॥ अथ बहुमणिमिश्रैर्मौक्तिकैश्चावकीर्य त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः । मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां जननि कनकवृष्टिं दक्षिणां ते ददामि ॥४२॥ मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं नानारत्नविशोभिहेमकलशं लोकत्रयाह्लादकम् । भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं छत्रं ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मि-

तम् ॥ ४३ ॥ शरदिन्दुमरीचिगौरवर्णैर्मणिमुक्ताखचितैः सुवर्णदण्डैः । जगदम्ब विचित्रचामरैस्त्वामहमानन्दभरेण वीजयामि ॥ ४४ ॥ मार्तण्डमण्डलनिभो जगदम्ब योऽयं भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते । पूर्णेन्दुबिम्बरुचिरं वदनं स्वकीयमस्मिन्विलोकय विलोलविलोचने त्वम् ॥ ४५ ॥ इन्द्रादयो नतिनतैर्मुकुटप्रदीपैर्नीराजयन्ति सततं तव पादपीठम् । तस्मादहं तव शरीरमशेषमेतन्नीराजयामि जगदम्ब सहस्रदीपैः ॥ ४६ ॥ प्रियगतिरतितुङ्गो रत्नपर्यंकयुक्तः कनकमयविभूषः स्निग्धगम्भीरघोषः । भगवति कलितोऽयं वाहनार्थं मया ते तुरगशतसमेतो वायुवेगस्तुरङ्गः ॥ ४७ ॥ मधुकरवृतकुम्भन्यस्तसिन्दूररेणुः कनककलितघण्टाकिङ्किणीशोभिकण्ठः । श्रवणयुगलचञ्चच्चामरो मेघतुल्यो जननि तव मुदे स्तान्मत्तमातङ्ग एषः ॥ ४८ ॥ द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम् । कनकमयमहं वितानवन्तं भगवति पुष्परथं समर्पयामि ॥ ४९ ॥ हयगजरथपत्तिशोभमानं दिशि दिशि दुन्दुभिमेघनादयुक्तम् । सति बहुचतुरङ्गसैन्यमेतद्भगवति भक्तिभरेण तेऽर्पयामि ॥ ५० ॥ परिधिकृतसप्तसागरं बहुसंपत्सहितं मयाम्ब ते । विपुलधरणितलाभिबद्धपादं प्रबलं दुर्गमिदं समर्पयामि ॥ ५१ ॥ शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः । भ्रमरीमुखरीकृतैरनन्तैर्व्यजनैस्त्वामहमम्ब वीजयामि ॥ ५२ ॥

क्षितिविलुलितलोलकुन्तलालिविगलितमाल्यविकीर्णरङ्गभू-मिः । इयमतिरुचिरा नटी नटन्ती तव हृदये मुदमातनोतु मातः ॥ ९३ ॥ मुखकमलविलासलोलवेणी विलसितजित-लोलभृङ्गमाला । इयमभिनयदर्शनप्रवीणा सुखयतु सुन्दरि मानसं त्वदीयम् ॥ ९४ ॥ भ्रमदलिकुलतुल्या लोलधम्मिल्ल-भारा श्रितमुखकमलोद्यद्दिव्यलावण्यपूरा । अनुपमनववेशा वारयोषा नटन्ती परभृतसमकण्ठी देवि हर्षं तनोतु ॥९५॥ रुचिरकुचतटीनां नाट्यकाले नटीनां प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासम् । धिमिकिति धिगिथिन्धिन्धिन्धिधिंधीतिधिं धिम् धिगितधिगितधीगी तत्तथा धीति शब्दः ॥ ९६ ॥ डमरुडिण्डिमझर्झरझर्झरीमृदुरवाः सुहताः पटहादयः । झटिति झंकृतिभिर्जगदम्बिके बहुतरं हृदयं सुखयन्तु ते ॥ ९७ ॥ विपञ्चीषु सप्तस्वरान्वादयन्त्यस्तव द्वारि गायन्ति गन्धर्व-कन्याः । क्षणं सावधानेन चित्तेन मातः समाकर्ण्यतां भो मया प्रार्थितासि ॥ ९८ ॥ अभिनवकमनीयैर्नर्तनैर्नर्तकीनां क्षणमपि रमयित्वा चेत एवं त्वदीयम् । स्वयमहमथ चित्रै-र्नृत्यवादित्रगीतैर्भगवति भवदीयं मानसं रञ्जयामि ॥ ९९ ॥ तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः । तदिहैक-मुखेषु जन्तुषु स्तवनं कस्तव कर्तुमीश्वरः ॥ ६० ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधस्य फलं ददाति । तां सर्व-



पापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ ६१ ॥

रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाङ्कुशचिह्निताभ्याम्। अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥ ६२ ॥ चरणकमलयुग्मं पङ्कजैः पूजयित्वा कनककमलमालाः कण्ठदेशेऽर्पयित्वा। शिरसि विनिहितोऽयं रक्तपुष्पाञ्जलिस्ते हृदयकमलमध्ये देवि हर्षं तनोतु ॥ ६३ ॥ अथ मणिमयमञ्चकाभिरामे द्युतिमति पुष्पवितानराजमाने। प्रसरदगुरुधूपधूपितेऽस्मिन्भगवति वासगृहेऽस्तु ते निवासः ॥ ६४ ॥ एतस्मिन्मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदे निधाय पादौ। विस्तीर्णे मृदुलतरोत्तरच्छदेऽस्मिन्पर्यङ्के कनकमये निषीद मातः ॥ ६५ ॥ तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः। अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥ ६६ ॥ अथ मातरुशीरवासितं निजतांबूलरसेन रञ्जितम्। तपनीयमये सुभाजने मुखगण्डूषजलं विधीयताम् ॥ ६७ ॥ क्षणमथ जगदम्ब मञ्चकेऽस्मिन्मृदुतलतूलिकया विराजमाने। अतिरहसि मुदा शिवेन सार्धं सुखशयनं कुरु मां हृदि स्मरन्ती ॥ ६८ ॥ मुक्ताकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्तामक्षस्रुक्कुण्डचिह्नामभयवरकरां चन्द्रचूडां त्रिनेत्राम्। नानालंकारयुक्तां स्फुटमुकुटमणिद्योतितस्वर्णपीठां सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥ ६९ ॥ एषा भक्त्या तव विरचिता या मया देवि पूजा स्वीकृत्यैनां सपदि सकलान्

न्मेऽपराधान्क्षमस्व । नूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ७० ॥ पूजामिमां पठेत्प्राज्ञः पूजां कर्तुमनीश्वरः । पूजाफलमवाप्नोति वाञ्छितार्थांश्च विन्दति ॥ ७१ ॥ प्रत्यहं भक्तिसंयुक्तो यः पूजनमिदं पठेत् । वाग्वादिन्याः प्रसादेन वत्सरात्स विभुर्भवेत् ॥ ७२ ॥

इति श्रीशंकराचार्यविरचिता परा मानसिका पूजा समाप्ता ।

---

## १६४ देव्यपराधक्षमापनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः । न जाने मुद्रास्ते तदपि च न जाने विलपनं परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥ १ ॥ विधेरज्ञानेन द्रविणविरहेणालसतया विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत् । तदेतत्क्षन्तव्यं जननि सकलोद्धारिणि शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥ पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः परं तेषां मध्ये विरलतरलोऽहं तव सुतः । मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ३ ॥ जगन्मातर्मातस्तव चरणसेवा न रचिता न वा दत्तं देवि द्रविणमपि भूयस्तव मया । तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे

कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ४ ॥ परित्यक्त्वा देवान्विविधविधसेवाकुलतया मया पञ्चाशीतेरधिकमपनीते तु वयसि । इदानीं चेन्मातस्तव यदि कृपा नापि भविता निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥५॥ श्वपाको जल्पाको भवति मधुपाकोपमगिरा निरातङ्को रङ्को विहरति चिरं कोटिकनकैः । तवापर्णे कर्णे विशति मनुवर्णे फलमिदं जनः को जानीते जननि जपनीयं जपविधौ ॥६॥ चिताभस्मालेपो गरलमशनं दिक्पटधरो जटाधारी कण्ठे भुजगपतिहारी पशुपतिः । कपाली भूतेशो भजति जगदीशैकपदवीं भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥७॥ न मोक्षस्याकाङ्क्षा न च विभववाञ्छापि च न मे न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः । अतस्त्वां संयाचे जननि जननं यातु मम वै मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥ ८ ॥ नाराधितासि विधिना विविधोपचारैः किं रूक्षचिन्तनपरैर्न कृतं वचोभिः । श्यामे त्वमेव यदि किंचन मय्यनाथे धत्से कृपामुचितमम्ब परं तवैव ॥ ९ ॥ आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवे शिवे । नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ॥ १० ॥ जगदम्ब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि । अपराधपरंपरावृतं नहि माता समुपेक्षते सुतम्

॥११॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा नहि । एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमच्छंकराचार्यविरचितं देव्यपराधक्षमापनस्तोत्रं संपूर्णम् ।

---

## १६५ आनन्दलहरी ।

श्रीगणेशाय नमः ॥ भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि । न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिस्तदान्येषां केषां कथय कथमस्मिन्नवसरः ॥ १ ॥ घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैर्विशिष्यानाख्येयो भवति रसनामात्रविषयः । तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः कथंकारं ब्रूमः सकलनिगमागोचरगुणे ॥ २ ॥ मुखे ते ताम्बूलं नयनयुगुले कज्जलकला ललाटे काश्मीरं विलसति गले मौक्तिकलता । स्फुरत्काञ्ची शाटी पृथुकटितटे हाटकमयी भजामस्त्वां गौरीं नगपतिकिशोरीमविरतम् ॥ ३ ॥ विराजन्मन्दारद्रुमकुसुमहारस्तनतटी नदद्वीणानादश्रवणविलसत्कुण्डलगुणा । नताङ्गीमातङ्गीरुचिरगतिभङ्गी भगवती सती शंभोरम्भोरुहचटुलचक्षुर्विजयते ॥ ४ ॥ नवीनार्कभ्राजन्मणिकनकभूषापरिकरैर्वृताङ्गी सारङ्गीरुचिरनयनाङ्गीकृतशिवा । तडित्पीता पीताम्बरललितमञ्जीरसुभगा ममापर्णा पूर्णा निरवधिसु-

वैरस्तु सुमुखी ॥ ५ ॥ हिमाद्रेः संभूता सुललितकरैः पल्लवयुता सुपुष्पा मुक्ताभिर्भ्रमरकलिता चालकभरैः। कृतस्थाणुस्थाना कुचफलनता सूक्तिसरसा रुजां हन्त्री गन्त्री विलसति चिदानन्दलतिका ॥ ६ ॥ सपर्णामाकीर्णां कतिपयगुणैः सादरमिह श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति। अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥ ७ ॥ विधात्री धर्माणां त्वमसि सकलाम्नायजननी त्वमर्थानां मूलं धनदनमनीयाङ्घ्रिकमले। त्वमादिः कामानां जननि कृतकन्दर्पविजये सतां भक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥ ८ ॥ प्रभूता भक्तिस्ते यदपि न ममालोलमनसस्त्वया तु श्रीमत्या सदयमवलोक्योऽहमधुना। पयोदः पानीयं दिशति मधुरं चातकमुखे भृशं शङ्के कैर्वा विधिभिरनुनीता मम मतिः ॥ ९ ॥ कृपापाङ्गालोकं वितर तरसा साधुचरिते न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते। न चेदिष्टं दद्यादनुपदमहो कल्पलतिका विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥ १० ॥ महान्तं विश्वासं तव चरणपङ्केरुहयुगे निधायान्यन्नैवाश्रितमिह मया दैवतमुमे। तथापि त्वच्चेतो यदि मयि न जायेत सदयं निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ११ ॥ अयः स्पर्शे लग्नं सपदि लभते हेमपदवीं यथा रथ्यापाथः शुचि भवति गङ्गौघमिलितम्। तथा तत्तत्पापैरतिमलिन-

मन्तर्मम यदि त्वयि प्रेम्णा सक्तं कथमिव न जायेत विमलम् ॥ १२ ॥ त्वदन्यस्मादिच्छाविषयफललाभेन नियमस्त्वमर्थानामिच्छाधिकमपि समर्था वितरणे । इति प्राहुः प्राञ्चः कमलभवनाद्यास्त्वयि मनस्त्वदासक्तं नक्तंदिवमुचितमीशानि कुरु तत् ॥ १३ ॥ स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफलत्त्वदाकारं चञ्चच्छशधरविलासौघशिखरम् । मुकुन्दब्रह्मेन्द्रप्रभृतिपरिवारं विजयते तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥ १४ ॥ निवासः कैलासे विधिशतमखाद्याः स्तुतिकराः कुटुम्बं त्रैलोक्यं कृतकरपुटः सिद्धिनिकरः । महेशः प्राणेशस्तदवनिधराधीशतनये न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ॥ १५ ॥ वृषो वृद्धो यानं विषमशनमाशा निवसनं श्मशानं क्रीडाभूर्भुजगनिवहो भूषणनिधिः । समग्रा सामग्री जगति विदितैव स्मररिपोर्यदेतस्यैश्वर्यं तव जननि सौभाग्यमहिमा ॥ १६ ॥ अशेषब्रह्माण्डप्रलयविधिनैसर्गिकमतिः श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः । दधौ कण्ठे हालाहलमखिलभूगोलकृपया भवत्याः संगत्याः फलमिति च कल्याणि कलये ॥ १७ ॥ त्वदीयं सौन्दर्यं निरतिशयमालोक्य परया भियैवासीद्गङ्गा जलमयतनुः शैलतनये । तदेतस्यास्तस्माद्वदनकमलं वीक्ष्य कृपया प्रतिग्राम[illegible] निजशिरसि [illegible] निदधे ॥ १८ ॥ विशालश्रीखण्डद्रवमृगमदाकीर्णघुसृणप्रसूनव्यामिश्रं भग-

वति तवाभ्यङ्गसलिलम् । समादाय स्रष्टा चलितपदपांसून्नि-जकरैः समाधत्ते सृष्टिं विबुधपुरपङ्केरुहदृशाम् ॥ १९ ॥ वसन्ते सानन्दे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे । सखीभिः खेलन्तीं मलयपवनान्दोलित-जलैः स्मरेद्यस्त्वां तस्य ज्वरजनितपीडाऽपसरति ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता-ऽऽनन्दलहरी संपूर्णा ।

---

## १६६ त्रिपुरसुन्दरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कदम्बवनचारिणीं मुनिकदम्ब-कादम्बिनीं नितम्बजितभूधरां सुरनितम्बिनीसेविताम् । नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ १ ॥ कदम्बवनवासिनीं कनकवल्लकी-धारिणीं महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीम् । दया-विभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ २ ॥ कदम्बवनशालया कुचभरोल्लस-न्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया । मदारुण-कपोलया मधुरगीतवाचालया कयापि घननीलया कवचिता वयं लीलया ॥ ३ ॥ कदम्बवनमध्यगां कनकमण्डलोपस्थितां षडम्बुरुहवासिनीं सततसिद्धसौदामिनीम् । विडम्बितजपा-रुचिं विकचचन्द्रचूडामणिं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्द-

रीमाश्रये ॥ ४ ॥ कुचाञ्चितविपञ्चिकां कुटिलकुन्तलालंकृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् । मदारुणविलोचनां मनसिजारिसंमोहिनीं मतङ्गमुनिकन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥ स्मरेत्प्रथमपुष्पिणीं रुधिरबिन्दुनीलाम्बरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्राञ्चलाम् । घनस्तनभरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ६ ॥ सकुङ्कुमविलेपनामलकचुम्बिकस्तूरिकां समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम् । अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां जपाकुसुमभासुरां जपविधौ स्मराम्यम्बिकाम् ॥ ७ ॥ पुरन्दरपुरन्ध्रिकाचिकुरबन्धसैरन्ध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् । मुकुन्दरमणीं मणीलसदलंक्रियाकारिणीं भजामि भुवनाम्बिकां सुरवधूटिकाचेटिकाम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं त्रिपुरसुन्दरीस्तोत्रं संपूर्णम् ।

---

## १६७ महालक्ष्म्यष्टकम् ।

श्रीगणेशाय नमः ॥ इन्द्र उवाच । नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते । शङ्खचक्रगदाहस्ते महालक्ष्मि नमोऽस्तु ते ॥ १ ॥ नमस्ते गरुडारूढे कोलासुरभयंकरि । सर्वपापहरे

देवि महालक्ष्मि० ॥ २ ॥ सर्वज्ञे सर्ववरदे सर्वदुष्टभयंकरि । सर्वदुःखहरे देवि महालक्ष्मि० ॥ ३ ॥ सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्तिप्रदायिनि । मन्त्रमूर्ते सदा देवि महालक्ष्मि० ॥४॥ आद्यन्तरहिते देवि आद्यशक्ति महेश्वरि । योगजे योगसंभूते महालक्ष्मि० ॥ ५ ॥ स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदरे । महापापहरे देवि महालक्ष्मि० ॥ ६ ॥ पद्मासनस्थिते देवि परब्रह्मस्वरूपिणि । परमेशि जगन्मातर्महालक्ष्मि० ॥ ७ ॥ श्वेताम्बरधरे देवि नानालंकारभूषिते । जगत्स्थिते जगन्मातर्महालक्ष्मि० ॥ ८ ॥ महालक्ष्म्यष्टकस्तोत्रं यः पठेद्भक्तिमान्नरः । सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥ ९ ॥ एककाले पठेन्नित्यं महापापविनाशनम् । द्विकालं यः पठेन्नित्यं धनधान्यसमन्वितः ॥ १० ॥ त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् । महालक्ष्मीर्भवेन्नित्यं प्रसन्ना वरदा शुभा ॥ ११ ॥

इतीन्द्रकृतः श्रीमहालक्ष्म्यष्टकस्तवः संपूर्णः ।

---

## १६८ देवकृतलक्ष्मीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ क्षमस्व भगवत्यम्ब क्षमाशीले परात्परे । शुद्धसत्त्वस्वरूपे च कोपादिपरिवर्जिते ॥ १ ॥ उपमे सर्वसाध्वीनां देवीनां देवपूजिते । त्वया विना जगत्सर्वं



मृततुल्यं च निष्फलम् ॥ २ ॥ सर्वसंपत्स्वरूपा त्वं सर्वेषां

सर्वरूपिणी । रासेश्वर्यधिदेवी त्वं त्वत्कलाः सर्वयोषितः ॥३॥ कैलासे पार्वती त्वं च क्षीरोदे सिन्धुकन्यका । स्वर्गे च महालक्ष्मीस्त्वं मर्त्यलक्ष्मीश्च भूतले ॥ ४ ॥ वैकुण्ठे च महालक्ष्मीर्देवदेवी सरस्वती । गङ्गा च तुलसी त्वं च सावित्री ब्रह्मलोकतः ॥ ५ ॥ कृष्णप्राणाधिदेवी त्वं गोलोके राधिका स्वयम् । रासे रासेश्वरी त्वं च वृन्दावनवने वने ॥ ६ ॥ कृष्णप्रिया त्वं भाण्डीरे चन्द्रा चन्दनकानने । विरजा चम्पकवने शतशृङ्गे च सुन्दरी ॥ ७ ॥ पद्मावती पद्मवने मालती मालतीवने । कुन्ददन्ती कुन्दवने सुशीला केतकीवने ॥८॥ कदम्बमाला त्वं देवी कदम्बकाननेऽपि च । राजलक्ष्मी राजगेहे गृहलक्ष्मीर्गृहे गृहे॥ ९॥ इत्युक्त्वा देवताः सर्वा मुनयो मनवस्तथा । रुरुदुर्नम्रवदनाः शुष्ककण्ठोष्ठतालुकाः ॥ १० ॥ इति लक्ष्मीस्तवं पुण्यं सर्वदेवैः कृतं शुभम् । यः पठेत्प्रातरुत्थाय स वै सर्वं लभेद्ध्रुवम् ॥११॥ अभार्यो लभते भार्यां विनीतां सुसुतां सतीम् । सुशीलां सुन्दरीं रम्यामतिसुप्रियवादिनीम् ॥ १२ ॥ पुत्रपौत्रवतीं शुद्धां कुलजां कोमलां वराम् । अपुत्रो लभते पुत्रं वैष्णवं चिरजीविनम् ॥ १३ ॥ परमैश्वर्ययुक्तं च विद्यावन्तं यशस्विनम् । भ्रष्टराज्यो लभेद्राज्यं भ्रष्टश्रीर्लभते श्रियम् ॥ १४ ॥ हतबन्धुर्लभेद्बन्धुं



धनभ्रष्टो धनं लभेत् । कीर्तिहीनो लभेत्कीर्तिं प्रतिष्ठां च

र्भवेद्ध्रुवम् ॥ १५ ॥ सर्वमङ्गलदं स्तोत्रं शोकसंतापनाशनम् । हर्षानन्दकरं शश्वद्धर्ममोक्षसुहृत्प्रदम् ॥ १६ ॥

इति श्रीदेवकृतं लक्ष्मीस्तोत्रं संपूर्णम् ।

## १६९ वाराहीनिग्रहाष्टकम् ।

श्रीगणेशाय नमः ॥ देवि क्रोडमुखि त्वदङ्घ्रिकमलद्वन्द्वानुरक्तात्मने मह्यं द्रुह्यति यो महेश मनसा कायेन वाचा नरः । तस्याशु त्वदयोग्रनिष्ठुरहलाघातप्रभूतव्यथापर्यस्यन्मनसो भवन्तु वपुषः प्राणाः प्रयाणोन्मुखाः ॥ १ ॥ देवि त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्ते मयि । यो देही भुवने तदीयहृदयान्निर्गत्वरैर्लोहितैः सद्यः पूरयसे कराब्जचषकं वाञ्छाफलैर्मामपि ॥ २ ॥ चण्डोत्तुंडविदीर्णदुष्टहृदयप्रोद्भिन्नरक्तच्छटाहालापानमदाट्टहासनिनदाटोपप्रतापोत्कटम् । मातर्मत्परिपन्थिनामपहृतैः प्राणैस्त्वदङ्घ्रिद्वयं ध्यानोद्दामरवैभवोदयवशात्संतर्पयामि क्षणात् ॥३॥ श्यामां तामरसाननाङ्घ्रिनयनां सोमार्धचूडां जगत्त्राणव्यग्रहलायुधाग्रमुसलां संत्रासमुद्रावतीम् । ये त्वां रक्तकपालिनीं हरवरारोहे वराहाननां भावैः संदधते कथं क्षणमपि प्राणन्ति तेषां द्विषः ॥ ४ ॥ विश्वाधीश्वरवल्लभे विजयसे या त्वं नियन्त्र्यात्मिका भूतान्ता पुरुषायुषावधिकरीपाकप्रदा कर्मणाम् । त्वां याचे भवतीं किमप्य-

वितथं यो मद्विरोधी जनस्तस्यायुर्मम वाञ्छितावधि भवे-न्मातस्तवैवाज्ञया ॥ ५ ॥ मातः सम्यगुपासितुं जडमतिस्त्वां नैव शक्नोम्यहं यद्यप्यन्वितदैशिकाङ्घ्रिकमलानुक्रोशपात्रस्य मे । जन्तुः कश्चन चिन्तयत्यकुशलं यस्तस्य तद्वैशसं भूया-द्देवि विरोधिनो मम च ते श्रेयःपदासङ्गिनः ॥ ६ ॥ वाराहि व्यथमानमानसगलत्सौख्यं तदाशाबलिं सीदन्तं यमपाकृता-ध्यवसितं प्राप्ताखिलोत्पादितम् । क्रन्दद्बन्धुजनैः कलङ्कित-कुलं कण्ठव्रणोद्यत्कृमिं पश्यामि प्रतिपक्षमाशु पतितं भ्रान्तं लुठन्तं मुहुः ॥ ७ ॥ वाराहि त्वमशेषजन्तुषु पुनः प्राणा-त्मिका स्पन्दसे शक्तिव्याप्तचराचरा खलु यतस्त्वामेतदभ्य-र्थये । त्वत्पादाम्बुजसङ्गिनो मम सकृत्पापं चिकीर्षन्ति ये तेषां मा कुरु शंकरप्रियतमे देहान्तरावस्थितिम् ॥ ८ ॥

इति श्रीवाराहीनिग्रहाष्टकं संपूर्णम् !

## १७० वाराह्यनुग्रहाष्टकम् ।

श्रीगणेशाय नमः ॥ ईश्वर उवाच । मातर्जगद्रचननाट-कसूत्रधारस्त्वद्रूपमाकलयितुं परमार्थतोऽयम् । ईशोऽप्यनीश्व-रपदं समुपैति तादृक्कोन्यस्तवं किमिव तावकमादधातु ॥ १ ॥ नामानि किं तु गृणतस्तव लोकतुण्डे नाडम्बरं स्पृशति [illegible] । [illegible]निधिर्यतो यत्त्वना-



मसंस्मृतिरियं ननु न स्तुतिस्ते ॥ २ ॥ त्वच्चिन्तनादरसमु-

ल्लसदप्रमेयानन्दोदयात्समुदितः स्फुटरोमहर्षः । मातर्नमामि सुदिनानि सदेत्यमुं त्वामभ्यर्थयेऽर्थमिति पूरयताद्दयालो ॥ ३ ॥ इन्द्रेन्दुमौलिविधिकेशवमौलिरत्नरोचिश्चयोज्ज्वलितपादसरोजयुग्मे । चेतो मतौ मम सदा प्रतिबिम्बिता त्वं भूया भवानि विदधातु सदोरुहारे ॥ ४ ॥ लीलोद्धृतक्षितितलस्य वराहमूर्तेर्वाराहमूर्तिरखिलार्थकरी त्वमेव । प्रालेयरश्मिसुकलोल्लसितावतंसा त्वं देवि वामतनुभागहरा हरस्य ॥ ५ ॥ त्वामम्ब तप्तकनकोज्ज्वलकान्तिमन्तर्ये चिन्तयन्ति युवतीतनुमागलान्ताम् । चक्रायुधत्रिनयनाम्बरपोतृवक्त्रां तेषां पदाम्बुजयुगं प्रणमन्ति देवाः ॥ ६ ॥ त्वत्सेवनस्खलितपापचयस्य मातर्मोक्षोऽपि यत्र न सतां गणनामुपैति । देवासुरोरगनृपालनमस्य पादस्तत्र श्रियः पटुगिरः कियदेवमस्तु ॥ ७ ॥ किं दुष्करं त्वयि मनोविषयं गतायां किं दुर्लभं त्वयि विधानवदर्चितायाम् । किं दुष्करं त्वयि सकृत्स्मृतिमागतायां किं दुर्जयं त्वयि कृतस्तुतिवादपुंसाम् ॥ ८ ॥

इति श्रीवाराह्यनुग्रहाष्टकं संपूर्णम् ।

---

## १७१ ताराष्टकम् ।

श्रीगणेशाय नमः ॥ मातर्नीलसरस्वति प्रणमतां सौभाग्यसम्पत्प्रदे प्रत्यालीढपदस्थिते शवहृदि स्मेराननाम्भोरुहे ।



फुल्लेन्दीवरलोचनत्रययुते कर्त्री कपालोत्पले खड्गं चादधती

त्वमेव शरणं त्वामीश्वरीमाश्रये ॥ १ ॥ वाचामीश्वरि भक्तकल्पलतिके सर्वार्थसिद्धिप्रदे गद्यप्राकृतपद्यजातरचना सर्वत्र सिद्धिप्रदे । नीलेन्दीवरलोचनत्रययुते कारुण्यवारांनिधे सौभाग्यामृतवर्षणेन कृपया सिञ्च त्वमस्मादृशम् ॥ २ ॥ शर्वं गर्वसमूहपूरिततनो सर्पादिवेषोज्ज्वले व्याघ्रत्वक्परिवीतसुन्दरकटिव्याधूतघण्टाङ्किते । सद्यः कृत्तगलद्रजःपरिमिलन्मुण्डद्वयीमूर्धजग्रन्थिश्रेणिनृमुण्डदामललिते भीमे भयं नाशय ॥ ३ ॥ मायानङ्गविकाररूपललनाबिन्द्वर्धचन्द्रात्मिके हुंफट्कारमयि त्वमेव शरणं मन्त्रात्मिके मादृशः । मूर्तिस्ते जननि त्रिधामघटिता स्थूलाऽतिसूक्ष्मा परा वेदानां नहि गोचरा कथमपि प्राप्तां नु तामाश्रये ॥४॥ त्वत्पादाम्बुजसेवया सुकृतिनो गच्छन्ति सायुज्यतां तस्य स्त्री परमेश्वरी त्रिनयनब्रह्मादिसाम्यात्मनः। संसाराम्बुधिमज्जने पटुतनून्देवेन्द्रमुख्यान्सुरान्मातस्त्वत्पदसेवने हि विमुखो यो मन्दधीः सेवते ॥५॥ मातस्त्वत्पदपङ्कजद्वयरजोमुद्राङ्ककोटीरिणस्ते देवा जयसङ्गरे विजयिनो निःशङ्कमङ्के गताः । देवोऽहं भुवने न मे सम इति स्पर्धां वहन्तः परे तत्तुल्यं नियतं यथाऽमुभिरमी नाशं व्रजन्ति स्वयम् ॥ ६ ॥ त्वन्नामस्मरणात्पलायनपरा द्रष्टुं च शक्ता न ते भूतप्रेतपिशाचराक्षसगणा यक्षाश्च नागाधिपाः । दैत्या दानवपुंगवाश्च खचरा व्याघ्रादिका जन्तवो

डाकिन्यः कुपितान्तकाश्च मनुजं मातः क्षणं भूतले ॥ ७ ॥ लक्ष्मीः सिद्धगणाश्च पादुकमुखाः सिद्धास्तथा चारणाः स्तम्भश्चापि रणाङ्गणे गजघटास्तम्भस्तथा मोहनम् । मातस्त्वत्पदसेवया खलु नृणां सिद्धयन्ति ते ते गुणाः कान्तिः कान्तमनोभवस्य भवति क्षुद्रोऽपि वाचस्पतिः ॥८॥ ताराष्टकमिदं रम्यं भक्तिमान्यः पठेन्नरः । प्रातर्मध्याह्नकाले च सायाह्ने नियतः शुचिः ॥ ९ ॥ लभते कवितां दिव्यां सर्वशास्त्रार्थविद्भवेत् । लक्ष्मीमनश्वरं प्राप्य भुक्त्वा भोगान्यथेप्सितान् ॥१०॥ कीर्तिं कान्तिं च नैरुज्यं सर्वेषां प्रियतां व्रजेत् । विख्यातिं चापि लोकेषु प्राप्यान्ते मोक्षमाप्नुयात् ॥ ११ ॥

इति नीलतन्त्रे ताराष्टकं संपूर्णम् ।

## १७२ शीतलाष्टकम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशीतलास्तोत्रस्य महादेव ऋषिः । अनुष्टुप् छन्दः । शीतला देवता । लक्ष्मीर्बीजम् । भवानी शक्तिः । सर्वविस्फोटकनिवृत्तये जपे विनियोगः । ईश्वर उवाच । वन्देहं शीतलां देवीं रासभस्थां दिगम्बराम् । मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ १ ॥ वन्देऽहं शीतलां देवीं सर्वरोगभयापहाम् । यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ २ ॥ शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः । विस्फोटकभयं घोरं क्षिप्रं तस्य प्रण-

श्यति ॥ ३ ॥ यस्त्वामुदकमध्ये तु धृत्वा पूजयते नरः । विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ ४ ॥ शीतले ज्वरदग्धस्य पूतिगन्धयुतस्य च । प्रनष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् ॥ ५ ॥ शीतले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् । त्रिस्फोटकविदीर्णानां त्वमेकाऽमृतवर्षिणी ॥ ६ ॥ गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम् । त्वदनुध्यानमात्रेण शीतले यान्ति संक्षयम् ॥ ७ ॥ न मन्त्रो नौषधं तस्य पापरोगस्य विद्यते । त्वामेकां शीतले धात्रीं नान्यां पश्यामि देवताम् ॥ ८ ॥ मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम् । यस्त्वां संचिन्तयेद्देवि तस्य मृत्युर्न जायते ॥ ९ ॥ अष्टकं शीतलादेव्या यो नरः प्रपठेत्सदा । विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ १० ॥ श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः । उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ ११ ॥ शीतले त्वं जगन्माता शीतले त्वं जगत्पिता । शीतले त्वं जगद्धात्री शीतलायै नमो नमः ॥ १२ ॥ रासभो गर्दभश्चैव खरो वैशाखनन्दनः । शीतलावाहनश्चैव दूर्वाकन्दनिकृन्तनः ॥ १३ ॥ एतानि खरनामानि शीतलाग्रे तु यः पठेत् । तस्य गेहे शिशूनां च शीतलारुङ् न जायते ॥ १४ ॥ शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् । दातव्यं च सदा तस्मै श्रद्धाभक्तियुताय वै ॥ १५ ॥



इति श्रीस्कन्दपुराणे शीतलाष्टकस्तोत्रं संपूर्णम् ।

## १७३ अन्नपूर्णास्तोत्रम् ।

श्रीगणेशाय नमः ॥ नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ॥ १ ॥ नानारत्नविचित्रभूषणकरी हेमाम्बराडम्बरी मुक्ताहारविलम्बमानविलसद्वक्षोजकुम्भान्तरी । काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ २ ॥ योगानन्दकरी रिपुक्षयकरी धर्मार्थनिष्ठाकरी चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यसमस्तवाञ्छितकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ३ ॥ कैलासाचलकन्दरालयकरी गौरी उमा शंकरी कौमारी निगमार्थगोचरकरी ओंकारबीजाक्षरी । मोक्षद्वारकपाटपाटनकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ४ ॥ दृश्यादृश्यप्रभूतवाहनकरी ब्रह्माण्डभाण्डोदरी लीलानाटकसूत्रभेदनकरी विज्ञानदीपाङ्कुरी । श्रीविश्वेशमनःप्रसादनकरी काशीपुराधीश्वरी भिक्षां देहि०॥५॥ उर्वी सर्वजनेश्वरी भगवती माता च पूर्णेश्वरी वेणीनीलसमानकुन्तलहरी नित्यान्नदानेश्वरी । सर्वानन्दकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥६॥ आदिक्षान्तसमस्तवर्णनकरी शंभोस्त्रिभावाकरी काश्मीरा त्रिजलेश्वरी त्रिलहरी नित्याङ्कुरा

शर्वरी । कामाकाङ्क्षकरी जनोदयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ७ ॥ देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी वामं स्वादुपयोधरप्रियकरी सौभाग्यमाहेश्वरी । भक्ताभीष्टकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ८ ॥ चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी चन्द्रार्काग्निसमानकुन्तलधरी चन्द्रार्कवर्णेश्वरी । मालापुस्तकपाशसाङ्कुशधरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ९ ॥ क्षत्रत्राणकरी महाभयकरी माता कृपासागरी साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी । दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ १० ॥ अन्नपूर्णे सदापूर्णे शंकरप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ११ ॥ माता च पार्वती देवी पिता देवो महेश्वरः । बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२ ॥

इति श्रीमच्छंकराचार्यविरचितमन्नपूर्णाष्टकस्तोत्रं संपूर्णम् ।

---

## १७४ भगवत्यष्टकम् ।

श्रीगणेशाय नमः ॥ नमोस्तु ते सरस्वति त्रिशूलचक्रधारिणि सिताम्बरावृते शुभे मृगेन्द्रपीठसंस्थिते । सुवर्णबन्धुराधरे सुझल्लरीशिरोरुहे सुवर्णपद्मभूषिते नमोस्तु ते महेश्वरि ॥ १ ॥ पितामहादिभिर्नुते स्वकान्तिलुप्तचन्द्रभे सर-

त्वमालया वृते भवाब्धिकष्टहारिणि । तमालहस्तमण्डिते तमालभालशोभिते गिरामगोचरे इले नमोऽस्तु० ॥ २ ॥ स्वभक्तवत्सलेऽनघे सदाऽपवर्गभोगदे दरिद्रदुःखहारिणि त्रिलोकशंकरीश्वरि । भवानि भीम अम्बिके प्रचण्डतेजउज्ज्वले भुजाकलापमण्डिते नमोऽस्तु० ॥ ३ ॥ प्रपन्नभीतिनाशिके प्रसूनमाल्यकन्धरे धियस्तमोनिवारिके विशुद्धबुद्धिकारिके । सुरार्चिताङ्घ्रिपङ्कजे प्रचण्डविक्रमेऽक्षरे विशालपद्मलोचने नमोऽस्तु० ॥ ४ ॥ हतस्त्वया स दैत्यधूम्रलोचनो यदा रणे तदा प्रसूनवृष्टयस्त्रिविष्टपे सुरैः कृताः । निरीक्ष्य तत्र ते प्रभामलज्जत प्रभाकरस्त्वये दयाकरे ध्रुवे नमोऽस्तु० ॥५॥ ननाद केसरी यदा चचाल मेदिनी तदा जगाम दैत्यनायकः स्वसेनया द्रुतं भिया । सकोपकम्पदच्छदे सचण्डमुण्डघातिके मृगेन्द्रनादनादिते नमोऽस्तु० ॥ ६ ॥ कुचन्दनार्चितालके सितोष्णवारणाधरे सवर्करानने वरे निशुंभशुंभमर्दिके । प्रसीद चण्डिके अजे समस्तदोपघातिके शुभामतिप्रदेऽचले नमोऽस्तु० ॥ ७ ॥ त्वमेव विश्वधारिणी त्वमेव विश्वकारिणी त्वमेव सर्वहारिणी न गम्यसेऽजितात्मभिः । दिवौकसां हिते रता करोति दैत्यनाशनं शताक्षि रक्तदन्तिके नमोऽस्तु० ॥ ८ ॥ पठन्ति ये समाहिता इमं स्तवं सदा नरा अनन्यभक्तिसंयुता अहर्मुखेऽनुवासरम् । भवन्ति

ते तु पण्डिताः सुपुत्रधान्यसंयुताः कलत्रभूतिसंयुता व्रजन्ति चामृतं सुखम् ॥ ९ ॥

इति श्रीमद्रामदासपूज्यपादशिष्यश्रीमद्धंसदासशिष्येणामरदासाख्यकविना विरचितं भगवत्यष्टकं समाप्तम् ।

## १७५ सङ्कटानामाष्टकम् ।

श्रीगणेशाय नमः ॥ ॐनारद उवाच । जैगीषव्य मुनिश्रेष्ठ सर्वज्ञ सुखदायक । आख्यातानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः ॥१॥ न तृप्तिमधिगच्छामि तव वागमृतेन च । वदस्वैकं महाभाग सङ्कटाख्यानमुत्तमम् ॥ २ ॥ इति तस्य वचः श्रुत्वा जैगीषव्योऽब्रवीत्ततः । सङ्कष्टनाशनं स्तोत्रं शृणु देवर्षिसत्तम ॥ ३ ॥ द्वापरे तु पुरा वृत्ते भ्रष्टराज्यो युधिष्ठिरः । भ्रातृभिः सहितो राज्यनिर्वेदं परमं गतः ॥ ४ ॥ तदानीं तु ततः काशीपुरीं यातो महामुनिः । मार्कण्डेय इति ख्यातः सह शिष्यैर्महायशाः ॥ ५ ॥ तं दृष्ट्वा स समुत्थाय प्रणिपत्य सुपूजितः । किमर्थं म्लानवदन एतत्त्वं मां निवेदय ॥ ६ ॥ युधिष्ठिर उवाच । संकष्टं मे महत्प्राप्तमेतादृग्वदनं ततः । एतन्निवारणोपायं किंचिद्ब्रूहि मुने मम ॥ ७ ॥ मार्कण्डेय उवाच । आनन्दकानने देवी संकटा नाम विश्रुता । वीरेश्वरोत्तरे भागे पूर्वं चन्द्रेश्वरस्य च ॥ ८ ॥ अथ नामाष्टकं तस्याः सर्वसिद्धिकरं नृणाम् । संकटा प्रथमं नाम

द्वितीयं विजया तथा ॥ ९ ॥ तृतीयं कामदा प्रोक्तं चतुर्थं दुःखहारिणी । शर्वाणी पञ्चमं नाम षष्ठं कात्यायनी तथा ॥ १० ॥ सप्तमं भीमनयना सर्वरोगहराऽष्टमम् । नामाष्टकमिदं पुण्यं त्रिसन्ध्यं श्रद्धयान्वितः ॥ ११ ॥ यः पठेत्पाठयेद्वापि नरो मुच्येत संकटात् । इत्युक्त्वा तु द्विजश्रेष्ठमृषिर्वाराणसीं ययौ ॥ १२ ॥ इति तस्य वचः श्रुत्वा नारदो हर्षनिर्भरः । ततः सम्पूजितां देवीं वीरेश्वरसमन्विताम् ॥ १३ ॥ भुजैस्तु दशभिर्युक्तां लोचनत्रयभूषिताम् । मालाकमण्डलुयुतां पद्मशङ्खगदायुताम् ॥ १४ ॥ त्रिशूलडमरुधरां खड्गचर्मविभूषिताम् । वरदाभयहस्तां तां प्रणम्य विधिनन्दनः ॥ १५ ॥ वारत्रयं गृहीत्वा तु ततो विष्णुपुरं ययौ । एतत्स्तोत्रस्य पठनं पुत्रपौत्रविवर्धनम् ॥ १६ ॥ संकष्टनाशनं चैव त्रिषु लोकेषु विश्रुतम् । गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् ॥ १७ ॥

इति श्रीपद्मपुराणे संकटानामाष्टकं संपूर्णम् ।

---

## १७६ लक्ष्मीलहरिः ।

श्रीगणेशाय नमः ॥ समुन्मीलन्नीलाम्बुजनिकरनीराजितरुचामपाङ्गानां भृङ्गैरमृतलहरीश्रेणिमसृणैः । ह्रिया हीनं दीनं भयमुकुलीनं करुणया हरिश्यामा सा मामवतु जडं सामाजिकमपि ॥ १ ॥ समुन्मीलद्वन्तःकरणकरुणोद्गार-

चतुरः करिप्राणत्राणप्रणयिनि दृगन्तस्तव मयि । यमासा-द्योन्माद्यद्द्विपनियुतगण्डस्थलगलन्मदक्लिन्नद्वारो भवति सुख-सारो नरपतिः ॥ २ ॥ उरस्यस्य भ्रश्यत्कचरभरनिर्यत्सुम-नसः पतन्ति स्रग्गोलाः स्मरशरपराधीनमनसः । सुरास्तं गायन्ति स्फुरिततनुगङ्गाधरमुखास्तवायं दृक्पातो यदुपरि कृपातो विलसति ॥ ३ ॥ समीपे संगीतस्वरमधुरभङ्गी मृग-दृशां विदूरे दानान्धं द्विरदकलभोद्दामनिनदः । बहिर्द्वारे तेषां भवति हयहेषाकलकलो दृगेषा ते येषामुपरि कमले देवि सदया ॥४॥ अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः । उदञ्चत्पीयूषाम्बु-धिलहरिलीलामनुहरन्नपाङ्गस्तेऽमन्दं मम कलुषवृन्दं दलयतु ॥५॥नमन्मौलिश्रेणित्रिपुरपरिपन्थि प्रतिलसत्कपर्दव्यावृ-त्तिस्फुरितफणिफूत्कारचकितः । लसत्फुल्लाम्भोजभ्रदिमहृ-रणः कोऽपि चरणश्चिरश्वेतश्वारी मम भवतु वारीशदुहितुः ॥ ६ ॥ प्रवालानां दीक्षा गुरुरपि च लाक्षारुणरुचां नियन्त्री बन्धूकद्युतिनिकरबन्धूकृतिपटुः । नृणामन्तर्ध्वान्तं निबि-डमपहर्तुं तव किल प्रभातश्रीरेषा चरणरुचिरेषा विजयते ॥ ७ ॥ प्रभातप्रोन्मीलत्कमलवनसंचारसमये शिखाः किञ्ज-ल्कानां विदधति रुजं यत्र मृदुलः । तदेतन्मातस्ते चरणमरु-[illegible] कठोरा मञ्जरी [illegible] प्रविशतु ॥ ८ ॥ स्मितज्योत्स्नामज्जद्द्विजमणिमयूखामृतझरैर्निषिञ्चन्ती विश्वं

तव त्रिमलमूर्तिं स्मरति यः । अमन्दं स्यन्दंते वदनकमलाद्स्य कृतिनो विविक्तौ वैकल्पः सततमविकल्पा नवगिरः ॥ ९ ॥ शरौ मायाबीजौ हिमकरकलाक्रान्तशिरसौ विधायोर्ध्वं विन्दुं स्फुरितमिति बीजं जलधिजे । जपेद्यः स्वच्छन्दं स हि पुनरमन्दं गजघटामदभ्राम्यद्भृङ्गैर्मुखरयति वेश्मानि विदुषाम् ॥ १० ॥ स्मरो नाभं नामं त्रिजगदभिरामं तव पदं प्रपेदे सिद्धिं यां कथमिव नरस्तां कथयतु । यया पातं पातं पदकमलयोः पर्वतचरो हरो हा रोपार्द्रामनुनयति शैलेन्द्रतनयाम् ॥ ११ ॥ हरन्तो निःशङ्कं हिमकरकलानां रुचिरतां किरन्तः स्वच्छन्दं किरणमयपीयूषनिकरम् । विलसन्तु प्रौढा हरिहृदयहाराः प्रियतमा ममान्तःसंतापं तव चरणशोणाम्बुजनखाः ॥ १२ ॥ विषान्माणिक्यानां विगलितनिमेषं निमिषतामममन्दं सौन्दर्यं तव चरणयोरम्बुधिसुते । पदालंकाराणां जयति कलनिक्वाणनपटुरुदञ्चन्नुद्दामः स्तुतिवचनलीलाकलकलः ॥ १३ ॥ मणिज्योत्स्नाजालैर्निजतनुरुचां मांसलतया जटालं ते जङ्घायुगलमघभङ्गाय भवतु । भ्रमन्ती यन्मध्ये दरदलितशोणाम्बुजरुचां दृशां माला नीराजनमिव विधत्ते मुररिपोः ॥ १४ ॥ हरद्गर्वं सर्वं करिपतिकराणां मृदुतया भृशं भाभिर्दम्भं कनकमयरम्भावनिरुहाम् । लसज्जानुज्योत्स्नापरिचितमङ्गं जलधिजे तवोरुद्वन्द्वं नः क्षपयतु भवोरुज्वरभयम् ॥ १५ ॥ कलक्वाणां काञ्चीं मणिग-

णजटालामधिवहन्वसानः कौसुम्भं वसनमसनं कौस्तुभरुचाम् । मुनित्रातैः प्रातः शुचिवचनजातैरतिनुतं नितम्बस्ते बिम्बं हसति नवमम्बाम्बरमणेः॥१६॥ जगन्मिथ्याभूतं मम निगदतां वेदवचसामभिप्रायो नाद्यावधि हृदयमध्याविशदिदम् । इदानीं विश्वेषां जनकमुदरं ते विमृशतो विसंदेहं चेतोऽजनि गरुडकेतोः प्रियतमे॥१७॥ अनल्पैर्वादीन्द्रैरगणितमहायुक्तिनिवहैर्निरस्ताविस्तारं क्वचिदकलयन्ती तनुमपि । असत्ख्यातिव्याख्यादिकचतुरिमाख्यातमहिमा वलग्ने लग्नेयं सुगतमतसिद्धान्तसरणिः॥१८॥ निदानं श्रृङ्गारप्रकरमकरन्दस्य कमले महानेवालम्बो हरिनयनरोलम्बवरयोः । निधानं शोभानां निधनमनुतापस्य जगतो जवेनाभीतिं मे दिशतु तव नाभीसरसिजम् ॥ १९ ॥ गभीरामुद्वेलां प्रथमरसकल्लोलमिलितां विगाढुं ते नाभीविमलसरसीं गौर्मम मनाक् । पदं यावन्यस्यत्यहह विनिमग्नैव सहसा नहि क्षेमं सूते गुरुमहिमभूतेष्वविनयः ॥ २० ॥ कुचौ ते दुग्धाम्भोनिधिकुलशिखामण्डनमणे हरेते सौभाग्यं यदि सुरगिरेश्चित्रमिह किम् । त्रिलोकीलावण्याहरणनवलीलानिपुणयोर्ययोर्दत्ते भूयः करमखिलनाथो मधुरिपुः ॥ २१ ॥ हरक्रोधत्रस्यन्मदननवदुर्गद्वयतुलां दधत्कोकद्वन्द्वद्युतिदमनदीक्षाधिगुरुतनम् । तवैतद्वक्षो[illegible] मम स्वान्त-

ध्वान्तं किमपि च नितान्तं गमयतु ॥ २२ ॥ अनेकब्रह्मा-

ण्डस्थितिनियमलीलाविलसिते दयापीयूषाम्भोनिधिसहज-संवासभवने । विधोश्चित्तायामे हृदयकमले ते तु कमले मनाङ् मन्निस्तारस्मृतिरपि च कोणे निवसतु ॥ २३ ॥ मृणालीनां लीलाः सहजलवणिम्ना लघयतां चतुर्णां सौभाग्यं तव जननि दोष्णां वदतु कः । लुठन्ति स्वच्छदं मरकतशिलामांसलरुचः श्रुतीनां स्पर्धां ये दधत इव कण्ठे मधुरिपोः ॥ २४ ॥ अलभ्यं सौरभ्यं कविकुलनमस्यारुचिरता तथापि त्वद्धस्ते निवसदरविन्दं विकसितम् । कलापे काव्यानां प्रकृतिकमनीयस्तुतिविधौ गुणोत्कर्षाधानं प्रथितमुपमानं समजनि ॥ २५ ॥ अनल्पं जल्पन्तु प्रतिहतधियः पल्लवतुलां रसज्ञामज्ञानां क इव कमले मन्थरयतु । तपन्तु श्रीभिक्षावितरणवशीभूतजगतां कराणां सौभाग्यं तव तुलयितुं तुङ्गरसनाः ॥ २६ ॥ समाहारः श्रीणां विरचितविहारो हरिहशां परीहारो भक्तप्रभवभवसंतापसरणेः । प्रहारः सर्वासामपि च विपदां विष्णुदयिते ममोद्धारोपायं तव सपदि हारो विमृशतु ॥ २७ ॥ अलंकुर्वाणानां मणिगणघृणीनां लवणिमा यदीयाभिर्भाभिर्भजति महिमानं लघुरपि । सुपर्वश्रेणीनां जनितपरसौभाग्यविभवास्तवाङ्गुल्यस्ता मे ददतु हरिवामेऽभिलषितम् ॥ २८ ॥ तपस्तेपे तीव्रं किमपि परितप्य प्रतिदिनं तव ग्रीवालक्ष्मीलवपरिचयायासविभवम् । हरिकराग्रं चुम्बत्यथ वहति पाणौ किमधिकं नदामस्तत्रायं प्रण-

यवशतोऽस्यै स्पृहयति ॥ २९ ॥ अभेदप्रत्यूहः सकलहरिदु-ल्लासनविधिर्विलीनो लोकानां स हि नयनतापेऽपि कमले । तवास्मिन्पीयूषं किरति वदने रम्यवदने कुतो हेतोश्चेतो विधुरयमुदेति स्म जलधेः ॥ ३० ॥ मुखाम्भोजे मन्दस्मितमधुरकान्त्या विकसतां द्विजानां ते हीरावलिविहितनीराजनरुचाम् । इयं जोत्स्ना कापि स्रवदमृतसंदोहसरसा ममोग्रदारिद्र्यज्वरतरुणतापं तिरयतु ॥ ३१ ॥ कुलैः कस्तूरीणां भृशमनिशमाशास्यमपि च प्रभातप्रोन्मीलन्नलिननिवहैरश्रतचरम् । वहन्तः सौरभ्यं मृदुगतिविलासा मम शिवं तव श्वासा नासापुटविहितवासा विदधताम् ॥ ३२ ॥ कपोले ते दोलायितललितलोलालकवृते विमुक्ताद्वस्मिल्लाद्भिलसति मुक्तावलिरियम् । स्वकीयानां वन्दीकृतमसहमानैरिव बलान्निवध्योर्ध्वं कृष्टा तिमिरनिकुरम्बैर्विधुकला ॥ ३३ ॥ प्रसादो यस्यायं नमदमितगीर्वाणमुकुटप्रसर्पज्ज्यारत्नाभिश्चरणतलपीठार्चितविधिः । दृगम्भोजं तत्ते गतिहसितमत्तेभगमने वने लीनैर्दीनैः कथय कथमीयादिह तुलाम् ॥ ३४ ॥ दुरापा दुर्वृत्तैर्दुरितदमने दारणभरा दयार्द्रा दीनानामुपरि दलदिन्दीवरनिभा । दहन्ती दारिद्र्यद्रुमकुलमुदारद्रविणदा त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु ॥ ३५ ॥ तव श्रोत्रे फुल्लोत्पलसकलसौभाग्यजयिनी सदैव श्रीनारायण-



गुणगणौघप्रणयिनी । स्वैर्दीनां लीनामनिशमवधानातिश-

र्गिर्नो समाप्येतां वाचं जलधितनये गोचरयताम्॥ ३६ ॥ प्रभा-जालैः प्राभातिकदिनकराभापनयनं तवेदं खेदं मे विघटयतु ताटङ्कयुगलम् । महिम्ना यस्यायं प्रलयसमयेऽपि क्रतुभुजां जगत्पायं पायं स्वपिति निरपायं तव पतिः ॥ ३७ ॥ निवासो मुक्तानां निबिडनरनीलाम्बुदनिभस्तवायं धम्मिल्लो विमलयतु मल्लोचनयुगम् । भृशं यस्मिन्कालागुरुबहुलसौरभ्यनिवहैः पतन्ति श्रीभिक्षार्थिन इव मदान्धा मधुलिहः ॥ ३८ ॥ विलग्नौ ते पार्श्वद्वयपरिसरे मत्तकरिणौ करोत्तीर्णैरञ्चन्मणिकलशदुग्धास्यगलितैः । निषिञ्चन्तौ मुक्तामणिगणचयैस्त्वां जलकणैर्नमस्यामो दामोदरगृहिणि दारिद्र्यदलिताः ॥ ३९ ॥ अये मातर्लक्ष्मि त्वदरुणपदाम्भोजनिकटे लुठन्तं बालं माममविरलगलद्बाष्पजटिलम् । सुधासेकस्निग्धैरतिमसृणदुग्धैः करतलैः स्पृशन्ती मारोदीरिति वद समाश्वास्यसि कदा ॥ ४० ॥ रमे पद्मे लक्ष्मि प्रणतजनकल्पद्रुमलते सुधाम्भोधेः पुत्रि त्रिदशनिकरोपास्तचरणे । परे नित्यं मातर्गुणमयि परब्रह्ममहिले जगन्नाथस्याकर्णय मृदुलवर्णावलिमिमाम् ॥ ४१ ॥

इति पण्डितराजश्रीजगन्नाथविरचिता लक्ष्मीलहरिः समाप्ता ।

---

## १७७ अस्वाष्टकम् ।



श्रीगणेशाय नमः ॥ चेटीभवन्निखिलखेटीकदम्बतरुवा-

टीषु नाकिपटलीकोटीरचारुतरकोटीमणीकिरणकोटीकरम्बितपदा। पाटीरगन्धकुचशाटी कवित्वपरिपाटीमगाधिपसुता घोटी कुलादधिकधाटीमुदारमुखवीटीरसेन तनुताम् ॥ १ ॥ कूलातिगामिभयतूलावलिज्वलनकीला निजस्तुतिविधाकोलाहलक्षपितकालामरी कुशलकीलालपोषणनभाः। स्थूला कुचे जलदनीला कचे कलितलीला कदम्बविपिने शूलायुधप्रणतिशीला विभातु हृदि शैलाधिराजतनया ॥ २ ॥ यत्राशयो लगति तत्रागजा वसतु कुत्रापि निस्तुलशुका सुत्रामकालमुखसत्राशनप्रकरसुत्राणकारिचरणा। छत्रानिलातिरयपत्राभिरामगुणमित्रामरीसमवधूः कुत्रासहन्मणिविचित्राकृतिः स्फुरितपुत्रादिदाननिपुणा ॥ ३ ॥ द्वैपायनप्रभृतिशापायुधत्रिदिवसोपानधूलिचरणा पापापहस्वमनुजापानुलीनजनतापापनोदनिपुणा। नीपालया सुरभिधूपालका दुरितकूपादुदञ्चयतु मां रूपाधिका शिखरिभूपालवंशमणिदीपायिता भगवती ॥ ४ ॥ यालीभिरात्मतनुतालीसकृत्प्रियकपालीषु खेलति भयव्यालीनकुल्यसितचूलीभरा चरणधूलीलसन्मुनिवरा। बालीभृति श्रवसि तालीदलं वहति यालीकशोभितिलका सालीकरोतु मम काली मनः स्वपदनालीकसेवनविधौ ॥ ५ ॥ न्यङ्काकरे वपुषि कङ्कादिरक्तपुषि कङ्कादिपक्षिविषये त्वं कामनामयसि किं कारणं हृदयपङ्कारिमेहि गिरिजाम्। शङ्काशिलानिशितटङ्कायमानपदसंकाशमानसुम-

नोझङ्कारिमानततिमङ्काद्युपेतशशिसंकाशिवक्त्रकमलाम् ॥६॥ कुम्बावतीसमविडम्बा गलेन नवतुम्बाभवीणसविधा शं बाहुलेयशशिबिम्बाभिरामसुखसंबाधितस्तनभरा । अम्बा कुरङ्गमदजम्बालरोचिरिह लम्बालका दिशतु मे बिम्बाधरा विनतशम्बायुधादिनिकुरम्बा कदम्बविपिने ॥ ७ ॥ इन्धान-कीरमणिबन्धा भवे हृदयबन्धावतीव रसिका सन्धावती भुवनसन्धारणेऽप्यमृतसिन्धावुदारनिलया । गन्धानुभान-मुहुरन्धालिवीतकचबन्धा समर्पयतु मे शंधाम भानुमपि सन्धानमाशु पदसन्धानमप्यगसुता ॥ ८ ॥

इति श्रीशंकराचार्यविरचितमम्बाष्टकं समाप्तम् ।

## १७८ श्रीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ पुष्कर उवाच । राजलक्ष्मीस्थिर-त्वाय यथेन्द्रेण पुरा श्रियः । स्तुतिः कृता तथा राजन्जयार्थं स्तुतिमाचरेत् ॥ १ ॥ इन्द्र उवाच । नमस्ते सर्वलोकानां जननीमब्धिसम्भवाम् । श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थ-लस्थिताम् ॥ २ ॥ त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी । सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सर-स्वती ॥ ३ ॥ यज्ञविद्या महाविद्या गुह्यविद्या च शोभने । आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥४॥ आन्वी-क्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च । सौम्यासौम्यैर्जग-

द्रूपैस्त्वयैतद्देवि पूरितम् ॥ ५ ॥ का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः । अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ॥ ६ ॥ त्वया देवि परित्यक्तं सकलं भुवनत्रयम् । विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥ ७ ॥ दाराः पुत्रास्तथागारं सुहृद्धान्यधनादिकम् । भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥ ८ ॥ शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् । देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥ ९ ॥ त्वमम्बा सर्वलोकानां देवदेवो हरिः पिता । त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् ॥ १० ॥ मानं कोपं तथा कोष्ठं मा गृहं मा परिच्छदम् । मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ ११ ॥ मा पुत्रान्मा सुहृद्वर्गान्मा पशून्मा विभूषणम् । त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ॥ १२ ॥ सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः । त्यजन्ते ते नराः सद्यः संत्यक्ता ये त्वयामले ॥ १३ ॥ त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः । कुलैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥ १४ ॥ स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् । स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥ १५ ॥ सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः । पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १६ ॥ न ते वर्णयितुं शक्ता गुणान् जिह्वापि वेधसः । प्रसीद देवि पद्माक्षि मास्मांस्त्याक्षीः कदाचन ॥ १७ ॥

पुष्कर उवाच । एवं स्तुता ददौ श्रीश्च वरमिन्द्राय चेप्सितम् । सुस्थिरत्वं च राज्यस्य संग्रामविजयादिकम् ॥१८॥ स्वस्तोत्रपाठश्रवणकर्तॄणां भुक्तिमुक्तिदम् । श्रीस्तोत्रं सततं तस्मात्पठेच्च शृणुयान्नरः ॥ १९ ॥

इति श्रीअग्निपुराणान्तर्गतं श्रीस्तोत्रं समाप्तम् ।

## १७९ लघुस्तोत्रम् ।

श्रीगणेशाय नमः ॥ आधारे तरुणार्कबिम्बरुचिरं सोमप्रभं वाग्भवं बीजं मन्मथमिन्द्रगोपकनिभं हृत्पङ्कजे संस्थितम् । रन्ध्रे ब्रह्मपदे च शाक्तमपरं चन्द्रप्रभाभासुरं ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सौख्यं पदम् ॥ १ ॥ ॐ अस्य श्रीलघुस्तवस्तोत्रमन्त्रस्य वृद्धसारस्वतऋषिः । त्रिपुरभैरवी देवता । शार्दूलविक्रीडितं छन्दः । मम सर्वकामफलप्राप्त्यर्थे जपे विनियोगः ॥ ॐ ऐन्द्रस्येव शरासनस्य दधती मध्ये ललाटप्रभां शौक्लीं कान्तिमनुष्य गोरिव शिरस्यातन्वती सर्वतः । एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्मांशोः सदाहस्थिता छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥१॥ या मात्रा त्रिपुपीलतातनुलसत्तन्तुस्थितिं स्पर्धिनी वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् । शक्तिं कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः॥२॥दृष्ट्वा संभ्रमकारि

वस्तु सहसा ऐं ऐं इति व्याहृतं येनाकूतवशादपीह वरदे बिन्दुं विनाप्यक्षरम् । तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्रोदरात् ॥ ३ ॥ यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि । आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः प्रारम्भे प्रणवास्पदं प्रणयितुं नीत्योच्चरन्ति स्फुटम् ॥ ४ ॥ यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैस्तार्तीयं तदहं नमामि मनसा त्वद्बीजमिन्दुप्रभम् । अस्त्वौर्वोऽपि सरस्वतीमनुगते जाड्याम्बुविच्छित्तये गोशब्दो गिरि वर्तते सुनियतं योगं विना सिद्धितः ॥ ५ ॥ एकैकं तव देवि जन्म ह्यनघं सव्यञ्जनाव्यञ्जनं कूटस्थं यदि वा पृथक् क्रमगतं यद्वा स्थितं व्युत्क्रमात् । यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम् ॥ ६ ॥ वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे भक्तेभ्यो वरदानपेशलकरां कर्पूरकन्दोज्ज्वलाम् । उज्जृम्भाम्बुजपत्रकान्तिनयनां स्निग्धप्रभालोकिनीं ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥ ७ ॥ ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम् । अश्रान्तं विकटं स्फुटाक्षरपदा निर्यान्ति वक्त्राम्बुजात्तेषां भारति भारतीसुरसरित्कल्लोललोर्मयः ॥ ८ ॥

ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमामुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव । पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वरक्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवानी ध्रुवम् ॥ ९ ॥ चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चिस्रजं ये त्वां चेतसि तद्गतेक्षणमपि ध्यायन्ति कृत्वा स्थिराम् । तेषां वेश्मसु विभ्रमादहरहःकारीभवन्त्यश्चिरं माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ति श्रियः ॥ १० ॥ आर्भक्याशशिखण्डमण्डितजटाजूटानृमुण्डस्रजं बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् । त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंचिन्तये ॥ ११ ॥ जातोऽप्यल्पपरिच्छिदे क्षितिभुजां सामान्यमात्रे कुले निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः । यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभवद्देवि त्वच्चरणाम्बुजप्रणतितः सोऽयं प्रसादोदयः ॥ १२ ॥ चण्डि त्वच्चरणाम्बुजार्चनकृते बिल्वीदलोल्लुण्ठनात्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः । ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्सवत्साङ्कितैर्जायन्ते पृथिवीभुजाः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३ ॥ विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैस्त्वां देवि त्रिपुरे परां परकलां संतर्प्य पूजाविधौ । यां यां प्रार्थयते मनस्थिरधियां येषां त एव ध्रुवं तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरवि-

प्रीकृताः ॥ १४ ॥ शब्दानां जननि त्वमत्र भुवने वाग्वादिनीत्युच्यसे त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम्। लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी सा त्वं काचिदचिन्त्यरूपगहना शक्तिः परा गीयसे ॥ १५ ॥ देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरास्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः। यत्किंचिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥ १६ ॥ लक्ष्मीं राजकुले जयं रणमुखे क्षेमंकरीमध्वनि क्रव्याद्द्विपसर्पभाजि शबरी कान्तारदुर्गे गिरौ। भूतप्रेतपिशाचजृम्भकभयं स्मृत्वा महाभैरवीं व्यामोदे त्रिपुरां तरन्ति विपदस्ताराञ्च तो यत्प्लवे ॥ १७ ॥ या या कुण्डलिनी क्रिया मधुमती काली कलामालिनी मातङ्गी विजया जया भगवती देवी शिवा शांभवा। शक्तिः शंकरवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ १८ ॥ आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः। नामानि त्रिपुरे भवन्ति खलु या नित्यं तु गुह्यानि ते तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ॥१९॥ बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं भारत्यास्त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्तिः स्फुटम्। एकद्वित्रिपदक्रमेण कथितस्तत्पादसंख्याक्षरैर्मन्त्रोद्धारविधिर्विशेषसहितः सत्सं-

प्रदायान्वितः ॥ २० ॥ सावद्यं निरवद्यमस्तु यदि वा किंवाऽनया चिन्तया नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि । संचिन्त्यापि लघुत्वमात्मनि दृढं संजायमानं हठात्त्वद्भक्त्या मुखरीकृतेन रचितं यत्स्यान्मयाऽपि ध्रुवम् ॥ २१ ॥ आनन्दोद्भवकम्पघूर्णनयनं निद्राट्टहासादिकं वेदव्याकरणावगाहकवितातर्कोक्तिमुक्तिप्रदम् । वश्याकर्षपुरप्रवेशनगरक्षोभादिसिद्ध्यष्टकं लघ्वाचार्यमिदं करोति सततं सौभाग्यमारोग्यताम् ॥ २२ ॥ गौरि त्र्यम्बकपत्नि पार्वति सति त्रैलोक्यमाने शिवे शर्वाणि त्रिपुरे भवानि वरदे रुद्राणि कात्यायनि । भीमे भैरवि चण्डि सर्ववरदे कालि क्षये शूलिनि त्वत्पादप्रणतं ह्यनन्यमनसा पर्याकुलं पाहि माम् ॥ २३ ॥ यदि भवति जडात्मा त्रैपुरं मन्त्रराजं स हि भवति कवीन्द्रः सर्ववादीन्द्रजेता । इदमपि कविभानुर्मत्तमातङ्गगण्डाच्च्यवति मदजनानां पिच्छलद्वारदेशे ॥ २४ ॥ आईमवल्लरजनीवरबिन्दुनादमेकाक्षरं पदमिदं कृतुका वदन्ति । मन्त्रं च येन भुवनत्रयकाकितस्य सृष्टिस्थितिप्रलयहेतुरचिन्त्यरूपम् ॥ २५ ॥

इति श्रीलघ्वाचार्यविरचितं श्रीलघुस्तवस्तोत्रं संपूर्णम् ।

---

## १८० भगवतीपुष्पाञ्जलिस्तोत्रम् ।



श्रीगणेशाय नमः ॥ भगवति भगवत्पदपङ्कजं भ्रमरभूत-

सुरासुरसेवितम् । सुजनमानसहंसपरिस्तुतं कमलयाऽमलया निभृतं भजे ॥ १ ॥ ते उभे अभिवन्देऽहं विघ्नेशकुलदैवते । नरनागाननस्त्वेको नरसिंह नमोऽस्तु ते ॥ २ ॥ हरिगुरु-पदपद्मं शुद्धपद्मेऽनुरागाद्विगतपरमभागे सन्निधायादरेण । तदनुचरि करोमि प्रीतये भक्तिभाजां भगवति पदपद्मे पद्यपुष्पाञ्जलिं ते ॥ ३ ॥ केनैते रचिताः कुतो न निहिताः शुंभादयो दुर्मदाः केनैते तव पालिता इति हि तत्प्रश्ने किमाचक्ष्महे । ब्रह्माद्या अपि शङ्किताः स्वविषये यस्याः प्रसादावधि प्रीता सा महिषासुरप्रमथिनी च्छिन्द्यादवद्यानि मे ॥ ४ ॥ पातु श्रीस्तु चतुर्भुजा किमु चतुर्बाहोर्महौजान्भुजान्धत्तेऽष्टादशधा हि कारणगुणाः कार्ये गुणारम्भकाः । सत्यं दिक्पतिदन्तिसंख्यभुजभृच्छंभुः स्वयंभूः स्वयं धामैक-प्रतिपत्तये किमथवा पातुं दशाष्टौ दिशः ॥ ५ ॥ प्रीत्याऽष्टा-दश संमितेषु युगपद्द्वीपेषु दातुं वरान्त्रातुं वा भयतो बिभर्षि भगवत्यष्टादशैतान्भुजान् । यद्वाऽष्टादशधा भुजांस्तु बिभ्रतः काली सरस्वत्युभे मीलित्वैकमिहानयोः प्रथयितुं सा त्वं रमे रक्ष माम् ॥ ६ ॥ छन्दः । अयि गिरिनन्दिनि नन्दितमेदिनि विश्वविनोदिनि नन्दनुते गिरिवरविन्ध्यशिरो-धिनिवासिनि विष्णुविलासिनि जिष्णुनुते । भगवति हे शितिकण्ठकुटुम्बिनि भूरिकुटुम्बिनि भूरिकृते जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ७ ॥ सुरवर-

र्षिणि दुर्धरधर्षिणि दुर्मुखमर्षिणि हर्षरते त्रिभुवनपोषिणि शंकरतोषिणि किल्मिषमोषिणि घोषरते । दनुजनिरोषिणि दितिसुतरोषिणि दुर्मदशोषिणि सिन्धुसुते जय जय हे० ॥ ८ ॥ अयि जगदम्ब मदम्ब कदम्बवनप्रियवासिनि हासरते शिखरिशिरोमणितुङ्गहिमालयशृङ्गनिजालयमध्यगते । मधुमधुरे मधुकैटभगञ्जिनि कैटभभञ्जिनि रासरते जय जय हे० ॥ ९ ॥ अयि शतखण्डविखण्डितरुण्डवितुण्डितशुण्डगजाधिपते रिपुगजगण्डविदारणचण्डपराक्रमशुण्डमृगाधिपते निजभुजदण्डनिपातितचण्डविपातितमुण्डभटाधिपते । जय जय हे० ॥ १० ॥ अयि रणदुर्मदशत्रुवधोदितदुर्धरनिर्जरशक्तिभृते चतुरविचारधुरीणमहाशिवदूतकृतप्रमथाधिपते । दुरितदुरीहदुराशयदुर्मतिदानवदूतकृतान्तमते जय जय हे० ॥ ११ ॥ अयि शरणागतवैरिवधूवरवीरवराभयदायकरे त्रिभुवनमस्तकशूलविरोधिशिरोधिकृतामलशूलकरे । दुमिदुमितामरदुन्दुभिनादमहोमुखरीकृततिग्मकरे जय जय हे० ॥ १२ ॥ अयि निजहुंकृतिमात्रनिराकृतधूम्रविलोचनधूम्रशते समरविशोषितशोणितबीजसमुद्भवशोणितबीजलते । शिव शिव शुम्भनिशुम्भमहाहवतर्पितभूतपिशाचरते जय जय हे० ॥ १३ ॥ धनुरनुसङ्गरणक्षणसङ्ग परिस्फुरदङ्गनटत्कटके कनकपिशङ्गपृषत्कनिषङ्गरसद्भटशृङ्गहतावटुके । कृतचतुरङ्गबलक्षितिरङ्गघटद्बहुरङ्गरटद्बटुके जय जय

हे० ॥ १४ ॥ सुरललनाततथेयितथेयितथाभिनयोत्तरनृत्यरते । धिमिकटधिक्कटधिकटधिमिध्वनिधीरमृदङ्गनिनादरते जय जय हे० ॥ १५ ॥ जय जय जप्यजये जयशब्दपरस्तुतितत्परविश्वनुते झणझणझिंजिमिझिंकृतनूपुरसिञ्जितमोहितभूतपते । नटितनटार्धनटीनटनायकनाटितनाट्यसुगानरते जय जय हे० ॥ १६ ॥ अयि सुमनःसुमनःसुमनःसुमनःसुमनोहरकान्तियुते श्रितरजनीरजनीरजनीरजनीरजनीकरवक्त्रवृते । सुनयनविभ्रमरभ्रमरभ्रमरभ्रमरभ्रमराधिपते जय जय हे० ॥ १७ ॥ सहितमहाहवमल्लमतल्लिकवल्लितरल्लकमल्लरते विरचितवल्लिकपल्लिकमल्लिकझिल्लिकभिल्लिकवर्गवृते । सितकृतफुल्लिसमुल्लसितारुणतल्लजपल्लवसल्ललिते जय जय हे० ॥ १८ ॥ अविरलगण्डगलन्मदमेदुरमत्तमतङ्गजराजगते त्रिभुवनभूषणभूतकलानिधिरूपपयोनिधिराजसुते । अयि सुदती जनलालसमानसमोहनमन्मथराजसुते जय जय हे० ॥ १९ ॥ कमलदलामलकोमलकान्तिकलाकलितामलभालतले सकलविलासकलानिलयक्रमकेलिचलत्कलहंसकुले । अलिकुलसंकुलकुवलयमण्डलमौलिमिलद्बकुलालिकुले जय जय हे० ॥ २० ॥ करमुरलीरववीजितकूजितलज्जितकोकिलमञ्जुमते मिलितपुलिन्दमनोहरगुञ्जितरञ्जितशैलनिकुञ्जगते । निजगुणभूतमहाशबरीगणसद्गुणसंभृतकेलितले जय जय हे० ॥ २१ ॥ कटितटपीतदुकूलविचित्रमयूखतिरस्कृत-

चन्द्ररुचे प्रणतसुरासुरमौलिमणिस्फुरदंशुलसन्नखचन्द्ररुचे । जितकनकाचलमौलिपदोर्जितनिर्झरकुञ्जरकुम्भकुचे जय जय हे० ॥ २२ ॥ विजितसहस्रकरैकसहस्रकरैकसहस्रकरैकनुते कृतसुरतारकसङ्गरतारकसङ्गरतारकसूनुसुते । सुरथसमाधिसमानसमाधिसमाधिसमाधिसुजातरते जय जय हे० ॥२३॥ पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं स शिवे अयि कमले कमलानिलये कमलानिलयः स कथं न भवेत् । तव पदमेव परंपदमेमनुशीलयतो मम किं न शिवे जय जय हे० ॥ २४ ॥ कनकलसत्कलसिन्धुजलैरनुसिञ्चिनुते गुणरङ्गभुवं भजति स किं न शचीकुचकुम्भतटीपरिरम्भसुखानुभवम् । तव चरणं शरणं करवाणि नतामरवाणिनिवासि शिवं जय जय हे० ॥ २५ ॥ तव विमलेन्दुकलं वदनेन्दुमलं···ननु कूलय ते किमु पुरुहूतपुरीन्दुमुखीसुमुखीभिरसौ विमुखीक्रियते । मम तु मतं शिवनामधने भवती कृपया किमुत क्रियते जय जय हे० ॥ २६ ॥ अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे अयि जगतो जननी कृपयासि यथासि तथानुमितासि रते । यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरुते जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ २७ ॥ स्तुतिमितस्तिमितः सुसमाधिना नियमतोऽयमतोऽनुदिनं पठेत् । परमया रमयापि निषेव्यते परिजनोऽरिजनोऽपि च तं भजेत् ॥ २८ ॥ रमयति किल

कर्षस्तेषु चित्तं नराणामवरजवर यस्माद्रामकृष्णः कवीनाम्। अकृत सुकृतगम्यं रम्यपद्यैकहर्म्यं स्तवनमवनहेतुं प्रीतये विश्वमातुः ॥ २९ ॥ इन्दुरम्यो मुहुर्बिन्दुरम्यो मुहुर्बिन्दुरम्यो यतः साऽनवद्यं स्मृतः। श्रीपतेः सूनुना कारितो योऽधुना विश्वमातुः पदे पद्यपुष्पाञ्जलिः ॥ ३० ॥

इति श्रीभगवतीपद्यपुष्पाञ्जलिस्तोत्रम्।

---

## १८१ इन्द्राक्षीस्तोत्रम्।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीइन्द्राक्षीस्तोत्रमन्त्रस्य सहस्राक्ष ऋषिः। इन्द्राक्षी देवता। अनुष्टुप् छन्दः। महालक्ष्मीः बीजम्। भुवनेश्वरीति शक्तिः। भवानीति कीलकम्। ॐ श्रीं ह्रीं क्लीं इति बीजानि। मम सर्वाभीष्टसिद्ध्यर्थे श्रीमदिन्द्राक्षीस्तोत्रजपे विनियोगः। ॐ इन्द्राक्षी इत्यङ्गुष्ठाभ्यां नमः। ॐ महालक्ष्मीरिति तर्जनीभ्यां नमः। ॐ माहेश्वरीति मध्यमाभ्यां नमः। ॐ अम्बुजाक्षीत्यनामिकाभ्यां नमः। ॐ कात्यायनीति कनिष्ठिकाभ्यां नमः। ॐ कौमारीति करतलकरपृष्ठाभ्यां नमः। ॐ इन्द्राक्षीति हृदयाय नमः। ॐ महालक्ष्मीरिति शिरसे स्वाहा। ॐ माहेश्वरीति शिखायै वौषट्। ॐ अम्बुजाक्षीति कवचाय हुम्। ॐ कात्यायनीति नेत्रत्रयाय वौषट्। ॐ कौमारीत्यस्त्राय फट्। भूर्भुवस्वरोमिति दिग्बन्धनम्। पूर्वस्यां पातु मां ब्राह्मी

चाग्नेय्यां तु महेश्वरी । कौमारी पातु याम्ये वै नैर्ऋत्यां पातु भैरवी ॥ १ ॥ पश्चिमे पातु वाराही वायव्ये नारसिंहिका । कालरात्रिरुदीच्यां वा ऐशान्यां सर्वशक्तिधृक् ॥ २ ॥ ऊर्ध्वं मे भैरवी पातु चाधस्थं विन्ध्यवासिनी । यद्यद्विषममस्थानं तत्तद्रक्षतु चेश्वरी ॥ ३ ॥ अथ ध्यानम् । इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्विताम् । वामहस्ते वज्रधरां दक्षिणेन वरप्रदाम् ॥ १ ॥ इन्द्राक्षीं युवतीं देवीं नानालंकारभूषिताम् । प्रसन्नवदनाम्भोजामप्सरोगणसेविताम् ॥ २ ॥ द्विभुजां सौम्यवदनां पाशाङ्कुशधरां पराम् । त्रैलोक्यमोहिनीं देवीमिन्द्राक्षीनामकीर्तिताम् ॥ ३ ॥ अथ मंत्रः । ॐ ऐं ह्रीं श्रीं क्लीं क्लूं इन्द्राक्ष्यै नमः । इन्द्र उवाच । इन्द्राक्षी नाम सा देवी दैवतैः समुदाहृता । गौरी शाकंभरी देवी दुर्गानाम्नीति विश्रुता ॥ ४ ॥ कात्यायनी महादेवी चन्द्रघण्टा महातपा । सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥ ५ ॥ नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला । अग्निज्वाला रौद्रमुखी कालरात्रिस्तपस्विनी ॥ ६ ॥ मेघश्यामा सहस्राक्षी मुक्तकेशी जलोदरी । महादेवी मुक्तकेशी घोररूपा महाबला ॥ ७ ॥ अजिता भद्रदा नन्दा रोगहन्त्री शिवप्रिया । शिवदूती कराली च प्रत्यक्षा परमेश्वरी ॥ ८ ॥ सदा संमोहिनी देवी सुन्दरी भुवनेश्वरी । इन्द्राक्षी इन्द्ररूपा च इन्द्रशक्तिः परायणा ॥ ९ ॥ महिषा-

सुरसंहर्त्री चामुण्डा गर्भदेवता। वाराही नारसिंही च भीमा भैरवनादिनी ॥ १० ॥ श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती । अनन्ता विजया पूर्णा मानस्तोकाऽपराजिता ॥ ११ ॥ भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा। एतैर्नामशतैर्दिव्यैः स्तुता शक्रेण धीमता ॥ १२ ॥ आयुरारोग्यमैश्वर्यं वित्तं ज्ञानं यशो बलम् । नाभिमात्रजले स्थित्वा सहस्रपरिसंख्यया ॥ १३ ॥ जपेत्स्तोत्रमिमं मन्त्रं वाचां सिद्धिर्भवेत्ततः। अनेन विधिना भक्त्या मन्त्रसिद्धिश्च जायते ॥ १४ ॥ संतुष्टा च भवेद्देवी प्रत्यक्षा संप्रजायते । शतमावर्तयेद्यस्तु मुच्यते नात्र संशयः ॥ १५ ॥ आवर्तनसहस्रेण लभ्यते वाञ्छितं फलम्। सायं शतं पठेन्नित्यं षण्मासात्सिद्धिरुच्यते ॥ १६ ॥ चोरव्याधिभयस्थाने मनसा ह्यनुचिन्तयन् । संवत्सरमुपाश्रित्य सर्वकामार्थसिद्धये ॥ १७ ॥ राजानं वश्यमाप्नोति षण्मासान्नात्र संशयः ॥ १८ ॥

इति श्रीन्द्राक्षीस्तोत्रं संपूर्णम् ।

---

## १८२ भवानीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ षडाधारपङ्करुहान्तर्विराजत्सुषुम्नान्तरालेतितेजोल्लसन्तीम् । सुधामण्डलं द्रावयन्तीं पिबन्तीं सुधामूर्तिमीडेऽहमानन्दरूपाम् ॥ १ ॥ ज्वलत्कोटिबालार्कभा-



सारुणाङ्गीं सुलावण्यशृङ्गारशोभाभिरामाम्। महापद्मकिञ्ज-

ल्कमध्ये विराजत्त्रिकोणोल्लसन्तीं भजे श्रीभवानीम् ॥२॥ क्व-
णत्किंकिणीनूपुरोद्भासिरत्नप्रभालीढलाक्षार्द्रपादारविन्दाम् ।
अजेशाच्युताद्यैः सुरैः सेव्यमानां महादेवि मन्मूर्ध्नि ते भाव-
यामि ॥ ३ ॥ सुशोणाम्बराबद्धनीवीविराजन्महारत्नकाञ्ची-
कलापं नितम्बम्। स्फुरद्दक्षिणावर्तनाभिं च तिस्रो वली रम्यते
रोमराजीं भजेऽहम् ॥ ४ ॥ लसद्वृत्तसुत्तुङ्गमाणिक्यकुम्भो-
पमश्रीस्तनद्वन्द्वमम्बाम्बुजाक्षीम् । भजे पूर्णदुग्धाभिरामं
तवेदं महाहारदीप्तं सदा प्रस्तुतास्यम् ॥ ५ ॥ शिरीषप्रसूनो-
ल्लसद्बाहुदण्डैर्ज्वलद्बाणकोदण्डपाशाङ्कुशैश्च । चलत्कङ्कणो-
दारकेयूरभूषाज्वलद्भिः स्फुरन्तीं भजे श्रीभवानीम् ॥ ६ ॥
शरत्पूर्णचन्द्रप्रभापूर्णबिम्बाधरस्मेरवक्त्रारविन्दश्रियं ते ।
सुरत्नावलीहारताटङ्कशोभां भजे सुप्रसन्नामहं श्री० ॥ ७ ॥
सुनासापुटं पद्मपत्रायताक्षं यजन्तः श्रियं दानदक्षं कटाक्षम् ।
ललाटोल्लसद्गन्धकस्तूरिभूषोज्ज्वलद्भिः स्फुरन्तीं भजे श्री०
॥ ८ ॥ चलत्कुण्डलान्ते भ्रमद्भृङ्गवृन्दाघनस्निग्धधम्मिल्लभू-
षोज्ज्वलन्तीम् । स्फुरन्मौलिमाणिक्यमध्येन्दुरेखाविलासो-
ल्लसद्दिव्यमूर्धानमीडे ॥ ९ ॥ स्फुरत्त्वाम्ब बिम्बस्य मे हृत्स-
रोजे सदा वाङ्मयं सर्वतेजोमयं च । इति श्रीभवानीस्वरूपं
तदेवं प्रपञ्चात्परं चातिसूक्ष्मं प्रसन्नम् ॥ १० ॥ गणेशाणि-
माद्याखिलैः शक्तिवृन्दैः स्फुरच्छ्रीमहाचक्रराजोल्लसन्तीम् ।
परां राजराजेश्वरीं त्वां भवानीं शिवाङ्कोपरिस्थां शिवां

भावयेऽहम् ॥ ११ ॥ त्वमर्कस्त्वमग्निस्त्वमिन्दुस्त्वमापस्त्व-माकाशभूवायवस्त्वं चिदात्मा । त्वदन्यो न कश्चित्प्रकाशोऽस्ति सर्वं सदानन्दसंवित्स्वरूपं तवेदम् ॥१२॥ गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव त्वमेवासि माता पिताऽसि त्वमेव। त्वमेवासि विद्या त्वमेवासि बुद्धिर्गतिर्मे मतिर्देवि सर्वं त्वमेव ॥१३॥ श्रुतीनामगम्यं सुवेदागमाद्यैर्महिम्नो न जानाति पारं तवेदम् । स्तुतिं कर्तुमिच्छामि ते त्वं भवानी क्षमस्वेदमम्ब प्रमुग्धः किलाहम् ॥१४॥ शरण्ये वरण्ये सुकारुण्यपूर्णे हिरण्योदराद्यैरगम्येऽति पुण्ये । भवारण्यभीतं च मां पाहि भद्रे नमस्ते नमस्ते नमस्ते भवानि ॥१५॥ इमामन्वहं श्रीभवानीभुजङ्गस्तुतिं यः पठेच्छ्रोतुमिच्छेत तस्मै । स्वकीयं पदं शाश्वतं चैव सारं श्रियं चाष्टसिद्धीश्च देवी ददाति ॥१६॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं भवानीभुजङ्गस्तोत्रं संपूर्णम् ।

---

## १८३ दुर्गापदुद्धारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नमस्ते शरण्ये शिवे सानुकम्पे नमस्ते जगद्व्यापिके विश्वरूपे । नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ १ ॥ नमस्ते जगच्चिन्त्यमानस्वरूपे नमस्ते महायोगिनि ज्ञानरूपे । नमस्ते नमस्ते सदानन्दरूपे नम० ॥ २ ॥ अनाथस्य दीनस्य तृष्णातुरस्य

भयार्तस्य भीतस्य बद्धस्य जन्तोः । त्वमेका गतिर्देवि निस्तारकर्त्री नम० ॥ ३ ॥ अरण्ये रणे दारुणे शत्रुमध्येऽनले सागरे प्रान्तरे राजगेहे । त्वमेका गतिर्देवि निस्तारनौका नम० ॥ ४ ॥ अपारे महादुस्तरेऽत्यन्तघोरे विपत्सागरे मज्जतां देहभाजाम् । त्वमेका गतिर्देवि निस्तारहेतुर्नम० ॥ ५ ॥ नमश्चण्डिके चण्डदुर्दण्डलीलासमुत्खण्डिताखण्डिताशेषशत्रो । त्वमेकागतिर्देवि निस्तारबीजं नम० ॥६॥ त्वमेवाघभावाधृतासत्यवादीर्न जाताजिताक्रोधनात्क्रोधनिष्ठा । इडा पिङ्गला त्वं सुषुम्ना च नाडी नम० ॥ ७ ॥ नमो देवि दुर्गे शिवे भीमनादे सरस्वत्यरुन्धत्यमोघस्वरूपे । विभूतिः शची कालरात्रिः सती त्वं नम० ॥ ८ ॥ शरणमसि सुराणां सिद्धविद्याधराणां मुनिमनुजपशूनां दस्युभिस्त्रासितानाम् । नृपतिगृहगतानां व्याधिभिः पीडितानां त्वमसि शरणमेका देवि दुर्गे प्रसीद ॥ ९ ॥ इदं स्तोत्रं मया प्रोक्तमापदुद्धारहेतुकम् । त्रिसंध्यमेकसंध्यं वा पठनाद्घोरसंकटात् ॥ १० ॥ मुच्यते नात्र संदेहो भुवि स्वर्गे रसातले । सर्वं वा श्लोकमेकं वा यः पठेद्भक्तिमान् सदा ॥११॥ स सर्वं दुष्कृतं त्यक्त्वा प्राप्नोति परमं पदम् । पठनादस्य देवेशि किं न सिध्यति भूतले ॥१२॥ स्तवराजमिदं देवि संक्षेपात्कथितं मया ॥१३॥

इति श्रीसिद्धेश्वरीतन्त्रे उमामहेश्वरसंवादे श्रीदुर्गापदुद्धारस्तोत्रं संपूर्णम् ।

## १८४ सरस्वत्यष्टकम् ।

श्रीगणेशाय नमः ॥ शतानीक उवाच । महामते महाप्राज्ञ सर्वशास्त्रविशारद । अक्षीणकर्मबन्धस्तु पुरुषो द्विजसत्तम ॥ १ ॥ मरणे यज्जपेज्जाप्यं यं च भावमनुस्मरन् । परं पदमवाप्नोति तन्मे ब्रूहि महात्मने ॥२॥ शौनक उवाच । इदमेव महाराज पृष्टवांस्ते पितामहः । भीष्मं धर्मविदां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥ ३ ॥ युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्वशास्त्रविशारद । बृहस्पतिस्तुता देवी वागीशाय महात्मने । आत्मानं दर्शयामास सूर्यकोटिसमप्रभम् ॥४॥ सरस्वत्युवाच । वरं वृणीष्व भद्रं ते यत्ते मनसि वर्तते । बृहस्पतिरुवाच । यदि मे वरदा देवि दिव्यज्ञानं प्रयच्छ नः ॥ ५ ॥ देव्युवाच । हन्त ते निर्मलं ज्ञानं कुमतिध्वंसकारकम् । स्तोत्रेणानेन ये भक्त्या मां स्तुवन्ति मनीषिणः ॥ ६ ॥ बृहस्पतिरुवाच । लभन्ते परमं ज्ञानं यत्सुरैरपि दुर्लभम् । प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः ॥ ७ ॥ सरस्वत्युवाच । त्रिसंध्यं प्रयतो नित्यं पठेदष्टकमुत्तमम् । तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥ ८ ॥

इति श्रीपद्मपुराणे दिव्यज्ञानप्रदायकं सरस्वत्यष्टकस्तोत्रं समाप्तम् ।

## १८५ सरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीसरस्वतीस्तोत्रमन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः । श्रीसरस्वती देवता । धर्मार्थकाममोक्षार्थं जपे विनियोगः । आरूढा श्वेतहंसे भ्रमति च गगने दक्षिणे चाक्षसूत्रं वामे हस्ते च दिव्याम्बरकनकमयं पुस्तकं ज्ञानगम्या । सा वीणां वादयन्ती स्वकरकरजपैः शास्त्रविज्ञानशब्दैः क्रीडन्ती दिव्यरूपा करकमलधरा भारती सुप्रसन्ना ॥ १ ॥ श्वेतपद्मासना देवी श्वेतगन्धानुलेपना । अर्चिता मुनिभिः सर्वैर्ऋषिभिः स्तूयते सदा । एवं ध्यात्वा सदा देवीं वाञ्छितं लभते नरः ॥२॥ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम् । हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥ ३ ॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ ४ ॥ ह्रीं ह्रीं हृद्यैकबीजे शशिरुचिकमले कल्पविस्पष्टशोभे भव्ये भव्यानुकूले कुमतिवनदवे विश्ववन्द्याङ्घ्रिपद्मे । पद्मे पद्मोपविष्टे प्रणतजनमनोमोदसंपादयित्रि प्रोत्फुल्लज्ञानकूटे हरिनिजदयिते देवि संसारसारे ॥ ५ ॥ ऐं ऐं ऐं इष्टमन्त्रे कमलभवमुखाम्भोजभूते स्वरूपे

रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे। न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्त्वे विश्वे विश्वान्तरात्मे सुरवरनमिते निष्कले नित्यशुद्धे ॥ ६ ॥ ह्रीं ह्रीं ह्रीं जाप्यतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् । विद्ये वेदान्तवेद्ये परिणतपठिते मोक्षदे मुक्तिमार्गे मार्गातीतस्वरूपे भव मम वरदा शारदे शुभ्रहारे ॥ ७ ॥ धीं धीं धीं धारणाख्ये धृतिमतिनतिभिर्नामभिः कीर्तनीये नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे । पुण्ये पुण्यप्रवाहे हरिहरनमिते नित्यशुद्धे सुवर्णे मातर्मात्रार्धतत्त्वे मतिमति मतिदे माधवप्रीतिमोदे ॥ ८ ॥ हूं हूं हूं स्वस्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते संतुष्टाकारचित्ते स्मितमुखि शुभगे जृम्भिणी स्तम्भविद्ये । मोहे मुग्धप्रवाहे कुरु मम विमतिध्वान्तविध्वंसमीडे गीर्गौर्वाग्भारति त्वं कविवररसनासिद्धिदे सिद्धिसाध्ये ॥ ९ ॥ स्तौमि त्वां त्वां च वन्दे मम खलु रसनां नो कदाचित्त्यजेथा मा मे बुद्धिर्विरुद्धा भवतु न च मनो देवि मे यातु पापम् । मा मे दुःखं कदाचित्क्वचिदपि विषयेऽप्यस्तु मे नाकुलत्वं शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदापि ॥ १० ॥ इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो वाणीं वाचस्पतेरप्यविदितविभवो वाक्पटुर्मृष्टकण्ठः । स स्यादि-

ष्टार्थलाभैः सुतमिव सततं पाति तं सा च देवी सौभाग्यं तस्य लोके प्रभवति कविता विघ्नमस्तं प्रयाति ॥ ११ ॥ निर्विघ्नं तस्य विद्या प्रभवति सततं चाश्रुतग्रन्थबोधः कीर्तिस्त्रैलोक्यमध्ये निवसति वदने शारदा तस्य साक्षात् । दीर्घायुर्लोकपूज्यः सकलगुणनिधिः सन्ततं राजमान्यो वाग्देव्याः संप्रसादात्त्रिजगति विजयी जायते सत्सभासु ॥ १२ ॥ ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः। सारस्वतो जनः पाठात्सकृदिष्टार्थलाभवान् ॥१३॥ पक्षद्वये त्रयोदश्यामेकविंशतिसंख्यया । अविच्छिन्नः पठेद्धीमा-न्ध्यात्वा देवीं सरस्वतीम् ॥ १४ ॥ सर्वपापविनिर्मुक्तः सुभगो लोकविश्रुतः। वाञ्छितं फलमाप्नोति लोकेऽस्मिन्नात्र संशयः ॥ १५ ॥ ब्रह्मणेति स्वयं प्रोक्तं सरस्वत्याः स्तवं शुभम् । प्रयत्नेन पठेन्नित्यं सोऽमृतत्वाय कल्पते ॥ १६ ॥

इति श्रीमद्ब्रह्मणा विरचितं सरस्वतीस्तोत्रं संपूर्णम् ।

---

## १८६ नीलसरस्वतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ घोररूपे महारावे सर्वशत्रुभयंकरि । भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥१॥ ॐ सुरासु-रार्चिते देवि सिद्धगन्धर्वसेविते। जाड्यपापहरे देवि त्रा०॥२॥ जटाजूटसमायुक्ते लोलजिह्वान्तकारिणि । द्रुतबुद्धिकरे देवि त्रा० ॥ ३ ॥ सौम्यक्रोधधरेरूपे चण्डरूपे नमोऽस्तु ते ।

सृष्टिरूपे नमस्तुभ्यं त्रा० ॥ ४ ॥ जडानां जडतां हन्ति भक्तानां भक्तवत्सला । मूढतां हर मे देवि त्रा० ॥ ५ ॥ हूं हूं करमये देवि बलिहोमप्रिये नमः । उग्रतारे नमो नित्यं त्रा० ॥ ६ ॥ बुद्धिं देहि यशो देहि कवित्वं देहि देहि मे । मूढत्वं च हरेर्देवि त्रा० ॥ ७ ॥ इन्द्रादिविलसद्द्वन्द्ववन्दिते करुणामयि । तारे ताराधिनाथास्ये त्रा० ॥ ८ ॥ अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः । षण्मासैः सिद्धिमाप्नोति नात्र कार्या विचारणा ॥ ९ ॥ मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम् । विद्यार्थी लभते विद्यां तर्कव्याकरणादिकम् ॥१०॥ इदं स्तोत्रं पठेद्यस्तु सततं श्रद्धयान्वितः । तस्य शत्रुः क्षयं याति महाप्रज्ञा प्रजायते ॥११॥ पीडायां वापि संग्रामे जाड्ये दाने तथा भये । य इदं पठति स्तोत्रं शुभं तस्य न संशयः । इति प्रणम्य स्तुत्वा च योनिमुद्रां प्रदर्शयेत् ॥१२॥

इति नीलसरस्वतीस्तोत्रम् ।

## १८७ श्रेयस्करीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रेयस्करि श्रमनिवारिणि सिद्धविद्ये स्वानन्दपूर्णहृदये करुणातनो मे । चित्ते वस प्रियतमेन शिवेन सार्धं माङ्गल्यमातनु सदैव शुदेव मातः ॥ १ ॥ श्रेयस्करि श्रितजनोद्धरणैकदक्षे दाक्षायणि क्षपितपातकतूलराशे । शर्मण्यपादयुगले जलजप्रमोदे मित्रे त्रयीप्रसृमरे

रमतां मनो मे ॥ २ ॥ श्रेयस्करि प्रणतपामरपारदानज्ञान-प्रदानसरणिश्रितपादपीठे । श्रेयांसि सन्ति निखिलानि सुमङ्गलानि तत्रैव मे वसतु मानसराजहंसः ॥ ३ ॥ श्रेयस्करीति तव नाम गृणाति भक्त्या श्रेयांसि तस्य सदने च करी पुरस्तात् । किं किं न सिध्यति सुमङ्गलनाममालां धृत्वा सुखं स्वपिति शेषतनौ रमेशः ॥ ४ ॥ श्रेयस्करीति वरदेति दयापरेति वेदोदरेति विधिशंकरपूजितेति । वाणीति शंभुरमणीति च तारिणीति श्रीदेशिकेन्द्रकरुणेति गृणामि नित्यम् ॥ ५ ॥ श्रेयस्करि प्रकटमेव तवाभिधानं यत्रास्ति तत्र रविवत्प्रथमानवीर्यम् । ब्रह्मेन्द्ररुद्रमरुदादिगृहाणि सौख्यैः पूर्णानि नाममहिमा प्रथितस्त्रिलोक्याम् ॥ ६ ॥ श्रेयस्करि प्रणतवत्सलता त्वयीति वाचं शृणुष्व सरलां सरसां च सत्याम् । भक्त्या नतोऽस्मि विनतोऽस्मि सुमङ्गले त्वत्पादाम्बुजे प्रणिहिते मयि संनिधत्स्व ॥ ७ ॥ श्रेयस्करीचरण-सेवनतत्परेण कृष्णेन भिक्षुवपुषा रचितं पठेद्यः । तस्य प्रसीदति सुरारिविमर्दनीयमम्बा तनोति सदनेषु सुमङ्गलानि ॥ ८ ॥ यथामति कृतस्तुतौ मुदमुपैति माता न किं यथाविभवदानतो मुदमुपैति पात्रं न किम् । भवानि तव संस्तुतिं विरचितुं न चाहं क्षमस्तथापि मुदमेष्यसि प्रदिशसीष्टमम्ब त्वरात् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वतीविरचितं श्रेयस्करीसुमङ्गलस्तोत्रं समाप्तम् ।

## १८८ देवीषट्कम् ।

श्रीगणेशाय नमः ॥ अम्ब शशिबिम्बवदने कम्बुग्रीवे कठोरकुचकुम्भे । अम्बरसमानमध्ये शम्बररिपुवैरिदेवि मां पाहि ॥ १ ॥ कुन्दमुकुलाग्रदन्तां कुङ्कुमपङ्केन लिप्तकुचभाराम् । आनीलनीलदेहामम्बामखिलाण्डनायकीं वन्दे ॥ २ ॥ सरिगमपधनिसतान्तां वीणासंक्रान्तचारुहस्तां ताम् । शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम् ॥ ३ ॥ अरटतटघटितजूटीताडितताडीकपालताटङ्काम् । वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ४ ॥ वीणारसानुषङ्गं विकचमदामोदमाधुरीभृङ्गम् । करुणापूरितरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ५ ॥ दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् । वामकुचनिहितवीणां वरदां सङ्गीतमातृकां वन्दे ॥ ६ ॥ माणिक्यवीणामुपलालयन्तीं मन्दालसां मञ्जुलवाग्विलासाम् । माहेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां मनसा स्मरामि ॥ ७ ॥

इति श्रीकालिकायां देवीषट्कं समाप्तम् ।

---

## १८९ वैरिनाशनकवचम् ।

श्रीगणेशाय नमः ॥ कैलासशिखरासीनं देवदेवं जगद्गुरुम् । शंकरं परिपप्रच्छ पार्वती परमेश्वरम् ॥ १ ॥ पार्वत्युवाच ॥ भगवन्देवदेवेश देवानां भोगद प्रभो । प्रब्रूहि मे महादेव गोप्यं यद्यपि हे प्रभो ॥ २ ॥ शत्रूणां येन नाशः

स्यादात्मनो रक्षणं भवेत् । परमैश्वर्यमतुलं लभेयेन हि तद्वद ॥ ३ ॥ भैरव उवाच ॥ वक्ष्यामि ते महादेवि सर्वधर्मविदांवरे । अद्भुतं कवचं देव्याः सर्वकामप्रसाधकम् ॥ ४ ॥ विशेषतः शत्रुनाशं सर्वरक्षाकरं नृणाम् । सर्वारिष्टप्रशमनं सर्वाभद्रविनाशनम् ॥ ५ ॥ सुखदं भोगदं चैव वशीकरणमुत्तमम् । शत्रुसंघाः क्षयं यान्ति भवन्ति व्याधिपीडिताः ॥ ६ ॥ दुःखिनो ज्वरिणश्चैव स्वाभीष्टमच्युदास्तथा । भोगमोक्षप्रदं चैव कालिकाकवचं पठेत् ॥ ७ ॥ ॐ अस्य श्रीकालिकाकवचस्य भैरव ऋषिः । अनुष्टुप् छन्दः । श्रीकालिका देवता जपे विनियोगः ॥ ॐ ध्यायेत्कालीं महामायां त्रिनेत्रां बहुरूपिणीम् । चतुर्भुजां ललज्जिह्वां पूर्णचन्द्रनिभाननाम् ॥ ८ ॥ नीलोत्पलदलश्यामां शत्रुसंघविदारिणीम् । नरमुण्डं तथा खड्गं कमलं च वरं तथा ॥ ९ ॥ निर्भयां रक्तवदनां दंष्ट्रालीघोररूपिणीम् । साट्टहासनिराास्तां सर्वदां च दिगम्बरीम् ॥ १० ॥ शवासनस्थितां देवीं मुण्डमालाविभूषिताम् । इति ध्यात्वा महाकालीं ततस्तु कवचं पठेत् ॥ ११ ॥ ॐ कालिका घोररूपा सर्वकामप्रदा शुभा । सर्वदेवस्तुता देवी शत्रुनाशं करोतु मे ॥१२॥ ॐ ह्रीं ह्रींरूपिणीं चैव ह्रां ह्रीं ह्रांरूपिणीं तथा । ह्रां ह्रीं क्षों क्षौंस्वरूपा सा सदा शत्रून्विदारयेत् ॥ १३ ॥ श्रीं ह्रीं ऐंरूपिणी देवी भवबन्धविमोचनी । हूं सकल ह्रीं ·········· देवि सर्वदा

॥ १४ ॥ यया शुम्भो हतो दैत्यो निशुम्भश्च महासुरः। वैरिनाशाय वन्दे तां कालिकां शंकरप्रियाम् ॥ १५ ॥ ब्राह्मी शैवी वैष्णवी च वाराही नारसिंहिका। कौमार्यैन्द्री च चामुण्डा खादन्तु मम विद्विषः ॥ १६ ॥ सुरेश्वरी घोररूपा चण्डमुण्डविनाशिनी। मुण्डमालावृताङ्गी च सर्वतः पातु मां सदा॥१७॥ह्रीं ह्रीं ह्रीं कालिके घोरे दंष्ट्रेव रुधिरप्रिये। रुधिर-पूर्णवक्त्रे च रुधिरेणावृतस्तनि ॥ १८ ॥ मम शत्रून् खादय खादय हिंस हिंस मारय मारय भिन्धि भिन्धि छिन्धि छिन्धि उच्चाटय उच्चाटय द्रावय द्रावय शोषय शोषय स्वाहा॥ ह्रां ह्रीं कालिकायै मदीयशत्रून्समर्पयामि स्वाहा ॥ ॐ जय जय किरि किरि किटि किटि कट कट मर्द मर्द मोहय मोहय हर हर मम रिपून्ध्वंस ध्वंस भक्षय भक्षय त्रोटय त्रोटय यातुधानान् चामुण्डे सर्वजनान्राज्ञो राजपुरुषान्स्त्रियो मम वश्यान्कुरु कुरु तनु तनु धान्यं धनं मेऽश्वान्गजान् रत्नानि दिव्यकामिनीः पुत्रान्राजश्रियं देहि यच्छ क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्वाहा ॥ इत्येतत्कवचं दिव्यं कथितं शम्भुना पुरा। ये पठन्ति सदा तेषां ध्रुवं नश्यन्ति शत्रवः ॥ १९ ॥ वैरिणः प्रलयं यान्ति व्याधिता वा भवन्ति हि। बलहीनाः पुत्रहीनाः शत्रवस्तस्य सर्वदा ॥ २० ॥ सहस्रपठनात्सिद्धिः कवचस्य भवेत्तदा। तत्कार्याणि च सिध्यंति यथा शंकरभाषितम् ॥ २१ ॥ श्मशानाङ्गारमादाय चूर्णं कृत्वा प्रयत्नतः। पादोदकेन पिष्ट्वा तल्लिखेल्लोहशलाकया ॥ २२ ॥ भूमौ शत्रून्

हीनरूपानुत्तराशिरसस्तथा । हस्तं दत्त्वा तु हृदये कवचं तु स्वयं पठेत् ॥ २३ ॥ शत्रोः प्राणप्रतिष्ठां तु कुर्यान्मन्त्रेण मन्त्रवित् । हन्यादस्त्रं प्रहारेण शत्रो गच्छ यमक्षयम् ॥ २४ ॥ ज्वलदङ्गारतापेन भवन्ति ज्वरिता भृशम् । प्रोच्छनैर्वामपादेन दरिद्रो भवति ध्रुवम् ॥ २५ ॥ वैरिनाशकरं प्रोक्तं कवचं वश्यकारकम् । परमैश्वर्यदं चैव पुत्रपौत्रादिवृद्धिदम् ॥ २६ ॥ प्रभातसमये चैव पूजाकाले च यत्नतः । सायंकाले तथा पाठात्सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २७ ॥ शत्रुरुच्चाटनं याति देशाच्च विच्युतो भवेत् । पश्चात्किङ्करतामेति सत्यं सत्यं न संशयः ॥ २८ ॥ शत्रुनाशकरे देवि सर्वसंपत्करे शुभे । सर्वदेवस्तुते देवि कालिके त्वां नमाम्यहम् ॥ २९ ॥

इति श्रीरुद्रयामले कालिकाकल्पे वैरिनाशकवचं संपूर्णम् ।

---

## १९० बीजषोडशार्णमकरन्दस्तोत्रम् । *

श्रीगणेशाय नमः ॥ श्रींबीजे नादबिन्दुद्वितयशशिकलाकाररूपे स्वरूपे मातर्मे देहि बुद्धिं जहि जहि दुरितं पाहि मां दीननाथे । अज्ञानध्वान्तनाशे क्षयरुचिरुचिरे प्रोल्लसत्पादपद्मे ब्रह्मेशाद्यैः सुरेन्द्रैः सुरगणनमिते संस्तुतां त्वां

---

* अस्मिंस्तोत्रे स्खलनप्राचुर्यं विद्यते. अस्माकं समीपे आदर्शपुस्तकमेकमेवास्ति तत्रैवाशुद्धिप्रचुराः पाठाः सन्ति ते एवान्यपुस्तकाभावेनोपायाभावादस्माभिर्मुद्रिताः ।

नमामि ॥ १ ॥ लज्जाबीजस्वरूपे त्रिजगति वरदे व्रीडया या स्थितेयं तां नित्यां शम्भुशक्तिं त्रिभुवनजननीं पालनीं जगच्च । सर्वासां तां निदानं सकलगुणमयीं सच्चिदानन्दरूपां तेजोरूपां प्रदीप्तां त्रिभुवननमितां ज्ञानदात्रीं नमामि ॥ २ ॥ क्लींबीजे कामरूपधृतकुसुमधनुर्बाणपाशाङ्कुशां तां वन्दे भास्वत्सरोजोदरपि भवादृशं मोहयन्तीं त्रिलोकीम् । काञ्चीमञ्जीरहाराङ्गदमुकुटलसत्स्वर्णमाणिक्यरत्नैर्भास्वन्तीमिन्दुवक्त्रां स्तनभरनमितां क्षीणमध्यां त्रिनेत्राम् ॥३॥ ऐं वाणीबीजरूपे त्रिभुवनजडताध्वान्तविध्वंसिनी त्वं शब्दब्रह्मस्वरूपां श्रुतिभिरनुपदं गीयमाना त्वमेव । मातर्मे देहि बुद्धिं मम सदसि परद्वन्द्वसंक्षोभकर्त्रीमैन्द्रीं वाचस्पतेरप्यतिविविधपदं त्वत्पदाम्भोजमीडे ॥ ४ ॥ सौःशक्त्या कामरूपे घटपटप्रभृतौ दृष्टहेतौ सदा या माया काचिन्महत्वत्प्रभृतिपरिणतौ शूलभूता त्वमेव । केचिद्ब्राह्मप्रपञ्चा मणिमिव ह तनौ तन्तुभूतात्मविद्याविद्याविभ्रान्तिछन्दं क्षपयति जगतां मेनिरे शुद्धभावाः ॥ ५ ॥ ॐमातस्ते नमस्ते श्रुतिपथगुरुत्र्यक्षरब्रह्मरूपे मिथ्यामोहान्धकारे पतितमनुदिनं पाहि मां मन्दहीनम् । मोहक्रोधप्रलोभप्रथममदचयैः शत्रुभिः पीड्यतेऽसौ पत्नीपुत्रादिभृत्यैर्नतविविधजनैः शृङ्खलाभिर्निबद्धम् ॥ ६ ॥ ह्रींकारे ह्रीस्वरूपे मम दह दुरितं व्याधिदारिद्र्यबीजं  मातस्त्वत्पादपद्मं द्वितियपरिसते प्रार्थये भक्तिलेशम् । त्वं

वाणी त्वं च लक्ष्मीस्त्वमसि गिरिसुता ब्रह्मविष्णुस्मरारे-श्चित्तं नित्यं स्मराख्ये कृतमिह जननि ह्रत्कटाक्षैः कटान्दैः ॥७॥ श्रींकारे श्रीस्वरूपे वितर मयि धनं धान्यहस्त्यश्वयुक्तं स्वर्णं माणिक्यरत्नाद्यभिलषितयुतं त्वत्पदार्थैः सुयोग्यम् । विद्यां त्वं देहि मोक्षं मयि भवदहने देवि दंदह्यमाने योगीन्द्रैः सेव्यमाना भूतकलुपचयैर्मोक्षमन्वेषयद्भिः ॥ ८ ॥ कामो योनिश्चतुर्थस्वरत्रिदशपतिर्भौवनेशीवबीजं तावद्वर्णावलि त्वं नतजनवरदे लसदे भक्तिमाद्दे । त्वत्पादाम्भोजयुग्मं हृदयसरसिजे सन्निधायैकचित्ते ध्यात्वा त्वत्कर्मबन्धं त्वतिविमलधियो मुक्तवन्तो मुनीन्द्राः ॥ ९ ॥ ब्रह्मेन्दुः कामदेवो वियदमरगुरुर्भौवनेशीवबीजं तावद्वर्णस्वरूपैर्घटितनकलतां त्वां प्रसन्नोऽस्मि मातः । विष्णुब्रह्मेशमूर्धस्थितमुकुटमणिप्रोल्लसत्पादपद्मां योगीन्द्रैर्ध्येयपादाम्बुरुहनखशशिद्योतविद्योतितां त्वाम् ॥ १० ॥ इन्दुः कामः सुरेशो विदथनललेसृग्वामनेत्रार्धचन्द्रैर्युक्तं यद्बीजमेतत्तदपि तव वपुः सच्चिदानन्दरूपम् । बाला त्वं भैरवी त्वं त्रिभुवनजननी तारिणी नीलवर्णा त्वं गौरी त्वं च काली सकलमनुमयी त्वं महामोक्षदात्री ॥ ११ ॥ सौःकारा बीजराजस्त्रिभुवनजननी शक्तिराद्या त्वमेव त्वद्युक्तः शम्भुरेव प्रभवति चलितुं त्वां विना जाड्यवान्सः । ब्रह्मा विष्णुः कपर्दी जननि तव कृपालेशमात्राच्छरीरं गृह्णन्तः



सृष्टिरक्षाप्रलयमविचलञ्चक्रिरे त्वद्वशस्थाः ॥ १२ ॥ देवि

वाग्भवाख्यं त्वमिह जडमतिध्वान्तचक्षुःप्रकाशा मातः कारुण्यधाराभववलितदृशा पश्य मां दीननाथे। मोह्यन्ते मोहितास्ते तव जननि महामायया बद्धचित्ताः कारुण्यं प्रार्थयन्ते तव पदयुगले ज्ञानवन्तो मुनीन्द्राः ॥ १३ ॥ क्लींकारो बीजरूपस्तव जननि मनुश्रेष्ठमध्यप्रदेशः साक्षाद्ब्रह्मस्वरूपो मदनतनुलता ब्रह्मणो मोहकर्त्री । सुज्ञानसमेरवक्त्राम्बुजकुहपलसत्सरसु पीयूषधारा वेदाश्चत्वार एते तुहिनगिरिसुते प्राप्तमीनेन्द्ररूपे ॥ १४ ॥ ह्रींकारोंकाररूपा त्वमिह शशिमुखी ह्रींस्वरूपा त्वमेव क्षान्तिस्त्वं त्वं च कान्तिर्हरिहरकमलोद्भूतरूपा त्वमेव। त्वं सिद्धिस्त्वं च ऋद्धिः स्मररिपुमनसस्त्वं च संमोहयन्ती विद्या त्वं मुक्तिहेतुर्भवजलधिजदुःखस्य हन्त्री त्वमेका ॥ १५ ॥ श्रींबीजे श्रीस्वरूपे मधुरिपुमनसो मध्यमध्यासिता त्वं मातस्त्वद्भक्तिलेशादमरपतिरसौ प्राप्तवान्वृद्धिमेषाम् । इत्येवं षोडशार्णः पठितमनुदिनं स्वर्गमोक्षैकहेतुः सिद्धीरष्टौ लभन्ते य इह न तु वरं श्रेष्ठमेते भजन्ते ॥ १६ ॥ पूजयित्वा विधानेन महात्रिपुरसुन्दरीम् । इमं स्तवं पठित्वा तु देवीसायुज्यमाप्नुयात् ॥ १७ ॥

इति विष्णुयामले शिवोक्तं बीजषोडशार्णमकरन्दस्तोत्रम् ।

---

## १९१ पादाब्जाष्टकम् ।



श्रीगणेशाय नमः ॥ मातस्त्वत्पदपङ्कजं कलयतां चेतोऽ-

म्बुजे संततं मानाथाम्बुजसंभवाद्रितनयाकान्तैः समाराधितम् । वाञ्छापूरणनिर्जितामरमहीरुड्गर्वसर्वस्वकं वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्रोदरात् ॥ १ ॥ मातस्त्वत्पदपङ्कजं मुनिमनःकासारवासादरं मायामोहमहान्धकारमिहिरं मानातिगप्राभवम् । मातङ्गाभिमतिं स्वकीयगमनैर्निर्मूलयत्कौतुकाद्वन्द्वेऽमन्दतपःफलाप्त्यनमनस्तोत्रार्चनाप्रक्रमम् ॥ २ ॥ मातस्त्वत्पदपङ्कजं प्रणमतामानन्दवारांनिधेराकाशारदपूर्णचन्द्रनिकरं कामाहिपक्षीश्वरम् । वृन्दं प्राणभृतां स्वनाम वदतामत्यादरात्सत्वरं षड्भाषासरिदीश्वरं प्रविदधत्षाण्मातुराच्यं भजे ॥ ३ ॥ कामं फालतले दुरक्षरततिर्देवी ममस्तां न भीर्मातस्त्वत्पदपङ्कजोत्थरजसा लुम्पामि तां निश्चितम् । मार्कण्डेयमुनिर्यथा भवपदाम्भोजार्चनाप्राभवात्कालं तद्वदहं चतुर्मुखमुखाम्भोजातसद्मप्रभे ॥ ४ ॥ पापानि प्रशमं नयाशु ममतां देहेन्द्रियप्राणगां कामादीनपि वैरिणो दृढतरान्मोक्षाध्वविघ्नप्रदान् । स्निग्धान्पोषय सन्ततं शमदमध्यानादिमान्मोदतो मातस्त्वत्पदपङ्कजं हृदि सदा कुर्वे गिरां देवते ॥ ५ ॥ मातस्त्वत्पदपङ्कजस्य मनसा वाचा क्रियातोऽपि वा ये कुर्वन्ति मुदाऽन्वहं बहुविधैर्दिव्यैः सुमैरर्चनाम् । शीघ्रं ते प्रभवन्ति भूमिपतयो निन्दन्ति च स्वश्रिया जम्भारातिमपि ध्रुवं शतमखीकष्टामनाकश्रियम्



॥ ६ ॥ मातस्त्वत्पदपङ्कजं शिरसि ये पद्माटवीमध्यतश्च-

न्द्राभं प्रविचिन्तयन्ति पुरुषाः पीयूषवर्ष्यन्वहम् । ते मृत्युं प्रविजित्य रोगरहिताः सम्यग्दृढाङ्गाश्चिरं जीवन्त्येव मृणालकोमलवपुष्मन्तः सुरूपा भुवि ॥ ७ ॥ मातस्त्वत्पदपङ्कज हृदि सदा ध्यायन्ति ये मानवाः सच्चिद्रूपमशेषवेदशिरसां तात्पर्यगम्यं मुहुः । अत्यागेऽपि तनोरखण्डपरमानन्दं वहन्तः सदा सर्वं विश्वमिदं विनाशि तरसा पश्यन्ति ते पूरुषाः ॥८॥

इति श्रीमत्परमहंसेत्यादिसमस्तबिरुदाङ्कितश्रीजगद्गुरुश्शृङ्गगिरिश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिर्विरचितं पादपङ्कजाष्टकं संपूर्णम् ।

---

## १९२ विन्ध्येश्वरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ निशुम्भशुम्भमर्दिनीं प्रचण्डमुण्डखण्डनीम् । वने रणे प्रकाशिनीं भजामि विन्ध्यवासिनीम् ॥ १ ॥ त्रिशूलमुण्डधारिणीं धराविघातहारिणीम् । गृहे गृहे निवासिनीं भजामि० ॥ २ ॥ दरिद्रदुःखहारिणीं सतां विभूतिकारिणीम् । वियोगशोकहारिणीं भजामि० ॥ ३ ॥ लसत्सुलोललोचनं लतासदेवरप्रदम् । कपालशूलधारिणीं भजामि० ॥ ४ ॥ करो मुदा गदाधरो शिवां शिवप्रदायिनीम् । वरावराननां शुभां भजामि० ॥ ५ ॥ ऋषीन्द्रजामिनिप्रदं त्रिधास्यरूपधारिणीम् । जले स्थले निवासिनीं भजामि० ॥ ६ ॥ विशिष्टसृष्टिकारिणीं विशालरूपधारि-

णीम् । महोदरे विशालिनीं भजामि० ॥ ७ ॥ पुरन्दरादि- सेवितां सुरादिवंशखण्डनीम् । विशुद्धबुद्धिकारिणीं भजामि विन्ध्यवासिनीम् ॥ ८ ॥

इति विन्ध्येश्वरीस्तोत्रं संपूर्णम् ।

---

## १९३ विन्ध्यवासिनीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीनन्दगोपगृहिणीप्रभवा तनोतु भद्रं सदा मम सुरार्थपरा प्रसन्ना । विन्ध्याद्रिगह्वरगताऽष्ट- भुजा प्रसिद्धा सिद्धैः सुसेवितपदाब्जयुगा त्रिरूपा ॥ १ ॥ वेदैरगम्यमहिमा निजबोधतुष्टा नित्या गुणत्रयपराऽखिलभेद- शून्या । एका प्रपञ्चकरणे त्रिगुणोरुशक्तिरुच्चावचाकृति- रथोऽचलजङ्गमात्मा ॥ २ ॥ पीयूषसिन्धुसुरपादपवाटिरत्न- द्वीपे सुनीपवनशालिनि दुष्प्रवेशे । चिन्तामणिप्रखचिते भवने निषण्णा विन्ध्येश्वरी श्रियमनल्पतरां करोतु ॥ ३ ॥ श्रुत्वा स्तुतिं विधिकृतां करुणार्द्रचित्ता नारायणेन सबलौ मधुकैटभाख्यौ । या संजहार जगतां प्रलये तथा सा विन्ध्ये- श्वरी वितनुतां सुमनोरथान्मे ॥ ४ ॥ ब्रह्मेशविष्णुपुरुहूत- हुताशनादितेजोभवा महिषपीडितनिर्जराणाम् । स्थानाप्त- येऽतिकृपया महिषं ममर्द विन्ध्येश्वरी हरतु रोगविपत्तिमाशु ॥ ५ ॥ या धूम्रचण्डबलिमुण्डनिशुम्भशुम्भरक्तान्पिपेष सुर- कार्यरताप्यनेका । दुःखाम्बुधौ निपतितस्य विमूढबुद्धेर्वि-

न्ध्येश्वरी मम ददातु सुबुद्धिमम्बा ॥ ६ ॥ या दुर्गमं दनुभवं परिमर्द्य नाम्ना दुर्गा बभूव च ततान शुभं सुराणाम् । स्वाचारकर्मविमुखस्य जुगुप्सितस्य विन्ध्येश्वरी दहतु वैरिगणान्समस्तान् ॥ ७ ॥ संप्राप्य जन्म वपुषः परिपोषणाय संख्यातिगष्टजिनपुञ्जविघायिनो मे । चण्डासुरप्रमथिनी ललिता च नाम्ना विन्ध्येश्वरी हरतु जाड्यमहान्धकारम् ॥८॥ या तारयत्यखिलदुष्कृतिलोकपुञ्जात्तारेति नाम गदिता भुवनेषु देवी । अज्ञानसिन्धुतरणे दृढनौस्वरूपा विन्ध्येश्वरी मम गुणाढ्यसुतं ददातु ॥ ९ ॥ रक्ताम्बरा तरुणभानुरुचिः प्रसन्ना रक्ताम्बुजासनकृताङ्घ्रियुगा धृताब्जा । रक्तैः स्वलंकृततनुर्मणिभूषणैश्च विन्ध्येश्वरी मम गिरं विशदां करोतु ॥ १० ॥ रात्रीशकान्तमणिकान्ततनुर्विशालमुक्तालतालसितवृत्तकुचा कृशाङ्गी । श्वेताम्बरा सितसरोजकृताधिवासा विन्ध्येश्वरी मम वचांसि पुनातु नित्यम् ॥ ११ ॥ आकर्ण्य दीनवचनं जननीव देवी पुत्रस्य मे सपदि सर्वगदान्जहार । लेखाङ्गनामुकुटगुम्फितचित्रपुष्परेणूत्कराचिंतपदाग्रनखांशुचन्द्रा ॥ ॥ १२ ॥ देवान्विहाय सकलानथ कर्म सर्वं लब्ध्वा जनुर्न कृतवांस्तव देवि पूजाम् । मातर्नमामि सततं मनसा च वाचा देहेन पादकमलं शरणागतोऽहम् ॥ १३ ॥ देहीष्टमाशु विपुलं निजसेवकेभ्यो [illegible] च सर्वजगतां विशदां च बुद्धिं त्वं पालयातिकृपया चरणा-

ञ्जगं माम् ॥ १४ ॥ देव्याः स्तवं पठति यः शिवदं मनुष्यः पूतः शृणोति च मनो विविधैरभीष्टैः । पूर्णं हि तस्य भवति प्रसभं गदाश्च यान्ति क्षयं झटिति मायुकफानिलोत्थाः ॥ १५ ॥ त्र्यर्ष्यष्टभूमिमितसर्वजिदाख्यवर्षं ईषे च मासि सितपक्षयुते कवीशः । स्तोत्रं लिलेख मथुरेश्वरमालवीयः सन्नाहमोचनभवो विधुरुद्रशम्याम् ॥ १६ ॥

इति श्रीमन्मालवीयशुक्लमथुरानाथकविविरचितं विन्ध्यवासिनीस्तोत्रं संपूर्णम् ।

---

## १९४ विजयास्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐअस्य श्रीवाग्वादिनीमन्त्रस्य ब्रह्मा ऋषिः । देविविजयागायत्री छन्दः । वाग्वादिनी देवता । ॐबीजम् । मौं शक्तिः । ह्रीं कीलकम् । श्रीवाग्वादिनीदेवताप्रीत्यर्थं जपे विनियोगः। एतैर्न्यासं कृत्वा संविदपठनीयो मन्त्रं ओं वद वद ह्रीं वाग्वादिनी मौं स्वाहा । इत्यनेन सप्तभिर्गृहीत्वा मन्त्रं भक्षयेत् । अथवा ॐ जय जय विजय परब्रह्मस्वरूपिणी सर्वजनं मे वश्यमानय आनन्दय जंभू स्वाहा । इत्यनेन वा जप्त्वा भक्षयेत् । अथवा स्वगृहीतमन्त्रेण जपित्वा भक्षयेत् । अथानन्तरतो देवीसमयास्तोत्रमुत्तमम् । यैः स्तुता सिद्धिदा मूली भक्षिता फलदा भवेत् ॥ १ ॥ संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे । भैरवानन्द-

प्रीत्यर्थं पवित्रा भव सर्वदा ॥ २ ॥ नमामि कामिनीं नाथ-लेखालंकृतकुण्डलाम् । भवानीं भवसंतापनिर्वापणसुधानिधिम् ॥ ३ ॥ सिद्धिमूलिप्रिये देवि हीनबोधप्रबोधिनि । राजप्रजावशंकरि कालकण्ठे त्रिशूलिनि ॥ ४ ॥ अज्ञाने य नदित्यायां ज्ञानाग्निज्वालरूपिणि । आनन्दाद्याहुतिः प्रीतिः सम्यग्ज्ञानं प्रयच्छ मे ॥ ५ ॥ दण्डादिरूढपरिपूरितमोक्ष-भोगान्शुण्डक्रमेण मदनाञ्जनकामिनीं ताम् । आराधयामि बहुशत्रुपराजयन्तीं विश्वेश्वरीं त्रिभुवनां विजयादिदेवीम् ॥ ६ ॥ आनन्दनन्दिनीनन्दे सदा वन्दे पदद्वयम् । उल्लासकदलीकन्दे स्वच्छन्दे बोधरूपिणि ॥ ७ ॥ कवयः कवितालहरीं कृते तत्त्वार्थदर्शनात् । आसदूरितदुरितनिलयं किं न करोति सा ॥ ८ ॥ संविदासवयोर्मध्ये संविदेव गरीयसी । भक्षिता भवनाशाय निर्गन्धबोधरूपिणी ॥ ९ ॥ सुसंविच्छूलिनी देवी विजया संविदेच्चुरी । वैष्णवी तुलसी तुङ्गा तेजोवल्ली रसेश्वरी ॥ १० ॥ वीरसद्वेवरत्ना च वीरलक्ष्मीर्महेश्वरी । शमया मोहनं चैव सिद्धमूली महौषधी ॥ ११ ॥ मातुलानी ज्ञानरूपा सिद्धविद्या सरस्वती । यानि चैतानि नामानि सेवयेत्सिद्धमूलिकाम् ॥ १२ ॥ स प्राप्नोति परां विद्यां भुक्तिं मुक्तिं च वाञ्छितम् । पाण्डित्यं च कवित्वं च मन्त्रसिद्धिं च विन्दति ॥ १३ ॥



इति श्रीरुद्रयामले तन्त्रे विजयासारकल्पे विजयास्तोत्रं संपूर्णम् ।

---

## १९५ गौरीदशकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ लीलालब्धस्थापितलुप्ताखिललोकां लोकातीतैर्योगिभिरन्तश्चिरमृग्याम् । बालादित्यश्रेणिसमानद्युतिपुञ्जां गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १ ॥ आशापाशक्लेशविनाशं विदधानां पादाम्भोजध्यानपराणां पुरुषाणाम् । ईशामीशार्धाङ्गहरां तामभिरामां गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ २ ॥ नानाकारैः शक्तिकदम्बैर्भुवनानि व्याप्य स्वैरं क्रीडति येयं स्वयमेका । कल्याणीं तां कल्पलतामानतिभाजां गौरीम० ॥ ३ ॥ मूलाधारादुत्थितवीथ्या विधिरन्ध्रं सौरं चान्द्रं व्याप्य विहारज्वलिताङ्गीम् । येयं सूक्ष्मात्सूक्ष्मतनुस्तां सुखरूपां गौरीम० ॥ ४ ॥ यस्यामोतं प्रोतमशेषं मणिमालासूत्रे यद्वत्क्वापि चरं चाप्यचरं च । तामध्यात्मज्ञानपदव्या गमनीयां गौरीम० ॥ ५ ॥ प्रत्याहारध्यानसमाधिस्थितिभाजां नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् । सत्यज्ञानानन्दमयीं तां तनुमध्यां गौरीम० ॥ ६ ॥ चन्द्रापीडानन्दितमन्दस्मितवक्त्रां चन्द्रापीडालंकृतनीलालकभाराम् । इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां गौरीम० ॥ ७ ॥ आदिक्षान्तामक्षरमूर्त्या विलसन्तीं भूते भूते भूतकदम्बप्रसवित्रीम् । शब्दब्रह्मानन्दमयीं तां तडिदाभां गौरीम० ॥ ८ ॥ यस्याः कुक्षौ लीनमखण्डं जगदण्डं भूयो भूयः प्रादुरभूदुत्थितमेव । पत्या सार्धं राजतशैले विहरन्तीं गौरीम० ॥ ९ ॥

नित्यः शुद्धो निष्कल एको जगदीशः साक्षी यस्याः स्वर्गविधौ संहरणे च । विश्वत्राणक्रीडनलोलां शिवपत्नीं गौरीम० ॥ १० ॥ प्रातःकाले भावविशुद्धिं विदधानो भक्त्या नित्यं जल्पति गौरीदशकं यः । वाचां सिद्धिं संपदमुच्चैः शिवभक्तिं तस्यावश्यं पर्वतपुत्री विदधाति ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गौरीदशकं संपूर्णम् ।

## १९६ कनकधारास्तुतिः ।

श्रीगणेशाय नमः ॥ अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम् । अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः ॥ १ ॥ मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि । मालादृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसंभवायाः ॥ २ ॥ विश्वामरेन्द्रपदविभ्रमदानदक्षमानन्दहेतुरधिकं मुरविद्विषोऽपि । ईषन्निषीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः ॥३॥ आमीलिताक्षमधिगम्य मुदा मुकुन्दमानन्दकन्दमनिमेषमनङ्गतन्त्रम् । आकेकरस्थितकनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ४ ॥ बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभाति । कामप्रदा भगव-

तोऽपि कटाक्षमाला कल्याणमावहतु मे कमलालयायाः ॥ ५ ॥ कालाम्बुदालिललितोरसि कैटभारेर्धाराधरे स्फुरति यत्तडिदङ्गनेव । मातुः समस्तजगतां महनीयमूर्तिर्भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ६ ॥ प्राप्तं पदं प्रथमतः खलु यत्प्रभावान्माङ्गल्यभाजि मधुमाथिनि मन्मथेन । मय्यापतेत्तदिह मन्थरमीक्षणार्धं मन्दालसं च मकरालयकन्यकायाः ॥७॥ दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्न किंचन विहङ्गशिशौ विषण्णे । दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः ॥ ८ ॥ इष्टाविशिष्टमतयोऽपि यया दयार्द्रदृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते । दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥ ९ ॥ गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्भरीति शशिशेखरवल्लभेति । सृष्टिस्थितिप्रलयकेलिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥ १० ॥ श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै । शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै ॥ ११ ॥ नमोस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूम्यै । नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै ॥ १२ ॥ संपत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्षि । त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये ॥ १३ ॥ यत्कटाक्षस-

मुपासनाविधिः सेवकस्य सकलार्थसंपदः । संतनोति वच-नाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीं भजे ॥ १४ ॥ सरसिज-निलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे । भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ १५ ॥ दिग्घस्तिभिः कनककुम्भमुखावसृष्टः स्वर्वाहिनीविमलचारु-जलप्लुताङ्गीम् । प्रातर्नमामि जगतां जननीमशेषलोकाधि-नाथगृहिणीममृताब्धिपुत्रीम् ॥ १६ ॥ कमले कमलाक्ष-वल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः । अवलोकय माममकिंच-नानां प्रथमं पात्रमकृत्रिमं दयायाः ॥ १७ ॥ स्तुवन्ति ये स्तुतिभिरमीभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम् । गुणाधिका गुरुतरभाग्यभाजिनो भवन्ति ते भुवि बुधभा-विताशयाः ॥ १८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभग-वत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ कनकधारास्तोत्रं संपूर्णम् ।

## १९७ श्यामलादण्डकम् ।

श्रीगणेशाय नमः ॥ माणिक्यवीणामुपलालयन्तीं मदा-लसां मञ्जुलवाग्विलासाम् । माहेन्द्रनीलद्युतिकोमलाङ्गीं मातङ्गकन्यां सततं स्मरामि ॥ १ ॥ चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे । पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते

नमस्ते जगदेकमातः ॥ २ ॥ माता मरकतश्यामा मातङ्गी मदशालिनी। कटाक्षयतु कल्याणी कदम्बवनवासिनी ॥ ३ ॥ जय मातङ्गतनये जय नीलोत्पलद्युते । जय संगीतरसिके जय लीलाशुकप्रिये ॥ ४ ॥ जय जननि सुधासमुद्रान्तहृद्यन्मणिद्वीपसंरूढबिल्वाटवीमध्यकल्पद्रुमाकल्पकादम्बकान्तारवासप्रिये कृत्तिवासप्रिये सर्वलोकप्रिये । सादरारब्धसंगीतसंभावनासंभ्रमालोलनीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके । शेखरीभूतशीतांशुरेखामयूखावलीबद्धसुस्निग्धनीलालकश्रेणिशृङ्गारिते लोकसंभाविते । कामलीलाधनुःसंनिभभ्रूलतापुष्पसंदोहसंदेहकृल्लोचने वाक्सुधासेचने। चारुगोरोचनापङ्ककेलीललामाभिरामे सुरामे रमे। प्रोल्लसद्वालिकामौक्तिकश्रेणिकाचन्द्रिकामण्डलोद्भासिलावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्यसंभ्रान्तभृङ्गाङ्गनागीतसान्द्रीभवन्मन्दतन्त्रीस्वरे सुस्वरे भास्वरे । वल्लकीवादनप्रक्रियालोलतालीदलाबद्धताटङ्कभूषाविशेषान्विते सिद्धसंमानिते । दिव्यहालामदोद्वेलहेलालसच्चक्षुरान्दोलनश्रीसमाक्षिप्तकर्णैकनीलोत्पले पूरिताशेषलोकाभिवाञ्छाफले श्रीफले । स्वेदबिन्दूल्लसत्फाललावण्यनिःष्यन्दसंदोहसंदेहकृन्नासिकामौक्तिके सर्वविश्वात्मिके कालिके । मुग्धमन्दस्मितोदारवक्त्रस्फुरत्पूगताम्बूलकर्पूरखण्डोत्करे ज्ञानमुद्राकरे सर्वसंपत्करे पद्मभास्वत्करे । कुन्दपुष्पद्युतिस्नि-

ग्धदन्तावलीनिर्मलालोलकल्लोलसंमेलनस्मेरशोणाधरे चारुवीणाधरे पक्वबिम्बाधरे ॥ १ ॥ सुललितनवयौवनारम्भचन्द्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्कम्बुबिब्बोकभृत्कन्धरे सत्कलामन्दिरे मन्थरे । दिव्यरत्नप्रभाबन्धुरच्छन्नहारादिभूषासमुद्योतमानानवद्यांशुशोभे शुभे । रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोर्लताराजिते योगिभिः पूजिते । विश्वदिङ्मण्डलव्यापिमाणिक्यतेजःस्फुरत्कङ्कणालंकृते विभ्रमालंकृते साधकैः सत्कृते । वासरारम्भवेलासमुज्जृम्भमाणारविन्दप्रतिद्वन्द्विपाणिद्वये संततोद्यद्दये अद्वये । दिव्यरत्नोर्मिकादीधितिस्तोमसन्ध्यायमानाङ्गुलीपल्लवोद्यन्नखेन्दुप्रभामण्डले संनताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले । तारकाराजिनीकाशहारावलिस्मेरचारुस्तनाभोगभारानमन्मध्यवल्लीवलिच्छेदवीचीसमुल्लाससन्दर्शिताकारसौन्दर्यरत्नाकरे वल्लकीभृत्करे किंकरश्रीकरे । हेमकुम्भोपमोत्तुङ्गवक्षोजभारावनम्रे त्रिलोकावनम्रे । लसद्वृत्तगम्भीरनाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे मञ्जुसंभाषणे । चारुशिञ्जत्कटीसूत्रनिर्भर्त्सितानङ्गलीलाधनुःशिञ्जिनीडम्बरे दिव्यरत्नाम्बरे । पद्मरागोल्लसन्मेखलाभास्वरश्रोणिशोभाजितस्वर्णभूभृत्तले चन्द्रिकाशीतले ॥२॥ विकासितनवकिंशुकाताम्रदिव्यांशु[illegible]भूतसिन्दूरशोणायमानेन्द्रमातङ्गहस्तार्गले वैभवानर्गले श्यामले । कोमलस्निग्धनीलोत्पलो-

त्पादितानङ्गतूणीरशङ्काकरोदारजङ्घालते चारुलीलागते । नम्रदिक्पालसीमन्तिनीकुन्तलस्निग्धनीलप्रभापुञ्जसञ्जातदूर्वांकुराशङ्कसारङ्गसंयोगरिङ्खन्नखेन्दूज्ज्वले प्रोज्ज्वले निर्मले । प्रह्वदेवेशलक्ष्मीशभूतेशतोयेशवाणीशकीनाशदैत्येशयक्षेशवाय्वग्निकोटीरमाणिक्यसंघृष्टबालातपोद्दामलाक्षारसारुण्यतारुण्यलक्ष्मीगृहीताङ्घ्रिपद्मे सुपद्मे उमे॥३॥ सुरुचिरनवरत्नपीठस्थिते सुस्थिते । रत्नपद्मासने रत्नसिंहासने शङ्खपद्मद्वयोपाश्रिते । तत्र विघ्नेशदूर्वावटुक्षेत्रपालैर्युते मत्तमातङ्गकन्यासमूहान्विते मञ्जुलामेनकाद्यङ्गनामानिते भैरवैरष्टभिर्वेष्टिते । देवि वामादिभिः शक्तिभिः सेविते धात्रिलक्ष्म्यादिशक्त्यष्टकैः संयुते । मातृकामण्डलैर्मण्डिते । यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्चिते । पञ्चबाणात्मिके पञ्चबाणेन रत्या च संभाविते । प्रीतिभाजा वसन्तेन चानन्दिते भक्तिभाजां परं श्रेयसे कल्पसे । योगिनां मानसे द्योतसे छन्दसामोजसा भ्राजसे । गीतविद्याविनोदातितृष्णेन कृष्णेन संपूज्यसे । भक्तिमच्चेतसा वेधसा स्तूयसे । विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे ॥४॥ श्रवणहरणदक्षिणक्वाणया वीणया किन्नरैर्गीयसे । यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्च्यसे । सर्वसौभाग्यवाञ्छावतीभिर्वधूभिः सुराणां समाराध्यसे । सर्वविद्याविशेषात्मकं चाटुगाथासमुच्चारणं कण्ठमूलोल्लसद्वर्णराजित्रयं कोमलश्यामलोदारपक्षद्वयं तुण्डशोभातिदूरीभवत्किंशुकं तं शुकं लालयन्ती परि-

क्रीडसे । पाणिपद्मद्वयेनाक्षमालामपि स्फाटिकीं ज्ञानसारात्मकं पुस्तकं चाङ्कुशं पाशमाबिभ्रती येन संचिन्त्यसे तस्य वक्त्रान्तराद्गद्यपद्यात्मिका भारती निःसरेत् । येन वा यावकाभाकृतिर्भाव्यसे तस्य वश्या भवन्ति स्त्रियः पुरुषाः । येन वा शातकुम्भद्युतिर्भाव्यसे सोऽपि लक्ष्मीसहस्रैः परिक्रीडते । किं न सिध्येद्वपुः श्यामलं कोमलं चन्द्रचूडान्वितं तावकं ध्यायतः । तस्य लीलासरोवारिधिस्तस्य केलीवनं नन्दनं तस्य भद्रासनं भूतलं तस्य गीर्देवता किंकरी तस्य चाज्ञाकरी श्रीः स्वयम् । सर्वतीर्थात्मिके सर्वमन्त्रात्मिके सर्वतन्त्रात्मिके सर्वयन्त्रात्मिके सर्वशक्त्यात्मिके सर्वपीठात्मिके सर्वतत्त्वात्मिके सर्वविद्यात्मिके सर्वयोगात्मिके सर्वनादात्मिके सर्वशब्दात्मिके सर्वविश्वात्मिके सर्वदीक्षात्मिके सर्वसर्वात्मिके सर्वगे पाहि मां पाहि मां पाहि मां देवि तुभ्यं नमो देवि तुभ्यं नमो देवि तुभ्यं नमः ॥ ९ ॥

इति श्यामलादण्डकस्तोत्रं संपूर्णम् ।

---

## १९८ नवरत्नमालास्तुतिः ।

श्रीगणेशाय नमः ॥ ओंकारपञ्जरशुकीमुपनिषदुद्यानकेलिकलकण्ठीम् । आगमविपिनमयूरीमार्यामन्तर्विभावये गौरीम् ॥ १ ॥ दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् । वामकुचनिहितवीणां वरदां संगीतमातृकां वन्दे

॥ २ ॥ श्यामलिमसौकुमार्यामानन्दामन्दसंपदुन्मेषाम् । तरुणिमकरुणापूरां मदजलकल्लोललोचनां वन्दे ॥ ३ ॥ नखमुखमुखरितवीणानादरसास्वादनवनवोल्लासम् । मुखमम्ब मोदयतु मे मुक्ताताटङ्कमुग्धहसितं ते ॥ ४ ॥ सरिगमपधनिरतां तां वीणासंक्रान्तकान्तहस्तां ताम् । शान्तां मृदुलस्वान्तां कुचभरतान्तां नमामि शिवकान्ताम् ॥ ५ ॥ अवटुतटघटितचूलीपाली तालीपलाशताटङ्काम् । वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥ ६ ॥ वीणारवानुषङ्गं विकचमदामोदमाधुरीभृङ्गम् । करुणापूरतरङ्गं कलये मातङ्गकन्यकापाङ्गम् ॥ ७ ॥ मणिभङ्गमेचकाङ्गीं मातङ्गीं नौमि सिद्धमातङ्गीम् । यौवनवनसारङ्गीं संगीताम्भोरुहानुभवभृङ्गीम् ॥ ८ ॥ मेचकमासेचनकं मिथ्यादृष्टान्तमध्यभागं तम् । मातस्तव स्वरूपं मङ्गलसंगीतसौरभं मन्ये ॥ ९ ॥

इति श्रीगौर्या नवरत्नमालास्तुतिः संपूर्णा ।

## १९९ पृथ्वीधरराजपुत्र्यष्टकम् ।

श्रीगणेशाय नमः ॥ ज्ञात्वाऽपि दोषान्विषयेषु शब्दरसादिमेष्वप्रतिबद्धतर्षम् । आकारमात्रात्परहंसरूपं मां पाहि पृथ्वीधरराजपुत्रि ॥ १ ॥ विवेकवैराग्यशमादिषट्कमुमुक्षुतागन्धलवानभिज्ञम् । नक्तंदिवं स्वोदरपूरणेच्छं मां पाहि० ॥ २ ॥ काषायवस्त्रेण करात्तदण्डकमण्डलुभ्यां जपमालया

च । विश्रामयन्तं गृहिणां कदम्बं मां पाहि० ॥ ३ ॥ वेदान्तवाक्यानि सुधोच्चरन्तं तदर्थजातं बहु वर्णयन्तम् । कदापि न ध्यातपरात्मतत्त्वं मां पाहि० ॥ ४ ॥ सुवर्णतन्तूज्ज्वलचेलकामं यानेषु मानेषु विरूढरागम् । अङ्गीकृतानेकसुमित्रशत्रुं मां पाहि० ॥ ५ ॥ भोगाननेकान्मनसाऽप्यलभ्यान् भूयासुरित्यन्वहमीहमानम् । गुरूत्तमाराधनदूरचित्तं मां पाहि० ॥ ६ ॥ कुतो यतेरस्य शरीरमानधनाभिमानः सततं दुरन्तः । अशेषलोकैरिति निन्द्यमानं मां पाहि० ॥ ७ ॥ निवारिताशेषमहाघवृन्दैरव्याजकारुण्यसुधातरङ्गैः । अपाङ्गपातैरवलोकयन्ती मां पाहि० ॥ ८ ॥ इदं हि पृथ्वीधरराजपुत्रीपादारविन्दार्पितमानसेन । कर्मन्दिना निर्मितमष्टकं यः पठेत्स भूयादखिलेष्टगेहम् ॥ ९ ॥

इति श्रीमत्परमहंसेत्यादिसमस्तबिरुदाङ्कितश्रीजगद्गुरुशृङ्गगिरिश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिर्विरचितं पृथ्वीधरराजपुत्र्यष्टकं समाप्तम् ।

---

## २०० श्रीललिताम्बापरमेश्वरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कल्याणशैलधन्वा करधृतकुम्भाक्षमालिकापुस्तकाद्युद्दः । कलयतु मम संतोषं करिचर्मधरः कृपापयोराशिः ॥ १ ॥ एकात्मकत्वधिषणामेधयतीमीशजीवयोर्नमताम् । एकान्तवासलभ्यामेकां पुण्यावलिं नुमः शम्भोः

॥ २ ॥ ईशोऽर्धवपुर्यस्या ईप्सितपङ्क्तिर्यदङ्घ्रिनतसुलभा । ईंकाररूपिणीं तामीश्वरपत्नीं हृदा सदा कलये ॥ ३ ॥ लभ्यन्तेऽखिलविभवा लब्धावसरैर्यदीयमन्त्रजपे । लक्ष्मीगीर्विनुता सा लक्ष्या भूयान्मदीयचित्तस्य ॥ ४ ॥ ह्रींकारपद्मभृङ्गौ ह्रींकारान्तःस्तिशीलनरसुलभौ । ह्रींकारगिरिमृगेन्द्रौ ह्रींकारेणैव भावयामि शिवौ ॥ ५ ॥ हरतादाशु जडत्वं हरिदधिपाराध्यपादपाथोजः । हरिणाङ्ककलितचूडो हृतवर्ष्मार्धः कुलाद्रिकन्यकया ॥ ६ ॥ सत्यं ज्ञानमितीमे सकलाम्नाया वदन्ति यद्रूपम् । सद्गुरुमुखैकवन्द्यां सन्मतिदां नौमि तां परामनिशम् ॥ ७ ॥ कर्मभिरात्मानुगुणैः कलितामलभावचित्तकैर्जातैः । कतिपयपुरुषवरेण्यैः कथमपि बुद्धं नमामि शशिमौलिम् ॥ ८ ॥ हतरिपुवर्गैः शान्तैर्हरिहयपद्मोद्भवादिपदविमुखैः । हंसवरैः परमाद्यैर्हस्ताम्बुजपूजितं नमामि हरम् ॥ ९ ॥ ललितां कवित्वसरणिं लभते मूकोऽपि यत्कृपालेशात् । लङ्केशहितविनुतां लम्बोदरमातरं नमस्येताम् ॥ १० ॥ ह्रींकारगेहगृहिणौ ह्रींकारपयःपयोधिकल्पतरू । ह्रींकारवनमयूरौ ह्रींकारशरीरिणौ शिवौ वन्दे ॥ ११ ॥ सम्यङ्निरुध्य चेतः सकलानि निगृह्य करणानि । सततं यतिभिर्हृदये समाधिभाव्यां नमामि ललिताम्बाम् ॥ १२ ॥ कणभुक्कपिलाराध्यः कथिताधिकसौख्यदानकृतदीक्षः । [illegible] करुणाभिरुद्धै ममास्तु परमेशः ॥१३॥

ललनाभिस्त्रिदशानां ललितैर्गीतैः स्तुतात्मचारित्राम् । लसदलकफालदेशां लभ्यां योगैर्नमामि जगदम्बाम् ॥ १४॥ ह्रींकारसौधराजौ ह्रींकाराम्भोधिपूर्णसितकिरणौ। ह्रींकार-वाच्यरूपौ ह्रींनिष्कुटकोकिलौ शिवौ कलये ॥ १५ ॥ आदौ यन्मन्त्रवर्णैर्घटिता रचिता स्तुतिर्थेयम् । सा ललिता तामू-रीकुर्यादव्याजकरुणाङ्गी ॥ १६ ॥

इति श्रीमत्परमहंसेत्यादिसमस्तविरुदाङ्कितश्रीसच्चिदानन्द-शिवाभिनवनृसिंहभारतीस्वामिभिर्विरचितं श्रीललिताप-ञ्चदशीमन्त्रवर्णमुखानिबद्धश्रीललिताम्बापरमेश्वर-स्तोत्रं समाप्तम् ।

## २०१ देवीभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः विरिञ्च्यादिभिः पञ्चभिर्लोकपालैः समूढे महानन्दपीठे निषण्णम् । धनुर्बाणपाशाङ्कुशप्रोतहस्तं महस्त्रैपुरं शंकराद्वैतमव्यात् ॥ १ ॥ यदन्नादिभिः पञ्चभिः कोशजालैः शिरःपक्षपुच्छात्मकैरन्तरन्तः । निगूढे महायोग-पीठे निषण्णं पुरारेरथान्तःपुरं नौमि नित्यम् ॥ २ ॥ विरिञ्च्यादिरूपैः प्रपञ्चे विहृत्य स्वतन्त्रा यदा स्वात्मवि-श्रान्तिरेषा । तदा मानमातृप्रमेयातिरिक्तं परानन्दमीडे भवानि त्वदीयम् ॥ ३ ॥ विनोदाय चैतन्यमेकं विभज्य द्विधा देवि जीवः शिवश्चेति नाम्ना । शिवस्यापि जीवत्वमा-

पादयन्ती पुनर्जीवमेनं शिवं वा करोषि ॥ ४ ॥ समाकुञ्च्य मूलं हृदि न्यस्य वायुं मनो भ्रूबिलं प्रापयित्वा निवृत्ताः। ततः सच्चिदानन्दरूपे पदे ते भवन्त्यम्ब जीवाः शिवत्वेन केचित् ॥ ५ ॥ शरीरेऽतिकष्टे रिपौ पुत्रवर्गे सदा भीतिमूले कलत्रे धने वा। न कश्चिद्विरज्यत्यहो देवि चित्रं कथं त्वत्कटाक्षं विना तत्त्वबोधः ॥ ६ ॥ शरीरे धनेऽपत्यवर्गे कलत्रे विरक्तस्य सद्देशिकादिष्टबुद्धेः। यदाकस्मिकं ज्योतिरानन्दरूपं समाधौ भवेत्तत्त्वमस्यम्ब सत्यम् ॥ ७ ॥ मृषान्यो मृषान्यः परो मिश्रमेनं परः प्राकृतं चापरो बुद्धिमात्रम्। प्रपञ्चं मिमीते मुनीनां गणोऽयं तदेतत्त्वमेवेति न त्वां जहीमः ॥८॥ निवृत्तिः प्रतिष्ठा च विद्या च शान्तिस्तथा शान्त्यतीतेति पञ्चीकृताभिः। कलाभिः परे पञ्चविंशात्मिकाभिस्त्वमेकैव सेव्या शिवाभिन्नरूपा ॥ ९ ॥ अगाधेऽत्र संसारपङ्के निमग्नं कलत्रादिभारेण खिन्नं नितान्तम्। महामोहपाशौघबद्धं चिरान्मां समुद्धर्तुमम्ब त्वमेकैव शक्ता ॥ १० ॥ समारभ्य मूलं गतो ब्रह्मचक्रं भवद्दिव्यचक्रेश्वरीधामभाजः। महासिद्धिसंघातकल्पद्रुमाभानवाप्याम्ब नादानुपास्ते च योगी ॥ ११ ॥ गणेशैर्ग्रहैरम्ब नक्षत्रपङ्क्त्या तथा योगिनीराशिपीठैरभिन्नम्। महाकालमात्मानमामृश्य लोकं विधत्से कृतिं वा स्थितिं वा महेशि ॥ १२ ॥ लसत्तारहारामतिस्वच्छचेलां

त्वां सकृद्भावयन्भारतीवल्लभः स्यात् ॥ १३ ॥ समुद्यत्सहस्रार्कबिम्बाभवक्त्रां स्वभासैव सिन्दूरिताजाण्डकोटिम् । धनुर्बाणपाशाङ्कुशान्धारयन्तीं स्मरन्तः स्मरं वाऽपि संमोहयेयुः ॥१४॥ मणिस्यूतताटङ्कशोणास्यबिम्बां हरित्पट्टवस्त्रां त्वगुल्लासिभूषाम् । हृदा भावयंस्तप्तहेमप्रभां त्वां श्रियो नाशयत्यम्ब चाञ्चल्यभावम् ॥१५॥ महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् । भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत्स त्वमेव ॥ १६ ॥ तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते । परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥१७॥ त्वदुन्मेषलीलानुबन्धाधिकारान्विरिञ्च्यादिकांस्त्वद्गुणाम्भोधिबिन्दून् । भजन्तस्तितीर्षन्ति संसारसिन्धुं शिवे तावकीनां सुसंभावनेयम् ॥ १८ ॥ कदा वा भवत्पादपोतेन तूर्णं भवाम्भोधिमुत्तीर्य पूर्णान्तरङ्गः । निमज्जन्तमेनं दुराशाविषाब्धौ समालोक्य लोकं कथं पर्युदास्से ॥ १९ ॥ कदा वा हृषीकाणि साम्यं भजेयुः कदा वा न शत्रुर्न मित्रं भवानि । कदा वा दुराशाविषूचीविलोपः कदा वा मनो मे समूलं विनश्येत् ॥ २० ॥ नमोवाकमाशास्महे देवि युष्मत्पदाम्भोजयुग्माय तिग्माय गौरि । विरिञ्च्यादिभास्वत्किरीटप्रतोलीप्रदीपायमानप्रभाभास्वराय ॥ २१ ॥ कचे चन्द्ररेखं कुचे तारहारं करे स्वादुचापं शरे षट्पदौघम् । स्मरामि

स्मरारेरभिप्रायमेकं मदाघूर्णनेत्रं मदीयं निधानम् ॥ २२ ॥ शरेष्वेव नासा धनुष्वेव जिह्वा जपापाटले लोचने ते स्वरूपे। त्वगेषा भवच्चन्द्रखण्डे श्रवो मे गुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥ २३ ॥ जगत्कर्मधीरान्वचो धूतकीरान्कुचन्यस्तहाराङ्कृपासिन्धुपूरान् । भवाम्भोधिपारान्महापापदूरान्भजे वेदसारान्छिवप्रेमदारान् ॥ २४ ॥ सुधासिन्धुसारे चिदानन्दनीरे समुत्फुल्लनीपे सुरत्नान्तरीपे। मणिव्यूहसाले स्थिते हैमशाले मनोजारिवामे निषण्णं मनो मे ॥ २५ ॥ दृगन्ते विलोला सुगन्धीषु माला प्रपञ्चेन्द्रजाला विपत्सिन्धुकूला। मुनिस्वान्तशाला नमल्लोकपाला हृदि प्रेमलोलामृतस्वादुलीला ॥२६॥ जगज्जालमेतत्त्वयैवाम्ब सृष्टं त्वमेवाद्य पासीन्द्रियैरर्थजालम्। त्वमेकैव कर्त्री त्वमेकैव भोक्त्री न मे पुण्यपापे न मे बन्धमोक्षौ ॥ २७ ॥ इति प्रेमभारेण किंचिन्मयोक्तं न बुद्ध्वैव तत्त्वं मदीयं त्वदीयम्। विनोदाय बालस्य मौर्ख्यं हि मातस्तदेतत्प्रलापस्तुतिं मे गृहाण ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ देवीभुजङ्गस्तोत्रं संपूर्णम्।

---

## २०२ शक्तिमहिम्नः स्तोत्रम्।

श्रीगणेशाय नमः। श्रीदुर्गायै नमः। मातस्ते महिमां

वक्तुं शिवेनापि न शक्यते । भक्त्याऽहं स्तोतुमिच्छामि प्रसीद मम सर्वदा ॥ १ ॥ श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् । उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः स्वान्ते मे स्फुरतु त्रिकोणनिलयं ज्योतिर्मयं वाङ्मयम् ॥ २ ॥ आदिक्षान्तसमस्तवर्णसुमणिप्रोते वितानप्रभे ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्षोन्नते । ब्रह्माण्डाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं सौषुम्नायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम् ॥ ३ ॥ या बालेन्दुदिवाकराक्षिमधुरा या रक्तपद्मासना रत्नाकल्पविराजिताङ्गलतिका पूर्णेन्दुवक्त्रोज्ज्वला अक्षस्रक्सृणिपाशपुस्तककरा या बालभानुप्रभा तां देवीं त्रिपुरां शिवां हृदि भजेऽभीष्टार्थसिद्ध्यै सदा ॥ ४ ॥ वन्दे वाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो भाषा देशसमुद्भवाः पशुगताश्छन्दांसि सप्त स्वरान् । तालान्पञ्च महाध्वनीन्प्रकटयत्यात्मप्रकाशेन यत्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ॥ ५ ॥ त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमा स्वात्मोक्तिरूपं विना यद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव । तज्जाप्यस्मरणप्रसक्तसुमतिः सर्वज्ञतां प्राप्य कः शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिः स्पर्धते ॥ ६ ॥ मात्रा यात्र विराजतेऽतिविशदा तामष्टधा मातृकां शक्तिं कुण्डलिनीं चतुर्विधगतं यत्[illegible] मन्यते । सोऽ[illegible]

जन्मकर्मदुरितारण्यं प्रबोधाग्निना भस्मीकृत्य विकल्पजालरहितो मातः पदं तद्व्रजेत् ॥ ७ ॥ तत्ते मध्यमबीजमम्ब कलयाम्यादित्यवर्णं क्रियाज्ञानेच्छाख्यमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् । उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रभावेन यत्काम्यं ब्रह्महरीश्वरादिविबुधैः कामं क्रियायोजितैः ॥ ८ ॥ कामान्कारणतां गतानगणितान्कार्यैरनन्तैर्महीमुख्यैः सर्वमनोगतैरधिगतान्मानैरनेकैः स्फुटम् । कामक्रोधसलोभमोहमदमात्सर्यारिषट्कं च यत् बीजं भाजयति प्रणौमि तदहं ते साधु कामेश्वरि ॥ ९ ॥ यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महाजाड्यध्वान्तविदारणैकतरणिज्योतिः प्रबोधप्रदम् । यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति श्रीविद्ये तव सर्वराजवशकृत्तत्कामराजं भजे ॥ १० ॥ यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं सर्वाधारतुरीयशक्तिपरमब्रह्माभिधाशब्दितम् । मूर्धन्यान्तविसर्गभूपितमहौकारात्मकं तत्परं भ्राजद्रूपमनन्यतुल्यममितः स्वान्ते मम द्योतताम् ॥ ११ ॥ सर्वं सर्वत एव सर्गसमये कार्येन्द्रियाण्यन्तरा तत्तद्दिव्यहृषीककर्मभिरियं संव्यश्नुवाना परा । वागर्थव्यवहारकारणतनुः शक्तिर्जगद्रूपिणी यद्बीजात्मकतां गता तव शिवे तं नौमि बीजं परम् ॥ १२ ॥ अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी शक्तिर्ब्रह्महरीशानादिवपुषा

तमहाचैतन्यरूपा च या यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिके ॥ १३ ॥ स्वात्मश्रीविजिताजविष्णुमघवश्रीपूरणैकव्रतं सद्विद्याकविताविलासलहरीकल्लोलिनीदीपकम् । बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिनः शान्ताः सत्यमुपासते तदिह ते चित्ते दधे श्रीपरे ॥ १४ ॥ एकैकं तव मातृके परतरं संयोगि वा योगि वा विद्यादि प्रकटप्रभावजनकं जाड्यान्धकारापहम् । यन्निष्ठाश्च महोत्पलासनमहाविष्णुप्रहर्त्रादयो देवाः स्वेषु विधिष्वनन्तमहिमस्फूर्तिं दधत्येव तव ॥ १५ ॥ इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्फुरच्छक्त्याख्यानि चतुःश्रुतिप्रकटितान्युत्कृष्टकूटानि ते । भूततुश्रुतिसंख्यवर्णविदितान्यारक्तकान्ते शिवे यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकः ॥ १६ ॥ ब्रह्मायोनिरमाक्षुरेश्वरसुहृल्लेखाभिरुक्तैस्तथा मार्तण्डेन्दुमनोजहंसवसुधामायाभिरुत्तंसितैः । सोमाम्बुक्षितिशक्तिभिः प्रकटितैर्बाणाङ्गवेदैः क्रमाद्वर्णैः श्रीशिवदेशिकेन विदितां विद्यां तवाम्बाश्रये ॥१७॥ नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपेत्संपूज्याखिलचक्रराजनिलयां सायंतनाग्निप्रभाम् । कामाख्यं शिवनामतत्त्वमुभयं व्याप्यात्मना सर्वतो दीव्यन्तीमिह तस्य सिद्धिरचिरात्स्यात्तत्स्वरूपैकता ॥ १८ ॥ काव्यैर्वा पठितैः किमल्पविदुषां जोघुष्यमाणैः पुनः किं तैर्व्याकरणैर्विबोधुधिषया किं वाऽभिधानश्रिया । एतैरम्ब न कोऽपीति [illegible]

विस्तावत्तव श्रीमत्तोयविभ्रातुसरीसरीति सरणिं पादाब्जयोः पावनीम् ॥ १९ ॥ गेहं नाकति गर्वितः प्रणमति स्त्रीसङ्गमो मोक्षति द्वेषो मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति। मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात् त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् ॥२०॥ आद्यैरग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभिर्मिश्रारक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः। स्वात्मोत्पादितकाललोकनिगमावस्थामरादित्रयैरुद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो बुधः ॥२१॥ आद्यो जाप्यतमार्धवाचकतया रूढः स्वरः पञ्चमः सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्गान्तकः। वक्त्रत्वेन महाविभूतिसरणिस्त्वाधारगो ह्यद्रतो भ्रूमध्ये स्थित इत्यतः प्रणवता ते गीयतेऽम्बागमैः ॥ २२ ॥ गायत्री सशिरास्तुरीयसहिता सन्ध्यामयीत्यागमैराख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम्। तत्तद्दर्शनमुख्यशक्तिरपि च त्वं ब्रह्मकर्मेश्वरी कर्ताऽर्हन्पुरुषो हरिश्च सविता बुद्धः शिवस्त्वं गुरुः ॥२३॥ अन्नप्राणमनःप्रबोधपरमानन्दैः शिरःपक्षयुक्पुच्छात्मप्रकटैर्महोपनिषदां वाग्भिः प्रसिद्धीकृतैः। कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रलीनामिति ज्योतिः प्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥ २४ ॥ सच्चित्त्वमसीति वाक्यविदितैरम्ब ...मसीत्यत्र ...त्प्रमाणमहितैस्तत्त्रिभिः

सद्गुरोः। त्वद्रूपस्य मुखारविन्दविवरात्संप्राप्य दीक्षामतो यस्त्वां विन्दति तत्त्वतस्तदहमित्यार्थं स मुक्तो भवेत् ॥२५॥ सिद्धान्तैर्बहुभिः प्रमाणगदितैरन्यैरविद्यातमो नक्षत्रैरिव सर्वमन्धतमसं तावन्न निर्भिद्यते। यावत्ते सवितेव संमतमिदं नोदेति विश्वान्तरं जन्तोर्जन्मविमोचनैकभिदुरं श्रीशाम्भवं श्रीशिवे ॥ २६ ॥ आत्माऽसौ सकलेन्द्रियाश्रयमनोबुद्ध्यादिभिः शोचितः कर्माबद्धतनुर्जनिं च मरणं प्रैतीति यत्कारणम्। तत्ते देवि महाविलासलहरी दिव्यायुधानां जयस्तस्मात्सद्गुरुमभ्युपेत्य कलये त्वामेव चेन्मुच्यते ॥ २७ ॥ नानायोनिसहस्रसंभववशाज्जाता जनन्यः कति प्रख्याता जनकाः कियन्त इति मे सेत्स्यन्ति चाग्रे कति। एतेषां गणनैव नास्ति महतः संसारसिन्धोर्विधेर्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ॥ २८ ॥ देहक्षोभकरैर्व्रतैर्बहुविधैर्दानैश्च होमैर्जपैः संतानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः। यत्संकल्पविकल्पजालमलिनं प्राप्यं पदं तस्य ते दूरादेव निवर्तते परतरं मातः पदं निर्मलम् ॥२९॥ पञ्चाशन्निजदेहजाक्षरमयैर्नानाविधैर्धातुभिर्बद्धार्थैः पदवाक्यमानजनकैरर्थाविनाभाविभिः। साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं विश्वं व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके ॥ ३० ॥ श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं विख्यातं

मयात्मिकाभिररुणं श्रीसुन्दरीभिर्वृतं मध्ये बैन्दवसिंहपीठललिते त्वं ब्रह्मविद्या शिवे ॥३१॥ त्रिन्दुप्राणविसर्गजीवसहितं बिन्दुत्रिबीजात्मकं षट् कूटानि विपर्ययेण निगदेत्तारत्रिबालाक्षैरः। एभिः संपुटितं प्रजप्य विहरेत्प्रासादमंत्रं परं गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्रदम् ॥ ३२ ॥ आताम्रार्कसहस्रदीप्तिपरमा सौन्दर्यसारैरलं लोकातीतमहोदयैरुपयुता सर्वोपमागोचरैः । नानानर्घ्यविभूषणैरगणितैर्जाज्वल्यमानाभितस्त्वं मातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवासं मम ॥ ३३ ॥ शिञ्जन्नूपुरपादकङ्कणमहामुद्रासु लाक्षारसालंकाराङ्कितपादपङ्कजयुगं श्रीपादुकालंकृतम् । उद्भास्वन्नखचण्डखण्डरुचिरं राजज्जपासंनिभं ब्रह्मादित्रिदशासुरार्चितमहं मूर्ध्नि स्मराम्यम्बिके ॥ ३४ ॥ आरक्तच्छविनातिमार्दवयुजा निःश्वासहार्येण यत्कौशेयेन विचित्ररत्नघटितैर्मुक्ताफलैरुज्ज्वलैः । कूजत्काञ्चनकिङ्किणीभिरभितः संनद्धकाञ्चीगुणैरादीप्तं सुनितम्बबिम्बमरुणं ते पूजयाम्यम्बिके ॥ ३५ ॥ कस्तूरीघनसारकुङ्कुमरजो गन्धोत्कटैश्चन्दनैरालिप्तं मणिमालयातिरुचिरं ग्रैवेयहारादिभिः । दीप्तं दिव्यविभूषणैर्जननि ते ज्योतिर्विभास्वत्कुचव्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतं भजे ॥ ३६ ॥ मुक्तारत्नसुवर्णकान्तिकलितैस्ते बाहुवल्लीरहं केयूरोत्तमबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैः । संपृक्ताः कलयामि ... विभूषणैन

सुभगे कण्ठं च कम्बुश्रियम् ॥ ३७ ॥ तप्तस्वर्णकृतोरुकुण्डलयुगं माणिक्यमुक्तोल्लसद्धीराबद्धमनन्यतुल्यमपरं हैमं च चक्रद्वयम् । शुक्राकारनिकारदक्षमपरं मुक्ताफलं सुन्दरं बिभ्रत्कर्णयुगं नमामि ललितं नासाग्रभागं शिवे ॥ ३८ ॥ उद्यत्पूर्णकलानिधिश्रि वदनं भक्तप्रसन्नं सदा संफुल्लाम्बुजपत्रचित्रसुषमाधिकारदक्षेक्षणम् । सानन्दं कृतमन्दहासमसकृत्प्रादुर्भवत्कौतुकं कुन्दाकारसुदन्तपङ्क्तिशशिभापूर्णं स्मराम्यम्बिके ॥ ३९ ॥ शृङ्गारादिरसालयं त्रिभुवनीमाल्यैरतुल्यैर्वृतं सर्वाङ्गीणसदङ्गरागसुरभि श्रीमद्वपुर्धूपितम् । ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं दधद्भालं नन्दनचन्दनेन जननि ध्यायामि ते मङ्गलम् ॥ ४० ॥ जातीचम्पककुन्दकेसरमहागन्धोद्गिरत्केतकीनीपाशोकशिरीषमुख्यकुसुमैः प्रोत्तंसिता धूपिता । आनीलाञ्जनतुल्यमत्तमधुपश्रेणीव वेणी तव श्रीमातः श्रयतां मदीयहृदयाम्भोजं सरोजालये ॥ ४१ ॥ लेखालभ्यविचित्ररत्नघटितं हैमं किरीटोत्तमं मुक्ताकाञ्चनकिङ्किणीगणमहाहीरप्रबद्धोज्ज्वलम् । चञ्चच्चन्द्रकलाकलापमहितं देवद्रुपुष्पार्चितैर्माल्यैरम्ब विलम्बितं सशिखरं बिभ्रच्छिरस्ते भजे ॥ ४२ ॥ उत्क्षिप्तोच्चसुवर्णदण्डकलितं पूर्णेन्दुबिम्बाकृतिच्छत्रं मौक्तिकचित्ररत्नखचितं क्षौमांशुकोत्तंसितम् । मुक्ताजालविलम्बितं सकलशं नानाप्रसूनार्चितं चन्द्रोद्भासरचामराणि दधते श्रीदेवि ते स्वश्रियः ॥ ४३ ॥

विद्यामन्त्ररहस्यविन्मुनिगणक्लृप्तोपचारार्चनां वेदादिस्तुतिगीयमानचरितां वेदान्ततत्त्वात्मिकाम् । सर्वास्ताः खलु तुर्यतामुपगतास्त्वद्रश्मिदेव्यः परास्त्वां नित्यं समुपासते स्वविभवैः श्रीचक्रनाथे शिवे ॥ ४४ ॥ एवं यः स्मरति प्रबुद्धसुमतिः श्रीमत्स्वरूपं परं वृद्धोऽप्याशु युवा भवत्यनुपमः स्त्रीणामनङ्गायते । सोऽष्टैश्वर्यतिरस्कृताखिलसुरश्रीजृम्भणैकालयः पृथ्वीपालकिरीटकोटिवलभीपुष्पार्चिताङ्घ्रिर्भवेत् ॥ ४५ ॥ अथ तव धनुः पुण्ड्रेक्षुत्वात्प्रसिद्धमतिद्युतित्रिभुवनवधूसुभ्रज्ज्योत्स्नाकलानिधिमण्डलम् । सकलजननि स्मारं स्मारं गतः स्मरतां नरस्त्रिभुवनवधूमोहाम्भोधेः प्रपूर्णविधुर्भवेत् ॥ ४६ ॥ प्रसूनशरपञ्चकप्रकटजृम्भणागुम्फितत्रिलोकमवलोकयत्यमलचेतसा चञ्चलम् । अशेषतरुणीजनस्मरविजृम्भणे यः सदा पटुर्भवति ते शिवे त्रिजगदङ्गणाक्षोभणे ॥ ४७ ॥ पाशं प्रपूरितमहासुमतिप्रकाशो यो वा तव त्रिपुरसुन्दरि सुन्दरीणाम् । आकर्षणेऽखिलवशीकरणे प्रवीणं चित्ते दधाति स जगत्त्रयवश्यकृत्स्यात् ॥४८॥ यः स्वान्ते कलयति कोविदस्त्रिलोकीस्तम्भारम्भणचणमत्युदारवीर्यम् । मातस्ते विजयनिजाङ्कुशं सयोपा देवांस्तम्भयति च भूभुजोऽन्यसैन्यम् ॥ ४९ ॥ चापध्यानवशाद्भवोद्भवमहामोहं महाजृम्भणं प्रख्यातं प्रसवेषु चिन्तनवशात्सत्क्षोभणं सुधीः । पाशध्यानवशात्समस्तजगतां मृत्यो-

वंशित्वं महादुर्गस्तम्भमहाङ्कुशस्य मननान्मायाममेयां तरेत् ॥ ९० ॥ न्यासं कृत्वा गणेशग्रहभगणमहायोगिनीराशिपीठैः षड्भिः श्रीमातृकाणैः सहितबटुकलैरष्टवाग्देवताभिः। सश्रीकण्ठादियुग्मैर्विमलनिजतनौ केशवाद्यैश्च तत्त्वैः षट्त्रिंशद्भिश्च तत्त्वैर्भगवति भवतीं यः स्मरेत्स त्वमेव ॥ ९१ ॥ सुरपतिपुरलक्ष्मीः जृम्भणातीतलक्ष्मीः प्रभवति निजगेहे यस्य दैवं त्वमार्ये। विविधतव कलानां पात्रभूतस्य तस्य त्रिभुवनविदिता सा जृम्भते कीर्तिरच्छा ॥ ९२ ॥ मातस्त्वं भूर्भुवःस्वर्महरसि नृतपःसत्यलोकैश्च सूर्येन्द्वारज्ञाचार्यशुक्रार्किभिरपि निगमब्रह्मभिः प्रोतशक्तिः। प्राणायामादियत्नैः कलयसि सकलं मानसं ध्यानयोगं येषां तेषां सपर्या भवति सुरकृता ब्रह्म ते जानते च ॥ ९३ ॥ क मे बुद्धिर्वाचा परमविदुषो मन्दसरणिः क्व ते मातर्ब्रह्मप्रमुखविदुषामाप्तवचसाम्। अभून्मे विस्फूर्तिः परतरमहिम्नस्तव नुतिः प्रसिद्धं क्षन्तव्यं बहुलतरचापल्यमिह मे ॥९४॥ प्रसीद परदेवते मम हृदि प्रभूतं भयं विदारय दरिद्रतां दलय देहि सर्वज्ञताम् । निधेहि करुणानिधे चरणपद्मयुग्मं स्वकं निवारय जरामृती त्रिपुरसुन्दरि श्रीशिवे ॥ ९५ ॥ इति त्रिपुरसुन्दरीस्तुतिमिमां पठेयः सुधीः स सर्वदुरिताटवीपटलचण्डदावानलः। भवेन्मनसि वाञ्छितं प्रथितसिद्धिवृद्धिर्भवेदनेकविधसंपदां पदमनन्यतुल्यो भवेत् ॥ ९६ ॥ पुण्यैर्पालप्र-

कटमुकुटस्रग्जोराजिताङ्घ्रिर्विद्वत्पुञ्जानतिस्तुतिसमाराधितो बाधितारिः । विद्याः सर्वाः कलयति हृदा व्याकरोति प्रवाचा लोकाश्चर्यैर्नवनवपदैरिन्दुबिम्बप्रकाशैः ॥ ५७ ॥ संगीतं गिरिजे कवित्वसरणिं चाम्नायवाक्यस्मृतेर्व्याख्यानं हृदि तावकीनचरणद्वन्द्वं च सर्वज्ञताम् । श्रद्धां कर्मणि कालिकेऽतिविपुलश्रीजृम्भणं मन्दिरे सौन्दर्यं वपुषि प्रकाशमतुलं प्राप्नोति विद्वान्कविः ॥ ५८ ॥ भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकारतेजः सुव्यक्तं भक्तिमार्गं निगमनिगदितं दुर्गमं योगमार्गम् । आयुष्यं ब्रह्मपोष्यं हरगिरिविशदां कीर्तिमभ्येत्य भूमौ देहान्ते ब्रह्मपारं परशिवचरणाकारमभ्येति विद्वान् ॥ ५९ ॥ दुर्वाससा महितदिव्यमुनीश्वरेण विद्याकलायुवतिमन्मथमूर्तिनैतत् । स्तोत्रं व्यधायि रुचिरं त्रिपुराम्बिकाया वेदागमैकपटलीविदितैकमूर्तेः॥६०॥ सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान् । सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ॥ ६१ ॥

इति श्रीदुर्वासमहामुनिविरचिता शक्तिमहिम्नः स्तुतिः समाप्ता ।

---

## २०३ आनन्दलहरिः ।

श्रीगणेशाय नमः ॥ भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि । न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिस्तदान्येषां केषां

कथय कथमस्मिन्नवसरः ॥ १ ॥ घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैर्विशिष्यानाख्येयो भवति रसनामात्रविषयः । तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः कथंकारं ब्रूमः सकलनिगमागोचरगुणे ॥ २ ॥ मुखे ते ताम्बूलं नयनयुगले कज्जलकला ललाटे काश्मीरं विलसति गले मौक्तिकलता । स्फुरत्काञ्ची शाटी पृथुकटितटे हाटकमयी भजामि त्वां गौरीं नगपतिकिशोरीमविरतम् ॥ ३ ॥ विराजन्मन्दारद्रुमकुसुमहारस्तनतटीनदद्वीणानादश्रवणविलसत्कुण्डलगुणा । नताङ्गी मातङ्गी रुचिरगतिभङ्गी भगवती सती शम्भोरम्भोरुहचटुलचक्षुर्विजयते ॥ ४ ॥ नवीनार्कभ्राजन्मणिकनकभूषापरिकरैर्वृताङ्गी सारङ्गीरुचिरनयनाङ्गीकृतशिवा । तडित्पीता पीताम्बरललितमञ्जीरसुभगा ममापर्णा पूर्णा निरवधिसुखैरस्तु सुमुखी ॥ ५ ॥ हिमाद्रेः संभूता सुललितकरैः पल्लवयुता सुपुष्पा मुक्ताभिर्भ्रमरकलिता चालकभरैः । कृतस्थाणुस्थाना कुचफलनता सूक्तिसरसा रुजां हन्त्री गन्त्री विलसति चिदानन्दलतिका ॥ ६ ॥ सपर्णामाकीर्णां कतिपयगुणैः सादरमिह श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति । अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥ ७ ॥ विधात्री धर्माणां त्वमसि सकलाम्नायजननी त्वमर्थानां मूलं धनदनमनीयाङ्घ्रिकमले । त्वमादिः कामानां जननि कृतक-

न्दर्पविजये सतां मुक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥ ८ ॥ प्रभूता भक्तिस्ते यदपि न ममालोलमनसस्त्वया तु श्रीमत्या सदयमवलोक्योऽहमधुना । पयोदः पानीयं दिशति मधुरं चातकमुखे भृशं शङ्के कैर्वा विधिभिरनुनीता मम मतिः ॥ ९ ॥ कृपापाङ्गालोकं वितर तरसा साधुचरिते न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते । न चेदिष्टं दद्यादनुपदमहो कल्पलतिका विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥१०॥ महान्तं विश्वासं तव चरणपङ्केरुहयुगे निधायान्यन्नैवाश्रितमिह मया दैवतमुमे । तथापि त्वच्चेतो यदि मयि न जायेत सदयं निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ११ ॥ अयः स्पर्शे लग्नं सपदि लभते हेमपदवीं यथा रथ्यापाथः शुचि भवति गङ्गौघमिलितम् । तथा तत्तत्पापैरतिमलिनमन्तर्मम यदि त्वयि प्रेम्णा सक्तं कथमिव न जायेत विमलम् ॥ १२ ॥ त्वदन्यस्मादिच्छाविषयफललाभे न नियमस्त्वमज्ञानामिच्छाधिकमपि समर्था वितरणे । इति प्राहुः प्राञ्चः कमलभवनाद्यास्त्वयि मनस्त्वदासक्तं नक्तंदिवमुचितमीशानि कुरु तत् ॥ १३ ॥ स्फुरन्नानारत्नस्फटिकमयभित्तिप्रतिफलत्त्वदाकारं चञ्चच्छशधरकलासौधशिखरम् । मुकुन्दब्रह्मेन्द्रप्रभृतिपरिवारं विजयते तवागारं रम्यं त्रिभुवनमहाराजगृहिणि ॥ १४ ॥ निवासः कैलासे



विधिशतमखाद्याः स्तुतिकराः कुटुम्बं त्रैलोक्यं कृतकरपुटः

सिद्धिनिकरः । महेशः प्राणेशस्तदवनिधराधीशतनये नं ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ॥१५॥ वृषो वृद्धो यानं विषमशनमाशा निवसनं श्मशानं क्रीडाभूर्भुजगनिवहो भूषणविधिः । समग्रा सामग्री जगति विदितैव स्मररिपोर्यदेतस्यैश्वर्यं तव जननि सौभाग्यमहिमा ॥१६॥ अशेषब्रह्माण्डप्रलयविधिनैसर्गिकमतिः श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः । दधौ कण्ठे हालाहलमखिलभूगोलकृपया भवत्याः संगत्याः फलमिति च कल्याणि कलये ॥ १७ ॥ त्वदीयं सौन्दर्यं निरतिशयमालोक्य परया भियैवासीद्गङ्गा जलमयतनुः शैलतनये । तदेतस्यास्तस्माद्वदनकमलं वीक्ष्य कृपया प्रतिष्ठामातन्वन्निजशिरसि वासेन गिरिशः ॥ १८ ॥ विशालश्रीखण्डद्रवमृगमदाकीर्णघुसृणप्रसूनव्यामिश्रं भगवति तवाभ्यङ्गसलिलम् । समादाय स्रष्टा चलितपदपांसून्निजकरैः समाधत्ते सृष्टिं विबुधपुरपङ्केरुहदृशाम् ॥ १९ ॥ वसन्ते सानन्दे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे । सखीभिः खेलन्तीं मलयपवनान्दोलितजले स्मरेद्यस्त्वां तस्य ज्वरजनितपीडाऽपसरति॥२०॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः

कृतौ आनन्दलहरी संपूर्णा ।

## २०४ कल्याणवृष्टिस्तवः ।

श्रीगणेशाय नमः ॥ कल्याणवृष्टिभिरिवामृतपूरिताभि-र्लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः । सेवाभिरम्ब तव पाद-सरोजमूले नाकारि किं मनसि भाग्यवतां जनानाम् ॥ १ ॥ एतावदेव जननि स्पृहणीयमास्ते त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे । सांनिध्यमुद्यदरुणायुतसोदरस्य त्वद्विग्रहस्य परया सुधयाऽऽप्लुतस्य ॥ २ ॥ ईशत्वनामकलुषाः कति वा न सन्ति ब्रह्मादयः प्रतिभवं प्रलयाभिभूताः । एकः स एव जननि स्थिरसिद्धिरास्ते यः पादयोस्तव सकृत्प्रणतिं करोति ॥ ३ ॥ लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं कारुण्यकन्द-लितकान्तिभरं कटाक्षम् । कन्दर्पकोटिसुभगास्त्वयि भक्ति-भाजः संमोहयन्ति तरुणीर्भुवनत्रयेऽपि ॥ ४ ॥ ह्रींकारमेव तव नाम गृणन्ति वेदा मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे । त्वत्संस्मृतौ यमभटाभिभवं विहाय दीव्यन्ति नन्दनवने सह लोकपालैः ॥ ५ ॥ हन्तुः पुरामधिगलं परिपीयमानः क्रूरः कथं न भविता गरलस्य वेगः । नाश्वासनाय यदि मातरिदं तवार्धं देवस्य शश्वदमृताप्लुतशीतलस्य ॥ ६ ॥ सर्वज्ञतां सदसि वाक्पटुतां प्रसूते देवि त्वदङ्घ्रिसरसीरु-हयोः प्रणामः । किं च स्फुरन्मुकुटमुज्ज्वलमातपत्रं द्वे चामरे च महतीं वसुधां ददाति ॥ ७ ॥ कल्पद्रुमैरभिमतप्रतिपा-



दनेषु कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः । आलोकय त्रिपु-

कमलजहृदयाम्भोजसूर्यप्रभे मे ॥ ३६ ॥ त्यक्षामि नैव रागं कालत्रितयेऽपि नम्रवर्गेषु । इतिबोधनाय वाणी रक्तसुमानां त्रयं धत्ते ॥ ३७ ॥ एकः शुकः प्रसिद्धोऽस्ति पाराशर्यसुतः किल । शुकोऽपरस्तु को ब्रूहि शारदे प्रणताय मे ॥ ३८ ॥ पद्मासनस्थे सरसीरुहोत्थजाये वस त्वं हृदये सदा मे । तेनाहमाशाः सकला जयेयं न तत्र संदेहलवोऽस्ति मेऽम्ब ॥ ३९ ॥

इति श्रीमत्परमहंसेत्यादिसमस्तबिरुदाङ्कितश्रीजगद्गुरुशृङ्गगिरिश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिर्विरचितं शारदास्तोत्रं संपूर्णम् ।

---

## २२३ शारदापाण्यवलम्बनस्तुतिः ।

श्रीगणेशाय नमः ॥ जाड्यवारिधिनिमग्नबुद्धेर्जातरूपसदृशच्छविकाये । वासवादिदिविषत्प्रवरेड्ये वाणि देहि मम पाण्यवलम्बम् ॥१॥ पाणिनिर्जितसरोरुहगर्वे पारदे विविधदुःखपयोधेः । वासनाविरहितैर्लघुलभ्ये वाणि देहि मम पाण्यवलम्बम् ॥ २ ॥ शारदाभ्रसदृशाम्बरवीते नारदादिमुनिचिन्तितपादे । नीलनीरदसदृक्कचभारे वाणि देहि मम पाण्यवलम्बम् ॥ ३ ॥ यत्पदाम्बुरुहपूजकवक्त्रादाशु निःसरति वागनवद्या । स्वर्धुनी हिमगिरेरिव सा त्वं वाणि देहि मम पाण्यवलम्बम् ॥ ४ ॥ जातुचित्प्रणमतोऽपि पदाब्जे देवराजसदृशान्प्रकरोषि । यत्पदम्ब चरणौ तव वन्दे

वाणि देहि मम पाण्यवलम्बम् ॥ ५ ॥ शान्तिदान्तिसुख-साधनयुक्तैर्वेदशीर्षपरिशीलनसक्तैः । आदरादहरहः परिसेव्ये वाणि देहि मम पाण्यवलम्बम् ॥ ६ ॥ कोशपञ्चकनिषेधन-पूर्वं क्लेशपञ्चकमपि प्रविहाय । यां प्रपश्यति यतिर्हृदि सा त्वं वाणि देहि मम पाण्यवलम्बम् ॥ ७ ॥ वन्द्यमानचरणे सुरवृन्दैर्गीयमानचरिते तुरगाद्यैः । जाप्यमाननिजनाम्नि मुनीन्द्रैर्वाणि देहि मम पाण्यवलम्बम् ॥ ८ ॥ संनिरीक्ष्य कमलानि यदङ्घ्री साम्यमाप्तुमनयोस्तपसाम्भः । कण्ठद-घ्नमधिजग्मुरसौ सा वाणि देहि मम पाण्यवलम्बम् ॥ ९ ॥ पुण्यमम्ब न कृतं मतिपूर्वं पापमेव रचितं त्वतियत्नात् । तेन तप्तमनिशं हृदयाब्जं वाणि देहि मम पाण्यवलम्बम् ॥ १० ॥ नाहमम्ब सरसां च सुवर्णामातनोमि कवितां विविधार्थाम् । केन पूजयति मां भुवि लोको वाणि देहि मम पाण्यवलम्बम् ॥ ११ ॥ अक्षपादकणभुक्फणिनाथैर्व्यासतिष्ठतजैमिनिमुख्यैः । प्रोक्तशास्त्रनिचये न हि बुद्धिर्वाणि देहि मम पाण्यवलम्बम् ॥ १२ ॥ नैव पादसरसीरुहयोस्ते पूजनं प्रतिदिनं प्रकरोमि । हेतुशून्यकरुणाजनिभूमे वाणि देहि मम पाण्यवलम्बम् ॥ १३ ॥ संनिरुध्य दयाम्बुजमध्ये स्वान्तमम्ब तव सुन्दरमूर्तेः । ध्यानमप्यहदिनं न हि कुर्वे वाणि देहि मम पाण्यवलम्बम् ॥ १४ ॥ दुःखजन्मवसुधा



त्रिपथ्या इत्यादरेण गुरुभिः श्रुतिशीर्षैः । त्वां विनाऽपि न हि

यामि निरर्क्ति वाणि देहि मम पाण्यवलम्बम् ॥ १५ ॥ पुत्र-मित्रगृहदारजनन्यो भ्रातृबन्धुधनभृत्यमुखा वा । नैव काल-वशगस्य सहाया वाणि देहि मम पाण्यवलम्बम् ॥ १६ ॥ एकमेव सदबाधितमन्यत्तुच्छमित्यसकृदागमशीर्षम् । वक्त्य-थापि न निवृत्तिरनित्याद्वाणि देहि मम पाण्यवलम्बम् ॥ १७ ॥ जन्ममृत्युमयनीरधिमध्ये मज्जतो विविधरुङ्मक-राढ्ये । पश्यतोऽपि न हि भीतिरनेकान्वाणि देहि मम पाण्यवलम्बम् ॥ १८ ॥ त्वत्पदाम्बुरुहयुग्ममपास्य प्राक्तना-घपरिमार्जनदक्षम् । नास्ति तारणविधानसमर्थं वाणि देहि मम पाण्यवलम्बम् ॥ १९ ॥ बालचन्द्रपरिचुम्बितशीर्षे बाहु-सक्तकनकाङ्गदरम्ये । कण्ठलोलवरमौक्तिकहारे वाणि देहि मम पाण्यवलम्बम् ॥ २० ॥ आननेन चरणेन कटाक्षैर्नीर-जासनमनोहरकान्ते । चन्द्रमम्बुजमलिं च हसन्ती वाणि देहि मम पाण्यवलम्बम् ॥ २१ ॥ मध्यनिर्जितमृगाधिपवर्गे मत्तवारणसदृग्गतिशीले । मञ्जुशिञ्जितमहाभरणाढ्ये वाणि देहि मम पाण्यवलम्बम् ॥ २२ ॥ तापमम्ब विनिवार्य समस्तं पापमप्यहरहः कृतमाशु । चित्तशुद्धिमचिरात्कुरु मातर्वाणि देहि मम पाण्यवलम्बम् ॥ २३ ॥ पादपद्मयुग-मर्दनरूपा पात्रवस्त्रपरिशुद्धिमुखा वा । श्रीगुरोर्न हि कृता बत सेवा वाणि देहि मम पाण्यवलम्बम् ॥ २४ ॥ मन्त्र-राजलयपूर्वकयोगान्योगिहृदयमुदयमुतत्रान् । नैव वेद्मि

करुणामृतराशे वाणि देहि मम पाण्यवलम्बम् ॥ २५ ॥ कामलोभमदपूरितचेतःप्राणिदूरनिजपादपयोजे । कामनिर्मथनदक्षसगर्भ्ये वाणि देहि मम पाण्यवलम्बम् ॥ २६ ॥ अङ्गयष्टिरुचिनिर्जितशर्मे कुम्भिकुम्भपरिपन्थिकुचाढ्ये । भृङ्गनीलचिकुरे तनुमध्ये वाणि देहि मम पाण्यवलम्बम् ॥ २७ ॥ स्वाङ्घ्रिसेवनसमागतकाष्ठाकान्तदारकरमर्दितपादे । स्वामिनि त्रिजगतां धृतवीणे वाणि देहि मम पाण्यवलम्बम् ॥ २८ ॥ नीलनागनिवहा विविशुर्यद्वेणिकां मुहुरवेक्ष्य बिलानि । लज्जयाशु विधिभामिनि सा त्वं वाणि देहि मम पाण्यवलम्बम् ॥ २९ ॥ शान्तिदान्तिविरतिप्रमुखा मां मोहकोपमुखरोगविशीर्णम् । वीक्ष्य यान्ति तरसा बहुदूरं वाणि देहि मम पाण्यवलम्बम् ॥३०॥ काकलोकसदृशः पिकलोकः केकिजालमपि शोकि नितान्तम् । यद्वचःश्रवणतः खलु सा त्वं वाणि देहि मम पाण्यवलम्बम् ॥३१॥ राजराजपदवीं क्षणमात्राद्याति यत्पदसरोरुहनत्या । दीनराडपि जनो भुवि सा त्वं वाणि देहि मम पाण्यवलम्बम्॥३२॥

इति श्रीशृङ्गगिरिपदाधीशश्रीमज्जगद्गुरुनृसिंहभारतीस्वामिविरचिता श्रीशारदापाण्यवलम्बस्तुतिः समाप्ता ।

---

## २२४ शारदाभुजङ्गप्रयाताष्टकम् ।

श्रीगणेशाय नमः ॥ सुवक्षोजकुम्भां सुधापूर्णकुम्भां प्रसादावलम्बां प्रपुण्यावलम्बाम् । सदास्येन्दुबिम्बां सदा-

नोष्ठबिम्बां भजे शारदाम्बामजस्रं मदम्बाम् ॥ १ ॥ कटाक्षे दयार्द्रां करे ज्ञानमुद्रां कलाभिर्विनिद्रां कलापैः सुभद्राम् । पुरस्त्रीं विनिद्रां पुरस्तुङ्गभद्रां भजे शारदाम्बामजस्रं मदम्बाम् ॥ २ ॥ ललामाङ्कफालां लसद्गानलोलां स्वभक्तैकपालां यशःश्रीकपोलाम् । करे त्वक्षमालां कनत्प्रत्नलोलां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ३ ॥ सुसीमन्तवेणीं दृशा निर्जितैणीं रणत्कीरवाणीं नमद्वज्रपाणीम् । सुधामन्थरास्यां मुदा चिन्त्यवेणीं भजे शारदाम्बामजस्रं मदम्बाम् ॥ ४ ॥ सुशान्तां सुदेहां दृगन्ते कचान्तां लसत्सल्लताङ्गीमनन्तामचिन्त्याम् । स्मरेत्तापसैः सङ्गपूर्वस्थितां तां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ५ ॥ कुरङ्गे तुरङ्गे मृगेन्द्रे खगेन्द्रे मराले मदेभे महोक्षेऽधिरूढाम् । महत्यां नवम्यां सदा सामरूपां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ६ ॥ ज्वलत्कान्तिवह्निं जगन्मोहनाङ्गीं भजे मानसाम्भोजसुभ्रान्तभृङ्गीम् । निजस्तोत्रसंगीतनृत्यप्रभाङ्गीं भजे शारदाम्बामजस्रं मदम्बाम् ॥ ७ ॥ भवाम्भोजनेत्राब्जसंपूज्यमानां लसन्मन्दहासप्रभावक्त्रचिह्नाम् । चलच्चञ्चलाचारुताटङ्ककर्णां भजे शारदाम्बामजस्रं मदम्बाम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारदाभुजङ्गप्रयाताष्टकं संपूर्णम् ।

# अवतारस्तोत्राणि ।

## २२५ मत्स्यस्तोत्रम् ।

श्रीगणेशाय नमः॥ नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः । अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ १ ॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर । भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २ ॥ सर्वे लीलावतारास्ते भूतानां भूतिहेतवः । ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ ३ ॥ न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः । यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ४ ॥

इति श्रीमद्भागवतान्तर्गतं मत्स्यस्तोत्रं संपूर्णम् ।

---

## २२६ कूर्मस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवा ऊचुः । नमाम ते देव पदारविंदं प्रपन्नतापोपशमातपत्रम् । यन्मूलकेता यतयोऽञ्जसोरुसंसारदुःखं बहिरुत्क्षिपन्ति ॥ १ ॥ धातर्यदस्मिन्भव ईशजीवास्तापत्रयेणोपहता न शर्म । आत्मँल्लभन्ते भगवंस्तवाङ्घ्रिछायां सविद्यामत आश्रयेम ॥ २ ॥ मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते । यस्याघमर्षोदसरिद्वरायाः पदंपदं तीर्थपदः प्रपन्नाः ॥ ३ ॥ यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय । ज्ञानेन वैराग्यबलेन धीरा व्रजेम

तत्तेऽङ्घ्रिसरोजपीठम् ॥ ४ ॥ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदाम्बुजं ते। व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ ५ ॥ यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम्। पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्जम् ॥ ६ ॥ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतान्तर्मनसः परेश। अथो न पश्यन्त्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ७ ॥ पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये। वैराग्यसारं प्रतिलभ्य बोधं यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥ ८ ॥ तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्। त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ ९ ॥ तत्ते वयं लोकसिसृक्षयाद्य त्वयानुसृष्टास्त्रिभिरात्मभिः स्म। सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिहर्तवे ते ॥ १० ॥ यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र। यथोभयेषां त इमे हि लोका बलिं हरन्तोऽन्नमदन्त्यनूहाः ॥ ११ ॥ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः। त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ १२ ॥ ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते। त्वं नः स्वचक्षुः परिदेहि शक्त्या देवक्रियार्थे यदनुग्रहाणाम् ॥१३॥

इति श्रीमद्भागवतान्तर्गतं कपिलस्तोत्रं समाप्तम्।

## २२७ वराहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ऋषय ऊचुः । जितं जितं तेऽजित यज्ञभावन त्रयीं तनुं स्वां परिधुन्वते नमः । यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ १ ॥ रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् । छन्दांसि यस्य त्वचि बर्हि रोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥ २ ॥ स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे । प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३ ॥ दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः । जिह्वाः प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ४ ॥ सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः । सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः ॥ ५ ॥ नमो नमस्तेऽखिलयन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने । वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ६ ॥ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा । यथा वनान्निःसरतो दता धृता मतङ्गजेन्द्रस्य सपत्रपद्मिनी ॥ ७ ॥ त्रयीमयं रूपमिदं च सौकरं भूमण्डले नाथ दता धृतेन ते । चकास्ति शृङ्गोढघनेन भूयसा कुलाचलेन्द्रस्य यथैव विभ्रमः ॥ ८ ॥ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता । विधेम चास्यै नमसा सह त्वया

यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ९ ॥ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् । न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ १० ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो वयम् । सटाशिखोद्धूतशिवाम्बुबिन्दुभिर्विमृज्यमाना भृशमीश पाविताः ॥ ११ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः । यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥ १२ ॥

इति श्रीमद्भागवतान्तर्गतं वराहस्तोत्रं समाप्तम् ।

# नृसिंहस्तोत्राणि ।

## २२८ नृसिंहकवचम् ।

श्रीगणेशाय नमः ॥ अथापरं प्रवक्ष्यामि ह्यल्पमृत्युहरं परम् । उपायं यत्कृतेनाङ्ग शीघ्रं मृत्युर्निवर्तते ॥ १ ॥ नृसिंहकवचं नाम स्तोत्रं परमदुर्लभम् । यस्य धारणया क्षिप्रमल्पमृत्युर्विनश्यति ॥ २ ॥ अरुण उवाच ॥ भगवन्देवदेवेश कृपया परयाऽधुना । नृसिंहकवचं दिव्यं गुह्यं भक्ताय मे वद ॥ ३ ॥ सूर्य उवाच ॥ शृणु पुत्र प्रवक्ष्यामि नृसिंहकवचं शुभम् । यस्य विज्ञानमात्रेण नश्यन्ति सकलापदः ॥ ४ ॥ ग्रहबाधा प्रेतबाधा बाधा या कुलतोपजा । कृत्यया जनिता बाधा शत्रुबाधा स्वकर्मजा ॥ ५ ॥ शीघ्रं नश्यन्ति ताः सर्वाः कवचस्य प्रभावतः । असाध्या ये च दुस्साध्या महारोगा भयंकराः ॥ ६ ॥ सद्यो नश्यन्ति पठनात्कवचस्यास्य सारथे । जलभीतिश्चाग्निभीतिभीतिः शत्रुगणा-

दपि ॥ ७ ॥ सिंहव्याघ्रादिजा भीतिः शीघ्रं सर्वा विनश्यति । संग्रामे दुर्गमेऽरण्ये संकटे प्राणसंशये ॥ ८ ॥ पठतो विजयो रक्षा सुखं सौभाग्यसंपदः । पुत्रसौख्यं राजसौख्यं धनसौख्यमृणक्षयः ॥ ९ ॥ कुटुम्बवृद्धिः कल्याणमारोग्यं विजयः सदा । अल्पमृत्युभयं घोरं पाठादस्य विनश्यति ॥ १० ॥ अल्पमृत्युहरश्चात उपायो न परः स्मृतः । अल्पमृत्युहरं नाम कवचं चेदमुत्तमम् ॥ ११ ॥ सिंहप्रणादान्मत्तोऽपि गजेन्द्रस्तु पलायते । अल्पमृत्युस्तथा चास्य पाठात्सद्यो निरस्यते ॥ १२ ॥ सहस्रपञ्चकावृत्तिं पठेद्यः सुसमाहितः । अल्पमृत्युभयं तस्य प्रभवेन्नैव कर्हिचित् ॥ १३ ॥ नृसिंहो मे शिरः पातु पातु भालं नृकेसरी । भ्रुवौ नृसिंहो मे पातु नृसिंहो नयनद्वयम् ॥ १४ ॥ नृसिंहो नासिके पातु कर्णौ पातु नृकेसरी । नरसिंहो मुखं पातु कपोलौ रक्षताद्धरिः ॥ १५ ॥ नृसिंहश्चिबुकं रक्षेत्कण्ठं पातु नृकेसरी । स्कन्धौ पातु नृसिंहो मे भुजौ पातु नृकेसरी ॥ १६ ॥ करद्वयं नृसिंहोऽव्यान्नृसिंहो रक्षतादुरः । नृसिंहो हृदयं पातु नृसिंहोऽव्यात्तथोदरम् ॥१७॥ कुक्षिं नरहरिः पातु नाभिं पातु नृकेसरी । बस्तिं च गुह्यदेशं च नृसिंहोऽव्यात्सदा मम ॥ १८ ॥ नृसिंहो जानुनी पातु जङ्घे पातु नृकेसरी । पादौ गुल्फौ सदा पातु नृसिंहो मम रक्षकः ॥ १९ ॥ अग्रतः पृष्ठतो मेऽव्यात्तथा पार्श्वद्वयं सदा । नृसिंहः सर्वगात्राणि मम रक्षतु सर्वदा ॥ २० ॥

नृसिंहो रक्षतात्पूर्वे वह्निकोणे नृकेसरी । नैर्ऋत्यां नरसिंहोऽव्यान्नृसिंहः पातु पश्चिमे ॥ २१ ॥ नृसिंहो वायुकोणेऽव्यादुत्तरेऽव्यान्नृकेसरी । नृसिंहोऽव्यात्तथेशाने ह्यध ऊर्ध्वं समन्ततः ॥ २२ ॥ जले सदा रक्षतु मां नृसिंहः स्थलेषु मां पातु सदा नृसिंहः । नभस्तले भूमितले समन्तान्नृकेसरी रक्षतु सर्वदा माम् ॥ २३ ॥ दुर्गाध्वदुर्गभवनेषु च संकटेषु प्राणप्रयाणभयविघ्नसमुच्चयेषु । शीतोष्णवातरिपुरोगभयेषु युद्धे संकष्टनाशनपरोऽवतु मां नृसिंहः ॥ २४ ॥ छिनत्तु चक्रेण सदाऽरिवर्गान्सर्वान्नृसिंहो मम मृत्युरूपान् । असाध्यदुस्साध्यसमस्तरोगान्भिन्द्यान्नृसिंहः स्वगदाभिघातैः ॥ २५ ॥ प्रेतान्पिशाचान्सगणान्स्वनेन शङ्खस्य विद्रावयतान्नृसिंहः । कूष्माण्डबालग्रहयक्षरक्षः स डाकिनीः शाकिनिकाः समस्ताः ॥ २६ ॥ खड्गेन मे मृत्युनिसर्गपाशं संछिद्य मां पातु सदा नृसिंहः । सदाऽपमृत्योश्च तथाऽल्पमृत्योर्विमोच्य मां रक्षतु नारसिंहः ॥ २७ ॥ भक्तसंरक्षणार्थाय विदार्य स्तम्भमुद्गतः । नृसिंहो रक्षकः सोऽस्तु मृत्युः किं मे करिष्यति ॥२८॥ अट्टाट्टहासतो यस्य सर्वे देवाश्चकम्पिरे । नृसिंहो रक्षकः० ॥ २९ ॥ हिरण्यकशिपोर्वक्षो ददार निशितैर्नखैः। नृसिंहो रक्षकः० ॥३०॥ यस्य भ्रूभङ्गमात्रेण त्रस्तमासीज्जगत्त्रयम् । नृसिंहो रक्षकः० ॥३१॥ उत्क्षिप्तसटया व्यग्रा देवा दैत्या विदुद्रुवुः । नृसिंहो रक्षकः० ॥ ३२ ॥ यस्मान्मृत्युरपि प्राप्य भयं वै निजरूपतः ।

नृसिंहो रक्षकः० ॥३३॥ यदङ्घ्रिध्यानतः सद्यो विलीयन्तेऽघराशयः । नृसिंहो रक्षकः० ॥ ३४ ॥ माता नृसिंहश्च पिता नृसिंहो भ्राता नृसिंहश्च सखा नृसिंहः । बलं नृसिंहो द्रविणं नृसिंहः सर्वं नृसिंहो मम देवदेवः ॥ ३५ ॥ इति ते कथितं पुत्र नृसिंहकवचं शुभम् । अस्य धारणतः पाठादल्पमृत्युः प्रशाम्यति ॥ ३६ ॥ शतं वाऽथ तदर्धं वा तदर्धं वा सदक्षिणम् । विप्रेभ्यः पुस्तकं दद्यादल्पमृत्युप्रशान्तये ॥ ३७ ॥

इति श्रीसूर्यारुणसंवादे अपमृत्युहरं नृसिंहकवचं समाप्तम् ।

## २२९. नरसिंहनवरत्नमाला ।

श्रीगणेशाय नमः ॥ अद्वैतवास्तवमते प्रणमज्जनानां संपादनाय धृतमानवसिंहरूपम् । प्रह्लादपोषणरतं प्रणतैकवश्यं देवं मुदा कमपि नौमि कृपासमुद्रम् ॥ १ ॥ कृपासागरं क्लिष्टरक्षाधुरीणं कृपाणं महापापवृक्षौघभेदे । नताभीष्टवाराशिराकाशशाङ्कं नमस्कुर्महे शैलवासं नृसिंहम् ॥ २ ॥ यदीयस्वरूपं शिखा वेदराजेरजस्रं मुदा सम्यगुद्घोषयन्ति । नलिन्यास्तटे स्वैरसंचारशीलं चिदानन्दरूपं तमीडे नृसिंहम् ॥ ३ ॥ यदङ्घ्र्यब्जसेवापराणां नराणां विरक्तिर्दृढा जायतेऽर्थेषु शीघ्रम् । तमङ्गप्रभाधूतपूर्णेन्दुकोटिं नमस्कुर्महे शैलवासं नृसिंहम् ॥ ४ ॥ विवेके विरक्तिं शमादेश्च षट्कं मुमुक्षां च संपादय वेदान्तजालैः । यतन्ते विबोधाय यस्या-

निशं तं नमस्कुर्महे शैलवासं नृसिंहम् ॥५॥ जगन्नेति नेतीति वाक्यैर्निषिध्यावशिष्टं परं ब्रह्मरूपं महान्तः। स्वरूपेण विज्ञाय मुक्ता हि यं तं नमस्कुर्महे शैलवासं नृसिंहम् ॥६॥ इनान्तर्हृगन्तश्च गाङ्गेयदेहं सदोपासते यं नराः शुद्धचित्ताः। समस्ताघमेनोनिवृत्त्यै नितान्तं नमस्कुर्महे शैलवासं नृसिंहम् ॥ ७ ॥ शिवं शैववर्या हरिं वैष्णवाग्र्याः पराशक्तिमाहुस्तथा शक्तिभक्ताः। यमेवाभिधाभिः परं तं विभिन्नं नमस्कुर्महे शैलवासं नृसिंहम् ॥ ८ ॥ यमाहुर्हि देवं हृषीकाणि केचित् परेऽसूंस्तथा बुद्धिमन्ये तथान्ये। यदज्ञानमुग्धा जना नास्तिकाग्र्याः सदानन्दरूपं तमीडे नृसिंहम् ॥ ९ ॥ पिनाकं रथाङ्गं वरं चाभयं च प्रफुल्लाम्बुजाकारहस्तैर्दधानम्। फणीन्द्रातपत्रं शुचीनेन्दुनेत्रं नमस्कुर्महे शैलवासं नृसिंहम् ॥१०॥ नवेमानि भक्त्याख्यसूत्रेण हृब्धान्यमोघानि रत्नानि कण्ठे जना ये। धरिष्यन्ति तान्मुक्तिकान्ता वृणीते सखीभिर्वृता शान्तिदान्त्यादिमाभिः ॥ ११ ॥

इति श्रीनृसिंहनवरत्नमालास्तोत्रं संपूर्णम्।

## २३० लक्ष्मीनृसिंहपञ्चरत्नम्।

श्रीगणेशाय नमः ॥ त्वत्प्रभुजीवप्रियमिच्छसि चेन्नरहरिपूजां कुरु सततं प्रतिबिम्बालंकृतिधृतिकुशलो बिम्बालंकृतिमातनुते। चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विर-

सायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ १ ॥ शुक्तौ रजतप्रतिमा जाता कटकाद्यर्थसमर्था चेद्दुःखमयी ते संसृतिरेषा निर्वृतिपाने निपुणा स्यात् । चेतोभृङ्ग० ॥ २ ॥ आकृतिसाम्याच्छाल्मलिकुसुमे स्थलनलिनत्वभ्रममकरोः गन्धरसाविह किमु विद्येते विफलं भ्राम्यसि भृशविरसेऽस्मिन् । चेतोभृङ्ग० ॥ ३ ॥ स्रक्चन्दनवनितादीन्विषयान्सुखदान्मत्वा तत्र विहरसे गन्धफलीसदृशा ननु तेऽमी भोगानन्तरदुःखकृतः स्युः । चेतोभृङ्ग० ॥ ४ ॥ तव हितमेकं वचनं वक्ष्ये शृणु सुखकामो यदि सततं स्वप्ने दृष्टं सकलं हि मृषा जाग्रति च स्मर तद्वदिति । चेतोभृङ्ग भ्रमसि वृथा भवमरुभूमौ विरसायां भज भज लक्ष्मीनरसिंहानघपदसरसिजमकरन्दम् ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ लक्ष्मीनृसिंहपञ्चरत्नं संपूर्णम् ।

---

## २३१ नृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच । नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे । विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥ १ ॥ श्रीरुद्र उवाच । कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः । तत्सुतं

पाह्युपसृतं भक्तं ते भक्तवत्सल ॥ २ ॥ इन्द्र उवाच । प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि । कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां नहि बहुमता नारसिंहापरैः किम् ॥ ३ ॥ ऋषय ऊचुः ॥ त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज । तद्विप्रलुप्तममुनाद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४ ॥ पितर ऊचुः ॥ श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु । तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ५ ॥ सिद्धा ऊचुः । यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन । नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ६ ॥ विद्याधरा ऊचुः । विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः । स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥ ७ ॥ नागा ऊचुः । येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः । तद्वक्षःपाटनेनासां दत्तानन्द नमोस्तु ते ॥ ८ ॥ मनव ऊचुः । मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः । भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान् ॥ ९ ॥ प्रजापतय ऊचुः । प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै

सृजामो निषिद्धाः । स एष त्वया भिन्नवक्षास्तुशेते जगन्मङ्गलं सत्त्वमूर्तेऽवतारः ॥ १० ॥ गन्धर्वा ऊचुः । वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः । स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ११ ॥ चारणा ऊचुः । हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः । यदेष साधुहृच्छयस्त्वयाऽसुरः समापितः ॥१२॥ यक्षा ऊचुः । वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् । स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंशः ॥ १३ ॥ किंपुरुषा ऊचुः । वयं किंपुरुषास्त्वं तु महापुरुष ईश्वरः । अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा ॥ १४ ॥ वैतालिका ऊचुः । सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे । यस्तां व्यनैषीद्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथामयः ॥ १५ ॥ किन्नरा ऊचुः । वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः । भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥१६॥ विष्णुपार्षदा ऊचुः । अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म । सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥ १७ ॥

इति श्रीमद्भागवतान्तर्गतं नृसिंहस्तोत्रं संपूर्णम् ।

## २३२ लक्ष्मीनृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगीन्द्रभोगमणिरञ्जितपुण्यमूर्ते । योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥ १ ॥ ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसंघट्टिताङ्घ्रिकमलामलकान्तिकान्त । लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह० ॥२॥ संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रवरार्दितस्य । आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह० ॥ ३ ॥ संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य । दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह० ॥ ४ ॥ संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य । व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह० ॥ ५ ॥ संसारवृक्षमघबीजमनन्तकर्मशाखाशतं करणपत्रमनङ्गपुष्पम् । आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह० ॥ ६ ॥ संसारसर्पघनवक्त्रभयोग्रतीव्रदंष्ट्राकरालविषदग्धविनष्टमूर्ते । नागारिवाहन सुधाब्धिनिवास शौरे लक्ष्मीनृसिंह० ॥ ७ ॥ संसारदावदहनातुरभीकरोरुज्वालावलीभिरतिदग्धतनूरुहस्य । त्वत्पादपद्मसरसीशरणागतस्य लक्ष्मीनृसिंह० ॥ ८ ॥ संसारजालपतितस्य जगन्निवास सर्वेन्द्रियार्थबडिशार्थझषोपमस्य ।

प्रोत्खण्डितप्रचुरतालुकमस्तकस्य लक्ष्मीनृसिंह० ॥ ९ ॥ संसारभीकरकरीन्द्रकलाभिघातनिष्पिष्टमर्मवपुषः सकलार्तिनाश । प्राणप्रयाणभवभीतिसमाकुलस्य लक्ष्मीनृसिंह० ॥ १० ॥ अन्धस्य मे हृतविवेकमहाधनस्य चोरैः प्रभो बलिभिरिन्द्रियनामधेयः । मोहान्धकूपकुहरे विनिपातितस्य लक्ष्मीनृसिंह० ॥ ११ ॥ लक्ष्मीपते कमलनाभ सुरेश विष्णो वैकुण्ठ कृष्ण मधुसूदन पुष्कराक्ष । ब्रह्मण्य केशव जनार्दन वासुदेव देवेश देहि कृपणस्य करावलम्बम् ॥ १२ ॥ यन्माययोर्जितवपुःप्रचुरप्रवाहमग्नार्थमत्र निवहोरुकरावलम्बम् । लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन स्तोत्रं कृतं सुखकरं भुवि शंकरेण ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं संकष्टनाशनं लक्ष्मीनृसिंहस्तोत्रं संपूर्णम् ।

---

## २३३ वामनस्तोत्रम् ।

श्रीगणेशाय नमः॥ अदितिरुवाच। यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमङ्गलनामधेय । आपन्नलोकवृजिनोपशमोदयाऽऽद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ १ ॥ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने । स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ २ ॥ आयुः परं वपुरभीष्टमतुल्यल-

क्ष्मीर्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः । ज्ञानं च केवलमनन्त भवन्ति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ ३ ॥

इति श्रीमद्भागवतान्तर्गतं वामनस्तोत्रं संपूर्णम् ।

---

## २३४ वामनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अदितिरुवाच । नमस्ते देवदेवेश सर्वव्यापिन्जनार्दन । सत्त्वादिगुणभेदेन लोकव्यापारकारण ॥ १ ॥ नमस्ते बहुरूपाय अरूपाय नमो नमः । सर्वैकाद्भुतरूपाय निर्गुणाय गुणात्मने ॥ २ ॥ नमस्ते लोकनाथाय परमज्ञानरूपिणे । सद्भक्तजनवात्सल्यशालिने मङ्गलात्मने ॥ ३ ॥ यस्यावताररूपाणि ह्यर्चयन्ति मुनीश्वराः । तमादिपुरुषं देवं नमामीष्टार्थसिद्धये ॥ ४ ॥ यं न जानन्ति श्रुतयो यं न जानन्ति सूरयः । तं नमामि जगद्धेतुं मायिनं तममायिनम् ॥ ५ ॥ यस्यावलोकनं चित्रं मायोपद्रववारणम् । जगद्रूपं जगत्पालं तं वन्दे पद्मजाधवम् ॥ ६ ॥ यो देवस्त्यक्तसङ्गानां शान्तानां करुणार्णवः । करोति ह्यात्मना सङ्गं तं वन्दे सङ्गवर्जितम् ॥ ७ ॥ यत्पादाब्जजलक्लिन्नसेवारञ्जितमस्तकाः । अवापुः परमां सिद्धिं तं वन्दे सर्ववन्दितम् ॥ ८ ॥ यज्ञेश्वरं यज्ञभुजं यज्ञकर्मसुनिष्ठितम् । नमामि यज्ञफलदं यज्ञकर्मप्रबोधकम् ॥ ९ ॥ अजामिलोऽपि पापात्मा यन्नामोच्चरणादनु । प्राप्तवान्परमं धाम तं वन्दे

लोकसाक्षिणम् ॥ १० ॥ ब्रह्माद्या अपि ये देवा यन्मायापाशयन्त्रिताः । न जानन्ति परं भावं तं वन्दे सर्वनायकम् ॥ ११ ॥ हृत्पद्मनिलयोऽज्ञानां दूरस्थ इव भाति यः । प्रमाणातीतसद्भावं तं वन्दे ज्ञानसाक्षिणम् ॥ १२ ॥ यन्मुखाद्ब्राह्मणो जातो बाहुभ्यां क्षत्रियोऽजनि । तथैव ऊरुतो वैश्यः पद्भ्यां शूद्रो अजायत ॥ १३ ॥ मनसश्चन्द्रमा जातो जातः सूर्यश्च चक्षुषः । मुखादिन्द्रस्तथाग्निश्च प्राणाद्वायुरजायत ॥ १४ ॥ त्वमिन्द्रः पवनः सोमस्त्वमीशानस्त्वमन्तकः । त्वमग्निर्निर्ऋतिश्चैव वरुणस्त्वं दिवाकरः ॥ १५ ॥ देवाश्च स्थावराश्चैव पिशाचाश्चैव राक्षसाः । गिरयः सिद्धगन्धर्वा नद्यो भूमिश्च सागराः ॥ १६ ॥ त्वमेव जगतामीशो यन्नामास्ति परात्परः । त्वद्रूपमखिलं तस्मात्पुत्रान्मे पाहि श्रीहरे ॥ १७ ॥ इति स्तुत्वा देवधात्री देवं नत्वा पुनः पुनः । उवाच प्राञ्जलिर्भूत्वा हर्षाश्रुक्षालितस्तनी ॥ १८ ॥ अनुग्राह्यास्मि देवेश हरे सर्वादिकारण । अकण्टकश्रियं देहि मत्सुतानां दिवौकसाम् ॥ १९ ॥ अन्तर्यामिजगद्रूप सर्वभूतपरेश्वर । तवाज्ञातं किमस्तीह किं मां मोहयसि प्रभो ॥ २० ॥ तथापि तव वक्ष्यामि यन्मे मनसि वर्तते । वृथापुत्रास्मि देवेश रक्षोभिः परिपीडिता ॥ २१ ॥ एतान्न हन्तुमिच्छामि मत्सुता दितिजातयः । तानहत्वा श्रियं देहि मत्सुतानामुवाच सा ॥ २२ ॥ इत्युक्तो देवदेवस्तु पुनः प्रीतिमुपागतः । उवाच

हर्षयन्साध्वीं कृपयाभिपरिप्लुतः ॥ २३ ॥ श्रीभगवानुवाच। प्रीतोऽस्मि देवि भद्रं ते भविष्यामि सुतस्तव । यतः सपत्नीतनयेष्वपि वात्सल्यशालिनी ॥ २४ ॥ त्वया च मे कृतं स्तोत्रं पठन्ति भुवि मानवाः । तेषां पुत्रा धनं संपन्न हीयन्ते कदाचन ॥ २५ ॥ अन्ते मत्पदमाप्नोति यद्विष्णोः परमं शुभम् ॥ २६ ॥

इति श्रीपद्मपुराणे वामनस्तोत्रं समाप्तम् ।

# रामस्तोत्राणि ।

## २३५ त्रैलोक्यमोहनकवचम् ।

श्रीगणेशाय नमः ॥ पार्वत्युवाच । भगवन्सर्वदेवेश सर्वदेवनमस्कृत । सर्वं मे कथितं देव राममन्त्रं विशेषतः ॥ १ ॥ त्रैलोक्यमोहनं नाम कवचं पूर्वसूचितम् । कथयस्व महाबाहो यद्यहं तव वल्लभा ॥ २ ॥ ईश्वर उवाच । शृणु वक्ष्यामि देवेशि कवचं परमाद्भुतम् । अत्यन्तगोपनं गुह्यं ब्रह्ममन्त्रौघविग्रहम् ॥ ३ ॥ अस्य श्रीरामचन्द्रकवचस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीरामचन्द्रो देवता । मम चतुर्वर्गार्थसाधने



जपे विनियोगः । प्रणवो मे शिरः पातु तारकब्रह्मरूपकः ।

अनन्तोऽग्र्यासनः सेन्दुर्नासामेकाक्षरोऽवतु ॥ ४ ॥ रामरामाय नम इति षड्वर्णो भुक्तिमुक्तिदः । भालं पायान्नेत्रयुग्मं रामो द्व्यक्षरसंज्ञकः ॥ ५ ॥ क्लीं पायाच्छ्रोत्रयुग्मं च एकाक्षरश्च मोहनः । क्लीं रामाय नम इति मुखं मे परिरक्षतु ॥ ६ ॥ रामरामचन्द्राय स्वाहामेष्टावर्णो भुजद्वयम् । श्रीरामाय नम इति स्कन्धौ पातु खरान्तकः ॥ ७ ॥ श्रीरामचन्द्राय रक्षोघ्नाय नम इति द्वादशाक्षरः । हृदयं मे सदा पातु रघुवंशसमुद्भवः ॥ ८ ॥ ह्रीं रामचन्द्राय नम इति पातु मे ऊरुयुग्मकम् । श्रीरामचन्द्राय स्वाहा नाभिमष्टाक्षरोऽवतु ॥ ९ ॥ क्लीं रामभद्राय सीतापतये मे ङिडन्तकः । सक्थिनी सततं पातु राक्षसेन्द्रविमर्दकः ॥ १० ॥ प्रणवो रामचन्द्राय ङेदन्तोऽष्टाक्षरोऽवतु । जाह्नवी मे सदा पातु रक्षःकुलविनाशकः ॥ ११ ॥ प्रणवो रामभद्राय ङिडन्तोऽष्टाक्षरोऽवतु । पादयुग्मं सदा पातु वानरेन्द्रश्रियःप्रदः ॥ १२ ॥ ह्रीं सीतापतये नम इति प्राच्यां मां सर्वदावतु । क्लीं जानकीवल्लभायेति पातु याम्यां सदा प्रभुः ॥ १३ ॥ क्लीं जानकीनाथायेति प्रतीच्यां मां सदावतु । श्रीरघुनाथाय नम इति कौबेर्यां दिशि रक्षतु ॥ १४ ॥ हुं जानकीवल्लभाय स्वाहेत्याग्नेय्यां मां सर्वदावतु । ह्रीं श्रीभरताग्रज राम क्लीं स्वाहेति पातु मां नैर्ऋत्यां सदा प्रभुः ॥ १५ ॥ रां श्रीजानकीवल्लभाय स्वाहेति वायव्यां मां सदावतु । क्लीं श्रीं ह्रीं दाशरथाय नम

इति ईशान्यां मां च रक्षतु ॥ १६ ॥ नमो भगवते ब्रूया-च्चतुर्थ्या रघुनन्दनम्। रक्षोघ्नविशदायेति मधुरादि समीरयेत् ॥ १७ ॥ प्रसन्नवदनायेति पश्चादमिततेजसे। बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ॥ १८ ॥ प्रणवादिनमोऽन्तोऽयं मालामन्त्र उदीरितः। राजस्थाने सदा पातु रघुवंशसमुद्भवः ॥ १९ ॥ ॐ नमो भगवते ब्रूयाद्रामाय तदनन्तरम्। महा-पुरुषायेति पश्चान्नम इत्युदीरयेत् ॥ २० ॥ इत्यष्टादशाक्षरो मन्त्रो मामेव सर्वदावतु। ध्यायेच्च पुण्डरीकाक्षं परं ज्योतिः परात्परम् ॥ २१ ॥ राम एव परं ब्रह्म सच्चिदानन्दलक्षणम्। इति ध्यात्वा जपेन्मन्त्रं भुक्तिमुक्तिप्रदायकम् ॥ २२ ॥ इति ते कथितं देवि सर्वमन्त्रौघविग्रहम्। त्रैलोक्यमोहनं नाम कवचं ब्रह्मरूपकम् ॥ २३ ॥ प्रातःकाले पठेद्यस्तु सोऽभीष्टं फलमाप्नुयात्। पूजाकाले पठेद्यस्तु कवचं साधकोत्तमः ॥ २४ ॥ कीर्तिश्रीकान्तिमेधायुर्बृंहितो भवति ध्रुवम्। राम-मन्त्रमिमं ब्रह्मकवचं मन्मुखोदितम् ॥ २५ ॥ गुरुमभ्यर्च्य विधिवत्कवचं हि पठेत्ततः। द्विःसकृद्वा जपेद्यस्तु सोऽपि पुण्यवतां वरः ॥ २६ ॥ देवमभ्यर्च्य विधिवत्पुरश्चर्यां समा-चरेत्। अष्टोत्तरशतं जप्त्वा दशांशं हवनादिकम् ॥ २७ ॥ ततस्तु सिद्धकवचः सर्वकार्याणि साधयेत्। मन्त्रसिद्धिर्भवे-त्तस्य पुरश्चर्यां विना ततः ॥ २८ ॥ गद्यपद्यमयी वाणी तस्य वक्त्रात्प्रवर्तते। वक्त्रे तस्य वसेद्वाणी कमला निश्चला गृहे

॥ २९ ॥ पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् । अपि वर्षसहस्राणां पूजायाः फलमाप्नुयात् ॥ ३० ॥ विलिख्य भूर्जपत्रेषु स्वर्णस्थं धारयेद्यदि । कण्ठे वा दक्षिणे बाहौ स कुर्याद्दासवज्जगत् ॥ ३१ ॥ त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् । तद्गात्रं प्राप्य शस्त्राणि ब्रह्मास्त्रादीनि यानि च ॥ ३२ ॥ माल्यानि कुसुमानीव सुखदानि भवन्ति हि । स्पर्धामुद्धूय भवने लक्ष्मीर्वाणी सुखे वसेत् ॥ ३३ ॥ इदं कवचमज्ञात्वा यो जपेद्राममन्त्रकम् । शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ३४ ॥ शस्त्रघातमवाप्नोति सोऽचिरान्मृत्युमाप्नुयात् । सम्यग्ज्ञात्वा तु कवचं मन्त्रः स्यात्सिद्धिदायकः ॥ ३५ ॥

इति ब्रह्मयामले तन्त्रे गौरीशंकरसंवादे श्रीरामत्रैलोक्यमोहनं नाम कवचं संपूर्णम् ।

---

## २३६ रामाष्टोत्तरशताभिधानस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीरामाष्टोत्तरशतमालामन्त्रस्तोत्रस्य वेदव्यास ऋषिः । श्रीरामः परमात्मा देवता । अनुष्टुप् छन्दः । श्रीरामप्रीत्यर्थे जपे विनियोगः । श्रीरामो रामभद्रश्च रामचन्द्रश्च शाश्वतः । विश्वामित्रप्रियो दान्तः शरणत्राणतत्परः ॥१॥ वालिप्रमथनो वाग्मी सत्यवाक्सत्यविक्रमः । सत्यव्रतो व्रतफलः सदा हनुमदाश्रयः ॥ २ ॥

कौसल्येयः खरध्वंसी विराधवधपण्डितः । विभीषणपरित्राता दशग्रीवशिरोहरः ॥ ३ ॥ सप्ततालप्रभेत्ता च हरकोदण्डखण्डनः । जामदग्न्यमहादर्पदलनस्ताडकान्तकृत् ॥ ४ ॥ वेदान्तसारो वेदात्मा भववैद्यश्च भेषजम् । खरदूषणत्रिशिरोहन्ता त्रिमूर्तिस्त्रिगुणात्मवान् ॥ ५ ॥ त्रिविक्रमस्त्रिलोकात्मा पुण्यचारित्रकीर्तनः । त्रिलोकीरक्षको धन्वी दण्डकारण्यपावनः ॥ ६ ॥ अहल्यापावनश्चैव विप्रभक्तो वरप्रदः । जितेन्द्रियो जितक्रोधो जितामित्रो जगद्गुरुः ॥ ७ ॥ ऋक्षवानरसंघाती चित्रकूटसमाश्रितः । जयन्तत्राणवरदः सुमित्रापुत्रसेवितः ॥ ८ ॥ सर्वदेवाधिदेवश्च मृतवानरजीवनः । मायामारीचहन्ता च महाभागो महाधनुः ॥ ९ ॥ सर्वदेवस्तुतः सौम्यो ब्रह्मण्यो मुनिसंस्तुतः । महायोगी महोदारः सुग्रीवेप्सितराज्यदः ॥ १० ॥ सर्वपुण्याधिकफलः स्मृतः सर्वाघनाशनः । आदिदेवो महादेवो परमः पुरुषस्तथा ॥ ११ ॥ पुण्योदयो दयाचारः पुराणः पुरुषोत्तमः । स्मितवक्त्रो ·········मितभाषी च राघवः ॥ १२ ॥ अनन्तगुणगम्भीरो धीरोदात्तगुणोत्तरः । मायामानुषचारित्रो महादेवादिपूजितः ॥ १३ ॥ सेतुकृज्जितवारीशः सर्वतीर्थमयो हरिः । श्यामाङ्गः सुन्दरः पीतवासा शार्ङ्गधनुर्धरः ॥ १४ ॥ सर्वयज्ञाधिपो यज्ञो जरामरणवर्जितः । शिवलिङ्गप्रतिष्ठाता सर्वावगुणवर्जितः ॥ १५ ॥ परमात्मा परं ब्रह्म सच्चिदानन्द-

विग्रहः । परं ज्योतिः परं धाम पराकाशः परात्परः ॥१६॥ परेशः पारगः पारः सर्वदेवात्मकः शिवः । इतीदं रामचन्द्रस्य नाम्नामष्टोत्तरं शतम् ॥ १७ ॥ गुह्याद्गुह्यतरं देवि तव प्रीत्या प्रकीर्तितम् । यः पठेच्छृणुयाद्वापि भक्तियुक्तेन चेतसा ॥ १८ ॥ मुच्यते सर्वपापेभ्यः कल्पकोटिशतैरपि । कल्पकोटिसहस्राणि कल्पकोटिशतानि च । वैकुण्ठे वासमाप्नोति दशपूर्वैर्दशापरैः ॥ १९ ॥

इति श्रीपद्मपुराणे उमामहेश्वरसंवादे रामाष्टोत्तरशताभिधानं स्तोत्रं संपूर्णम् ।

---

## २३७ रामहृदयम् ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच । ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम् । शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥ १ ॥ आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् । जलाशये महाकाशस्तदवच्छिन्न एव हि ॥ २ ॥ प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः । बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम् ॥ ३ ॥ आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः । साभासबुद्धेः कर्तृत्वमविच्छिन्ने विकारिणि ॥४॥ साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथाबुधैः । आभासस्तु मृषाबुद्धिरविद्याकार्यमुच्यते ॥ ५ ॥ अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः ।

अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते ॥ ६ ॥ तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा। ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः ॥ ७ ॥ तदाविद्या स्वकार्यैश्च नश्यत्येव न संशयः। एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते ॥ ८ ॥ मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम्। न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥ ९ ॥ इदं रहस्यं हृदयं ममात्मनो मयैव साक्षात्कथितं तवानघ। मद्भक्तिहीनाय शठाय न त्वया दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥ १० ॥

इति श्रीमदध्यात्मरामायणे बालकाण्डे श्रीरामहृदयं संपूर्णम्।

## २३८ रामगीता।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच। ततो जगन्मङ्गलमङ्गलात्मना विधाय रामायणकीर्तिमुत्तमाम्। चचार पूर्वाचरितं रघूत्तमो राजर्षिवर्यैरभिसेवितं यथा ॥ १ ॥ सौमित्रिणा पृष्ट उदारबुद्धिना रामः कथाः प्राह पुरातनीः शुभाः। राज्ञः प्रमत्तस्य नृगस्य शापतो द्विजस्य तिर्यक्त्वमथाह राघवः ॥ २ ॥ कदाचिदेकान्त उपस्थितं प्रभुं रामं रमालालितपादपङ्कजम्। सौमित्रिरासादितशुद्धभावनः प्रणम्य भक्त्या विनयान्वितोऽब्रवीत् ॥ ३ ॥ सौमित्रिरुवाच। त्वं शुद्धबोधोऽसि हि सर्वदेहिनामात्मास्यधीशोऽसि निराकृतिः स्वयम्। प्रतीयसे ज्ञानदृशां महामते पादाब्ज-

भृङ्गाहितसङ्गसङ्गिनाम् ॥ ४ ॥ अहं प्रपन्नोऽस्मि पदाम्बुजं प्रभो भवापवर्गं तव योगिभावितम् । यथाञ्जसाज्ञानमपारवारिधिं सुखं तरिष्यामि तथानुशाधि माम् ॥ ५ ॥ श्रुत्वाथ सौमित्रिवचोऽखिलं तदा प्राह प्रपन्नार्तिहरः प्रसन्नधीः । विज्ञानमज्ञानतमोपशान्तये श्रुतिप्रपन्नं क्षितिपालभूषणः ॥ ६ ॥ श्रीराम उवाच । आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः। समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत्सद्गुरुमात्मलब्धये ॥ ७ ॥ क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः। धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः॥ ८॥ अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते । विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरोधमीरितम् ॥ ९ ॥ नाज्ञानहानिर्न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत्। ततः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान्भवेत् ॥ १० ॥ ननु क्रिया वेदमुखेन चोदिता यथैव विद्या पुरुषार्थसाधनम् । कर्तव्यता प्राणभृतः प्रचोदिता विद्या सहायत्वमुपैति सा पुनः ॥ ११ ॥ कर्माकृतौ दोषमपि श्रुतिर्जगौ तस्मात्सदा कार्यमिदं मुमुक्षुणा । ननु स्वतन्त्रा ध्रुवकार्यकारिणी विद्या न किंचिन्मनसाप्यपेक्षते ॥ १२ ॥ न सत्यकार्योऽपि हि यद्वदध्वरः प्रकाङ्क्षतेऽन्यानपि कारकादिकान् । तथैव विद्या विधितः प्रकाशितैर्विशिष्यते कर्मभिरेव मुक्तये ॥१३॥

केचिद्वदन्तीति वितर्कवादिनस्तदप्यसदृष्टविरोधकारणात् । देहाभिमानादभिवर्धते क्रिया विद्यागताहंकृतितः प्रसिध्यति ॥ १४ ॥ विशुद्धविज्ञानविरोचनाञ्चिता विद्यात्मवृत्तिश्चरमेति भण्यते । उदेति कर्माखिलकारकादिभिर्निहन्ति विद्याऽखिलकारकादिकम् ॥ १५ ॥ तस्मात्त्यजेत्कार्यमशेषतः सुधीर्विद्याविरोधान्न समुच्चयो भवेत् । आत्मानुसंधानपरायणः सदा निवृत्तसर्वेन्द्रियवृत्तिगोचरः ॥ १६ ॥ यावच्छरीरादिषु माययात्मधीस्तावद्विधेयो विधिवादकर्मणाम् । नेतीति वाक्यैरखिलं निषिध्य तज्ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः ॥१७॥ यदा परात्मात्मविभेदभेदकं विज्ञानमात्मन्यवभाति भास्वरम् । तदैव माया प्रविलीयतेऽञ्जसा सकारका कारणमात्मसंसृतेः ॥१८॥ श्रुतिप्रमाणाभिविनाशिता च सा कथं भविष्यत्यपि कार्यकारिणी । विज्ञानमात्रादमलाद्द्वितीयतस्तस्मादविद्या न पुनर्भविष्यति ॥ १९ ॥ यदि स्म नष्टा न पुनः प्रसूयते कर्ताहमस्येति मतिः कथं भवेत् । तस्मात्स्वतन्त्रा न किमप्यपेक्षते विद्या विमोक्षाय विभाति केवला ॥ २० ॥ सा तैत्तिरीयश्रुतिराह सादरं न्यासं प्रशस्ताखिलकर्मणां स्फुटम् । एतावदित्याह च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय न कर्म साधनम् ॥ २१ ॥ विद्यासमत्वेन तु दर्शितस्त्वया क्रतुर्न दृष्टान्त उदाहृतः समः । फलैः पृथक्त्वाद्बहुकारकैः क्रतुः संसाध्यते ज्ञानमतो विपर्ययम् ॥ २२ ॥ स प्रत्यवायी ह्यह-

मित्यनात्मधीरज्ञप्रसिद्धा न तु तत्त्वदर्शिनः । तस्माद्बुधै-स्त्याज्यमपि क्रियात्मभिर्विधानतः कर्म विधिप्रकाशितम् ॥ २३ ॥ श्रद्धान्वितस्तत्त्वमसीतिवाक्यतो गुरोः प्रसादादपि शुद्धमानसः । विज्ञाय चैकात्म्यमथात्मजीवयोः सुखी भवे-न्मेरुरिवाप्रकम्पनः ॥ २४ ॥ आदौ पदार्थावगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः । तत्त्वंपदार्थौ परमात्मजी-वकावसीति चैकात्म्यमथानयोर्भवेत् ॥ २५ ॥ प्रत्यक्परो-क्षादिविरोधमात्मनोर्विहाय संगृह्य तयोश्चिदात्मताम् । संशो-धितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥ २६ ॥ एकात्मकत्वाज्जहती न संभवेत्तथाजहल्लक्ष-णता विरोधतः । सोऽयंपदार्थाविव भागलक्षणा युज्येत तत्त्वंपदयोरदोषतः ॥ २७ ॥ रसादिपञ्चीकृतभूतसंभवं भोगा-लयं दुःखसुखादिकर्मणाम् । शरीरमाद्यन्तवदादिकर्मजं माया-मयं स्थूलमुपाधिमात्मनः ॥ २८ ॥ सूक्ष्मं मनोबुद्धिदशेन्द्रि-यैर्युतं प्राणैरपञ्चीकृतभूतसंभवम् । भोक्तुः सुखादेरनुसाधनं भवेच्छरीरमन्यद्विदुरात्मनो बुधाः ॥ २९ ॥ अनाद्यनिर्वाच्य-मपीह कारणं मायाप्रधानं तु परं शरीरकम् । उपाधिभे-दात्तु यतः पृथक्स्थितं स्वात्मानमात्मन्यवधारयेत्क्रमात् ॥ ३० ॥ कोशेषु पञ्चस्वपि तत्तदाकृतिर्विभाति सङ्गात्स्फटि-कोपलो यथा । असङ्गरूपोऽयमजो यतोऽद्वयो विज्ञायतेऽ-स्मिन्परितो विचारिते ॥ ३१ ॥ बुद्धेस्त्रिधा वृत्तिरपीह दृश्यते

स्वप्नादिभेदेन गुणत्रयात्मनः । अन्योन्यतोऽस्मिन्व्यभिचारतो मृषा नित्ये परे ब्रह्मणि केवले शिवे ॥ ३२ ॥ देहेन्द्रियप्राणमनश्चिदात्मनां संघादजस्रं परिवर्तते धियः । वृत्तिस्तमोमूलतयाऽज्ञलक्षणा यावद्भवेत्तावदसौ भवोद्भवः ॥ ३३ ॥ नेतिप्रमाणेन निराकृताखिलो हृदा समास्वादितचिद्घनामृतः । त्यजेदशेषं जगदात्तसद्रसं पीत्वा यथाम्भः प्रजहाति तत्फलम् ॥ ३४ ॥ कदाचिदात्मा न मृतो न जायते न क्षीयते नापि विवर्धते नवः । निरस्तसर्वातिशयः सुखात्मकः स्वयंप्रभः सर्वगतोऽयमद्वयः ॥ ३५ ॥ एवंविधे ज्ञानमये सुखात्मके कथं भवो दुःखमयः प्रतीयते । अज्ञानतोऽध्यासवशात्प्रकाशते ज्ञाते विलीयेत विरोधतः क्षणात् ॥ ३६ ॥ यदन्यदन्यत्र विभाव्यते भ्रमादध्यासमित्याहुरमुं विपश्चितः । असर्पभूतेऽहिविभावनं यथा रज्ज्वादिके तद्वदपीश्वरे जगत् ॥ ३७ ॥ विकल्पमायारहिते चिदात्मकेऽहंकार एष प्रथमः प्रकल्पितः । अध्यास एवात्मनि सर्वकारणे निरामये ब्रह्मणि केवले परे ॥ ३८ ॥ इच्छादिरागादिसुखादिधर्मिकाः सदा धियः संसृतिहेतवः परे । यस्मात्प्रसुप्तौ तदभावतः परः सुखस्वरूपेण विभाव्यते हि नः ॥ ३९ ॥ अनाद्यविद्योद्भवबुद्धिबिम्बितो जीवः प्रकाशोऽयमितीर्यते चितः । आत्मा धियः साक्षितया पृथक्स्थितो बुद्ध्या परिच्छिन्नपरः स एव हि ॥ ४० ॥ चिद्बिम्बसाक्ष्यात्मधियां प्रसङ्गतस्त्वेकत्र वासादनलाक्तलोहवत् ।

अन्योन्यमध्यासवशात्प्रतीयते जडाजडत्वं च चिदात्मचेतसोः ॥ ४१ ॥ गुरोः सकाशादपि वेदवाक्यतः संजातविद्यानुभवो निरीक्ष्य तम् । स्वात्मानमात्मस्थमुपाधिवर्जितं त्यजेदशेषं जडमात्मगोचरम् ॥४२॥ प्रकाशरूपोऽहमजोऽहमद्वयोऽसकृद्विभातोऽहमतीव निर्मलः । विशुद्धविज्ञानघनो निरामयः संपूर्ण आनन्दमयोऽहमक्रियः ॥४३॥ सदैव मुक्तोऽहमचिन्त्यशक्तिमानतीन्द्रियज्ञानमविक्रियात्मकः । अनन्तपारोऽहमहर्निशं बुधैर्विभावितोऽहं हृदि वेदवादिभिः ॥ ४४ ॥ एवं सदात्मानमखण्डितात्मना विचार्यमाणस्य विशुद्धभावना । हन्यादविद्यामचिरेण कारकै रसायनं यद्वदुपासितं रुजः ॥ ४५ ॥ विविक्त आसीन उपारतेन्द्रियो विनिर्जितात्मा विमलान्तराशयः । विभावयेदेकमनन्यसाधनो विज्ञानदृक्केवल आत्मसंस्थितः ॥ ४६ ॥ विश्वं यदेतत्परमात्मदर्शनं विलापयेदात्मनि सर्वकारणे । पूर्णश्चिदानन्दमयोऽवतिष्ठते न वेद बाह्यं न च किंचिदान्तरम् ॥ ४७ ॥ पूर्वं समाधेरखिलं विचिन्तयेदोङ्कारमात्रं सचराचरं जगत् । तदेव वाच्यं प्रणवो हि वाचको विभाव्यते ज्ञानवशान्न बोधतः ॥ ४८ ॥ अकारसंज्ञः पुरुषो हि विश्वको ह्युकारकस्तैजस ईर्यते क्रमात् । प्राज्ञो मकारः परिपठ्यतेऽखिलैः समाधिपूर्वं न तु तत्त्वतो भवेत् ॥ ४९ ॥ विश्वं त्वकारं पुरुषं विलापयेदुकारमध्ये बहुधा व्यवस्थितम् । ततो मकारे प्रविलाप्य तैजसं द्वितीयवर्णं प्रणवस्य चान्तिमम्

॥ ५० ॥ मकारमप्यात्मनि चिद्घने परे विलापयेत्प्राज्ञमपीह कारणम् । सोऽहं परं ब्रह्म सदा विमुक्तिमद्विज्ञानदृङ्मुक्त उपाधितोऽमलः ॥ ५१ ॥ एवं सदा जातपरात्मभावनः स्वानन्दतुष्टः परिविस्मृताखिलः । आस्ते स नित्यात्मसुखप्रकाशकः साक्षाद्विमुक्तोऽचलवारिसिन्धुवत् ॥ ५२ ॥ एवं सदाभ्यस्तसमाधियोगिनो निवृत्तसर्वेन्द्रियगोचरस्य हि । विनिर्जिताशेषरिपोरहं सदा दृश्यो भवेयं जितषड्गुणात्मनः ॥ ५३ ॥ ध्यात्वैवमात्मानमहर्निशं मुनिस्तिष्ठेत्सदा मुक्तसमस्तबन्धनः । प्रारब्धमश्नन्नभिमानवर्जितो मय्येव साक्षात्प्रविलीयते ततः ॥ ५४ ॥ आदौ च मध्ये च तथैव चान्ततो भवं विदित्वा भयशोककारणम् । हित्वा समस्तं विधिवादचोदितं भजेत्स्वमात्मानमथाखिलात्मनाम् ॥ ५५ ॥ आत्मन्यभेदेन विभावयन्निदं भवत्यभेदेन मयात्मना तदा । यथा जलं वारिनिधौ यथा पयः क्षीरे वियद्व्योम्न्यनिले यथानिलः ॥ ५६ ॥ इत्थं यदीक्षेत हि लोकसंस्थितो जगन्मृषैवेति विभावयन्मुनिः । निराकृतत्वाच्छ्रुतियुक्तिमानतो यथेन्दुभेदो दिशि दिग्भ्रमादयः ॥ ५७ ॥ यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् । श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ ५८ ॥ रहस्यमेतच्छ्रुतिसारसंग्रहं मया विनिश्चित्य तवोदितं प्रिय । यस्त्वेतदालोचयतीह बुद्धिमान्स मुच्यते पातकराशिभिः क्षणात्

॥ ५९ ॥ भ्रातर्यदीदं परिदृश्यते जगन्मायैव सर्वं परिहृत्य चेतसा । मद्भावनाभावितशुद्धमानसः सुखी भवानन्दमयो निरामयः ॥ ६० ॥ यः सेवते मामगुणं गुणात्परं हृदा कदा वा यदि वा गुणात्मकम् । सोऽहं स्वपादाञ्चितरेणुभिः स्पृशन्पुनाति लोकत्रितयं यथा रविः ॥ ६१ ॥ विज्ञानमेतदखिलं श्रुतिसारमेकं वेदान्तवेद्यचरणेन मयैव गीतम् । यः श्रद्धया परिपठेद्गुरुभक्तियुक्तो मद्रूपमेति यदि मद्वचनेषु भक्तिः ॥६२॥

इति श्रीमदध्यात्मरामायणे उमामहेश्वरसंवादे उत्तरकाण्डे रामगीता समाप्ता ।

---

## २३९ रामरक्षास्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीरामरक्षास्तोत्रमन्त्रस्य बुधकौशिक ऋषिः । श्रीसीतारामचन्द्रो देवता । अनुष्टुप् छन्दः । सीता शक्तिः । श्रीमद्धनुमान् कीलकम् । श्रीरामचन्द्रप्रीत्यर्थं रामरक्षास्तोत्रजपे विनियोगः । अथ ध्यानम् । ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् । वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभं नानाऽलंकारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम् ॥ १ ॥ इति ध्यानम् । चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं पुंसां महापातकनाशनम्



॥ २ ॥ ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् । जान-

कीलक्ष्मणोपेतं जटामुकुटमण्डितम् ॥ २ ॥ सासितूणधनुर्बा-
णपाणिं नक्तंचरान्तकम् । स्वलीलयाजगत्रातुमाविर्भूतमजं
विभुम् ॥३॥ रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम् । शिरो
मे राघवः पातु भालं दशरथात्मजः ॥ ४ ॥ कौसल्येयो दृशौ
पातु विश्वामित्रप्रियः श्रुती । घ्राणं पातु मखत्राता मुखं
सौमित्रिवत्सलः ॥ ५ ॥ जिह्वां विद्यानिधिः पातु कण्ठं भरतव-
न्दितः । स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ॥ ६ ॥
करौ सीतापतिः पातु हृदयं जामदग्न्यजित् । मध्यं पातु
खरध्वंसी नाभिं जाम्बवदाश्रयः ॥ ७ ॥ सुग्रीवेशः कटिं पातु
सक्थिनी हनुमत्प्रभुः । ऊरू रघूत्तमः पातु रक्षःकुलविना-
शकृत् ॥ ८ ॥ जानुनी सेतुकृत्पातु जङ्घे दशमुखान्तकः । पादौ
विभीषणश्रीदः पातु रामोऽखिलं वपुः ॥९॥ एतां रामबलो-
पेतां रक्षां यः सुकृती पठेत् । स चिरायुः सुखी पुत्री विजयी
विनयी भवेत् ॥ १० ॥ पातालभूतलव्योमचारिणश्छद्मचा-
रिणः । न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥ ११ ॥
रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् । नरो न लिप्यते
पापैर्भुक्तिं मुक्तिं च विन्दति ॥ १२ ॥ जगज्जैत्रैकमन्त्रेण
रामनाम्नाऽभिरक्षितम् । यः कण्ठे धारयेत्तस्य करस्थाः
सर्वसिद्धयः ॥ १३ ॥ वज्रपञ्जरनामेदं यो रामकवचं स्मरेत् ।
अव्याहताज्ञः सर्वत्र लभते जयमङ्गलम् ॥ १४ ॥ आदिष्ट-
वान्यथा स्वप्ने रामरक्षामिमां हरः । तथा लिखितवान्प्रातः

प्रबुद्धो बुधकौशिकः ॥१५॥ आरामः कल्पवृक्षाणां विरामः सकलापदाम् । अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ॥ १६ ॥ तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ । पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ १७ ॥ फलमूलाशिनौ दान्तौ तापसौ ब्रह्मचारिणौ । पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥ शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् । रक्षःकुलनिहन्तारौ त्रायेतां नो रघूत्तमौ ॥ १९ ॥ आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषङ्गसङ्गिनौ । रक्षणाय मम रामलक्ष्मणावग्रतः पथि सदैव गच्छताम् ॥ २० ॥ सन्नद्धः कवची खड्गी चापबाणधरो युवा । गच्छन्मनोरथोऽस्माकं रामः पातु सलक्ष्मणः ॥ २१ ॥ रामो दाशरथिः शूरो लक्ष्मणानुचरो बली । काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः ॥ २२ ॥ वेदान्तवेद्यो यज्ञेशः पुराणपुरुषोत्तमः । जानकीवल्लभः श्रीमानप्रमेयपराक्रमः ॥ २३ ॥ इत्येतानि जपन्नित्यं मद्भक्तः श्रद्धयान्वितः । अश्वमेधाधिकं पुण्यं संप्राप्नोति न संशयः ॥ २४ ॥ रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् । स्तुवन्ति नामभिर्दिव्यैर्न ते संसारिणो नरः ॥ २५ ॥ रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् । राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम्

॥ २६ ॥ रामाय रामभद्राय रामचन्द्राय वेधसे। रघुनाथाय नाथाय सीतायाः पतये नमः ॥ २७ ॥ श्रीराम राम रघुनन्दन राम राम श्रीराम राम भरताग्रज राम राम। श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम ॥ २८ ॥ श्रीरामचन्द्रचरणौ मनसा स्मरामि श्रीरामचन्द्रचरणौ वचसा गृणामि। श्रीरामचन्द्रचरणौ शिरसा नमामि श्रीरामचन्द्रचरणौ शरणं प्रपद्ये ॥ २९ ॥ माता रामो मत्पिता रामचन्द्रः स्वामी रामो मत्सखा रामचन्द्रः। सर्वस्वं मे रामचन्द्रो दयालुर्नान्यं जाने नैव जाने न जाने ॥ ३० ॥ दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा। पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ ३१ ॥ लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथम्। कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये ॥ ३२ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्। वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ ३३ ॥ कूजन्तं राम रामेति मधुरं मधुराक्षरम्। आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ३४ ॥ आपदामपहर्तारं दातारं सर्वसंपदाम्। लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ ३५ ॥ भर्जनं भवबीजानामर्जनं सुखसंपदाम्। तर्जनं यमदूतानां रामरामेति गर्जनम् ॥ ३६ ॥ रामो राजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू

रामाय तस्मै नमः । रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ ३७ ॥ राम रामेति रामेति रमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ ३८ ॥

इति श्रीबुधकौशिकविरचितं श्रीरामरक्षास्तोत्रं संपूर्णम् ।

## २४० ब्रह्मदेवकृता रामस्तुतिः ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच । वन्दे देवं विष्णुमशेषस्थितिहेतुं त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम् । हेयाहेयद्वन्द्वविहीनं परमेकं सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥ १ ॥ प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा छित्त्वा सर्वं संशयबन्धं विषयौघान् । पश्यन्तीशं यं गतमोहा यतयस्तं वन्दे रामं रत्नकिरीटं रविभासम् ॥ २ ॥ मायातीतं माधवमाद्यं जगदादिं मानातीतं मोहविनाशं मुनिवन्द्यम् । योगिध्येयं योगविधानं परिपूर्णं वन्दे रामं रञ्जितलोकं रमणीयम् ॥ ३ ॥ भावाभावप्रत्ययहीनं भवमुख्यैर्भोगासक्तैरर्चितपादाम्बुजयुग्मम् । नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं वन्दे रामं वीरमशेषासुरदावम् ॥ ४ ॥ त्वं मे नाथो नाथितकार्याखिलकारी मानातीतो माधवरूपोऽखिलधारी । भक्त्या गम्यो भावितरूपो भवहारी योगाभ्यासैर्भावितचेतः सहचारी ॥ ५ ॥



त्वामाद्यन्तं लोकततीनां परमीशं लोकानां नो लौकिकमान-

रधिगम्यम्। भक्तिश्रद्धाभावसमेतैर्भजनीयं वन्दे रामं सुन्दरमिन्दीवरनीलम् ॥६॥ को वा ज्ञातुं त्वामतिमानं गतमानं मानासक्तो माधव शक्तो मुनिमान्यम्। वृन्दारण्ये वन्दितवृन्दारकवृन्दं वन्दे रामं भवमुखवन्द्यं सुखकन्दम् ॥ ७ ॥ नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं नित्यानन्दं निर्विषयज्ञानमनादिम्। मत्सेवार्थं मानुषभावं प्रतिपन्नं वन्दे रामं मरकतवर्णं मथुरेशम् ॥ ८ ॥ श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः। रामं श्यामं कामितकामप्रदमीशं ध्यात्वा ध्याता पातकजालैर्विगतः स्यात् ॥ ९ ॥

इति श्रीमदध्यात्मरामायणे युद्धकाण्डे ब्रह्मदेवकृतं रामस्तोत्रं संपूर्णम्।

---

## २४१ जटायुकृतरामस्तोत्रम्।

श्रीगणेशाय नमः॥ जटायुरुवाच। अगणितगुणमप्रमेयमाद्यं सकलजगत्स्थितिसंयमादिहेतुम्। उपरमपरमं परात्मभूतं सततमहं प्रणतोऽस्मि रामचन्द्रम् ॥ १ ॥ निरवधिसुखमिन्दिराकटाक्षं क्षपितसुरेन्द्रचतुर्मुखादिदुःखम्। नरवरमनिशं नतोऽस्मि रामं वरदमहं वरचापबाणहस्तम् ॥ २ ॥ त्रिभुवनकमनीयरूपमीड्यं रविशतभासुरमीहितप्रदानम्। शरणदमनिशं सुरागमूले कृतनिलयं रघुनन्दनं प्रपद्ये ॥ ३ ॥



भवविपिनदवाग्निनामधेयं भवमुखदैवतदैवतं दयालुम्। दनु-

जपतिसहस्रकोटिनाशं रवितनयासदृशं हरिं प्रपद्ये ॥ ४ ॥ अविरतभवभावनातिदूरं भवविमुखैर्मुनिभिः सदैव दृश्यम् । भवजलधिसुतारणाङ्घ्रिपोतं शरणमहं रघुनन्दनं प्रपद्ये ॥५॥ गिरिशगिरिसुतामनोनिवासं गिरिवरधारिणमीहिताभिरामम् । सुरवरदनुजेन्द्रसेविताङ्घ्रिं सुरवरदं रघुनायकं प्रपद्ये ॥ ६ ॥ परधनपरदारवर्जितानां परगुणभूतिषु तुष्टमानसानाम् । परहितनिरतात्मनां सुसेव्यं रघुवरमम्बुजलोचनं प्रपद्ये ॥ ७ ॥ स्मितरुचिरविकासिताननाब्जमतिसुलभं सुरराजनीलनीलम् । सितजलरुहचारुनेत्रशोभं रघुपतिमीशगुरोर्गुरुं प्रपद्ये ॥ ८ ॥ हरिकमलजशंभुरूपभेदात्त्वमिह विभासि गुणत्रयानुवृत्तः । रविरिव जलपूरितोदपात्रेष्वमरपतिस्तुतिपात्रमीशमीडे ॥ ९ ॥ रतिपतिशतकोटिसुन्दराङ्गं शतपथगोचरभावनाविदूरम् । यतिपतिहृदये सदा विभातं रघुपतिमार्तिहरं प्रभुं प्रपद्ये ॥१०॥ इत्येवं स्तुवतस्तस्य प्रसन्नोऽभूद्रघूत्तमः । उवाच गच्छ भद्रं ते मम विष्णोः परं पदम् ॥ ११ ॥ शृणोति य इदं स्तोत्रं लिखेद्वा नियतः पठेत् । स याति मम सारूप्यं मरणे मत्स्मृतिं लभेत् ॥ १२ ॥ इति राघवभाषितं तदा श्रुतवान् हर्षसमाकुलो द्विजः । रघुनन्दनसाम्यमास्थितः प्रययौ ब्रह्मसुपूजितं पदम् ॥ १३ ॥

इति श्रीमदध्यात्मरामायणे अरण्यकाण्डे जटायुकृतरामस्तोत्रं संपूर्णम् ।

## २४२ रामाष्टकम् ।

श्रीगणेशाय नमः ॥ भजे विशेषसुन्दरं समस्तपापखण्डनम् । स्वभक्तचित्तरञ्जनं सदैव राममद्वयम् ॥ १ ॥ जटाकलापशोभितं समस्तपापनाशकम् । स्वभक्तभीतिभञ्जनं भजे ह राममद्वयम् ॥ २ ॥ निजस्वरूपबोधकं कृपाकरं भवापहम् । समं शिवं निरञ्जनं भजे० ॥ ३ ॥ सप्रपञ्चकल्पितं ह्यनामरूपवास्तवम् । निराकृतिं निरामयं भजे० ॥ ४ ॥ निष्प्रपञ्चनिर्विकल्पनिर्मलं निरामयम् । चिदेकरूपसंततं भजे० ॥ ५ ॥ भवाब्धिपोतरूपकं ह्यशेषदेहकल्पितम् । गुणाकरं कृपाकरं भजे० ॥ ६ ॥ महावाक्यबोधकैर्विराजमानवाक्पदैः । परब्रह्मव्यापकं भजे० ॥७॥ शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहम् । विराजमानदेशिकं भजे० ॥ ८ ॥ रामाष्टकं पठति यः सुकरं सुपुण्यं व्यासेन भाषितमिदं शृणुते मनुष्यः । विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिं संप्राप्य देहविलये लभते च मोक्षम् ॥ ९ ॥

इति श्रीव्यासविरचितं रामाष्टकं संपूर्णम्

---

## २४३ श्रीरामाष्टकम् ।

श्रीगणेशाय नमः ॥ कृतार्तदेववन्दनं दिनेशवंशनन्दनम् । सुशोभिभालनन्दनं नमामि राममीश्वरम् ॥ १ ॥ मुनीन्द्रयज्ञकारकं शिलाविपत्तिहारकम् । महाधनुर्विदारकं नमामि०

॥ २ ॥ स्वतातवाक्यकारिणं तपोवने विहारिणम् । करेसु चापधारिणं नमामि० ॥ ३ ॥ कुरङ्गमुक्तसायकं जटायुमोक्षदायकम् । प्रविद्धकीशनायकं नमामि० ॥ ४ ॥ प्लवङ्गसंमतिं विनद्धनिम्नगापतिम् । दशास्यवंशसंक्षतिं नमामि० ॥ ५ ॥ विहीनदेवहर्षणं कपीप्सितार्थवर्षणम् । स्वबन्धुशोककर्षणं नमामि० ॥ ६ ॥ गतारिराज्यरक्षणं प्रजाजनार्तिभक्षणम् । कृतास्तमोहलक्ष्मणं नमामि० ॥ ७ ॥ हृताखिलाचलाभरं स्वधामनीतनागरम् । जगत्तमोदिवाकरं नमामि राममीश्वरम् ॥ ८ ॥ इदं समाहितात्मना नरो रघूत्तमाष्टकम् । पठन्निरन्तरं भयं भवोद्भवं न विन्दते ॥ ९ ॥

इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं श्रीरामाष्टकं संपूर्णम् ।

---

## २४४ श्रीमहादेवकृता रामस्तुतिः ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच । नमोऽस्तु रामाय सशक्तिकाय नीलोत्पलश्यामलकोमलाय । किरीटहाराङ्गदभूषणाय सिंहासनस्थाय महाप्रभाय ॥ १ ॥ त्वमादिमध्यान्तविहीन एकः सृजस्यवस्यत्सि च लोकजातम् । स्वमायया तेन न लिप्यसे त्वं यत्स्वे सुखेऽजस्नरतोऽनवद्यः ॥ २ ॥ लीलां विधत्से गुणसंवृतस्त्वं प्रसन्नभक्तानुविधानहेतोः । नानावतारैः सुरमानुषाद्यैः प्रतीयसे ज्ञानिभिरेव नित्यम् ॥ ३ ॥ स्वांशेन लोकं सकलं विधाय तं बिभर्षि च त्वं तदधः फणीश्वरः । उपर्यधो भान्वनिलोडुपौषधीप्रवर्ष-

पोऽवसि नैकधा जगत् ॥ ४ ॥ त्वमिह देहभृतां शिखिरूपः पचसि भक्तमशेषमजस्रम् । पवनपञ्चकरूपसहायो जगदखण्डमनेन बिभर्षि ॥ ५ ॥ चन्द्रसूर्यशिखिमध्यगतं यत्तेज ईश चिदशेषतनूनाम् । प्राभवत्तनुभृतामिह धैर्यं शौर्यमायुरखिलं तव सत्त्वम् ॥ ६ ॥ त्वं विरिञ्चिशिवविष्णुविभेदात्कालकर्मशशिसूर्यविभागात् । वादिनां पृथगिवेश विभासि ब्रह्म निश्चितमनन्यदिहैकम् ॥ ७ ॥ मत्स्यादिरूपेण यथा त्वमेकः श्रुतौ पुराणेषु च लोकसिद्धः । तथैव सर्वं सदसद्विभागस्त्वमेव नान्यद्भवतो विभाति ॥ ८ ॥ यद्यत्समुत्पन्नमनन्तसृष्टावुत्पत्स्यते यच्च भवच्च यच्च । न दृश्यते स्थावरजङ्गमादौ त्वया विनाऽतः परतः परस्त्वम् ॥ ९ ॥ तत्त्वं न जानन्ति परात्मनस्ते जनाः समस्तास्तव माययातः । त्वद्भक्तसेवामलमानसानां विभाति तत्त्वं परमेकमैशम् ॥ १० ॥ ब्रह्मादयस्ते न विदुः स्वरूपं चिदात्मतत्त्वं बहिरर्थभावाः । ततो बुधस्त्वामिदमेव रूपं भक्त्या भजन्मुक्तिमुपैत्यदुःखः ॥ ११ ॥ अहं भवन्नामगुणैः कृतार्थो वसामि काश्यामनिशं भवान्या । मुमूर्षमाणस्य विमुक्तयेऽहं दिशामि मन्त्रं तव राम नाम ॥१२॥ इमं स्तवं नित्यमनन्यभक्त्या शृण्वन्ति गायन्ति लिखन्ति ये वै । ते सर्वसौख्यं परमं च लब्ध्वा भवत्पदं यान्तु भवत्प्रसादात् ॥ १३ ॥

इति श्रीमहादेवकृतरामस्तोत्रं संपूर्णम् ।

## २४५ अहल्याकृतरामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अहल्योवाच । अहो कृतार्थाऽस्मि
जगन्निवास ते पादाब्जसंलग्नरजःकणादहम् । स्पृशामि
यत्पद्मजशंकरादिभिर्विमृग्यते रन्धितमानसैः सदा ॥ १ ॥
अहो विचित्रं तव राम चेष्टितं मनुष्यभावेन विमोहितं
जगत् । चलस्यजस्रं चरणादिवर्जितः संपूर्ण आनन्दमयोऽ-
तिमायिकः ॥ २ ॥ यत्पादपङ्कजपरागपवित्रगात्रा भागीरथी
भवविरिञ्चिमुखान्पुनाति । साक्षात्स एव मम दृग्विषयो
यदास्ते किं वर्ण्यते मम पुराकृतभागधेयम् ॥ ३ ॥ मर्त्या-
वतारे मनुजाकृतिं हरिं रामाभिधेयं रमणीयदेहिनम् । धनु-
र्धरं पद्मविशाललोचनं भजामि नित्यं न परान्भजिष्ये ॥ ४ ॥
यत्पादपङ्कजरजः श्रुतिभिर्विमृग्यं यन्नाभिपङ्कजभवः कम-
लासनश्च । यन्नामसाररसिको भगवान्पुरारिस्तं रामचन्द्र-
मनिशं हृदि भावयामि ॥ ५ ॥ यस्यावतारचरितानि विर-
ञ्चिलोके गायन्ति नारदमुखा भवपद्मजाद्याः । आनन्दजा-
श्रुपरिषिक्तकुचाग्रसीमा वागीश्वरी च तमहं शरणं प्रपद्ये
॥ ६ ॥ सोऽयं परात्मा पुरुषः पुराण एष स्वयंज्योतिर-
नन्त आद्यः । मायातनुं लोकविमोहनीयां धत्ते परानुग्रह
एष रामः ॥ ७ ॥ अयं हि विश्वोद्भवसंयमानामेकः स्वमा-
यागुणविम्बितो यः । विरञ्चिविष्ण्वीश्वरनामभेदान् धत्ते
स्वतन्त्रः परिपूर्ण आत्मा ॥ ८ ॥ नमोऽस्तु ते राम तवा-

ङ्घ्रिपङ्कजं श्रिया धृतं वक्षसि लालितं प्रियात् । आक्रान्तमेकेन जगत्रयं पुरा ध्येयं मुनीन्द्रैरभिमानवर्जितैः ॥ ९ ॥ जगतामादिभूतस्त्वं जगत्त्वं जगदाश्रयः । सर्वभूतेष्वसंबद्ध एको भाति भवान्परः ॥ १० ॥ ॐकारवाच्यस्त्वं राम वाचामविषयः पुमान् । वाच्यवाचकभेदेन भवानेव जगन्मयः ॥ ११ ॥ कार्यकारणकर्तृत्वफलसाधनभेदतः । एको विभासि रामस्त्वं मायया बहुरूपया ॥ १२ ॥ त्वन्मायामोहितधियस्त्वां न जानन्ति तत्त्वतः । मानुषं त्वाभिमन्यन्ते मायिनं परमेश्वरम् ॥ १३ ॥ आकाशवत्त्वं सर्वत्र बहिरन्तर्गतोऽमलः । असङ्गो ह्यचलो नित्यः शुद्धो बुद्धः सदव्ययः ॥ १४ ॥ योषिन्मूढाहमज्ञा ते तत्त्वं जाने कथं विभो । तस्मात्ते शतशो राम नमस्कुर्यामनन्यधीः ॥ १५ ॥ देव मे यत्र कुत्रापि स्थिताया अपि सर्वदा । त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे ॥ १६ ॥ नमस्ते पुरुषाध्यक्ष नमस्ते भक्तवत्सल । नमस्तेऽस्तु हृषीकेश नारायण नमोस्तु ते ॥ १७ ॥ भवभयहरमेकं भानुकोटिप्रकाशं करधृतशरचापं कालमेघावभासम् । कनकरुचिरवस्त्रं रत्नवत्कुण्डलाढ्यं कमलविशदनेत्रं सानुजं राममीडे ॥ १८ ॥ स्तुत्वैवं पुरुषं साक्षाद्राघवं पुरतः स्थितम् । परिक्रम्य प्रणम्याशु सानुज्ञाता ययौ पतिम् ॥ १९ ॥ अहल्यया कृतं स्तोत्रं यः पठेद्भक्तिसंयुतः । स मुच्यतेऽखिलैः पापैः परं ब्रह्माधिगच्छति

॥ २० ॥ पुत्राद्यर्थं पठेद्भक्त्या रामं हृदि निधाय च। संवत्सरेण लभते वन्ध्या अपि सुपुत्रकम् ॥ २१ ॥ सर्वान्कामानवाप्नोति रामचन्द्रप्रसादतः ॥ २२ ॥ ब्रह्मघ्नो गुरुतल्पगोऽपि पुरुषः स्तेयी सुरापोऽपि वा मातृभ्रातृविहिंसकोऽपि सततं भोगैकबद्धातुरः । नित्यं स्तोत्रमिदं जपन्रघुपतिं भक्त्या हृदिस्थं स्मरन्ध्यायन्मुक्तिमुपैति किं पुनरसौ स्वाचारयुक्तो नरः ॥ २३ ॥

इति श्रीम० रा० उमामहेश्वरसंवादे वा० अह-
ल्यावि० रा० स्तो० सं०

## २४६ इन्द्रकृतरामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ इन्द्र उवाच । भजेऽहं सदा राममिन्दीवराभं भवारण्यदावानलाभाभिधानम् । भवानीहृदा भावितानन्दरूपं भवाभावहेतुं भवादिप्रपन्नम् ॥ १ ॥ सुरानीकदुःखौघनाशैकहेतुं नराकारदेहं निराकारमीड्यम् । परेशं परानन्दरूपं वरेण्यं हरिं राममीशं भजे भारनाशम् ॥ २ ॥ प्रपन्नाखिलानन्ददोहं प्रपन्नं प्रपन्नार्तिनिःशेषनाशाभिधानम् । तपोयोगयोगीशभावाभिभाव्यं कपीशादिमित्रं भजे राममित्रम् ॥ ३ ॥ सदा भोगभाजां सुदूरे विभातं सदा योगभाजामदूरे विभातम् । चिदानन्दकन्दं सदा राघवेशं विदेहात्मजानन्दरूपं प्रपद्ये ॥ ४ ॥ महायोगमायाविशेषानुयुक्तो

विभासीश लीलानराकारवृत्तिः। त्वदानन्दलीलाकथापूर्णकर्णाः सदानन्दरूपा भवन्तीह लोके ॥ ५ ॥ अहं मानपानाभिमत्तप्रमत्तो न वेदाखिलेशाभिमानाभिमानः। इदानीं भवत्पादपद्मप्रसादात्त्रिलोकाधिपत्याभिमानो विनष्टः ॥ ६ ॥ स्फुरद्रत्नकेयूरहाराभिरामं धराभारभूतासुरानीकदावम्। शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं दुरावारपारं भजे राघवेशम् ॥ ७ ॥ सुराधीशनीलाभ्रनीलाङ्गकान्तिं विराधादिरक्षोवधाल्लोकशान्तिं। किरीटादिशोभं पुरारातिलाभं भजे रामचन्द्रं रघूणामधीशम् ॥ ८ ॥ लसच्चन्द्रकोटिप्रकाशादिपीठे समासीनमङ्के समाधाय सीताम्। स्फुरद्धेमवर्णां तडित्पुञ्जभासां भजे रामचन्द्रं निवृत्तार्तितन्द्रम् ॥ ९ ॥

इति श्रीमदध्यात्मरामायणे युद्धकाण्डे इन्द्रकृतं रामस्तोत्रं संपूर्णम्।

---

## २४७ रामचन्द्राष्टकम्।

श्रीगणेशाय नमः ॥ चिदाकारो धाता परमसुखदः पावनतनुर्मुनीन्द्रैर्योगीन्द्रैर्यतिपतिसुरेन्द्रैर्हनुमता। सदा सेव्यः पूर्णो जनकतनयाङ्गः सुरगुरू रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ १ ॥ मुकुन्दो गोविन्दो जनकतनयालालितपदः पदं प्राप्ता यस्याधमकुलभवा चापि शबरी। गिरातीतोऽगम्यो विमलधिषणैर्वेदवचसा रमानाथो रामो

रमतु मम चित्ते तु सततम् ॥ २ ॥ धराधीशोऽधीशः सुर-
नरवराणां रघुपतिः किरीटी केयूरी कनककपिशः शोभित-
वपुः । समासीनः पीठे रविशतनिभे शान्तमनसो रमानाथो
रामो रमतु मम चित्ते तु सततम् ॥ ३ ॥ वरेण्यः शारण्यः
कपिपतिसखा चान्तविधुरो ललाटे काश्मीरो रुचिरगति-
भङ्गः शशिमुखः । नराकारो रामो यतिपतिनुतः संसृति-
हरो रमानाथो रामो रमतु मम चित्ते तु सततम् ॥ ४ ॥
विरूपाक्षः काश्यामुपदिशति यन्नाम शिवदं सहस्रं यन्नाम्नां
पठति गिरिजा प्रत्युषसि वै । कलौ के गायन्तीश्वरविधि-
मुखा यस्य चरितं रमानाथो रामो रमतु मम चित्ते तु
सततम् ॥ ५ ॥ परो धीरोऽधीरोऽसुरकुलभवश्चासुरहरः
परात्मा सर्वज्ञो नरसुरगणैर्गीतसुयशाः । अहल्याशापघ्नः
शरकर अजः कौशिकसखा रमानाथो रामो रमतु मम
चित्ते तु सततम् ॥ ६ ॥ हृषीकेशः शौरिर्धरणिधरशायी
मधुरिपुरुपेन्द्रो वैकुण्ठो गजरिपुहरस्तुष्टमनसः । बलिध्वंसी
वीरो दशरथसुतो नीतिनिपुणो रमानाथो रामो रमतु मम
चित्ते तु सततम् ॥ ७ ॥ कविः सौमित्रीड्यः कपटमृगघाती
वनचरो रणश्लाघी दान्तो धरणिभरहर्ता सुरनुतः । अमानी
मानज्ञो निखिलजनपूज्यो हृदिशयो रमानाथो रामो रमतु
मम चित्ते तु सततम् ॥ ८ ॥ इदं रामस्तोत्रं वरममरदासेन
रचितमुषःकाले भक्त्या यदि पठति यो भावसहितम् । मनुष्यः

स क्षिप्रं जनिमृतिभयं तापजनकं परित्यज्य श्रेष्ठं रघुपतिपदं याति शिवदम् ॥ ९ ॥

इति श्रीमद्रामदासपूज्यपादशिष्यश्रीमद्धंसदासशिष्येणामरदासाख्यकविना विरचितं श्रीमद्रामचन्द्राष्टकं समाप्तम्।

---

## २४८ श्रीसीतारामाष्टकम् ।

श्रीगणेशाय नमः ॥ ब्रह्ममहेन्द्रसुरेन्द्रमरुद्गणरुद्रमुनीन्द्रगणैरतिरम्यं क्षीरसरित्पतितीरमुपेत्य नुतं हि सतामवितारमुदारम् । भूमिभरप्रशमार्थमथ प्रथितप्रकटीकृतचिद्घनमूर्तिं त्वां भजतो रघुनन्दन देहि दयाघन मे स्वपदाम्बुजदास्यम् ॥१॥ पद्मदलायतलोचन हे रघुवंशविभूषण देव दयालो निर्मलनीरदनीलतनोऽखिललोकहृदम्बुजभासक भानो । कोमलगात्रपवित्रपदाब्जरजःकणपावितगौतमकान्त त्वां भजतो० ॥ २ ॥ पूर्ण परात्पर पालय मामतिदीनमनाथमनन्त सुखाब्धे प्रावृडदभ्रतडित्सुमनोहरपीतवराम्बर राम नमस्ते। कामविभञ्जन कान्ततरानन काञ्चनभूषण रत्नकिरीटं त्वां भजतो० ॥ ३ ॥ दिव्यशरच्छशिकान्तिहरोज्ज्वलमौक्तिकमाल विशालसुमौले कोटिरविप्रभ चारुचरित्र पवित्रविचित्रधनुःशरपाणे । चण्डमहाभुजदण्डविखण्डितराक्षसराजमहागजदण्डं त्वां भजतो० ॥ ४ ॥ दोषविहिंसभुजङ्गसहस्रसुरोपमहानलकीलकलापे जन्मजरामरणोर्मिमनोमदमन्मथ-

नक्रविचक्रभवाब्धौ । दुःखनिधौ च चिरं पतितं कृपयाऽद्य समुद्धर राम ततो मां त्वां भजतो० ॥ ५ ॥ संसृतिघोरमदोत्कटकुञ्जरतृट्क्षुदनीरदपिण्डिततुण्डं दण्डकरोन्मथितं च रजस्तम उन्मदमोहपदोज्झितमार्तम् । दीनमनन्यगतिं कृपणं शरणागतमाशु विमोचय मूढं त्वां भजतो० ॥ ६ ॥ जन्मशतार्जितपापसमन्वितहृत्कमले पतिते पशुकल्पे हे रघुवीर महारणधीर दयां कुरु मय्यति मन्दमनीषे । त्वं जननी भगिनी च पिता मम तावदसि त्ववितार्ऽपि कृपालो त्वां भजतो० ॥ ७ ॥ त्वां तु दयालुमकिंचनवत्सलमुत्पलहारमपारमुदारं राम विहाय कमन्यमनामयमीश जनं शरणं ननु यायाम् । त्वत्पदपद्ममतः श्रितमेव मुदा खलु देव सदाऽव ससीतं त्वां भजतो० ॥८॥ यः करुणामृतसिन्धुरनाथजनोत्तमबन्धुरजोत्तमकारी भक्तभयोर्मिभवाब्धितरी सरयूतटिनीतटचारुविहारी । तस्य रघुप्रवरस्य निरन्तरमष्टकमेतदनिष्टहरं वै यस्तु पठेदमरः स नरो लभतेऽच्युतरामपदाम्बुजदास्यम् ॥ ९ ॥

इति श्रीमन्मधुसूदनाश्रमशिष्याच्युतयतिविरचितं श्रीमत्सीतारामाष्टकं संपूर्णम् ।

---

## २४९ रामषट्पदी ।

श्रीगणेशाय नमः ॥ तरणिकुलजलतरणे तरुणतरणिते-



जसा विभातरणे । कृत्तविदशदशमुखमुखतिमिरगणेन्त-

स्तमो ह्रद मे ॥ १ ॥ शयविधृतशरशरासन निखिलखलोज्ञासनप्रथितसुयशाः । मथितहृदयान्तरालं दुष्कृतिजालं ममापनय ॥ २ ॥ सुरुचिरमरीचिनिचयांश्चरणनखेन्दूनुदाय मम हृदये । हृदयेश विकलतापं स्वसकलतापं किलापहर ॥ ३ ॥ इन्दीवरदलसुन्दर वरदलसद्वामजानकीजाने । जाने त्वामखिलेशं लेशलसल्लोकलोकेशम् ॥ ४ ॥ शं कुरु शंकरवल्लभ यल्लभतामाश्रयं त्वदङ्घ्रियुगे । अनुरक्तिदृढां भक्तिं चिरस्यचिन्ताब्धिभवभक्तिम् ॥ ५ ॥ वैराजराजराजोऽप्यभूत्सुसाकेतराजनरराजः । वानरराजसहायो लीलाकैवल्यमेतद्धि ॥ ६ ॥ जगदसुसुतासुपरवसुदे यदेषा स्तुतिः कृता स्फीता । सा राम षट्पदीयं विलसतु तत्पादजलजाते ॥७॥

इति श्रीमन्मालवीयशुक्लमथुरानाथप्रणीता रामषट्पदी समाप्ता ।

---

## २५० रघुनाथाष्टकम् ।

श्रीगणेशाय नमः ॥ शुनासीराधीशैरवनितलज्ञप्तीडित गुणं प्रकृत्याजं जातं तपनकुलचण्डांशुमपरम् । सिते वृद्धिं ताराधिपतिमिव यन्तं निजगृहे ससीतं सानन्दं प्रणतरघुनाथं सुरनुतम् ॥ १ ॥ निहन्तारं शैवं धनुरिव इवेष्टिं नृपगणे पथि ज्याकृष्टेन प्रबलभृगुवर्यस्य शमनम् । विहारं गार्हस्थ्यं तदनु भजमानं सुविमलं ससीतं० ॥ २ ॥ गुरोराज्ञां नीत्वा वनमनुगतं दारसहितं ससौमित्रिं त्यक्त्व-

प्सितमपि सुराणां नृपसुखम् । विरूपाद्राक्षस्याः प्रियवि-रहसन्तप्तमनसं ससीतं० ॥ ३ ॥ विराधं स्वर्नीत्वा तदनु च कबन्धं सुररिपुं गतं पम्पातीरे पवनसुतसंमेलनसुखम् । गतं किष्किन्धायां विदितगुणसुग्रीवसचिवं ससीतं० ॥ ४ ॥ प्रियाप्रेक्षोत्कण्ठं जलनिधिगतं वानरयुतं जले सेतुं बद्ध्वाऽसुरकुलनिहन्तारमनघम् । विशुद्धामर्धाङ्गीं हुतभुजि समीक्षन्तमचलं ससीतं० ॥ ५ ॥ विमानं चारुह्यानुजजनकजा-सेवितपदमयोध्यायां गत्वा नृपपदमवाप्तारमजरम् । सुयज्ञैस्तृप्तारं निजसुखसुरान्शान्तमनसं ससीतं० ॥ ६ ॥ प्रजां संस्थातारं विहतनिजधर्मे श्रुतिपथं सदाचारं वेदोदितमपि च कर्तारमखिलम् । नृपु प्रेमोद्रेकं निखिलमनुजानां हितकरं ससीतं० ॥ ७ ॥ तमः कीर्त्याशेषाः श्रवणगदनाभ्यां द्विज-मुखास्तरिष्यन्ति ज्ञात्वा जगति खलु गन्तारमजनम् । अतस्तां संस्थाप्य स्वपुरमनुनेतारमखिलं ससीतं० ॥ ८ ॥ रघुनाथाष्टकं हृद्यं रघुनाथेन निर्मितम् । पठतां पापराशिघ्नं भुक्तिमुक्तिप्रदायकम् ॥ ९ ॥

इति श्रीरघुनाथाष्टकं समाप्तम् ।

---

## २५१ रामकवचम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीरामकवचस्य विश्वामित्र ऋषिः । अनुष्टुप् छन्दः । श्रीरामो देवता । सीता

वीजम् । हनुमान् शक्तिः । श्रीरामराधने जपे विनियोगः । अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॐ ग्लौं १६ । ॐ श्रीं ॐ रां राघवाय नमो मे शिरः पातु । रां ॐ ॐ ऐं क्लीं दशरथात्मजाय नमो मे भालं पातु । क्लीं ॐ ॐ ह्रीं ह्रीं कौसल्येयाय नमो मे दृशा पातु । ह्रीं ॐ ऐं विश्वामित्रप्रियाय नमो मे श्रुती पातु । ॐ एं ॐ ग्लौं मखत्रात्रे नमो मे घ्राणं पातु । ॐ ग्लौं स्रौं ॐ श्रीसौमित्रवत्सलाय नमो मे मुखं पातु । श्रीं ॐ ॐ आं विद्यानिधये नमो मे जिह्वां पातु । आं ॐ ॐ क्रों भरतवन्दिताय नमो मे कण्ठं पातु । क्रों ॐ ॐ ॐ ह्रीं दिव्यायुधाय नमो मे स्कन्धौ पातु । फट् ह्रीं ॐ ॐ फट् भग्नेशकार्मुकाय नमो मे भुजौ पातु । फट् ॐ ॐ फट् सीतापतये नमो मे करौ पातु । फट् ॐ ॐ हुं जामदग्न्यजिते नमो मे हृदयं पातु । ॐ ॐ हुं क्रां खरध्वंसिने नमो मे मध्यं पातु । क्रों ॐ ॐ आं जाम्ब-वदाश्रयाय नमो मे नाभिं पातु । आं ॐ ॐ श्रीं सुग्रीवे-शाय नमो मे कटिं पातु । श्रीं ॐ ॐ क्षौं हनूमत्प्रभवे नमो मे सक्थिनी पातु । क्षौं ॐ ॐ ऐं रघूत्तमाय नमो मे ऊरू पातु । ऐं आं ॐ ह्रीं सेतुकृते नमो मे जानुनी पातु । ऐं आं ॐ क्लीं दशमुखान्तकाय नमो मे जङ्घे पातु । क्लीं ॐ ॐ रां विभीषणाय श्रीदाय श्रीरामाय नमो मे पादावखिलं वपुश्च पातु । रां ॐ एतां रामबलोपेतां रक्षां यः सुकृती पठेत् ।

स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ॥ १ ॥ पाताल-भूतलव्योमचारिणश्छद्मचारिणः । न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥ २ ॥ रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् । नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विन्दति ॥ ३ ॥ जगज्जैत्रैकमन्त्रेण रामनाम्नैव रक्षितम् । यः करे धारयेत्तस्य करस्थाः सर्वसिद्धयः ॥ ४ ॥ वज्रपञ्जरनामेदं यो रामकवचं स्मरेत् । अव्याहताज्ञः सर्वत्र लभते जयमङ्गलम् ॥ ५ ॥ आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः । तथा लिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ॥ ६ ॥ सोऽहं हंसः स्वाहा कुरु । मम रक्षां कुरु स्वाहा । यन्त्रराजाय विद्महे वर-प्रदानाय धीमहि । तन्नो यन्त्रः प्रचोदयात् ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोऽहं यन्त्रस्य जीव इह जीवः स्थितः । सोऽहं हंसः स्वाहा । यन्त्रस्य प्राणा इह प्राणा आयान्तु सुखं चिरं तिष्ठन्तु स्वाहा । हंसः सोऽहं ॐ ह्रीं ॐ आं ह्रीं यं रं लं वं शं षं सं हं हंसः सोऽहं स्वाहा यन्त्रस्य सर्वेन्द्रियाणि इह स्थिताः । हंस सोऽहं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोऽहं स्वाहा । यन्त्रस्य वाङ्मनश्चक्षुः श्रोत्रं प्राणा घ्राणसुखम् इह आयान्तु सुखं चिरं तिष्ठन्तु स्वाहा । ॐ आं ह्रीं क्रों अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः यं रं लं वं शं षं सं हं हंससोऽहं ॐ ह्रीं श्रीं क्लीं फट् अङ्गनाथे १९ । विपनिटस्ताये १९९ ।

धनप्राप्तये २१। ध्यानार्थं १००। बालकमरणनिवारणे १३। महिपिदूतवादजये ३३। अपत्यप्राप्तये ८४। युद्धे जयार्थं ३७। शोकनिवृत्तये ८८। रक्षःपीडानिवृत्तये १००। प्रजालाभे ८४। कलहनिवृत्तये ४०। उच्चाटनाय ६२। वृष्टिनिवृत्तये ३६। रजस्वलानिवृत्तये ६४। कण्डूव्याधिनिवृत्तये ६३। सर्पविषनिवृत्तये १२। वातगुल्मनाशने ६२। अन्यरोगनाशनाय ७२। वृक्षफलविनाशाय ३६। अश्वगवबन्धनाय ७४। भूकम्पनिवृत्तये १४८। वैरनिवृत्तये १४८। पीडाशान्तये १९७। वशीकरणार्थं १०० शीतनिवृत्तये ३३। भूपनिवृत्तये १४८। चौरनिवृत्तये १४८। शरीरपुष्टये ८०। भ्रान्तिनिवृत्तये ३२। मार्गे भयनाशनाय ३४। उदरशूलनाशनाय ३६। ॐ ह्रीं श्रीं ह्रीं फट् अन्ते सर्वत्र अयविधपटके भूर्जे कुङ्कुमागरुरोचनैः सुलिखितमग्रकैर्निर्मितं बाह्यैः सर्वसुमध्यगैः प्रणवकण्ठबीजं लिखेत्। साध्यमध्यजतुष्टये विलिख्य ताम्रमध्ये कलौ वेष्टिता तद्बाह्यै भुवनत्रयं बीजं विलिख्य तद्बाह्ये च पृथ्वीबीजं लिखते धारयेद्रामकवचं सर्वसिद्धिः शुभं भवेत्।

इति श्रीविश्वामित्रविरचितं श्रीरामकवचं संपूर्णम्।

---

## २५२ त्रैलोक्यमोहनकवचम्।

श्रीगणेशाय नमः॥ ॐ अस्य श्रीरामषडक्षरमन्त्रा-

जस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीरामः परमात्मा देवता । रां बीजम् । नमः शक्तिः । रामाय कीलकम् । चतुर्विधपुरुषार्थसिद्धये श्रीरामप्रीत्यर्थे जपे विनयोगः ॥ इति संकल्पः ॥ ब्रह्मणे ऋषये नमः शिरसि । गायत्रीछंदसे नमः मुखे । श्रीरामाय परमात्मदेवतायै नमः हृदि । रां बीजाय नमः लिङ्गे । नमः शक्तये नमः पादयोः । रामाय कीलकाय नमः सर्वाङ्गे । इति ऋष्यादिन्यासः । रां रीं रूं रैं रौं रः रां अङ्गुष्ठाभ्यां नमः । रीं तर्जनीभ्यां नमः । रूं मध्यमाभ्यां नमः । रैं अनामिकाभ्यां नमः । रौं कनिष्ठिकाभ्यां नमः । रः करतलकरपृष्ठाभ्यां नमः । इति करन्यासः । रां हृदयाय नमः । रीं शिरसे स्वाहा । रूं शिखायै वौषट् । रैं कवचाय हुं । रौं नेत्रत्रयाय वौषट् । रः अस्त्राय फट । इति अङ्गन्यासः । मूलेन व्यापकत्रयम् । मूलेनैवाष्टवारं करयोः तालत्रयेण स्फोटिकमुद्रया दशदिग्बन्धः ॥ श्रीपार्वत्युवाच ॥ भगवन्सर्वदेवेश सर्वदेवनमस्कृत । सर्वं मे कथितं देव राममन्त्रं विशेषतः ॥ १ ॥ त्रैलोक्यमोहनं नाम कवचं पूर्वमश्रुतम् । कथयस्व महादेव यद्यहं तव वल्लभा ॥ २ ॥ ईश्वर उवाच ॥ शृणु वक्ष्यामि देवेशि कवचं परमाद्भुतम् । अत्यन्तगोपनं गुह्यं ब्रह्ममन्त्रौघविग्रहम् ॥ ३ ॥ ॐ अस्य श्रीरामकवचस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीरामचन्द्रो देवता । मम चतुर्वर्गसाधने जपे विनियोगः ॥ प्रणवो मे

शिरः पातु तारको ब्रह्मरूपकः । अनन्तोऽग्र्यासनः सेन्दुर्न्या-
समेकाक्षरोऽवतु ॥४॥ रां रामाय नम इति षड्वर्णो भुक्ति-
मुक्तिदः । भालं पायान्नेत्रयुग्मं रामो द्व्यक्षरसंज्ञकः ॥ ५ ॥
क्लीं पायाच्च श्रोत्रयुग्ममेकाक्षरश्च मोहनः । क्लीं रामाय नम
इति मुखं मे परिरक्षतु ॥ ६ ॥ रां रामचन्द्राय स्वाहाऽष्टा-
वर्णो मे भुजद्वयम् । श्रीं रां रामाय नम इति स्कन्धौ पातु
खरान्तकः ॥ ७ ॥ श्रीरामचन्द्राय रक्षोघ्नाय नम इति द्वाद-
शाक्षरः । हृदयं मे सदा पातु रघुवंशसमुद्भवः ॥ ८ ॥ ह्रीं
रामचन्द्राय नम इति पातु मे ऊरुयुग्मकम् । श्रीं रामभद्राय
स्वाहा नाभिमष्टाक्षरोऽवतु ॥ ९ ॥ क्लीं रामभद्राय सीतायाः
पतये द्विपान्तकः । सक्थिनी सततं पातु राक्षसेन्द्र-
विमर्दकः ॥ १० ॥ प्रणवो रामचन्द्राय हृदयं तोऽष्टाक्ष-
रोऽवतु । जानुनी मे सदा पातु रक्षःकुलविनाशकः ॥ ११ ॥
प्रणवो रामभद्राय द्विठान्तोऽष्टाक्षरोऽवतु । पादयुग्मं सदा
पातु वानरेन्द्रश्रेयःप्रदः ॥ १२ ॥ ह्रीं सीतापतये नम इति
प्राच्यां मां सर्वदाऽवतु । ह्रीं जानकीवल्लभायेति पातु याम्यां
सदा प्रभुः ॥ १३ ॥ क्लीं जानकीनाथायेति प्रतीच्यां मां
सर्वदाऽवतु । श्रीरघुनाथाय नम इति कौबेर्यां दिशि रक्षतु
॥ १४ ॥ हुं जानकीवल्लभाय स्वाहेत्याग्नेय्यां सर्वदाऽवतु ।
ॐ ह्रीं श्रीं क्लीं भरताग्रजाय रामाय स्वाहेति पातु मां
नैर्ऋत्यां सदा प्रभुः ॥ १५ ॥ ॐ रां श्रीजानकीवल्लभाय

स्वाहेति वायव्यां मां सदाऽवतु । ॐ श्रीं ह्रीं श्रीं दाशरथये नमः इतीशान्यां मां रक्षतु ॥ १६ ॥ ॐ नमो भगवते भूयाच्चतुर्थ्यां रघुनन्दन । रक्षोघ्नविशदायेति मधुरादि समीरयेत् ॥ १७ ॥ प्रसन्नवदनायेति पश्चादमिततेजसे । बलाय पश्चाद्रामाय विष्णवे तदनन्तरम् ॥ १८ ॥ प्रणवादिनमोन्तोऽयं मालामन्त्र उदीरितः । राजस्थाने सदा पातु रघुवंशसमुद्भवः ॥ १९ ॥ ॐ नमो भगवते ब्रूयाद्रामायेति तदनन्तरम् । महापुरुषायेति पश्चान्नम इत्युदीरयेत् ॥ २० ॥ अष्टादशाक्षरो मन्त्रो मामेव सर्वदाऽवतु । ध्यायेद्धि पुण्डरीकाक्षं परं ज्योतिः परात्परम् ॥२१॥ राम एव परं ब्रह्म सच्चिदानन्दविग्रहम् । इति ध्यात्वा जपेन्मन्त्रं भुक्तिमुक्तिप्रदायकम् ॥ २२ ॥ अथ रामगायत्री । ॐ दाशरथाय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात् ॥ इति श्रीरामगायत्री भक्तिवीर्यप्रवर्धनी । गायत्री जपमात्रेण भुक्तिमुक्तिप्रदायिनी ॥२३॥ इति ते कथितं देवि सर्वमन्त्रौघविग्रहम् । त्रैलोक्यमोहनं नाम कवचं ब्रह्मरूपकम् ॥ २४ ॥ प्रातःकाले पठेद्यस्तु सोऽभीष्टं फलमाप्नुयात् । पूजाकाले पठेद्यस्तु कवचं साधकोत्तम ॥ २५ ॥ कीर्तिश्रीकान्तिमेधायुर्बृंहितो भवति ध्रुवम् । राममन्त्रमयं ब्रह्म कवचं सन्मुखोदितम् ॥ २६ ॥ गुरुमभ्यर्च्य विधिवत्कवचं हि पठेत्ततः । द्विः सकृद्वा जपेद्यस्तु सोऽपि पुण्यवतां वरः ॥ २७ ॥ देवमभ्यर्च्य विधि-

वत्पुरश्चर्यं समाचरेत् । अष्टोत्तरशतं जप्त्वा दशांशं हवनादिकम् ॥ २८ ॥ ततस्तु सिद्धकवचं सर्वकार्याणि साधयेत् । मन्त्रसिद्धिर्भवेत्तस्य पुरश्चर्याविधानतः ॥ २९ ॥ गद्यपद्यमयी वाणी तस्य वक्त्रात्प्रवर्तते । वक्त्रे तस्य वसेद्वाणी कमला निश्चला गृहे ॥ ३० ॥ पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् । अपि वर्षसहस्राणि पूजायाः फलमाप्नुयात् ॥ ३१ ॥ विलिख्य भूर्जपत्रेषु स्वर्णस्थं धारयेद्यदि । कण्ठे वा दक्षिणे बाहौ स कुर्याद्वशवज्जगत् ॥ ३२ ॥ त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् । तद्गात्रं प्राप्य शस्त्राणि ब्रह्मास्त्रादीनि यानि च ॥ ३३ ॥ माल्यानि कुसुमानीव सुखदानि भवन्ति हि । स्पर्धामुद्धूय भवने लक्ष्मीर्वाणी मुखे वसेत् ॥ ३४ ॥ इदं कवचमज्ञात्वा यो जपेद्राममन्त्रकम् । शतलक्षं प्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥ ३५ ॥ स शस्त्रघातमाप्नोति सोऽचिरान्मृत्युमाप्नुयात् । सम्यग्ज्ञात्वा तु कवचं मन्त्रः स्यात्सिद्धिदायकः ॥ ३६ ॥

इति श्रीब्रह्मयामले उमामहेश्वरसंवादे त्रैलोक्यमोहनं कवचं संपूर्णम् ।

---

## २५३ जानकीत्रैलोक्यसंमोहनं कवचम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीजानकीत्रैलोक्यमोहनकवचस्य श्रीहनुमानृषिः । अनुष्टुप् छन्दः । श्रीजानकी देवता । इष्टार्थे जपे विनियोगः । अथ न्यासः । जानक्यै

नमः मूर्ध्नि । ॐ सीतायै नमः ललाटे । ॐ धरण्यै नमः कर्णयोः । ॐ रामप्रियायै नमः हृदये । ॐ ऐं ह्रीं श्रीं शक्तये नमः सर्वाङ्गे । इति न्यासः ॥ अथ ध्यानम् ॥ ध्याये-च्चम्पकवद्वर्णां हेमाङ्गीं नीलवस्त्रकाम् । सर्वालंकारसंयुक्तां रामवामे सदा स्थिताम् ॥ १ ॥ श्रीं ह्रीं क्लीं सदा पातु मस्तकं रामवल्लभा । ॐ ऐं आं ॐ सर्वदा पातु सर्वाङ्गं जनकात्मजा ॥ २ ॥ ॐ अं इं उं कपोलौ च बाहू वसुमती सदा । ॐ श्रीं श्रीं श्रीं हृदये मे पातु वक्षो हरिप्रिया ॥ ३ ॥ तां तां तौ उदरे पातु स्तनौ पातु दृढव्रता । कौमारी कुक्षिकं पातु श्रीं ह्रीं कञ्जविलोचना ॥ ४ ॥ नाभिं नारायणी पातु ऐं क्लीं च गुह्यदेशके । कटिं च कमला पातु ह्रीं ह्रीं च राघवप्रिया ॥ ५ ॥ पादाङ्गुलीः सदा पातु ग्रीं ग्रीं ग्रीं गिरिजागिरा । रमा रामा च नित्यं मे योगमाया च सर्वगा ॥ ६ ॥ नाभौ च नृधरा पातु रामानन्दप्रदायिनी । भुवि पद्मकरा पातु भूर्लोके भृगुवल्लभा ॥ ७ ॥ सत्यावती दिशः पातु दुर्गमे दुर्गनाशिनी । आं भ्रां ह्रां च जानक्याः सर्व-रक्षाकरी नृणाम् ॥ ८ ॥ गुह्येति श्रुवती पातु सर्वमन्त्रमयी तथा । घोरशत्रे च रक्षेत पुष्पतुल्यं च तद्भवेत् ॥ ९ ॥ रक्ष रक्ष सदा राम इति प्रीत्या च कारिणी । सीतां रक्षति यो नित्यं जाग्रत्स्वप्नसुषुप्तिषु ॥ १० ॥ द्वयाक्षरो महामन्त्रः सर्वतश्चतुराक्षरः । पञ्चाक्षरं च तन्मन्त्रं वारुण्यां वेदकन्यके

॥ ११ ॥ एतां रक्षां महत्पुण्यां लक्ष्मणेन प्रभाषिताम् । कपीन्द्रो प्रोक्तवद्रक्षः ब्रह्मपाशं निवारयेत् ॥ १२ ॥ तेन सत्येन मे देव लङ्का येन विदाहिता । जानकीध्यानमात्रेण लङ्घिताः सप्त सागराः ॥ १३ ॥ रामकार्यं च सिद्धिः स्यात्कवचस्य प्रसादतः । चिरजीवी भवेदेव जानकीकवचान्मुदा ॥ १४ ॥ त्रैलोक्यमोहनं नाम कवचं ब्रह्मरूपकम् । समन्त्रसाक्षराभ्यां च सानुरूपा च ध्यायते ॥ १५ ॥ एतत्कवचं महापुण्यं न देयं यस्य कस्यचित् । गोपितव्यं प्रयत्नेन कवचं ब्रह्मरूपकम् ॥ १६ ॥ कवचस्य पाठकर्ता दृश्यते भुवि दुर्लभः । त्रैलोक्यं मोहयेच्चैव संग्रामे विजयी भवेत् ॥ १७ ॥ मनःसिद्धिं च संप्राप्य ब्रह्मलोकमवाप्नुयात् । राजरोगभयं नास्ति सर्वदुर्गार्तिशान्तिकृत् ॥ १८ ॥ स्मशाने राजद्वारे च वने दुर्गे च संप्लवे । चौरसिंहभयं नास्ति रामानन्दप्रदायिनी ॥ १९ ॥ अपुत्रः पुत्रवाँल्लोके धनार्थी लभते धनम् । सर्वान्कामानवाप्नोति नरो नारायणः स्वयम् ॥ २० ॥ आपदस्तस्य नश्यन्ति निर्मलं च भवेत्ततः । बहुभूमिपसं प्राप्तं राघवं च नराधिपम् ॥ २१ ॥ कवचं मासमात्रं च स्थित्वा पठति यः पुमान् । अचलां लभते भक्तिं प्रीयते जानकी शुभा ॥ २२ ॥

इति श्रीसंमोहनतन्त्रे हनुमत्प्रोक्तं श्रीजानकीत्रैलोक्यसंमोहनं नाम कवचं समाप्तम् ।

## २५४ श्रीरामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विश्वस्य चात्मनो नित्यं पारतन्त्र्यं विचिन्त्य च । चिन्तयेच्चेतसा नित्यं श्रीरामः शरणं मम ॥ १ ॥ अचिन्त्योऽपि शरीरादेः स्वातन्त्र्येणैव विद्यते । चिन्तयेच्चेतसा नित्यं श्रीरामः० ॥ २ ॥ आत्माधारं स्वतन्त्रं च सर्वशक्तिं विचिन्त्य च । चिन्तयेच्चेतसा नित्यं श्रीरामः० ॥ ३ ॥ नित्यात्मगुणसंयुक्तो नित्यात्मतनुमण्डितः । नित्यात्मकेलिनिरतः श्रीरामः० ॥ ४ ॥ गुणलीलास्वरूपैश्च मितिर्यस्य न विद्यते । अतो वाङ्मनसाऽवेद्यः श्रीरामः० ॥ ५ ॥ कर्ता सर्वस्य जगतो भर्ता सर्वस्य सर्वगः । आहर्ता कार्यजातस्य श्रीरामः० ॥६॥ वासुदेवादिमूर्तीनां चतुर्णां कारणं परम् । चतुर्विंशतिमूर्तीनां श्रीरामः० ॥ ७ ॥ नित्यं मुक्तजनैर्जुष्टो निविष्टः परमे पदे । पदं परमभक्तानां श्रीरामः० ॥ ८ ॥ महदादिस्वरूपेण संस्थितः प्राकृते पदे । ब्रह्मादिदेवरूपैश्च श्रीरामः०॥ ९ ॥ मन्वादिनृपरूपेण श्रुतिमार्गं बिभर्ति यः । यः प्राकृतस्वरूपेण श्रीरामः० ॥ १० ॥ ऋषिरूपेण यो देवो वन्यवृत्तिमपालयत् । योऽन्तरात्मा च सर्वेषां श्रीरामः० ॥ ११ ॥ योऽसौ सर्वतनुः सर्वः सर्वनामा सनातनः । आस्थितः सर्वभावेषु श्रीरामः० ॥ १२ ॥ बहिर्मत्स्यादिरूपेण सद्धर्ममनुपालयन् । परिपाति जनान्दीनान् श्रीरामः० ॥ १३ ॥ यश्चात्मानं पृथक्कृत्य भावेन पुरुषोत्तमः । अर्चा-

ग्रामास्थितो देवः श्रीरामः० ॥ १४ ॥ अर्चावताररूपेण दर्शनस्पर्शनादिभिः । दीनानुद्धरते योऽसौ श्रीरामः० ॥१५॥ कौशल्याशुक्तिसंजातो जानकीकण्ठभूषणः । मुक्ताफलसमो योऽसौ श्रीरामः० ॥ १६ ॥ विश्वामित्रमखत्राता ताडकागतिदायकः । अहल्याशापशमनः श्रीरामः० ॥ १७ ॥ पिनाकभञ्जनः श्रीमान् जानकीप्रेमदायकः । जामदग्न्यप्रतापघ्नः श्रीरामः० ॥ १८ ॥ राज्याभिषेकसंहृष्टः कैकेयीवचनात्पुनः । पित्रा दत्तवनक्रीडः श्रीरामः० ॥ १९ ॥ जटाचीरधरो धन्वी जानकीलक्ष्मणान्वितः । चित्रकूटकृतावासः श्रीरामः० ॥ २० ॥ महापञ्चवटीलीलासंजातपरमोत्सवः । दण्डकारण्यसंचारी श्रीरामः० ॥ २१ ॥ खरदूषणविच्छेदी दुष्टराक्षसभञ्जनः । हृतशूर्पणखाशोभः श्रीरामः० ॥ २२ ॥ मायामृगविभेत्ता च हृतसीतानुतापकृत् । जानकीविरहाक्रोशी श्रीरामः० ॥ २३ ॥ लक्ष्मणानुचरो धन्वी लोकयात्राविडम्बकृत् । पम्पातीरकृतान्वेषः श्रीरामः० ॥ २४ ॥ जटायुगतिदाता च कबन्धगतिदायकः । हनुमत्कृतसाहित्यः श्रीरामः० ॥ २५ ॥ सुग्रीवराज्यदः श्रीशो वालिनिग्रहकारकः । अङ्गदाश्वासनकरः श्रीरामः० ॥ २६ ॥ सीतान्वेषणनिर्मुक्तहनुमत्प्रमुखव्रजः । वेलानिवेशितबलः श्रीरामः० ॥ २७ ॥ हेलोत्तरितपाथोधिर्बलनिर्धूतराक्षसः । लङ्कादाहकरो धीरः श्रीरामः० ॥ २८ ॥ रोषसंबद्धपाथोधिर्लङ्का-

प्रासादरोधकः । रावणादिप्रभेत्ता च श्रीरामः० ॥ २९ ॥ जानकीजीवनत्राता विभीषणसमृद्धिदः । पुष्पकारोहणासक्तः श्रीरामः० ॥ ३० ॥ राज्यसिंहासनारूढः कौशल्यानन्दवर्धनः । नामनिर्धूतनिरयः श्रीरामः० ॥ ३१ ॥ यज्ञकर्ता यज्ञभोक्ता यज्ञभर्ता महेश्वरः । अयोध्यामुक्तिदः शास्ता श्रीरामः० ॥ ३२ ॥ प्रपठेद्यः शुभं स्तोत्रं मुच्येत भवबन्धनात् । मन्त्रश्चाष्टाक्षरो देवः श्रीरामः शरणं मम ॥ ३३ ॥

इति श्रीब्रह्मसंहितायां श्रीरामस्तोत्रं संपूर्णम् ।

---

## २५५ रामस्तवराजः ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीरामचन्द्रस्तवराजस्तोत्रमन्त्रस्य सनत्कुमार ऋषिः । अनुष्टप् छन्दः । श्रीरामो देवता । सीता बीजम् । हनुमान्शक्तिः । श्रीरामप्रीत्यर्थे जपे विनियोगः ॥ सूत उवाच ॥ सर्वशास्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतम् । धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम् ॥ १ ॥ युधिष्ठिर उवाच ॥ भगवन्योगिनां श्रेष्ठ सर्वशास्त्रविशारद । किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम् ॥ २ ॥ श्रोतुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम । श्रीवेदव्यास उवाच ॥ धर्मराज महाभाग शृणु वक्ष्यामि तत्त्वतः ॥ ३ ॥ यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम् । तदेव परमं तत्त्वं कैवल्यपदकारणम् ॥ ४ ॥ श्रीरामेति परं जाप्यं

तारकं ब्रह्मसंज्ञकम् । ब्रह्महत्यादिपापघ्नमिति वेदविदो विदुः ॥ ५ ॥ श्रीराम रामेति जना ये जपन्ति च सर्वदा । तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः ॥ ६ ॥ स्तवराजः पुरा प्रोक्तो नारदेन च धीमता । तत्सर्वं संप्रवक्ष्यामि हरिध्यानपुरःसरम् ॥ ७ ॥ तापत्रयाग्निशमनं सर्वाघौघनिकृन्तनम् । दारिद्र्यदुःखशमनं सर्वसंपत्करं शिवम् ॥ ८ ॥ विज्ञानफलदं दिव्यं मोक्षैकफलसाधनम् । नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम् ॥ ९ ॥ अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे । स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥ १० ॥ तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम् । स्मरेन्मध्ये दाशरथिं सहस्रादित्यतेजसम् ॥ ११ ॥ पितुरङ्कगतं राममिन्द्रनीलमणिप्रभम् । कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम् ॥ १२ ॥ भानुकोटिप्रतीकाशं किरीटेन विराजितम् । रत्नग्रैवेयकेयूररत्नकुण्डलमण्डितम् ॥ १३ ॥ रत्नकङ्कणमञ्जीरकटिसूत्रैरलंकृतम् । श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम् ॥ १४ ॥ दिव्यरत्नसमायुक्तमुद्रिकाभिरलंकृतम् । राघवं द्विभुजं बालं राममीषत्स्मिताननम् ॥ १५ ॥ तुलसीकुन्दमन्दारपुष्पमाल्यैरलंकृतम् । कर्पूरागरुकस्तूरीदिव्यगन्धानुलेपनम् ॥ १६ ॥ योगशास्त्रेष्वभिरतं योगेशं योगदायकम् । सदा भरतसौमित्रिशत्रुघ्नैरुपशोभितम् ॥ १७ ॥ विद्याधरसुराधीशसिद्धगन्धर्वकि-

न्नरैः। योगीन्द्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम् ॥१८॥ विश्वामित्रवसिष्ठादिमुनिभिः परिसेवितम्। सनकादिमुनिश्रेष्ठैर्योगिवृन्दैश्च सेवितम् ॥ १९ ॥ रामं रघुवरं वीरं धनुर्वेदविशारदम्। मङ्गलायतनं देवं रामं राजीवलोचनम् ॥ २० ॥ सर्वशास्त्रार्थतत्त्वज्ञमानन्दकरसुन्दरम्। कौसल्यानन्दनं रामं धनुर्बाणधरं हरिम् ॥ २१ ॥ एवं संचिन्तयेद्विष्णुं यज्ज्योतिरमलं विभुम्। प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः ॥ २२ ॥ सर्वलोकहितार्थाय तुष्टाव रघुनन्दनम्। कृताञ्जलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम् ॥ २३ ॥ यदेकं यत्परं नित्यं यदानन्दं चिदात्मकम्। यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम् ॥२४॥ विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम्। श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि ॥२५॥ कविं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम्। अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श ॥ २६ ॥ श्रीनारद उवाच ॥ नारायणं जगन्नाथमभिरामं जगत्पतिम्। कविं पुराणं वागीशं रामं दशरथात्मजम् ॥ २७ ॥ राजराजं रघुवरं कौसल्यानन्दवर्धनम्। भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् ॥२८॥ सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम्। सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम् ॥ २९ ॥ आदित्यं रविमीशानं घृणिं सूर्यमनामयम्। आनन्दरूपिणं सौम्यं राघवं करुणामयम् ॥ ३० ॥ जामदग्नि तपोमूर्तिं रामं

परशुधारिणम् । वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम् ॥ ३१ ॥ श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दविग्रहम् । हलधृग्विष्णुमीशानं बलरामं कृपानिधिम् ॥ ३२ ॥ श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम् । मत्स्यकूर्मवराहादिरूपधारिणमव्ययम् ॥ ३३ ॥ वासुदेवं जगद्योनिमनादिनिधनं हरिम् । गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम् ॥ ३४ ॥ गोपालं गोपरीवारं गोपकन्यासमावृतम् । विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जगन्मयम् ॥ ३५ ॥ गोगोपिकासमाकीर्णं वेणुवादनतत्परम् । कामरूपं कलावन्तं कामिनीकामदं विभुम् ॥ ३६ ॥ मन्मथं मथुरानाथं माधवं मकरध्वजम् । श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम् ॥ ३७ ॥ भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम् । सर्वदुःखहरं वीरं दुष्टदानववैरिणम् ॥ ३८ ॥ श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम् । चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम् ॥ ३९ ॥ आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम् । भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् ॥ ४० ॥ कौशलेयं कलामूर्तिं काकुत्स्थं कमलाप्रियम् । सिंहासने समासीनं नित्यव्रतमकल्मषम् ॥ ४१ ॥ विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम् । यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम् ॥ ४२ ॥ सत्यसंधं जितक्रोधं शरणागतवत्सलम् । सर्वक्लेशापहरणं विभीषणवरप्रदम् ॥ ४३ ॥ दशग्रीवहरं रौद्रं केशवं केशि-

मर्दनम् । वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् ॥ ४४ ॥
नरवानरदेवैश्च सेवितं हनुमत्प्रियम् । शुद्धं सूक्ष्मं परं शान्तं
तारकं ब्रह्मरूपिणम् ॥ ४५ ॥ सर्वभूतात्मभूतस्थं सर्वाधारं
सनातनम् । सर्वकारणकर्तारं निदानं प्रकृतेः परम् ॥ ४६ ॥
निरामयं निराभासं निरवेद्यं निरञ्जनम् । नित्यानन्दं निरा-
कारमद्वैतं तमसः परम् ॥४७॥ परात्परतरं तत्त्वं सत्यानन्दं
चिदात्मकम् । मनसा शिरसा नित्यं प्रणमामि रघूत्तमम्
॥ ४८ ॥ सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम् । नमामि
पुण्डरीकाक्षममेयं गुरुतत्परम् ॥ ४९ ॥ नमोऽस्तु वासुदेवाय
ज्योतिषां पतये नमः । नमोऽस्तु रामदेवाय जगदानन्दरू-
पिणे ॥ ५० ॥ नमो वेदान्तनिष्ठाय योगिने ब्रह्मवादिने ।
मायामयनिरासाय प्रपन्नजनसेविने ॥ ५१ ॥ वन्दामहे
महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दवर्धनं रघु-
नन्दनम् ॥ ५२ ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय
ते कामाय प्रमदामनोहरगुणग्रामाय रामात्मने । योगारूढ-
मुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघु-
कुलोत्तंसाय पुंसे नमः ॥ ५३ ॥ भवोद्भवं वेदविदां वरिष्ठमा-
दित्यचन्द्रानलसुप्रभावम् । सर्वात्मकं सर्वगतस्वरूपं नमामि
रामं तमसः परस्तात् ॥ ५४ ॥ निरञ्जनं निष्प्रतिमं निरीहं
निराश्रयं निष्कलमप्रपञ्चम् । नित्यं ध्रुवं निर्विषयस्वरूपं
निरन्तरं राममहं भजामि ॥ ५५ ॥ भवाब्धिपोतं भरताग्र-

तं भक्तप्रियं भानुकुलप्रदीपम् । भूतत्रिनाथं भुवनाधिपं तं भजामि रामं भवरोगवैद्यम् ॥ ५६ ॥ सर्वाधिपत्यं समराङ्गधीरं सत्यं चिदानन्दमयस्वरूपम् । सत्यं शिवं शान्तिमयं शरण्यं सनातनं राममहं भजामि ॥ ५७ ॥ कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम् । कुमारवेद्यं करुणामयं तं कल्पद्रुमं राममहं भजामि ॥ ५८ ॥ त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वन्द्वविनाशहेतुम् । महाबलं वेदनिधिं सुरेशं सनातनं राममहं भजामि ॥ ५९ ॥ वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम् । अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात् ॥ ६० ॥ अशेषवेदात्मकमादिसंज्ञमजं हरिं विष्णुमनन्तमाद्यम् । अपारसंवित्सुखमेकरूपं परात्परं राममहं भजामि ॥ ६१ ॥ तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम् । राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि ॥ ६२ ॥ लोकाभिरामं रघुवंशनाथं हरिं चिदानन्दमयं मुकुन्दम् । अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात् ॥ ६३ ॥ योगीन्द्रसंघैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम् । नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात् ॥ ६४ ॥ विभूतिदं विश्वसृजं विरामं राजेन्द्रमीशं रघुवंशनाथम् । अचिन्त्यमव्यक्तमनन्तमूर्तिं ज्योतिर्मयं राममहं भजामि ॥ ६५ ॥ अशेषसंसारविहारहीनं आदित्य

पूर्णसुखाभिरामम् । समस्तसाक्षिं तमसः परस्तान्नारायणं विष्णुमहं भजामि ॥ ६६ ॥ मुनीन्द्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम् । परात्परं यत्परमं पवित्रं नमामि रामं महतो महन्तम् ॥ ६७ ॥ ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा । आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन ॥ ६८ ॥ तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा । विप्रा वेदास्तथा यज्ञाः पुराणं धर्मसंहिताः ॥ ६९ ॥ वर्णाश्रमास्तथा धर्मा वर्णधर्मास्तथैव च । यक्षराक्षसगन्धर्वा दिक्पाला दिग्गजादयः ॥ ७० ॥ सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुङ्गव । वसवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः ॥ ७१ ॥ तारका दश दिक्चैव त्वमेव रघुनन्दन । सप्तद्वीपाः समुद्राश्च नगा नद्यस्तथा द्रुमाः ॥ ७२ ॥ स्थावरा जङ्गमाश्चैव त्वमेव रघुनायक । देवतिर्यङ्मनुष्याणां दानवानां तथैव च ॥७३॥ माता पिता तथा भ्राता त्वमेव रघुनन्दन । सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥ ७४ ॥ त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम । त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किंचन ॥७५॥ शान्तं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् । राजीवलोचनं रामं प्रणमामि जगत्पतिम् ॥ ७६ ॥ श्रीवेदव्यास उवाच ॥ ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुङ्गवम् । तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम् ॥ ७७ ॥ श्रीनारद उवाच ॥ यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे । त्वन्मूर्तिदर्शनेनैव

कृतार्थोऽहं च सर्वदा ॥७८॥ धन्योऽहं कृतकृत्योऽहं पुण्योऽहं पुरुषोत्तम। अद्य मे सफलं जन्म जीवितं सफलं च मे ॥७९॥ अद्य मे सफलं ज्ञानमद्य मे सफलं तपः । अद्य मे सफलो यज्ञस्त्वत्पादाम्भोजदर्शनात् ॥ ८० ॥ अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा । त्वत्पादाम्भोरुहद्वन्द्वसद्भक्तिं देहि राघव । ततः परमसंप्रीतः स रामः प्राह नारदम् ॥ ८१ ॥ श्रीराम उवाच ॥ मुनिवर्य महाभाग मुने त्विष्टं ददामि ते । यत्त्वया चेप्सितं सर्वं मनसा तद्भविष्यति ॥ ८२ ॥ श्रीनारद उवाच ॥ वरं न याचे रघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु । इदं प्रियं नाथ वरं प्रयच्छ पुनः पुनस्त्वामिदमेव याचे ॥ ८३ ॥ श्रीवेदव्यास उवाच ॥ इत्येवमीडितो रामः प्रादात्तस्मै वरान्तरम् । वीरो रामो महातेजाः सच्चिदानन्दविग्रहः ॥ ८४ ॥ अद्वैतममलं ज्ञानं स्वनामस्मरणं तथा । अन्तर्दधौ जगन्नाथः पुरतस्तस्य राघवः ॥ ८५ ॥ इति श्रीरघुनाथस्य स्तवराजमनुत्तमम् । सर्वसौभाग्यसंपत्तिदायकं मुक्तिदं शुभम् ॥ ८६ ॥ कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम् । गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितम् ॥ ८७ ॥ यः पठेच्छृणुयाद्वापि त्रिसन्ध्यं श्रद्धयान्वितः । ब्रह्महत्यादिपापानि तत्समानि बहूनि च ॥ ८८ ॥ स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा । गोवधाद्युपपापानि अनृतात्संभवानि

च ॥८९॥ सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः। मानसं वाचिकं पापं कर्मणा समुपार्जितम् ॥ ९० ॥ श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम्। इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ॥ ९१ ॥ रामः सत्यं परं ब्रह्म रामात्किंचिन्न विद्यते। तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत् ॥९२॥ श्रीरामचन्द्र रघुपुङ्गव राजवर्य राजेन्द्र राम रघुनायक राघवेश। राजाधिराज रघुनन्दन रामभद्र दासोऽहमद्य भवतः शरणागतोऽस्मि ॥ ९३ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्ये पुष्पकृतासने मणिमये वीरासने संस्थितम्। अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनीन्द्रैः परं व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ९४ ॥ रामं रत्नकिरीटकुण्डलयुतं केयूरहारान्वितं सीतालंकृतवामभागममलं सिंहासनस्थं विभुम्। सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुम् ॥९५॥ सकलगुणनिधानं योगिभिस्तूयमानं भुजविजितसमानं राक्षसेन्द्रादिमानम्। महितनृपभयानं सीतया शोभमानं स्मर हृदय विमानं ब्रह्म रामाभिधानम् ॥९६॥ रघुवर तव मूर्तिर्मामके मानसाब्जे नरकगतिहरं ते नामधेयं मुखे मे। अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे भवजलधिनिमग्नं रक्ष मामार्तबन्धो ॥ ९७ ॥ रामरत्नमहं वन्दे

चित्रकूटपतिं हरिम् । कौशल्याशुक्तिसंभूतं जानकीकण्ठभूषणम् ॥ ९८ ॥

इति श्रीसनत्कुमारसंहितायां नारदोक्तं रामस्तवराजस्तोत्रं समाप्तम् ।

## २५६ राममहिम्नः स्तोत्रम् ।

श्रीगणेशाय नमः ॥ महामोहावर्तें पतितमिह मां ते शरणगं शरण्यस्त्वत्तोऽन्यः प्रभवति न कोऽप्यत्र जगति । अतस्त्वत्पादाम्भोरुहयुगलमाश्रित्य नितरां स्थितोऽहं संसाराद्वृजिननिचयादुद्धर विभो ॥ १ ॥ निजाव्यक्तेनेदं जगदखिलमिच्छादिकरणैः समुत्पन्नं प्रत्यावसितसततं श्रीरघुपते । युगान्ते सर्वं वै हरसि किल रौद्रेण वपुषा त्वमेकः सर्वात्मन्विहरसि न चान्यो गुणनिधे ॥ २ ॥ रमन्ते योगीन्द्राखिपुरहरमुख्यास्त्वयि सदा समाधौ विश्वात्मन्नियमितहृषीको रघुपते । तथाप्येते पारं निखिलनिगमागोचरविभो महिम्नस्ते गन्तुं गमयितुमलं नैव कुशलाः ॥ ३ ॥ कदाचिद्भौमान्वै गणयति कणान्कोऽपि मतिमान् तथा पारावारोदकलवचयान्वै रघुपते । क्वचिन्नक्षत्रौघं विषमगणनं पारयति वै गुणानां ते पारं गमयितुमलं नैव कुशलाः ॥ ४ ॥ ऋतं सत्यं भूमन्सगुणमगुणं रूपमुभयं चिदानन्दं तद्वै निखिलनिगमैर्व्यवहितम् । समष्टिव्यष्टी ते निगदति विराड्रूपम-

परं तद्देतद्वै किंचित्स्फुरति हृदये चैव विदुषाम् ॥ ५ ॥
विरिञ्चिश्चेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतस्त्वं भूभारं
व्यसनमपहर्तुं सुरपतेः । विभुः कौसल्यायां दशरथगृहे
स्वानुजयुतः समुद्भूतश्चक्रे निजपदकृतार्थां वसुमतीम् ॥ ६ ॥
मुनेर्विश्वामित्राच्छरणद बलां चाप्यतिबलां महाविद्य प्राप्य
प्रणतसुखसौभाग्यद विभो । शरेणैकेन त्वं निशिचरवधूं
चातिमहतीं महाघोरां हत्वा विपिनमभयं चैव कृतवान्
॥ ७ ॥ करालास्यं घोरं निशिचरयुगं कौणपवरं श्रुतीनां
द्रष्टारं मुनिमखविघाते च निरतम् । सुबाहुं मारीचं निशि-
तविशिखेनोरसि दृढं निहत्यैकैकेनाध्वरभुवि पुरा प्राकृतधि-
यम् ॥ ८ ॥ शिलाभूतां शापाच्चरणरजसा गौतमवधूं यथापूर्वां
कृत्वा परमसुभगां चातिविमलाम् । महोत्तुङ्गं चापं सपदि
शितिकण्ठस्य सुदृढं द्विधा खण्डं चक्रे जनकनगरीं प्राप्य
मुनिना ॥ ९ ॥ शरद्राकेशास्यां विमलकलधौताङ्गरुचिरां
स्फुरद्रत्नाकल्पां जनकतनयां विश्वजननीम् । सुभार्यां
यद्रामो विधिवदुपयेमे सुललितां महेन्द्रेशब्रह्मामरमुकुटनी-
राजितपदाम् ॥१०॥ महाघोरं त्रुट्यत्त्रिपुरहरचापस्य निनदं
समाकर्ण्य क्रोधाद्भृगुकुलपतेः क्षत्रियरिपोः । पथि प्राप्तस्यास्य
स्मयमपि जहर्थ त्वमतुलं महाविद्य प्रद्योतनकुलमणे पाहि
नितराम् ॥११॥ सुराणां रक्षायै सपदि पितुराज्ञां सकरुण



समादाय प्रागा वनमनुजयुक्तो वनितया । जनस्थानं प्राप्यामि-

लवटतरूणां फलवतामधश्चक्रे वासो दनुजकुलनाशाय च विभो ॥ १२ ॥ प्रभो लङ्केशस्य प्रबलतमवीर्यस्य भगिनीं विरूपां कृत्वा वै दनुजखरमुख्यान्निशिचरान् । सुरारातीन्हत्वा द्विजकुलविघातेषु निरतान्निरातङ्कं चक्रे विपिनमपि स्वैरं जनपदम् ॥ १३ ॥ दशग्रीवाज्ञप्तः कनकमृगरूपेण विचरन् विचित्रो मारीचः प्रसभमभियातः स्वनिकटे । असौ मायावीति प्रणतजनसौभाग्यद विभो त्वया ज्ञात्वा नीतः सपदि विशिखेनान्तकपुरीम् ॥ १४ ॥ मुमूर्षुः पौलस्त्यः कपटयतिवेषेण कुमतिः परोक्षं सीताया हरणमकरोच्छ्रीरघुपते । सुराणां रक्षायै रजनिचरनाथस्य हननं विमृश्यैतत्सर्वं खरहर तत्रैवेङ्गितमभूत् ॥ १५ ॥ वियोगे जानक्यास्त्विह मनुजभावेन विचरन्जटायुं दृष्ट्वा वै विपिनगतमासन्नमरणम् । त्वया तस्योद्धारः स्वकरकमलेनैव विहितस्तवैतद्वात्सल्यं विलसति हि भक्तेषु नितराम् ॥ १६ ॥ कबन्धं क्रव्यादं निशितकरवालेन महता द्रुतं हत्वा पम्पातटमनुजयुक्तश्च गतवान् । युवां दृष्ट्वा ज्ञातुं प्लवगपतिना वायुतनयः समाज्ञप्तश्चागाद्वरद तव पादाब्जयुगलम् ॥ १७ ॥ समाकर्ण्य त्वत्तः सकलमसुरारातिममलं विदित्वा निःशङ्कं दशरथसुतं त्वां रघुपते । महोत्साहोन्नीतः सपदि गिरिपृष्ठे हनुमता प्रभुः सुग्रीवेण प्लवगपतिना सख्यमकरोत् ॥ १८ ॥ कपीशं हत्वा वालिनमतुलवीर्यं समयभवं दुरापं [illegible]

हैरण्यसुलभम् । त्वया सुग्रीवाय प्लवगकुलराजेन्द्रपदवी प्रदत्ता देवेश प्रणतजनवात्सल्यजलधे ॥ १९ ॥ प्रतापात्ते नूनं सलिलनिधिमुल्लङ्घ्य तरसा गतो लङ्कां दृष्ट्वा जनकतनयां चातिविमलाम् । निहत्याक्षं दग्ध्वा पुरमथ समुत्पाट्य विपिनं हनूमांस्त्वत्पादं पुनरपि समागाद्रघुपते ॥ २० ॥ विदित्वा सीतायाः पवनजमुखाद्दुःखमतुलं निहन्तुं क्रव्यादेश्वरमपि तथा राक्षसकुलम् । प्रतस्थे सुग्रीवाङ्गदहनुमदाद्यैः कपिभटैः सुगुप्तामादाय प्लवगकुलसेनां च महतीम् ॥ २१ ॥ प्लवङ्गैर्भल्लूकैरमितभुजवीर्यैः परिवृतो निषङ्गी कोदण्डी शरमपि दधानः करतले । क्रमान्मार्गं नीत्वा सलिलनिधितीरे सुविपुले गतस्त्वं सुग्रीवाङ्गदहनुमदाद्यैः कपिवरैः ॥ २२ ॥ तवाग्रे तत्रागाच्छरणद दशास्यानुजवरः प्रपन्नस्त्वत्पादाम्बुजयुगलमाराध्यममरैः । कृपापारावारामितगुणनिधे सिन्धुपुलिने त्वया दत्ता तस्मै वृजिनहर लङ्केशपदवी ॥ २३ ॥ उषित्वा तत्तीरे त्रिदिनमरविन्दाक्ष कपिभिस्ततः किंचित्क्रोधात्त्रियमनभयात्ते जलनिधिः । पुरः प्रह्वीभूतो रुचिरवचनैः श्रीरघुपते स्तुतिं चक्रे नत्वा पुलकिततनुर्गद्गदगिरा ॥ २४ ॥ अकूपारस्यान्तादृशदिशगतैर्वानरभटैस्त्वयाऽऽज्ञप्तैर्नीता निजभुजबलैः प्रस्तरचयाः । पुनस्तैः पाषाणैर्विपुल इह नीलेन रचितो महासेतुर्वार्धौ तव विदितनाम्नोऽस्ति महिमा ॥ २५ ॥ यदेते पाषाणाः सततमुदके मज्जनपरास्तरन्त्यब्धौ नन

जगति परमं चाद्भुतमिदम् । किमाश्चर्यं तत्र क्षणचलितनेत्रान्तविभवः कटाक्षस्ते नूनं जगति कति ब्रह्माण्डरचनाः ॥ २६ ॥ समुत्तार्याशेषान्प्लवगनिवहाँल्लक्ष्मणयुतस्ततो लङ्कां गत्वा स्वयमपि समुत्तीर्णजलधिः । निहत्याजौ सर्वं रजनिचरवृन्दं च सकुलं दशग्रीवं हत्वा त्रिमल परमैश्वर्यमकरोः ॥ २७ ॥ विरिञ्चीशेन्द्राद्यैरमरनिवहैः सिद्धमुनिभिः स्तुतः स्तोत्रैः कृत्वा कुसुमचयवृष्टिं सुविपुलाम् । कटाक्षेणैवैतांस्त्रिदशमुनिमुख्यान्करुणया विलोक्य प्रध्वस्तं भयमखिलमेषां रघुपते ॥ २८ ॥ प्रभो त्वं सुग्रीवप्रमुखविविधैर्वानरभटैर्युतो वैदेहीं वै दहनसुविशुद्धां सुविपुलाम् । समादाय स्थित्वा धनपतिविमाने सुविमले वितन्वन्स्वानां वै मुदमतुलमागान्निजपुरीम् ॥ २९ ॥ सहस्रं वर्षाणामयुतमपि कुर्वन्वसुमतीं सनाथां वैदेहीरमण कृतवान् राज्यमतुलम् । अयोध्यायां देवासुरनृपकिरीटेषु निचितैर्महारत्नैर्नीराजितचरणपङ्केरुह विभो ॥ ३० ॥ कृशानुः शेषाढ्यः शशधरयुतो विजयमति ते भजन्ति ध्यायंतस्तव चरणपङ्केरुहयुगम् । गृहे तेषां पद्मा विहरति सुखे गीः सुललिता सुभोगान्भुक्त्वान्ते तव वरपदं यान्ति परमम् ॥ ३१ ॥ खबीजं शेषाग्नौ दहनमपरश्चैव पवनो नमोऽन्तःपङ्क्तिर्णापरमपदहेतुश्च भजताम् । इमं मन्त्रं यो वै जपति गुरुवक्त्रादधिगतं

घनश्यामं विद्युत्प्रभवसनमाकल्परुचिरं सरोजाक्षं चैवामितमदनलावण्यसुभगम् । तडिद्वर्णां वामे जनकतनयां राघवमुखं प्रपश्यन्तीं ध्यायन् भजति परमां सिद्धिमतुलाम् ॥ ॥ ३३ ॥ अनन्तान्याहुर्वै तव विविधरूपाणि भगवन्न तानि ज्ञातुं वै कथमपि समर्थाश्च विबुधाः । विभूतीनामन्तं तव विमल को वेत्ति नितरामतद्व्यावृत्त्या वै त्वयि सकलवेदाश्च चकिताः ॥ ३४ ॥ तवेदं यद्रूपं सजलजलदाभं सुललितं तदेतत्तत्त्वज्ञा मुनिवरगणा हृत्सरसिजे । मुहुर्ध्यायन्ते वै विगतविषयाः सङ्गरहिता ययुर्नित्यानन्दं पदममरवन्द्यं रघुपते ॥ ३५ ॥ त्वमिन्दुस्त्वं सोमस्त्वमसि तरणिस्त्वं हुतवहस्त्वमापस्त्वं भूमिस्त्वमसि पवनस्त्वं च गगनम् । विरिञ्चिस्त्वं रुद्रस्त्वमसि सकलं दृश्यमिह यत्त्वदन्यद्वस्त्वेकं न हि जगति भूमन्रघुपते ॥ ३६ ॥ त्वमेवादौ भूमन्निगमनिचयानां जलनिधौ निमग्नानां चैवोद्धरणमकरोर्मीनवपुषा । सुधाकामैर्नीतं सलिलनिधिनिर्मन्थनविधौ गिरिं पृष्ठे त्वं वै दृढकमठरूपेण धृतवान् ॥ ३७ ॥ निहत्याजौ दैत्यं प्रलयजलधौ घोरमतुलं समुद्धारं भूमेर्गिरिकुलयुतायाः सरभसम् । महादंष्ट्राग्रेणामितगुणनिधे त्वं च कृतवान् ॥ ३८ ॥ स्वभक्तं प्रह्लादं परमविदुषामार्यममलं विदित्वा तं पित्रा कृतविविधदण्डं कुमतिना । विधायोग्रं रूपं नरहरिविचित्रं विनयनं जघान त्वं दैत्यं परममितवीर्यं रघुपते

॥ ३९ ॥ सुनासीरैश्वर्यं हृतमतुलवीर्येण बलिना विदित्वेदं राम प्रणतजनवात्सल्यजलधे । स्तुतस्त्वं शक्राद्यैरमरनिवहैर्वामनवपुर्विधायोग्रं वैरोचनमपि बबन्धामररिपुम् ॥ ४० ॥ कुलं क्षात्रं सप्तत्रिगुणमपि कृत्वा रघुपते जघान त्वं राज्ञां प्रबलमिह शस्त्रास्त्रविशदम् । निहत्योग्रान्कंसप्रमुखदितिजान्यादवकुले त्वमाविर्भूयोग्रं समरभुवि भारं च हृतवान् ॥ ४१ ॥ अनन्तान्येवं वै तव विविधरूपाणि च विभो प्रवक्तुं तानीह प्रभवति नकोऽप्यत्र जगति। परात्मन्श्रीराम त्रिगुणरहिताकारपरमप्रभो पारावारामितगुणनिधे चिद्घन विभो ॥ ४२ ॥ नमस्ते श्रीराम ह्यमितगुणग्रामाय सततं नमो भूयो भूयो पुनरपि नमस्ते रघुपते । नमो वेदैर्वन्द्याखिलमुनिगणाराध्य भगवन्नमो भूयो भूयस्तव चरणपङ्केरुहयुगे ॥ ४३ ॥ मया ते पादाम्भोरुहयुगलमाश्रित्य नितरामयोध्यायां भक्त्या विविधपदरम्यैः सुरचितम् । इदं रामस्तोत्रं प्रपठति नरो यः प्रतिदिनं स भुक्त्वा भोगान्वै भजति परमं शाश्वतपदम् ॥ ४४ ॥ सहस्रैः शेषो वै प्रभवति न वक्त्रैर्गुणगणान् प्रवक्तुं चाकल्पं कथमपि च ते राम सततम् । अतस्त्वां कः स्तोतुं प्रभवति ह्यलं श्रीरघुपते व्रजन्त्याकाशस्य क्वचिदपि च पारं हि मशकाः ॥ ४५ ॥ तुभ्यं नमो भगवते रघुनन्दनाय श्रीजानकीप्रियतमाय खरान्तकाय । योगीन्द्रमुनिवृन्दसुवन्द्य

याय संसारदुःखशमनाय नमो नमस्ते ॥ ४६ ॥ कामाद्या दुर्जयाश्चेन्मम भवतु पुनर्भुक्तियोषित्सुकामः क्रोधश्चेत्तावकै वै तव चरणयुगम्भोरुहे स्याच्च लोभः । मोहश्चेद्ध्यानयोगे भवतु मम पुनर्मत्सरोमत्सरो वै त्वत्पादाम्भोजसौख्यस्थितिमिह नितरां नैव पश्यामि भूमौ ॥ ४७ ॥

इति श्रीमच्चतुर्भुजाचार्यचरणसरोजनिवसितमनश्चञ्चरीकास्वादितचिन्मकरन्दश्रीमद्विजयरामाचार्यविरचितं श्रीराममहिम्नः स्तोत्रं समाप्तम् ।

## २५७ रामभुजङ्गप्रयातस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विशुद्धं परं सच्चिदानन्दरूपं गुणाधारमाधारहीनं वरेण्यम् । महान्तं विभान्तं गुहान्तं गुणान्तं सुखान्तं स्वयंधाम रामं प्रपद्ये ॥ १ ॥ शिवं नित्यमेकं विभुं तारकाख्यं सुखाकारमाकारशून्यं सुमान्यम् । महेशं कलेशं सुरेशं परेशं नरेशं निरीशं महीशं प्रपद्ये ॥ २ ॥ यदाऽवर्णयत्कर्णमूलेऽन्तकाले शिवो राम रामेति रामेति काश्याम् । तदेकं परं तारकब्रह्मरूपं भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥ ३ ॥ महारत्नपीठे शुभे कल्पमूले सुखासीनमादित्यकोटिप्रकाशम् । सदा जानकीलक्ष्मणोपेतमेकं सदा रामचन्द्रं भजेऽहं भजेऽहम् ॥ ४ ॥ क्वणद्रत्नमञ्जीरपादारविन्दं लसन्मेखलाचारुपीताम्बराढ्यम् । महारत्नहारोल्ल-

सत्कौस्तुभाङ्गं नदच्चञ्चरीमञ्जरीलोलमालम् ॥ ५ ॥ लसच्च-न्द्रिकास्मेरशोणाधराभं समुद्यत्पतङ्गेन्दुकोटिप्रकाशम् । नम-द्ब्रह्मरुद्रादिकोटीररत्नस्फुरत्कान्तिनीराजनाराधिताङ्घ्रिम् ॥ ६ ॥ पुरः प्राञ्जलीनाञ्जनेयादिभक्तान्स्वचिन्मुद्रया भद्रया बोधयन्तम् । भजेऽहं भजेऽहं सदा रामचन्द्रं त्वदन्यं न मन्ये न मन्ये न मन्ये ॥ ७ ॥ यदा मत्समीपं कृतान्तः समेत्य प्रचण्डप्रकोपैर्भटैर्भीषयेन्माम् । तदाऽऽविष्करोपि त्वदीयं स्वरूपं सदापत्प्रणाशं सकोदण्डबाणम् ॥ ८ ॥ निजे मानसे मन्दिरे संनिधेहि प्रसीद प्रसीद प्रभो रामचन्द्र । ससौमित्रिणा कैकयीनन्दनेन स्वभक्त्यानुभक्त्या च संसेव्य-मान ॥ ९ ॥ स्वभक्ताग्रगण्यैः कपीशैर्महीशैरनीकैरनेकैश्च राम प्रसीद । नमस्ते नमोऽस्त्वीश राम प्रसीद प्रशाधि प्रशाधि प्रकाशं प्रभो माम् ॥ १० ॥ त्वमेवासि दैवं परं मे यदेकं सुचैतन्यमेतत्त्वदन्यं न मन्ये । यतोऽभूदमेयं वियद्वा-युतेजोजलोर्व्यादिकार्यं चरं चाचरं च ॥ ११ ॥ नमः सच्चि-दानन्दरूपाय तस्मै नमो देवदेवाय रामाय तुभ्यम् । नमो जानकीजीवितेशाय तुभ्यं नमः पुण्डरीकायताक्षाय तुभ्यम् ॥ १२ ॥ नमो भक्तियुक्तानुरक्ताय तुभ्यं नमः पुण्यपुञ्जैक-लभ्याय तुभ्यम् । नमो वेदवेद्याय चाद्याय पुंसे नमः सुन्द-रायेन्दिरावल्लभाय ॥ १३ ॥ नमो विश्वकर्त्रे नमो विश्वहर्त्रे नमो विश्वभोक्त्रे नमो विश्वमात्रे । नमो विश्वनेत्रे नमो विश्व-

जेत्रे नमो विश्वपित्रे नमो विश्वमात्रे ॥ १४ ॥ नमस्ते नमस्ते समस्तप्रपञ्चप्रभोगप्रयोगप्रमाणप्रवीण । मदीयं मनस्त्वत्पदद्वन्द्वसेवां विधातुं प्रवृत्तं सुचैतन्यसिद्ध्यै ॥ १५ ॥ शिलापि त्वदङ्घ्रिक्षमासंगिरेणुप्रसादाद्धि चैतन्यमाधत्त राम । नरस्त्वत्पदद्वन्द्वसेवाविधानात्सुचैतन्यमेतीति किं चित्रमत्र ॥ १६ ॥ पवित्रं चरित्रं विचित्रं त्वदीयं नरा ये स्मरन्त्यन्वहं रामचन्द्र । भवन्तं भवान्तं भरन्तं भजन्तो लभन्ते कृतान्तं न पश्यन्त्यतोऽन्ते ॥ १७ ॥ स पुण्यः स गण्यः शरण्यो ममायं नरो वेद यो देवचूडामणिं त्वाम् । सदाकारमेकं चिदानन्दरूपं मनोवागगम्यं परं धाम राम ॥ १८ ॥ प्रचण्डप्रतापप्रभावाभिभूतप्रभूतारिवीर प्रभो रामचन्द्र । बलं ते कथं वर्ण्यतेऽतीव बाल्ये यतोऽखण्डि चण्डीशकोदण्डदण्डम् ॥ १९ ॥ दशग्रीवमुग्रं सपुत्रं समित्रं सरिद्दुर्गमध्यस्थरक्षोगणेशम् । भवन्तं विना राम वीरो नरो वाऽसुरो वाऽमरो वा जयेत्कस्त्रिलोक्याम् ॥२०॥ सदा राम रामेति रामामृतं ते सदा राममानन्दनिष्यन्दकन्दम् । पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम् ॥ २१ ॥ सदा राम रामेति रामामृतं ते सदाराममानन्दनिष्यन्दकन्दम् । पिबन्नन्वहं नन्वहं नैव मृत्योर्बिभेमि प्रसादादसादात्तवैव ॥२२॥ असीतासमेतैरकोदण्डभूषैरसौमित्रिवन्द्यैरचण्डप्रतापैः । अलङ्केशकालैरसुग्रीवमित्रैररामाभिधेयैरलं दैवतैर्नः ॥२३॥ अवी-

रासनस्थैरचिन्मुद्रिकाढ्यैरभक्ताञ्जनेयादितत्त्वप्रकाशैः। अमन्दारमूलैरमन्दारमालैररामाभिधेयैरलं दैवतैर्नः ॥ २४ ॥ असिन्धुप्रकोपैरवन्द्यप्रतापैरबन्धुप्रयाणैरमन्दस्मिताढ्यैः । अदण्डप्रवासैरखण्डप्रबोधैररामाभिधेयैरलं दैवतैर्नः॥२५॥ हरे राम सीतापते रावणारे खरारे मुरारेऽसुरारे परेति। लपन्तं नयन्तं सदा कालमेवं समालोकयालोकयाशेषबन्धो ॥२६॥ नमस्ते सुमित्रासुपुत्राभिवन्द्य नमस्ते सदा कैकयीनन्दनेड्य। नमस्ते सदा वानराधीशवन्द्य नमस्ते नमस्ते सदा रामचन्द्र ॥ ॥ २७ ॥ प्रसीद प्रसीद प्रचण्डप्रताप प्रसीद प्रसीद प्रचण्डारिकाल। प्रसीद प्रसीद प्रपन्नानुकम्पिन् प्रसीद प्रसीद प्रभो रामचन्द्र ॥ २८ ॥ भुजङ्गप्रयातं परं वेदसारं मुदा रामचन्द्रस्य भक्त्या च नित्यम् ॥ पठन्सन्ततं चिन्तयन्स्वान्तरङ्गे स एव स्वयं रामचन्द्रः स धन्यः ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीरामभुजङ्गप्रयातस्तोत्रं संपूर्णम्।

---

# कृष्णस्तोत्राणि ।

## २५८ श्रीकृष्णकवचम् ।

श्रीगणेशाय नमः ॥ नारद उवाच ॥ श्रीकृष्णकवचं वक्ष्ये श्रीकीर्तिविजयप्रदम् । कान्तारे पथि दुर्गे च सर्वरक्षाकरं नृणाम् ॥ १ ॥ ध्यात्वा नीलोत्पलश्यामं नीलकुञ्चितकुन्तलम् । बर्हिबर्होल्लसन्मौलिं शरचन्द्रनिभाननम् ॥ २ ॥ राजीवलोचनं राजद्वेणुनादविभूषितम् । दीर्घपीनमहाबाहुं श्रीवत्साङ्कितवक्षसम् ॥ ३ ॥ पीताम्बरधरं देवं गोपीगोकुलसेवितम् । रुक्मिणीसत्यभामाभ्यां संश्रितोभयपार्श्वकम् ॥४॥ भूभारहरणोद्युक्तं कृष्णं गीर्वाणवन्दितम् । जपेन्नित्यं मन्त्रं भक्त्या मन्त्रं सर्वार्थसिद्धये ॥ ५ ॥ ॐ श्रीकृष्णकवचस्य विश्वामित्र ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता । मम सर्वार्थसिद्धये जपे विनियोगः ॥ हृदयं वसुदः पातु मूर्धानं

मम सर्वदः । ललाटं देवकीसूनुर्भुवौ नन्दसुनन्दनः ॥ ६ ॥ नयने पूतनाहन्ता नासां शकटभञ्जनः । यमलार्जुनहृत्कर्णौ कपोलौ नागमर्दनः ॥ ७ ॥ दन्तान् गोपालकः पातु जिह्वां हैयङ्गवीनभुक् । ओष्ठं धेनुकजित्पायादधरं कौशिकात्मजः ॥ ८ ॥ चिबुकं पातु गोविन्दो बलदेवानुजो मुखम् । अक्रूरसहितः कण्ठं कुक्षौ दन्तिमदान्तकः ॥ ९ ॥ भुजौ चाणूरवैरी मे करौ कंसनिषूदनः । हृदयं पातु मे कृष्ण उत्तङ्काय वरप्रदः ॥ १० ॥ उदरं मथुरानाथो नाभिं द्वारवतीपतिः । रुक्मिणीवल्लभः पृष्ठं जघनं शिशुपालहा ॥ ११ ॥ ऊरू पाण्डवदूतो मे जानुनी पार्थसारथिः । विश्वरूपधरो जङ्घे प्रपदे भूमिपालकः ॥ १२ ॥ चरणौ यादवः पातु पातु कृष्णोऽखिलं वपुः । दिवा पातु जगन्नाथो रात्रौ नारायणः स्वयम् ॥ १३ ॥ एतत्कृष्णबलोपेतं यः कृष्णकवचं पठेत् । स सर्वतो भयान्मुक्तः कृष्णे भक्तिमवाप्नुयात् ॥ १४ ॥

इति श्रीवाराहपुराणीयं कृष्णकवचं संपूर्णम् ।

---

## २५९ श्रीकृष्णस्तवराजः ।

श्रीगणेशाय नमः ॥ श्रीमहादेव उवाच ॥ शृणु देवि प्रवक्ष्यामि स्तोत्रं परमदुर्लभम् । यज्ज्ञात्वा न पुनर्गच्छेन्नरो निरययातनाम् ॥ १ ॥ नारदाय च यत्प्रोक्तं ब्रह्मपुत्रेण धीमता । सनत्कुमारेण पुरा योगीन्द्रगुरुवर्त्मना ॥ २ ॥

श्रीनारद उवाच ॥ प्रसीद भगवन्मह्यमज्ञानात्कुण्ठितात्मने। तवाङ्घ्रिपङ्कजरजोरागिणीं भक्तिमुत्तमाम् ॥ ३ ॥ अज प्रसीद भगवन्नमितद्युतिपञ्जर। अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥ ४ ॥ स्वसंवेद्य प्रसीदास्मदानन्दात्मन्ननामय। अचिन्त्यसार विश्वात्मन्प्रसीद परमेश्वर ॥ ५ ॥ प्रसीद तुङ्ग तुङ्गानां प्रसीद शिवशोभन। प्रसीद गुणगम्भीर गम्भीराणां महाद्युते ॥ ६ ॥ प्रसीद व्यक्तविस्तीर्ण विस्तीर्णानामगोचर। प्रसीदार्द्रार्द्रजातीनां प्रसीदान्तान्तदायिनाम् ॥७॥ गुरोर्गरीयः सर्वेश प्रसीदानन्त देहिनाम्। जय माधव मायात्मन् जय शाश्वत शङ्खभृत् ॥ ८ ॥ जय शङ्खधर श्रीमन् जय नन्दकनन्दन। जय चक्रगदापाणे जय देव जनार्दन ॥ ९ ॥ जय रत्नवराबद्धकिरीटाक्रान्तमस्तक। जय पक्षिपतिच्छायानिरुद्धार्ककरारुण ॥ १० ॥ नमस्ते नरकाराते नमस्ते मधुसूदन। नमस्ते ललितापाङ्ग नमस्ते नरकान्तक ॥ ११ ॥ नमः पापहरेशान नमः सर्पभयापह। नमः संभूतसर्वात्मन्नमः संभृतकौस्तुभ ॥ १२ ॥ नमस्ते नयनातीत नमस्ते भयहारक। नमो विभिन्नवेषाय नमः श्रुतिपथातिग ॥ १३ ॥ नमस्त्रिमूर्तिभेदेन सर्गस्थित्यन्तहेतवे। विष्णवे त्रिदशारातिजिष्णवे परमात्मने ॥ १४ ॥ चक्रभिन्नारिचक्राय चक्रिणे चक्रवल्लभ। विश्वाय विश्ववन्द्याय विश्वभूतानुवर्तिने ॥ १५ ॥ नमोऽस्तु योगिध्येयात्मन्नमस्त्वध्यात्मरूपिणे।

भक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ॥ १६ ॥ पूजनं हवनं चेज्या ध्यानं पश्चान्नमस्क्रिया । देवेश कर्म सर्वं मे भवेदाराधनं तव ॥ १७ ॥ इति हवनजपार्चाभेदतो विष्णुपूजानियतहृदयकर्मा यस्तु मन्त्री चिराय। स खलु सकलकामान्प्राप्य कृष्णान्तरात्मा जननमृतिविमुक्तोऽत्युत्तमां भक्तिमेति ॥ १८ ॥ गोगोपगोपिकावीतं गोपालं गोषु गोप्रदम् । गोपैरीड्यं गोसहस्रैर्नौमि गोकुलनायकम् ॥ १९ ॥ प्रीणयेदनया स्तुत्या जगन्नाथं जगन्मयम् । धर्मार्थकाममोक्षाणामाप्तये पुरुषोत्तमम् ॥ २० ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे श्रीकृष्णस्तवराजः संपूर्णः ।

---

## २६० श्रीकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वन्दे नवघनश्यामं पीतकौशेयवाससम् । सानन्दं सुन्दरं शुद्धं श्रीकृष्णं प्रकृतेः परम् ॥ १ ॥ राधेशं राधिकाप्राणवल्लभं वल्लवीसुतम् । राधासेवितपादाब्जं राधावक्षःस्थलस्थितम् ॥ २ ॥ राधानुगं राधिकेष्टं राधापहृतमानसम् । राधाधारं भवाधारं सर्वाधारं नमामि तम् ॥ ३ ॥ राधाहृत्पद्ममध्ये च वसन्तं संततं शुभम् । राधासहचरं शश्वद्राधाज्ञापरिपालकम् ॥ ४ ॥ ध्यायन्ते योगिनो योगान् सिद्धाः सिद्धेश्वराश्च यम् । तं ध्यायेत्सततं शुद्धं भगवन्तं सनातनम् ॥ ५ ॥ सेवन्ते सततं सन्तो ब्रह्मेशशेषसंज्ञकाः ।

सेवन्ते निर्गुणं ब्रह्म भगवन्तं सनातनम् ॥ ६ ॥ निर्लिप्तं च निरीहं च परमात्मानमीश्वरम् । नित्यं सत्यं च परमं भगवन्तं सनातनम् ॥ ७ ॥ यं सृष्टेरादिभूतं च सर्वबीजं परात्परम् । योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् ॥ ८ ॥ बीजं नानावताराणां सर्वकारणकारणम् । वेदावेद्यं वेदबीजं वेदकारणकारणम् ॥ ९ ॥ योगिनस्तं प्रपद्यन्ते भगवन्तं सनातनम् । इत्येवमुक्त्वा गन्धर्वः पपात धरणीतले ॥ १० ॥ ननाम दण्डवद्भूमौ देवदेवं परात्परम् । इति तेन कृतं स्तोत्रं यः पठेत्प्रयतः शुचिः ॥ ११॥ इहैव जीवन्मुक्तश्च परं याति परां गतिम् । हरिभक्तिं हरेर्दास्यं गोलोके च निरामयः॥१२॥ पार्षदप्रवरत्वं च लभते नात्र संशयः ॥१३॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे गन्धर्वोक्तं श्रीकृष्णस्तोत्रं संपूर्णम् ।

---

## २६१ अथ श्रीकृष्णलहरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कदा वृन्दारण्ये विपुलयमुनातीरपुलिने चरन्तं गोविन्दं हलधरसुदामादिसहितम् । अहो कृष्ण स्वामिन् मधुरमुरलीमोहन विभो प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १ ॥ कदा कालिन्दीयैर्हरिचरणमुद्राङ्किततटैः स्मरन्गोपीनाथं कमलनयनं सस्मितमुखम् । अहो पूर्णानन्दाम्बुजवदन भक्तैकललन प्रसीदेति क्रो० ॥२॥

कदाचित्खेलन्तं व्रजपरिसरे गोपतनयैः कुतश्चित्संप्राप्तं किमपि भयितं गोपललनम्। अये राधे किंवा हरसि रसिके कञ्चुकयुगं प्रसीदेति क्रो० ॥ ३ ॥ कदाचिद्गोपीनां हसितचकितस्निग्धनयनं स्थितं गोपीवृन्दे नटमिव नटन्तं सुललितम्। सुराधीशैः सर्वैः स्तुतपदमिमं श्रीहरिमिति प्रसीदेति क्रो० ॥ ४ ॥ कदाचित्सच्छायाश्रितमभिमहान्तं यदुपतिं समाधिस्वच्छायां चल इव विलोलैकमकरम्। अये भक्तोद्वाराम्बुजवदन नन्दस्य तनय प्रसीदेति क्रो० ॥ ५ ॥ कदाचित्कालिन्द्यास्तटतरुकदम्बे स्थितममुं स्मयन्तं साकूतं हृतवसनगोपीस्तुतपदम्। अहो शक्रानन्दाम्बुजवदन गोवर्धनधर प्रसीदेति क्रो० ॥ ६ ॥ कदाचित्कान्तारे विजयसखमिष्टं नृपसुतं वदन्तं पार्थेति नृपसुतसखे बन्धुरिति च। भ्रमन्तं विश्रान्तं श्रितमुरलिमास्यं हरिममी प्रसीदेति क्रो० ॥७॥ कदा द्रक्ष्ये पूर्णं पुरुषममलं पङ्कजदृशमहो विष्णो नाथ रसिकमुरलीमोहन विभो। दयां कर्तुं दीने परमकरुणाब्धे समुचितं प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्॥८॥

इति श्रीकृष्णलहरीस्तोत्रं संपूर्णम्।

---

## २६२ भगवन्मानसपूजा।

श्रीगणेशाय नमः॥ हृदम्भोजे कृष्णः सजलजलदश्यामलतनुः सरोजाक्षः स्रग्वी मुकुटकटकाद्याभरणवान्। शर-

द्राकानाथप्रतिमवदनः श्रीमुरलिकां वहन्ध्येयो गोपीगणप-रिवृतः कुङ्कुमचितः ॥ १ ॥ पयोम्भोधेर्द्वीपान्मम हृदयमायाहि भगवन्मणिव्रातभ्राजत्कनकवरपीठं भज हरे। सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैर्गृहाणेदं दूर्वाफलजलवदर्घ्यं मुररिपो ॥ २ ॥ त्वमाचामोपेन्द्र त्रिदशसरिदम्भोऽतिशिशिरं भजस्वेमं पञ्चामृतरचितमाप्लावमघहन्। द्युनद्याः कालिन्द्या अपि कनककुम्भस्थितमिदं जलं तेन स्नानं कुरु कुरु कुरुस्वाचमनकम् ॥ ३ ॥ तडिद्वर्णे वस्त्रे भयविजयकान्ताधिहरण प्रलम्बारिभ्रातर्मृदुलमुपवीतं कुरु गले। ललाटे पाटीरं मृगमदयुतं धारय हरे गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४ ॥ दशाङ्गं धूपं सद्वरदचरणाग्रेऽर्पितमये मुखं दीपेनेन्दुप्रभवरजसा देव कलये। इमौ पाणी वाणीपतिनुत सकर्पूररजसा विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ५ ॥ सदातृप्तान्नं षड्रसवदखिलव्यञ्जनयुतं सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम्। यशोदासूनो तत्परमदययाऽशान सखिभिः प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६ ॥ सचन्द्रं ताम्बूलं मुखरुचिकरं भक्षय हरे फलं स्वादु प्रीत्यापरिमलवदास्वादय चिरम्। सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥ ७ ॥ विजातीयैः पुष्पैरभिसुरभिभिर्बिल्वतुलसी-



युतैश्चेमं पुष्पाञ्जलिमजित ते मूर्ध्नि निदधे। तव प्रादक्षिण्य-

क्रमणमघविध्वंसि रचितं चतुर्वारं विष्णो जनिपथगतिश्रान्तविदुषा ॥ ८ ॥ नमस्कारोऽष्टाङ्गः सकलदुरितध्वंसनपटुः कृतं नृत्यं गीतं स्तुतिरपि रमाकान्त त इमम् । तव प्रीत्यै भूयादहमपि च दासस्तव विभो कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ॥ ९ ॥ सदा सेव्यः कृष्णः सजलघननीलः करतले दधानो दध्यन्नं तदनु नवनीतं मुरलिकाम् । कदाचित्कान्तानां कुचकलशपत्रालिरचनासमासक्तं स्निग्धैः सह शिशुविहारं विरचयन् ॥ १० ॥ मणिकर्णीच्छया जातमिदं मानसपूजनम् । यः कुर्वीतोपसि प्राज्ञस्तस्य कृष्णः प्रसीदति ॥ ११ ॥

इति श्रीशंकराचार्यविरचितं भगवन्मानसपूजनम् ।

---

## २६२ देवकृता गर्भस्तुतिः ।

श्रीगणेशाय नमः ॥ देवा ऊचुः । जगद्योनिरयोनिस्त्वमनन्तोऽव्यय एव च । ज्योतिःस्वरूपो ह्यनिशः सगुणो निर्गुणो महान् ॥ १ ॥ भक्तानुरोधात्साकारो निराकारो निरङ्कुशः । निर्व्यूहो निखिलाधारो निःशङ्को निरुपद्रवः ॥२॥ निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः । स्वात्मारामः पूर्णकामो निमिषो नित्य एव च ॥ ३ ॥ स्वेच्छामयः सर्वहेतुः सर्वः सर्वगुणाश्रयः । सर्वदो दुःखदो दुर्गो दुर्जनान्तक एव च ॥ ४ ॥ सुभगो दुर्भगो वाग्मी दुराराध्यो दुरत्ययः ।

वेदहेतुश्च वेदश्च वेदाङ्गो वेदविद्विभुः ॥ ५ ॥ इत्येवमुक्त्वा देवाश्च प्रणेमुश्च मुहुर्मुहुः । हर्षाश्रुलोचनाः सर्वे ववृषुः कुसुमानि च ॥ ६ ॥ द्विचत्वारिंशन्नामानि प्रातरुत्थाय यः पठेत् । दृढां भक्तिं हरेर्दास्यं लभते वाञ्छितं फलम् ॥ ७ ॥ इत्येवं स्तवनं कृत्वा देवास्ते स्वालयं ययुः । बभूव जलवृष्टिश्च निश्चेष्टा मथुरा पुरी ॥ ८ ॥

इति देवकृता गर्भस्तुतिः संपूर्णा ।

## २६४ वसुदेवकृतश्रीकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वसुदेव उवाच । त्वामतीन्द्रियमव्यक्तमक्षरं निर्गुणं विभुम् । ध्यानासाध्यं च सर्वेषां परमात्मानमीश्वरम् ॥ १ ॥ स्वेच्छामयं सर्वरूपं स्वेच्छारूपधरं परम् । निर्लिप्तं परमं ब्रह्म बीजरूपं सनातनम् ॥ २ ॥ स्थूलात्स्थूलतरं प्राप्तमतिसूक्ष्ममदर्शनम् । स्थितं सर्वशरीरेषु साक्षिरूपमदृश्यकम् ॥ ३ ॥ शरीरवन्तं सगुणमशरीरं गुणोत्करम् । प्रकृतिं प्रकृतीशं च प्राकृतं प्रकृतेः परम् ॥ ४ ॥ सर्वेशं सर्वरूपं च सर्वान्तकरमव्ययम् । सर्वाधारं निराधारं निर्व्यूहं स्तौमि किं विभुम् ॥ ५ ॥ अनन्तस्तवनेऽशक्तोऽशक्ता देवी सरस्वती । यं वा स्तोतुमशक्तश्च पञ्चवक्त्रः षडाननः ॥ ६ ॥ चतुर्मुखो वेदकर्ता यं स्तोतुमक्षमः सदा । गणेशो न समर्थश्च योगीन्द्राणां गुरोर्गुरुः ॥ ७ ॥ ऋषयो देवता-

श्चैव मुनीन्द्रमनुमानवाः । स्वप्ने तेषामदृश्यं च त्वामेवं किं स्तुवन्ति ते ॥ ८ ॥ श्रुतयः स्तवनेऽशक्ताः किं स्तुवन्ति विपश्चितः । विहायैवं शरीरं च बालो भवितुमर्हसि ॥ ९ ॥ वसुदेवकृतं स्तोत्रं त्रिसंध्यं यः पठेन्नरः । भक्तिं दास्यमवाप्नोति श्रीकृष्णचरणाम्बुजे ॥ १० ॥ विशिष्टं पुत्रं लभते हरिदासं गुणान्वितम् । संकटं निस्तरेत्तूर्णं शत्रुभीतेः प्रमुच्यते ॥ ११ ॥ इति श्रीब्रह्मवैवर्ते महापुराणे वसुदेवकृतं कृष्णस्तोत्रं संपूर्णम् ।

---

## २६५ श्रीबालरक्षा ।

श्रीगणेशाय नमः ॥ अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः । हृत्केशवस्त्वदुर ईश इनस्तु कण्ठं विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम् ॥ १ ॥ चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाजनश्च । कोणेषु शङ्ख उरुगाय उपर्युपेन्द्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समन्तात् ॥ २ ॥ इन्द्रियाणि हृषीकेशः प्राणान्नारायणोऽवतु । श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु ॥ ३ ॥ पृश्निगर्भश्च ते बुद्धिमात्मानं भगवान्परः । क्रीडन्तं पातु गोविन्दः शयानं पातु माधवः ॥ ४ ॥ व्रजन्तमव्याद्वैकुण्ठ आसीनं त्वां श्रियः पतिः । भुञ्जानं यज्ञभुक्पातु सर्वग्रहभयंकरः ॥ ५ ॥ डाकिन्यो यातुधान्यश्च कूष्माण्डा

येऽर्भकग्रहाः । भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः ॥ ६ ॥ कोटरारेवतीज्येष्ठापूतनामातृकादयः । उन्मादा ये ह्यपस्मारा देहप्राणेन्द्रियद्रुहः ॥७॥ स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये । सर्वे नश्यन्तु ते विष्णोर्नामग्रहणभीरवः ॥ ८ ॥

इति श्रीमद्भागवते दशमस्कन्धे गोपीकृता बालरक्षा समाप्ता ।

## २६६ बालकृतकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ बाला ऊचुः । यथा संरक्षितं ब्रह्मन्सर्वापत्स्वेव नः कुलम् । तथा रक्षां कुरु पुनर्दावाग्नेर्मधुसूदन ॥ १ ॥ त्वमिष्टदेवताऽस्माकं त्वमेव कुलदेवता । स्रष्टा पाता च संहर्ता जगतां च जगत्पते ॥ २ ॥ वह्निर्वा वरुणो वापि चन्द्रो वा सूर्य एव च । यमः कुबेरः पवन ईशानाद्याश्च देवताः ॥ ३ ॥ ब्रह्मेशशेषधर्मेन्द्रा मुनीन्द्रा मनवः स्मृताः । मानवाश्च तथा दैत्या यक्षराक्षसकिंनराः ॥ ४ ॥ ये ये चराचराश्चैव सर्वे तव विभूतयः । आविर्भावस्तिरोभावः सर्वेषां च तवेच्छया ॥ ५ ॥ अभयं देहि गोविन्द वह्निसंहरणं कुरु । वयं त्वां शरणं यामो रक्ष नः शरणागतान् ॥ ६ ॥ इत्येवमुक्त्वा ते सर्वे तस्थुर्ध्यात्वा पदाम्बुजम् । दूरीभूतस्तु दावाग्निः श्रीकृष्णामृतदृष्टितः ॥ ७ ॥ दूरीभूते च दावाग्नौ ननृतुस्ते मुदान्विताः । सर्वापदः प्रणश्यन्ति हरिस्मरणमात्रतः ॥ ८ ॥ इदं स्तोत्रं महापुण्यं

प्रातरुत्थाय यः पठेत् । वह्नितो न भवेत्तस्य भयं जन्मनि जन्मनि ॥ ९ ॥ शत्रुग्रस्ते च दावाग्नौ विपत्तौ प्राणसंकटे । स्तोत्रमेतत्पठित्वा तु मुच्यते नात्र संशयः ॥ १० ॥ शत्रुसैन्यं क्षयं याति सर्वत्र विजयी भवेत् । इह लोके हरेर्भक्तिमन्ते दास्यं लभेद्ध्रुवम् ॥ ११ ॥

इति बालकृतं श्रीकृष्णस्तोत्रं समाप्तम् ।

---

## २६७ गोपालस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीनारद उवाच । नवीननीरदश्यामं नीलेन्दीवरलोचनम् । वल्लवीनन्दनं वन्दे कृष्णं गोपालरूपिणम् ॥ १ ॥ स्फुरद्बर्हिदलोद्बद्धनीलकुञ्चितमूर्धजम् । कदम्बकुसुमोद्बद्धवनमालाविभूषितम् ॥ २ ॥ गण्डमण्डलसंसर्गिचलत्काञ्चनकुण्डलम् । स्थूलमुक्ताफलोदारहारद्योतितवक्षसम् ॥ ३ ॥ हेमाङ्गदतुलाकोटिकिरीटोज्ज्वलविग्रहम् । मन्दमारुतसंक्षोभवल्गिताम्बरसंचयम् ॥ ४ ॥ रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः । लसद्गोपालिकाचेतो मोहयन्तं मुहुर्मुहुः ॥ ५ ॥ वल्लवीवदनाम्भोजमधुपानमधुव्रतम् । क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः ॥ ६ ॥ यौवनाद्भिन्नदेहाभिः संसक्ताभिः परस्परम् । विचित्राम्बरभूषाभिर्गोपनारीभिरावृतम् ॥ ७ ॥ प्रभिन्नाञ्जनकालिन्दीजलकेलिकलोत्सुकम् । योधयन्तं क्वचिद्गोपान् व्याहरन्तं गवां

गणम् ॥ ८ ॥ कालिन्दीजलसंसर्गिशीतलानिलसेविते । कदम्बपादपच्छाये स्थितं वृन्दावने क्वचित् ॥ ९ ॥ रत्नभूधरसंलग्नरत्नासनपरिग्रहम् । कल्पपादपमध्यस्थहेममण्डपिकागतम् ॥ १० ॥ वसन्तकुसुमामोदसुरभीकृतदिङ्मुखे। गोवर्धनगिरौ रम्ये स्थितं रासरसोत्सुकम् ॥ ११ ॥ सव्यहस्ततलन्यस्तगिरिवर्यातपत्रकम् । खण्डिताखण्डलोन्मुक्तमुक्तासारघनाघनम् ॥-॥ १२ ॥ वेणुवाद्यमहोल्लासकृतहुंकारनिःस्वनैः । सवत्सैरुन्मुखैः शश्वद्गोकुलैरभिवीक्षितम् ॥१३॥ कृष्णमेवानुगायद्भिस्तच्चेष्टावशवर्तिभिः । दण्डपाशोद्यतकरैर्गोपालैरुपशोभितम् ॥ १४ ॥ नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः । प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् ॥ १५ ॥ य एवं चिन्तयेद्देवं भक्त्या संस्तौति मानवः। त्रिसंध्यं तस्य तुष्टोऽसौ ददाति वरमीप्सितम् ॥ १६ ॥ राजवल्लभतामेति भवेत्सर्वजनप्रियः । अचलां श्रियमाप्नोति स वाग्मी जायते ध्रुवम् ॥ १७ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे गोपालस्तोत्रं समाप्तम् ।

## २६८ कृष्णाष्टकम् ।

श्रीगणेशाय नमः ॥ श्रियाश्लिष्टो विष्णुः स्थिरचरवपुर्वेदविषयो धियां साक्षी शुद्धो हरिरसुरहन्ताब्जनयनः । गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः शरण्यो लोकेशो

मम भवतु कृष्णोऽक्षिविषयः ॥ १ ॥ यतः सर्वं जातं वियदनिलमुख्यं जगदिदं स्थितौ निःशेषं योऽवति निजसुखांशेन मधुहा । लये सर्वं स्वस्मिन् हरति कलया यस्तु स विभुः शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ॥ २ ॥ असुनायम्यादौ यमनियममुख्यैः सुकरणैर्निरुध्येदं चित्तं हृदि विलयमानीय सकलम् । यमीड्यं पश्यन्ति प्रवरमतयो मायिनमसौ शरण्यो लोकेशो मम० ॥३॥ पृथिव्यां तिष्ठन्यो यमयति महीं वेद न धरा यमित्यादौ वेदो वदति जगतामीशममलम् । नियन्तारं ध्येयं मुनिसुरनृणां मोक्षदमसौ शरण्यो लोकेशो मम० ॥ ४ ॥ महेन्द्रादिर्देवो जयति दितिजान्यस्य बलतो न कस्य स्वातन्त्र्यं क्वचिदपि कृतौ यत्कृतिमृते । कवित्वादेर्गर्वं परिहरति योऽसौ विजयिनः शरण्यो लोकेशो मम० ॥ ५ ॥ विना यस्य ध्यानं व्रजति पशुतां सूकरमुखां विना यस्य ज्ञानं जनिमृतिभयं याति जनता । विना यस्य स्मृत्या कृमिशतजनिं याति स विभुः शरण्यो लोकेशो मम० ॥ ६ ॥ नरातङ्कोत्तङ्कः शरणशरणो भ्रान्तिहरणो घनश्यामो वामो व्रजशिशुवयस्योऽर्जुनसखः । स्वयंभूर्भूतानां जनक उचिताचारसुखदः शरण्यो लोकेशो मम० ॥७॥ यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः । सतां धाता स्वच्छो निगमगुणगीतो व्रजपतिः शरण्यो लोकेशो मम० ॥ ८ ॥ इति हरिरखिलात्माराधितः शंकरेण श्रुति-

विशदगुणोऽसौ मातृमोक्षार्थमाद्यः । इति वरनिकटे श्रीयुक्त आविर्बभूव स्वगुणवृत्त उदारः शङ्खचक्राब्जहस्तः ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं कृष्णाष्टकं संपूर्णम् ।

---

## २६९ जगन्नाथाष्टकम् ।

श्रीगणेशाय नमः ॥ कदाचित्कालिन्दीतटविपिनसंगीतकरवो मुदाभीरीनारीवदनकमलास्वादमधुपः । रमाशंभुब्रह्मामरपतिगणेशार्चितपदो जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ १ ॥ भुजे सव्ये वेणुं शिरसि शिखिपिच्छं कटितटे दुकूलं नेत्रान्ते सहचरकटाक्षं विदधते । सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो जगन्नाथः स्वामी० ॥२॥ महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे वसन्प्रासादान्तः सहजबलभद्रेण बलिना । सुभद्रामध्यस्थः सकलसुरसेवावसरदो जगन्नाथः स्वामी० ॥ ३ ॥ कथापारावारः सजलजलदश्रेणिरुचिरो रमावाणीरामस्फुरदमलपद्मेक्षणमुखैः । सुरेन्द्रैराराध्यः श्रुतिगणशिखागीतचरितो जगन्नाथः स्वामी० ॥ ४ ॥ रथारूढो गच्छन्पथि मिलितभूदेवपटलैः स्तुतिप्रादुर्भावं प्रतिपदमुपाकर्ण्य सदयः । दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया जगन्नाथः स्वामी० ॥ ५ ॥ परब्रह्मापीडः कुवलयदलोत्फुल्ल-



नयनो निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि । रसा-

नन्दो राधासरसवपुरालिङ्गनसुखो जगन्नाथः स्वामी० ॥६॥ न वै प्रार्थ्यं राज्यं न च कनकतां भोगविभवं न याचेऽहं रम्यां निखिलजनकाम्यां वरवधूम् । सदा काले काले प्रमथपतिना गीतचरितो जगन्नाथः स्वामी० ॥ ७ ॥ हर त्वं संसारं द्रुततरमसारं सुरपते हर त्वं पापानां विततिमपरां यादवपते । अहो दीनानाथं निहितमचलं निश्चितपदं जगन्नाथः स्वामी नयनपथगामी भवतु मे ॥ ८ ॥

इति श्रीजगन्नाथाष्टकं संपूर्णम् ।

---

## २७० मोहिनीकृतकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मोहिन्युवाच । सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम् । तदेव कर्मणां बीजं तदुद्भव नमोऽस्तु ते ॥ १ ॥ स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः । नमो ब्रह्मन् जगत्स्रष्टस्तदुद्भव नमोऽस्तु ते ॥ २ ॥ सर्वाजित जगज्जेतर्जीवजीव मनोहर । रतिबीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते ॥ ३ ॥ शश्वद्योपिदधिष्ठान योपित्प्राणाधिकप्रिय । योपिद्वाहन योपास्त्र योपिद्बन्धो नमोस्तु ते ॥ ४ ॥ पतिसाध्यकराशेपरूपाधार गुणाश्रय । सुगन्धिवातसचिव मधुमित्र नमोऽस्तु ते ॥ ५ ॥ शश्वद्योनिकृताधार स्त्रीसंदर्शनवर्धन । विदग्धानां विरहिणां प्राणान्तक नमोस्तु ते ॥ ६ ॥ अकृपा येषु तेऽनर्थ तेषां ज्ञान विनाशनम् । अनूहरू-

पभक्तेषु कृपासिन्धो नमोस्तु ते ॥ ७ ॥ तपस्विनां च तपसां विघ्नबीजाय लीलया । मनः सकामं मुक्तानां कर्तुं शक्त नमोऽस्तु ते ॥ ८ ॥ तपःसाध्यस्तथाराध्यः सदैवं पाञ्च-भौतिकः । पञ्चेन्द्रियकृताधार पञ्चबाण नमोऽस्तु ते ॥ ९ ॥ मोहिनीत्येवमुक्त्वा तु मनसा सा विधेः पुरः । विरराम नम्रवक्त्रा बभूव ध्यानतत्परा ॥ १० ॥ उक्तं माध्यन्दिने कान्ते स्तोत्रमेतन्मनोहरम् । पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने ॥ ११ ॥ स्तोत्रमेतन्महापुण्यं कामी भक्त्या यदा पठेत् । अभीष्टं लभते नूनं निष्कलङ्को भवेद्ध्रुवम् ॥ १२ ॥ चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् । भवेदरोगी श्रीयुक्तः कामदेवसमप्रभः । वनितां लभते साध्वीं पत्नीं त्रैलोक्यमोहिनीम् ॥ १३ ॥

इति श्रीमोहिनीकृतकृष्णस्तोत्रं समाप्तम् ।

---

## २७१ ब्रह्मदेवकृतकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच । रक्ष रक्ष हरे मां च निमग्नं कामसागरे । दुष्कीर्तिजलपूर्णे च दुष्पारे बहुसंकटे ॥ १ ॥ भक्तिविस्मृतिबीजे च विपत्सोपानदुस्तरे । अतीव निर्मलज्ञानचक्षुःप्रच्छन्नकारणे ॥ २ ॥ जन्मोर्मिसङ्गसहिते योषिन्नक्रौघसंकुले । रतिस्रोतःसमायुक्ते गम्भीरे घोर एव

च ॥ ३ ॥ प्रथमामृतरूपे च परिणामविषालये । यमालयप्रवेशाय मुक्तिद्वारातिविस्मृतौ ॥ ४ ॥ बुद्ध्या तरण्या विज्ञानैरुद्धरास्मानतः स्वयम् । स्वयं च त्वं कर्णधार प्रसीद मधुसूदन ॥ ५ ॥ मद्विधाः कतिचिन्नाथ नियोज्या भवकर्मणि । सन्ति विश्वेश विधयो हे विश्वेश्वर माधव ॥ ६ ॥ न कर्मक्षेत्रमेवेदं ब्रह्मलोकोऽयमीप्सितः । तथापि न स्पृहा कामे त्वद्भक्तिव्यवधायके ॥ ७ ॥ हे नाथ करुणासिन्धो दीनबन्धो कृपां कुरु । त्वं महेश महाज्ञाता दुःस्वप्नं मां न दर्शय ॥ ८ ॥ इत्युक्त्वा जगतां धाता विरराम सनातनः । ध्यायं ध्यायं मत्पदाब्जं शश्वत्सस्मार मामिति ॥ ९ ॥ ब्रह्मणा च कृतं स्तोत्रं भक्तियुक्तश्च यः पठेत् । स चैवाकर्मविषये न निमग्नो भवेद्ध्रुवम् ॥ १० ॥ मम मायां विनिर्जित्य स ज्ञानं लभते ध्रुवम् । इह लोके भक्तियुक्तो मद्भक्तप्रवरो भवेत् ॥ ११ ॥

इति श्रीब्रह्मदेवकृतं कृष्णस्तोत्रं संपूर्णम् ।

---

## २७२ श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीकृष्णाष्टोत्तरशतनामस्तोत्रस्य श्रीशेष ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता । श्रीकृष्णप्रीत्यर्थं श्रीकृष्णाष्टोत्तरशतनामजपे विनियोगः ।



शेष उवाच । श्रीकृष्णः कमलानाथो वासुदेवः सनातनः ।

वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १ ॥ श्रीवत्स-
कौस्तुभधरो यशोदावत्सलो हरिः । चतुर्भुजात्तचक्रासिग-
दाशङ्खाम्बुजायुधः ॥ २ ॥ देवकीनन्दनः श्रीशो नन्दगोप-
प्रियात्मजः । यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ३ ॥
पूतनाजीवितहरः शकटासुरभञ्जनः । नन्दव्रजजनानन्दी
सच्चिदानन्दविग्रहः ॥ ४ ॥ नवनीतनवाहारी मुचुकुन्दप्र-
सादकः । षोडशस्त्रीसहस्रेशस्त्रिभङ्गिमधुराकृतिः ॥ ५ ॥
शुकवागमृताब्धीन्दुर्गोविन्दो गोविदां पतिः । वत्सपाल-
नसंचारी धेनुकासुरभञ्जनः ॥ ६ ॥ तृणीकृततृणावर्तो यम-
लार्जुनभञ्जनः । उत्तालतालभेत्ता च तमालश्यामलाकृतिः
॥ ७ ॥ गोपगोपीश्वरो योगी सूर्यकोटिसमप्रभः । इलापतिः
परं ज्योतिर्यादवेन्द्रो यदूद्वहः ॥ ८ ॥ वनमाली पीतवासाः
पारिजातापहारकः । गोवर्धनाचलोद्धर्ता गोपालः सर्वपा-
लकः ॥ ९ ॥ अजो निरञ्जनः कामजनकः कञ्जलोचनः ।
मधुहा मथुरानाथो द्वारकानायको बली ॥ १० ॥ वृन्दा-
वनान्तसंचारी तुलसीदामभूषणः । स्यमन्तकमणेर्हर्ता नर-
नारायणात्मकः ॥ ११ ॥ कुब्जाकृष्टाम्बरधरो मायी पर-
मपूरुषः । मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ॥ १२ ॥
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः । अनादिर्ब्रह्मचारी
च कृष्णाव्यसनकर्षकः ॥ १३ ॥ शिशुपालशिरश्छेत्ता दुर्यो-
धनकुलान्तकृत् । विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ १४ ॥

सत्यवाक् सत्यसंकल्पः सत्यभामारतो जयी । सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ॥ १५ ॥ जगद्गुरुर्जगन्नाथो वेणुवाद्यविशारदः । वृषभासुरविध्वंसी बाणासुरकरान्तकृत् ॥ १६ ॥ युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः । पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥ १७ ॥ कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः । दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशनः ॥ १८ ॥ नारायणः परब्रह्म पन्नगाशनवाहनः । जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥ १९ ॥ पुण्यश्लोकस्तीर्थकरो वेदवेद्यो दयानिधिः । सर्वतीर्थात्मकः सर्वग्रहरूपी परात्परः ॥ २० ॥ इत्येवं कृष्णदेवस्य नाम्नामष्टोत्तरं शतम् । कृष्णेन कृष्णभक्तेन श्रुत्वा गीतामृतं पुरा ॥ २१ ॥ स्तोत्रं कृष्णप्रियकरं कृतं तस्मान्मया पुरा । कृष्णनामामृतं नाम परमानन्ददायकम् ॥ २२ ॥ अनुपद्रवदुःखघ्नं परमायुष्यवर्धनम् । दानं श्रुतं तपस्तीर्थं यत्कृतं त्विह जन्मनि ॥ २३ ॥ पठतां शृण्वतां चैव कोटिकोटिगुणं भवेत् । पुत्रप्रदमपुत्राणामगतीनां गतिप्रदम् ॥ २४ ॥ धनावहं दरिद्राणां जयेच्छूनां जयावहम् । शिशूनां गोकुलानां च पुष्टिदं पुष्टिवर्धनम् ॥ २५ ॥ वातग्रहज्वरादीनां शमनं शान्तिमुक्तिदम् । समस्तकामदं सद्यः कोटिजन्माघनाशनम् ॥ २६ ॥ अन्ते कृष्णस्मरणदं भवतापभयापहम् । कृष्णाय यादवेन्द्राय ज्ञानमुद्राय योगिने । नाथाय रुक्मिणीशाय नमो वेदान्तवेदिने

॥ २७ ॥ इमं मन्त्रं महादेव जपन्नेव दिवानिशम् । सर्वग्रहानुग्रहभाक् सर्वप्रियतमो भवेत् ॥ २८ ॥ पुत्रपौत्रैः परिवृतः सर्वसिद्धिसमृद्धिमान् । निर्विश्य भोगानन्तेऽपि कृष्णसायुज्यमाप्नुयात् ॥ २९ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे उमामहेश्वरसंवादे धरणीशेषसंवादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ।

---

## २७३ इन्द्रकृतकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ इन्द्र उवाच । अक्षरं परमं ब्रह्म ज्योतीरूपं सनातनम् । गुणातीतं निराकारं स्वेच्छामयमनन्तकम् ॥१॥ भक्तध्यानाय सेवायै नानारूपधरं वरम् । शुक्लरक्तपीतश्यामं युगानुक्रमणेन च ॥ २ ॥ शुक्लतेजःस्वरूपं च सत्ये सत्यस्वरूपिणम् । त्रेतायां कुङ्कुमाकारं ज्वलन्तं ब्रह्मतेजसा ॥ ३ ॥ द्वापरे पीतवर्णं च शोभितं पीतवाससा । कृष्णवर्णं कलौ कृष्णं परिपूर्णतमं प्रभुम् ॥ ४ ॥ नवधाराधरोत्कृष्टश्यामसुन्दरविग्रहम् । नन्दैकनन्दनं वन्दे यशोदानन्दनं प्रभुम् ॥ ५ ॥ गोपिकाचेतनहरं राधाप्राणाधिकं परम् । विनोदमुरलीशब्दं कुर्वन्तं कौतुकेन च ॥ ६ ॥ रूपेणाप्रतिमेनैव रत्नभूषणभूषितम् । कन्दर्पकोटिसौन्दर्यं



बिभ्रतं शान्तमीश्वरम् ॥ ७ ॥ क्रीडन्तं राधया सार्धं वृन्दारण्ये च कुत्रचित् । कुत्रचिन्निर्जनेऽरण्ये राधावक्षःस्थलस्थि-

तम् ॥ ८ ॥ जलक्रीडां प्रकुर्वन्तं राधया सह कुत्रचित् । राधिकाकबरीभारं कुर्वन्तं कुत्रचिद्वने ॥ ९ ॥ कुत्रचिद्राधिकापादे दत्तवन्तमलक्तकम् । राधाचर्वितताम्बूलं गृह्णन्तं कुत्रचिन्मुदा ॥ १० ॥ पश्यन्तं कुत्रचिद्राधां पश्यतीं वक्रचक्षुषा । दत्तवन्तं च राधायै कृत्वा मालां च कुत्रचित् ॥ ॥ ११ ॥ कुत्रचिद्राधया सार्धं गच्छन्तं रासमण्डलम् । राधादत्तां गले मालां धृतवन्तं च कुत्रचित् ॥ १२ ॥ सार्धं गोपालिकाभिश्च विहरन्तं च कुत्रचित् । राधां गृहीत्वा गच्छन्तं तां विहाय च कुत्रचित् ॥ १३ ॥ विप्रपत्नीदत्तमन्नं भुक्तवन्तं च कुत्रचित् । भुक्तवन्तं तालफलं बालकैः सह कुत्रचित् ॥ १४ ॥ वस्त्रं गोपालिकानां च हरन्तं कुत्रचिन्मुदा । गवां गणं व्याहरन्तं कुत्रचिद्बालकैः सह ॥१५॥ कालीयमूर्ध्नि पादाब्जं दत्तवन्तं च कुत्रचित् । विनोदमुरलीशब्दं कुर्वन्तं कुत्रचिन्मुदा ॥ १६ ॥ गायन्तं रम्यसङ्गीतं कुत्रचिद्बालकैः सह । स्तुत्वा शक्रः स्तवेन्द्रेण प्रणनाम हरिं भिया ॥ १७ ॥ पुरा दत्तेन गुरुणा रणे वृत्रासुरेण च । कृष्णेन दत्तं कृपया ब्रह्मणे च तपस्यते ॥ १८ ॥ एकादशाक्षरो मन्त्रः कवचं सर्वलक्षणम् । दत्तमेतत्कुमाराय पुष्करे ब्रह्मणा पुरा ॥ १९ ॥ तेन चाङ्गिरसे दत्तं गुरवेऽङ्गिरसां मुने । इदमिन्द्रकृतं स्तोत्रं नित्यं भक्त्या च यः पठेत् ॥२०॥



इह प्राप्य दृढां भक्तिमन्ते दास्यं लभेद्ध्रुवम् । जन्ममृत्यु-

जराव्याधिशोकेभ्यो मुच्यते नरः ॥ २१ ॥ नहि पश्यति स्वप्नेऽपि यमदूतं यमालयम् ॥ २२ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे कृष्णजन्मखण्डे इन्द्रकृतं कृष्णस्तोत्रं संपूर्णम् ।

## २७४ विप्रपत्नीकृतकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विप्रपत्न्य ऊचुः । त्वं ब्रह्म परमं धाम निरीहो निरहंकृतिः । निर्गुणश्च निराकारः साकारः सगुणः स्वयम् ॥१॥ साक्षिरूपश्च निर्लिप्तः परमात्मा निराकृतिः । प्रकृतिः पुरुषस्त्वं च कारणं च तयोः परम् ॥२॥ सृष्टिस्थित्यन्तविषये ये च देवास्त्रयः स्मृताः । ते त्वदंशाः सर्वबीजा ब्रह्मविष्णुमहेश्वराः ॥ ३ ॥ यस्य लोम्नां च विवरे चाखिलं विश्वमीश्वर । महाविराण्महाविष्णुस्त्वं तस्य जनको विभो ॥ ४ ॥ तेजस्त्वं चापि तेजस्वी ज्ञानं ज्ञानी च तत्परः । वेदेऽनिर्वचनीयस्त्वं कस्त्वां स्तोतुमिहेश्वरः ॥५॥ महदादिसृष्टिसूत्रं पञ्चतन्मात्रमेव च । बीजं त्वं सर्वशक्तीनां सर्वशक्तिस्वरूपकः ॥ ६ ॥ सर्वशक्तीश्वरः सर्वः सर्वशक्त्याश्रयः सदा । त्वमनीहः स्वयंज्योतिः सर्वानन्दः सनातनः ॥ ७ ॥ अहो आकारहीनस्त्वं सर्वविग्रहवानपि । सर्वेन्द्रियाणां विषयं जानासि नेन्द्रियी भवान् ॥ ८ ॥ सरस्वती जडीभूता यत्स्तोत्रे यन्निरूपणे । जडीभूतो महेशश्च शेषो

धर्मो विधिः स्वयम् ॥ ९ ॥ पार्वती कमला राधा सावित्री वेदसूरपि । वेदश्च जडतां याति के वा शक्ता विपश्चितः ॥ १० ॥ वयं किं स्तवनं कुर्मः स्त्रियः प्राणेश्वरेश्वर । प्रसन्नो भव नो देव दीनबन्धो कृपां कुरु ॥ ११ ॥ इति पेतुश्च ता विप्रपत्न्यस्तच्चरणाम्बुजे । अभयं प्रददौ ताभ्यः प्रसन्नवदनेक्षणः ॥१२॥ विप्रपत्नीकृतं स्तोत्रं पूजाकाले च यः पठेत् । स गतिं विप्रपत्नीनां लभते नात्र संशयः ॥ १३ ॥

इति श्रीब्रह्मवैवर्ते महापुराणे कृष्णजन्मखण्डे
विप्रपत्नीकृतकृष्णस्तोत्रं संपूर्णम् ।

---

## २७५ गोपालविंशतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ १ ॥ वन्दे वृंदावनचरं बल्लवीजनवल्लभम् । जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ २ ॥ वाचं निजाङ्करसिकां प्रसमीक्षमाणो वक्त्रारविन्दविनिवेशितपाञ्चजन्यः । वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति बल्लवचक्रवर्ती ॥ ३ ॥ आम्नायगन्धरुचिरस्फुरिताधरोष्ठमस्राविलेक्षणमनुक्षणमन्दहासम् । गोपालडिम्भवपुषं कुहनाजनन्याः प्राणस्तनंधयमवैमि परं पुमांसम् ॥ ४ ॥ आविर्भवत्यनिभृताभरणं पुरस्तादाकुञ्चितैकचरणं निहितान्यपादम् । दध्ना निमन्थमुखरेण

निबद्धतालं नाथस्य नन्दभवने नवनीतनाट्यम् ॥ ५ ॥ कुन्दप्रसूनविपदैर्दशनैश्चतुर्भिः संदश्य मातुरनिशं कुचचूचुकाग्रम् । नन्दस्य वक्त्रमवलोकयतो मुरारेर्मन्दस्मितं मम मनीषितमातनोतु ॥ ६ ॥ हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् । पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन्मिथ्यागोपः सपदि नयने मीलयन्विश्वगोप्ता ॥ ७ ॥ व्रजयोषिदपाङ्गवेदनीयं मथुराभाग्यमनन्यभोग्यमीडे । वसुदेववधूस्तनंधयं तत् किमपि ब्रह्म किशोरभावदृश्यम् ॥ ८ ॥ परिवर्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं स्मरामि । विटपित्वनिरासकं कयोश्चिद्विपुलोलूखलकर्षकं कुमारम् ॥९॥ निकटेषु निशामयामि नित्यं निगमान्तैरधुनापि मृग्यमाणम् । यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम् ॥ १० ॥ पदवीमदवीयसीं विमुक्तेरटवीसंपदमम्बुवाहयन्तीम् । अरुणाधरसाभिलाषवंशां करुणां कारणमानुषं भजामि ॥ ११ ॥ अनिमेषनिषेवणीयमक्ष्णोरजहद्यौवनमाविरस्तु चित्ते । कलहायितकुन्तलं कलापैः करुणोन्मादकविभ्रमं मनो मे ॥ १२ ॥ अनुयायिमनोज्ञवंशनालैरवतु स्पर्शितवल्लवीविमोहैः । अनघस्मितशीतलैरसौ मामनुकम्पासरिदम्बुजैरपाङ्गैः ॥ १३ ॥ अधराहितचारुवंशनालाः मुकुटालम्बिमयूरपिच्छमालाः । हरिनीलशिलाविहङ्गलीलाः प्रतिभास्वन्तु ममान्तिमप्रयाणे

॥ १४ ॥ अखिलानवलोकयामि कालान्महिलादीनभुजान्तरस्य यूनः । अभिलाषपदं व्रजाङ्गनानामभिलापक्रमदूरमाभिरूप्यम् ॥ १५ ॥ महसे महिताय मौलिना विनतेनाञ्जलिमञ्जनत्विषे । कलयामि विदग्धवल्लवीवलयाभाषितमञ्जुवेणवे ॥ १६ ॥ जयतु ललितकृत्यं शिक्षको बल्लवीनां शिथिलवलयसिञ्जाशीतलैर्हस्ततालैः । अखिलभुवनरक्षागोपवेषस्य विष्णोरधरमणिसुधाया वंशवान्वंशनालः ॥ १७ ॥ चित्राकल्पश्रवसि कलयँल्लाङ्गलीकर्णपूरं बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः । गुञ्जाबद्धामुरसि ललितां धारयन्हारयष्टिं गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १८ ॥ लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्यामंसे देव्याः पुलकनिबिडे सन्निविष्टान्यबाहुः । मेघश्यामो जयति ललितं मेखलादत्तवेणुर्गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १९ ॥ प्रत्यालीढस्मृतिमधिगतां प्राप्तगाढाङ्गपालीं पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः । भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्याद्वारिक्रीडानिबिडवसनो बल्लवीवल्लभो नः ॥ २० ॥ वासो हृत्वा दिनकरसुतासंनिधौ बल्लवीनां लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् । सव्रीडाभिस्तदनु वसनं ताभिरभ्यर्थ्यमानः कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २१ ॥ इत्यनन्यमनसा विनि-

मितां वेङ्कटेशकविना स्तुतिं पठन् । दिव्यवेणुरसिकैः समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २२ ॥

इति गोपालविंशतिः संपूर्णा ।

## २७६ श्रीगोविन्दाष्टकम् ।

श्रीगणेशाय नमः ॥ सत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं गोष्ठप्राङ्गणरिङ्गणलोलमनायासं परमायासम् । मायाकल्पितनानाकारमनाकारं भुवनाकारं क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसंत्रासं व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालम् । लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं लोकेशं परमेशं प्रणमत गोविन्दं परमानन्दम् ॥२॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं कैवल्यं नवनीताहारमनाहारं भुवनाहारम् । वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं शैवं केवलशान्तं प्रणमत गोविन्दं परमानन्दम् ॥ ३ ॥ गोपालं भूलीलाविग्रहगोपालं कुलगोपालं गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् । गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं गोपीगोचरदूरं प्रणमत गोविंदं परमानन्दम् ॥ ४ ॥ गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं शश्वद्गोखुरनिर्धूतोत्कृतधूलीधूसरसौभाग्यम् । श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं चिन्तामणिमहिमानं

प्रणमत गोविन्दं परमानन्दम् ॥ ५ ॥ स्नानव्याकुलयोषिद्वस्त्रमुपादायागमुपारूढं व्यादित्सन्तीरथ दिग्वस्त्रा ह्युपदातुमुपाकर्षन्तम् । निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तस्थं सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दम् ॥ ६ ॥ कान्तं कारणकारणमादिमनादिं कालमनाभासं कालिन्दीगतकालियशिरसि मुहुर्नृत्यन्तं सुनृत्यन्तम् । कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगतिहेतुं प्रणमत गोविन्दं परमानन्दम् ॥ ७ ॥ वृन्दावनभुवि वृन्दारकगणवृन्दाराधित वन्देऽहं कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम्। वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं वन्द्याशेषगुणाब्धिं प्रणमत गोविन्दं परमानन्दम् ॥ ८ ॥ गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो गोविन्दाच्युत माधव विष्णो गोकुलनायक कृष्णेति । गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघो गोविन्दं परमानन्दामृतमन्तस्थं स समभ्येति॥९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गोविन्दाष्टकस्तोत्रं संपूर्णम् ।

---

## २७७ श्रीगोपालाष्टकम् ।

श्रीगणेशाय नमः ॥ यस्माद्विश्वं जातमिदं चित्रमतर्क्यं यस्मिन्नानन्दात्मनि नित्यं रमते वै । यत्रान्ते संयाति लयं चैतदशेषं तं गोपालं संततकालं प्रति वन्दे ॥ १ ॥ यस्य

ज्ञानाज्जन्मजरारोगकदम्बं ज्ञाते यस्मिन्नश्यति तत्सर्वमिहाशु । गत्वा यत्रायाति पुनर्नो भवभूमिं तं गो० ॥ २ ॥ तिष्ठन्नन्तर्यो यमयत्येतदजस्रं यं कश्चिन्नो वेद जनोऽप्यात्मनि सन्तम् । सर्वं यस्येदं च वशे तिष्ठति विश्वं तं गो० ॥ ३ ॥ धर्मोऽधर्मेणेह तिरस्कारमुपैति काले यस्मिन्मत्स्यमुखैश्चारुचरित्रैः । नानारूपैः पाति तदा योऽवनिविम्बं तं गो० ॥ ४ ॥ प्राणायामैर्ध्वस्तसमस्तेन्द्रियदोषा रुद्ध्वा चित्तं यं हृदि पश्यन्ति समाधौ । ज्योतीरूपं योगिजनामोदनिमग्नास्तं गो० ॥ ५ ॥ भानुश्चन्द्रश्चोडुगणश्चैव हुताशो यस्मिन्नैवाभाति तडिच्चापि कदापि । यद्भासा चाभाति समस्तं जगदेतत् तं गो० ॥ ६ ॥ सत्यज्ञानं मोदमवोचुर्निगमा यं यो ब्रह्मेन्द्रादित्यगिरीशार्चितपादः । शेतेऽनन्तोऽनन्ततनावम्बुनिधौ यस्तं गो० ॥ ७ ॥ शैवाः प्राहुर्यं शिवमन्ये गणनाथं शक्तिं चैकेऽर्कं च तथान्ये मतिभेदात् । नानाकारैर्भाति य एकोऽखिलशक्तिस्तं गो० ॥ ८ ॥ श्रीमद्गोपालाष्टकमेतत्समधीते भक्त्या नित्यं यो मनुजो वै स्थिरचेताः । हित्वा पूर्णं पापकलापं स समेति पुण्यं विष्णोर्धाम यतो नैव निपातः ॥ ९ ॥

इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं
श्रीगोपालाष्टकं संपूर्णम् ।

## २७८ श्रीकृष्णाष्टकम् ।

श्रीगणेशाय नमः ॥ चतुर्मुखादिसंस्तुतं समस्तसात्वतानुतम् हलायुधादिसंयुतं नमामि राधिकाधिपम् ॥ १ ॥ बकादिदैत्यकालकं सगोपगोविपालकम् । मनोहरासितालकं नमा० ॥ २ ॥ सुरेन्द्रगर्वभञ्जनं विरिञ्चिमोहभञ्जनम् । व्रजाङ्गनानुरञ्जनं नमा० ॥ ३ ॥ मयूरपिच्छमण्डनं गजेन्द्रदन्तखण्डनम् । नृशंसकंसदण्डनं नमा० ॥ ४ ॥ प्रदत्तविप्रदारकं सुदामधामकारकम् । सुरद्रुमापहारकं नमा०॥५॥ धनंजयाजयावहं महाचमूक्षयावहम् । पितामहव्यथापहं नमा० ॥ ६ ॥ मुनीन्द्रशापकारणं यदुप्रजापहारणम् । धराभरावतारणं नमा० ॥ ७ ॥ सुवृक्षमूलशायिनं मृगारिमोक्षदायिनम् । स्वकीयधाममायिनं नमा० ॥ ८ ॥ इदं समाहिते हितं वराष्टकं सदा मुदा । जपञ्जनो जनुर्जरादितो द्रुतं प्रमुच्यते ॥ ९ ॥

इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं
श्रीकृष्णाष्टकं संपूर्णम् ।

---

## २७९ सत्यव्रतोक्तदामोदरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सिन्धुदेशोद्भवो विप्रो नाम्ना सत्यव्रतः सुधीः । विरक्त इन्द्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकम्



॥१॥ वृन्दावने स्थितः कृष्णमाराध दिवानिशम् । निःस्वः

सत्यव्रतो विप्रो निर्जनेऽव्यग्रमानसः ॥२॥ कार्तिके पूजयामास प्रीत्या दामोदरं नृप । तृतीयेऽह्नि सकृद्भुङ्क्ते पत्रं मूलं फलं तथा ॥ ३ ॥ पूजयित्वा हरिं स्तौति प्रीत्या दामोदराभिधम् ॥ ४ ॥ सत्यव्रत उवाच । नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले भ्राजमानम् । यशोदाभियोलूखले धावमानं परामृष्टमत्यन्ततो द्रुतगोप्या ॥ ५ ॥ रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं कराम्भोजयुग्मेन सातङ्कनेत्रम् । मुहुः श्वासकंपत्रिरेखाङ्ककण्ठं स्थितं नौमि दामोदरं भक्तवन्द्यम् ॥ ६ ॥ वरं देव देहीश मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह । इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः ॥ ७ ॥ इदं ते मुखाम्भोजमत्यन्तनीलैर्वृतं कुन्तलैः स्निग्धवक्रैश्च गोप्या । मुहुश्चुम्बितं बिम्बरक्ताधरं मे मनस्याविरास्तामलं लक्षलाभैः ॥ ८ ॥ नमो देव दामोदरानन्त विष्णो प्रसीद प्रभो दुःखजालाब्धिमग्नम् । कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहाणेश मामज्ञमेवाक्षिदृश्यम् ॥ ९ ॥ कुबेरात्मजौ वृक्षमूर्ती च यद्वत्त्वया मोचितौ भक्तिभाजौ कृतौ च । तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥ १० ॥ नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने तथोरस्थविश्वस्य धाम्ने नमस्ते । नमो राधिकायै त्वदीयप्रियायै नमोऽनन्तलीलाय देवाय तुभ्यम्

॥ ११ ॥ नारद उवाच । सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरो हरिः । विद्युल्लीलाचमत्कारो हृदये शनकैरभूत् ॥१२॥

इति श्रीसत्यव्रतकृतदामोदरस्तोत्रं संपूर्णम् ।

---

## २८० ज्वरकृतकृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् । अभ्यपद्यत दाशार्हं दहन्निव दिशो दश । अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ १ ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ । माहेश्वरः समाक्रन्दन्वैष्णवेन बलार्दितः ॥ २ ॥ अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः । शरणार्थी हृषीकेशं तुष्टाव प्रयताञ्जलिः ॥ ३ ॥ ज्वर उवाच । नमामि त्वानन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम् विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ ४ ॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः । तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ ५ ॥ नानाभावैर्लीलयैवोपपन्नैर्देवान्साधून्लोकसेतून्बिभर्षि । हंस्युन्मार्गान् हिंसया वर्तमानाञ्जन्मैतत्ते भारहाराय भूमेः ॥ ६ ॥ तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण । तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः ॥ ७ ॥



श्रीभगवानुवाच । त्रिशिरस्ते प्रसन्नोऽस्मि व्येतु ते मज्ज्वरा-

द्भयम् । यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥ ८ ॥ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः । बाणस्तु रथमारूढः प्रागाद्योत्स्यन्जनार्दनम् ॥ ९ ॥

इति श्रीमद्भागवते दशमस्कंधे ज्वरकृतकृष्णस्तोत्रं संपूर्णम् ।

---

## २८९ कृष्णद्वादशनामस्तोत्रम् ।

श्रीगणेशाय नमः । श्रीकृष्ण उवाच । किं ते नामसहस्रेण विज्ञातेन तवार्जुन । तानि नामानि विज्ञाय नरः पापैः प्रमुच्यते ॥ १ ॥ प्रथमे तु हरिं विन्द्याद्द्वितीयं केशवं तथा । तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ॥२॥ पञ्चमं वेदगर्भं तु षष्ठं च मधुसूदनम् । सप्तमं वासुदेवं च वराहं चाष्टमं तथा ॥ ३ ॥ नवमं पुण्डरीकाक्षं दशमं तु जनार्दनम् । कृष्णमेकादशं विन्द्याद्द्वादशं श्रीधरं तथा ॥४॥ एतानि द्वादश नामानि विष्णुप्रोक्ते विधीयते । सायं प्रात पठेन्नित्यं तस्य पुण्यफलं शृणु ॥५॥ चान्द्रायणसहस्राणि कन्यादानशतानि च । अश्वमेधसहस्राणि फलं प्राप्नोत्यसंशयः ॥ ६ ॥ अमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः । प्रातःकाले पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७ ॥

इति श्रीमन्महाभारते अरण्यपर्वणि श्रीकृष्णद्वादशनामस्तोत्रं संपूर्णम् ।

## २८२ बिन्दुमाधवाष्टकम् ।

श्रीगणेशाय नमः । कलिन्दजातटाटवीलतानिकेतनान्त-
रप्रगल्भवल्लवीस्फुरद्रतिप्रसङ्गसङ्गतम् । सुधारसार्द्रवेणुनाद-
मोदमाधुरीमदप्रमत्तगोपगोव्रजं भजामि बिन्दुमाधवम् ॥१॥
गदारिशङ्खचक्रशार्ङ्गभृच्चतुष्करं कृपाकटाक्षवीक्षणामृतोक्षि-
तामरेन्द्रनन्दनम् । सनन्दनादिमौनिमानसारविन्दमन्दिरं
जगत्पवित्रकीर्तिदं भजा०॥२॥ दिगीशमौलिनद्धरत्ननिःसर-
त्प्रभावलीविराजिताङ्घ्रिपङ्कजं नतेन्दुशेखराब्जजम् । दया-
मरन्दतुन्दिलारविन्दपत्रलोचनं विरोधियूथभेदनं भजा०॥३॥
पयःपयोधिवीचिकावलीपयःपृषन्मिलद्भुजङ्गपुङ्गवाङ्गकल्पपु-
ष्पतल्पशायिनम् । कटीतटिस्फुटीभवत्प्रतप्तहाटकाम्बरं
निशाटकोटिपाटनं भजा० ॥ ४ ॥ अनुश्रवापहारकावलेप-
लेपनैपुणीपयश्चरावतारतोषितारविन्दसंभवम् । महाभवा-
ब्धिमध्यमग्नदीनलोकतारकं विहङ्गराट्तुरङ्गमं भजा० ॥५॥
समुद्रतोयमध्यदेवदानवोत्क्षिपद्धराधरेन्द्रमूलधारणक्षमादिकू-
र्मविग्रहम् । दुराग्रहावलिप्तहाटकाक्षनाशसूकरं हिरण्यदान-
वान्तकं भजा० ॥ ६ ॥ विरोचनात्मसंभवोत्तमाङ्गकृत्पद-
क्रमं परश्वधोपसंहृताखिलावनीशमण्डलम् । कठोरनीलक-
ण्ठकार्मुकप्रदर्शितादिदोर्बलान्वितक्षितीसुतं भजा० ॥ ७ ॥
यमानुजोदकप्रवाहसत्वराभिजित्वरं पुरासुराङ्गनाभिमानदू-
पनायकम् । स्वमण्डलाग्रखण्डनीययावनारिमण्डलं बलानुजं

गदाग्रजं भजामि बिन्दुमाधवम् ॥ ८ ॥ प्रशस्तपञ्चचामराख्यवृत्तभेदभासितं दशावतारवर्णनं नृसिंहभक्तवर्णितम् । प्रसिद्धबिन्दुमाधवाष्टकं पठन्ति ये नरा सुदुर्लभं भजन्ति ते मनोरथं निरन्तरम् ॥ ९ ॥

इति श्रीबिन्दुमाधवाष्टकं संपूर्णम् ।

## २८३ कृष्णाष्टकम् ।

श्रीगणेशाय नमः ॥ भजे व्रजैकमण्डलं समस्तपापखण्डनं स्वभक्तचित्तरञ्जनं सदैव नन्दनन्दनम् । सुपिच्छगुच्छमस्तकं सुनादवेणुहस्तकं अनङ्गरङ्गसागरं नमामि कृष्णनागरम् ॥१॥ मनोजगर्वमोचनं विशाललोललोचनं विधूतगोपशोचनं नमामि पद्मलोचनम् । करारविन्दभूधरं स्मितावलोकसुन्दरं महेन्द्रमानदारणं नमामि कृष्णवारणम् ॥२॥ कदम्बसूनकुण्डलं सुचारुगण्डमण्डलं व्रजाङ्गनैकवल्लभं नमामि कृष्णदुर्लभम् । यशोदया समोदया सगोपया सनन्दया युतं सुखैकदायकं नमामि गोपनायकम् ॥३॥ सदैव पादपङ्कजं मदीयमानसे निजं दधानमुक्तमालकं नमामि नन्दबालकम् । समस्तदोषशोषणं समस्तलोकपोषणं समस्तगोपमानसं नमामि कृष्णलालसम् ॥४॥ भुवो भरावतारकं भवाब्धिकर्णधारकं यशोमतीकिशोरकं नमामि दुग्धचोरकम् । दृगन्तकान्तभङ्गिनं सदासदालसङ्गिनं दिने दिने नवं नवं नमामि नन्दसंभवम् ॥ ५ ॥ गुणाकरं सुखाकरं

कृपाकरं कृपावरं सुरद्विपन्निकन्दनं नमामि गोपनन्दनम् । नवीनगोपनागरं नवीनकेलिलम्पटं नमामि मेघसुन्दरं तडित्प्रभालसत्पटम् ॥ ६ ॥ समस्तगोपनन्दनं हृदम्बुजैकमोहनं नमामि कुञ्जमध्यगं प्रसन्नभानुशोभनम् । निकामकामदायकं दृगन्तचारुसायकं रसालवेणुगायकं नमामि कुञ्जनायकम् ॥ ७ ॥ विदग्धगोपिकामनोमनोज्ञतल्पशायिनं नमामि कुञ्जकानने प्रवृद्धवह्निपायिनम् । यदा तदा यथा तथा तथैव कृष्णसत्कथा मया सदैव गीयतां तथा कृपा विधीयताम् ॥ ८ ॥ प्रमाणिकाष्टकद्वयं जपत्यधीत्य यः पुमान्भवेत्स नन्दनन्दने भवे भवे सुभक्तिमान् ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं कृष्णाष्टकं संपूर्णम् ।

---

## २८४ गोपालस्तुतिः ।

श्रीगणेशाय नमः ॥ गोधूलिधूसरतनो करुणैकपात्र नारायणाभयद गोपजनाभिराम । गोगोपिकानयनरञ्जनवंशपाणे वेदान्तवेद्य मम देहि करावलम्बम् ॥ १ ॥ आभीरदारसुखपङ्कजसौरभोत्थमाध्वीसुधादनपटो नवनीतचोर । गोपाङ्गनाङ्गपरिरम्भणजातहास वेदान्त० ॥ २ ॥ गोवर्धनोद्धरणखेदभवोदबिन्दुसंसिक्तसुन्दरसुखाब्जदयार्द्रदृष्टे । लावण्यधाम सुरवन्दितपादपद्म वेदान्त० ॥ ३ ॥ सूर्यात्मजातटसमुद्भवनीपवृक्षशाखाधिरोहजनितद्विगुणाङ्गकान्ते । वंशीरवेण

धवलीतिकृताभिशब्द वेदान्त० ॥ ४ ॥ सव्येन पाणिकमलेन विधाय भक्ष्यमास्वादयन्तमपरेण विलोलनेत्र । त्वां देवताश्च मुनयः प्रविलोकयन्ति वेदान्त० ॥ ५ ॥ लक्ष्मीपते तरुणवारिजपत्रनेत्र पीताम्बरार्जुनसख स्मरसुन्दराङ्ग । नारायणाच्युत जनार्दन चक्रपाणे वेदान्त० ॥ ६ ॥ ब्रह्मेन्द्ररुद्रमरुदश्विसहस्ररश्मिनाराधिपान्तककुवेरविशालदक्ष । मारीचकश्यपसनातनवन्दिताङ्घ्रे वेदान्त० ॥ ७ ॥ नमः पद्मनाभारविन्दाक्ष विष्णो नमस्ते हृषीकेश जिष्णो नमस्ते । नमो वासुदेवाखिलाधार भूमन्नस्ते सुराधीश ते विश्वरूप ॥ ८ ॥ नमः कैटभारे मुरारे खरारे नमो दानवारे नमो रावणारे । नमः कंसविध्वंसनारिष्टशत्रो नमो धेनुकारे नमः पूतनारे ॥ ९ ॥ नमः शङ्खपाणे नमश्चक्रपाणे नमः शार्ङ्गपाणे नमः पद्मपाणे । नमो वेदरूपाय तुभ्यं पराय नमो यज्ञभोक्त्रे नमस्तेऽगुणाय ॥ १० ॥ अजा रुद्रधात्रादिदेवाः स्वरूपं परं नाभिजानन्ति मायामयेशम् । यजन्तीह नित्यं ततः स्थूलरूपं प्रसीदाशु मे दीनबन्धो रमेश ॥ ११ ॥ संसारपाशदृढबन्धनिपीडितस्य मोहान्धकारभयकूपनिपातितस्य । कामाभिलापविविधोरगदंशितस्य दीनस्य मे कुरु दयां करुणैकपात्र ॥ १२ ॥ आर्तो मत्सदृशो नान्यस्त्वत्तो नान्यः कृपाकरः । अनन्यगतिकं नाथ कथं मां समुपेक्षसे ॥ १३ ॥ आकर्णयाशु कृपणस्य कृपणवचांसि [illegible] नाथ बहुभिः किमु [illegible] । अत्र

प्रभो यदि दयां कुरुषे न मे त्वं त्वत्तः परं कथय कं शरणं श्रयामि ॥ १४ ॥ श्रीयादवेन्द्र करुणार्णव विश्वरूप लक्ष्मीनिवास सुरवन्दितपादपद्म । त्वामागतोऽस्मि शरणं सकलत्रपुत्रो यद्रोचते भगवते कुरु तन्नमस्ते ॥ १५ ॥

इति गोपालस्तुतिः संपूर्णा ।

# पाण्डुरङ्गस्तोत्राणि ।

## २८५ पाण्डुरङ्गाष्टकम् ।

श्रीगणेशाय नमः ॥ महायोगपीठे तटे भीमरथ्यां वरं पुण्डरीकाय दातुं मुनीन्द्रैः । समागत्य तिष्ठन्तमानन्दकन्दं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ १ ॥ तडिद्वाससं नीलमेघावभासं रमामन्दिरं सुन्दरं चित्प्रकाशम् । वरं त्विष्टिकायां समन्यस्तपादं पर० ॥ २ ॥ प्रमाणं भवाब्धेरिदं मामकानां नितम्बः कराभ्यां धृतो येन तस्मात् । विधातुर्वसत्यै धृतो नाभिकोशः पर० ॥ ३ ॥ स्फुरत्कौस्तुभालंकृतं कण्ठदेशे श्रिया जुष्टकेयूरकं श्रीनिवासम् । शिवं

शान्तमीड्यं वरं लोकपालं पर० ॥ ५ ॥ शरच्चन्द्रबिम्बाननं चारुहासं लसत्कुण्डलाक्रांतगण्डस्थलाङ्गम् । जपारागबिम्बाधरं कञ्जनेत्रं पर० ॥ ५ ॥ किरीटोज्ज्वलत्सर्वदिक्प्रांतभागं सुरैरर्चितं दिव्यरत्नैरनर्घ्यैः । त्रिभङ्गाकृतिं बर्हमाल्यावतंसं पर० ॥ ६ ॥ विभुं वेणुनादं चरन्तं दुरन्तं स्वयं लीलया गोपवेषं दधानम् । गवां वृन्दकानन्ददं चारुहासं पर० ॥ ७ ॥ अजं रुक्मिणीप्राणसंजीवनं तं परं धाम कैवल्यमेकं तुरीयम् । प्रसन्नं प्रसन्नार्तिहं देवदेवं परब्रह्मलिङ्गं भजे पाण्डुरङ्गम् ॥ ८ ॥ स्तवं पाण्डुरंगस्य वै पुण्यदं ये पठन्त्येकचित्तेन भक्त्या च नित्यम् । भवाम्भोनिधिं तेऽपि तीर्त्वान्तकाले हरेरालयं शाश्वतं प्राप्नुवन्ति ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं पांडुरङ्गाष्टकं संपूर्णम् ।

---

## २८६ विठ्ठलकवचम् ।

श्रीगणेशाय नमः ॥ सूत उवाच ॥ शिरो मे विठ्ठलः पातु कपोलं मुद्गरप्रियः । नेत्रयोर्विष्णुरूपी च वैकुण्ठो घ्राणमेव च ॥१॥ मुखं पातु मुनिसेव्यो दन्तपङ्क्तिं सुरेश्वरः । विद्याधीशस्तु मे जिह्वां कण्ठं विश्वेशवन्दितः ॥ २ ॥ व्यापको हृदयं पातु स्कन्धौ पातु सुखप्रदः । भुजौ मे नृहरिः पातु करौ च सुरनायकः ॥३॥ मध्यं पातु सुराधीशो नाभिं पातु सुरालयः । सुरवन्द्यः कटिं पातु जानुनी कमलासनः ॥ ४ ॥

जङ्घे पातु हृषीकेशः पादौ पातु त्रिविक्रमः । अखिलं च शरीरं मे पातां गोविन्दमाधवौ ॥ ५ ॥ ॥ अकारो व्यापको विष्णुरक्षरात्मक एव च । पावकः सर्वपापानामकाराय नमो नमः ॥ ६ ॥ तारकः सर्वभूतानां धर्मशास्त्रेषु गीयते । पुनातु विश्वभुवनं तोंकाराय नमो नमः ॥ ७ ॥ मूलप्रकृतिरूपा या महामाया च वैष्णवी । तस्या बीजेन संयुक्तयकाराय नमो नमः ॥ ८ ॥ वैकुण्ठाधिपतिः साक्षाद्वैकुण्ठपददायकः । वैजयन्तीसमायुक्तो विकाराय नमो नमः ॥ ९ ॥ स्नातः सर्वेषु तीर्थेषु पूतो यज्ञादिकर्मसु । पावनो द्विजपङ्क्तीनां ठकाराय नमो नमः ॥ १० ॥ वाहनं गरुडो यस्य भुजङ्गः शयनं तथा । वामभागे च लक्ष्मीश्च लकाराय नमो नमः ॥ ११ ॥ नारदादिसमायुक्तं वैष्णवं परमं पदम् । लभते मानवो नित्यं वैष्णवं धर्ममाश्रितः ॥ १२ ॥ व्याधयो विलयं यान्ति पूर्वकर्मसमुद्भवाः । भूतानि च पलायन्ते मन्त्रोपासकदर्शनात् ॥१३॥ इदं षडक्षरस्तोत्रं यो जपेच्छ्रद्धयाऽन्वितः । विष्णोः सायुज्यमाप्नोति सत्यं सत्यं न संशयः ॥ १४ ॥

इति श्रीपद्मपुराणे सूतशौनकसंवादे श्रीविठ्ठलकवचं संपूर्णम् ।

---

## २८७ विठ्ठलहृदयम् ।

श्रीगणेशाय नमः ॥ श्रीपार्वत्युवाच ॥ देवदेव महाशम्भो



भक्तानुग्रहकारक । श्रीविठ्ठलाख्यहृदयं तन्मे ब्रूहि सदाशिव

॥१॥ श्रीशंकर उवाच ॥ शृणु देवि महादेवि पार्वति प्राण-वल्लभे । गुह्याद्गुह्यतरं श्रेष्ठं नास्ति गुह्यमतः परम् ॥ २ ॥ जीवस्य जीवनं साक्षात्प्राणिनां प्राण उच्यते । योगिनां च महागम्यं पाण्डुरङ्गाभिधानकम् ॥३॥ अद्यापि महिमा तस्य सर्वथा ज्ञायते न हि । नित्यनूतनतत्क्षेत्रस्योपमा नास्ति निश्चि-तम् ॥ ४ ॥ सुखं कक्षेन तुलितं पद्मपत्रसमेक्षणम् । कथं साम्यं भवेद्देवि ह्यन्तरं महदन्तरम् ॥ ५ ॥ गजैरावतयोश्चैव अश्वोच्चैःश्रवसोस्तथा । स्पर्शपाषाणयोश्चैव ह्यन्तरं महदन्तरम् ॥ ६ ॥ काश्याः शतगुणं श्रेष्ठं द्वारवत्याद्विलक्षयोः । एवं सर्वाणि तीर्थानि कलां नार्हन्ति कानिचित् ॥७॥ तीर्थं क्षेत्रं दैवतं च मन्त्रः स्तोत्रं महाद्भुतम् । एतत्सर्वं यथाशक्त्या वर्णयामि मम प्रिये ॥८॥ एकदा क्षीरसंस्थाने देवदेवं जग-द्गुरुम् । गतोऽहं पादपूजार्थं सुरेन्द्रब्राह्मणैः सह ॥९॥ शेष-नारदपक्षीन्द्रैर्लक्ष्मीकान्तं गणैः सह । प्रणम्य परमात्मानं तमुवाच चतुर्मुखः ॥१०॥ ब्रह्मोवाच ॥ महाविष्णो जगन्नाथ सर्वविश्वगुहाशय । तत्र यच्च प्रियं देव संस्थानं ब्रूहि केशव ॥ ११ ॥ श्रीभगवानुवाच ॥ शृणु ब्रह्मन्महाशंभो अधिष्ठानं ममालयम् । पाण्डुरङ्गमिति ख्यातं न साम्यं भुवनत्रये ॥१२॥ पाण्डुरङ्गं च वैकुण्ठं तुलयित्वा मयाऽधुना । पाण्डुरङ्गं गुरुं मत्वा पूर्णत्वेनास्थितोऽस्म्यहम् ॥ १३ ॥ नाहं तिष्ठामि क्षीराब्धौ नास्मि सूर्येन्दुमण्डले । मन्नामकीर्तनक्षेत्रे तत्र

तिष्ठामि शंकर ॥१४॥ कार्यकारणकर्तृत्वे संभवक्षेत्रमुच्यते। तादृशं नास्ति तत्क्षेत्रं यत्र तिष्ठामि सर्वदा ॥ १५ ॥ छुखे संजयति ब्रह्म ब्रह्मबीजं प्रशस्यते । बीजेन व्यज्यते बिन्दु-र्बिन्दोर्नादः प्रकीर्तितः ॥ १६ ॥ आहतोऽनाहतश्चेति द्विधा नादस्तु विद्यते । ॐकारोऽनाहतो मूर्तिराहतो नामकीर्तनम् ॥ १७ ॥ बिन्दुनादात्मकं क्षेत्रं नादोऽव्यक्तः प्रदृश्यते । यत्र संकीर्तनेनैव साक्षाद्ब्रह्ममयो भवेत् ॥ १८ ॥ कीदृशं धृतवान् रूपमित्याह परमेश्वरः। इष्टिकायां समपदं तत्त्वमस्यादिलक्ष-णम् ॥ १९ ॥ कटिविन्यस्तहस्ताब्जं प्रणवाकृतिसौरसम् । ऊर्ध्वबीजसमाख्यातं पूर्णेन्दुमुखमण्डनम् ॥२०॥ सर्वभूपण-शोभाढ्यमीदृशं मोक्षदं नृणाम् । अज्ञानजनबोधार्थं तिष्ठामीह जनार्दनः ॥ २१ ॥ विठ्ठलः परमो देवस्त्रयीरूपेण तिष्ठति । तीर्थं क्षेत्रं तथा देवो ब्रह्म ब्रह्मविदां वर ॥२२॥ गुह्याद्गुह्यतरं देवं क्षेत्राणां क्षेत्रमुत्तमम् । चन्द्रभागावरं तीर्थं न भूतं न भविष्यति ॥२३॥ इति श्रुत्वा रमेशस्य वचनं परमामृतम् । ब्रह्मा नारदसंयुक्तो हृदयं कीर्तयन्ययौ ॥ २४ ॥ इदं विठ्ठल-हृदयं सर्वदारिद्र्यनाशनम् । सकृत्पठनमात्रेण लभते परमं पदम् ॥२५॥ ॐ अस्य हृदयमन्त्रस्य परब्रह्म ऋपिः स्मृतः छन्दोऽनुष्टुप् प्रविख्यातो देवः श्रीविठ्ठलो मह्रः ॥ २६ ॥ ॐ नमो बीजमाख्यातं श्रीं पातु शक्तिरीडिता । ॐश्रीं क्लीं कीलकं यस्य वधको देवविठ्ठलः ॥२७॥ त्रिबीजैरङ्गुलिन्यासः

षडङ्गानि ततः परम् । ध्यानादिकं महादिव्यं हृदयं हृदये स्मरेत् ॥ २८ ॥ ॐअस्य श्रीविठ्ठलहृदयस्तोत्रमन्त्रस्य परब्रह्म ऋषिः । अनुष्टुप् छन्दः । श्रीविठ्ठलः परमात्मा देवता ॐनम इति बीजम् । ॐ श्रीं शक्तिः । ॐश्रीं क्लीं कीलकम् । ॐश्रीं विठ्ठलो वेधकः । श्रीविठ्ठलप्रीत्यर्थं जपे विनियोगः । ॐश्रीं क्लीं अङ्गुल्यादिषडङ्गन्यासः ॥ अथ ध्यानम् ॥ ॐ श्रीं क्लीं प्रहसितमुखचन्द्रं प्रोल्लसत्पूर्णबिंबं प्रणमदभयहस्तं चारुनीलाम्बुदाभम् । समपदकमनीयं तत्त्वबोधावगम्यं सदयवरददेवं विठ्ठलं तं नमामि ॥२९॥ क्लीं श्रीं ॐ ॐ श्रीं क्लीं पाण्डुरङ्गः शिखां पातु मूर्धानं पातु विठ्ठलः । मस्तकं माधवः पातु तिलकं पातु श्रीकरः ॥ ३० ॥ भर्गः पातु भ्रुवोर्मध्ये लोचने विष्णुरोजसा । दृष्टिं सुदर्शनः पातु श्रोत्रे पातु दिगम्बरः ॥३१॥ नासाग्रं सृष्टिसौन्दर्यं ओष्ठौ पातु सुधार्णवः । दन्तान्दयानिधिः पातु जिह्वां मे वेदवल्लभः ॥ ३२ ॥ तालुदेशं हरिः पातु रसनां गोरसप्रियः । चुबुकं चिन्मयः पातु ग्रीवां मे गरुडध्वजः ॥ ३३ ॥ कण्ठं तु कम्बुकण्ठश्च स्कन्धौ पातु महाबलः । भुजौ गिरिधरः पातु बाहू मे मधुसूदनः ॥ ३४ ॥ कूर्परौ कृपयाऽऽविष्टः करौ मे कमलापतिः । अङ्गुलीरच्युतः पातु नखानि नरकेसरी ॥ ३५ ॥ वक्षः श्रीलाञ्छनः पातु स्तनौ मे स्तनलालसः । हृदयं श्रीहृषीकेश उदरं परमामृतः ॥ ३६ ॥

नाभिं मे पद्मनाभश्च कुक्षिं ब्रह्माण्डनायकः । कटिं पातु कटिकरो जघनं तु जनार्दनः ॥ ३७ ॥ शिश्नं पातु स्मराधीशो वृषणे वृषभः पतिः । गुह्यं गुह्यतरः पातु ऊरू पातूरुविक्रमः ॥ ३८ ॥ जानू पातु जगन्नाथो जङ्घे मे मन-मोहनः । गुल्फौ पातु गणाधीशः पादौ पातु त्रिविक्रमः ॥ ३९ ॥ शरीरं चाखिलं पातु नरनारायणो हरिः । अग्रे अग्रन्तरः पातु दक्षिणे दक्षकप्रियः ॥ ४० ॥ पृष्ठे पुष्टिकरः पातु वामे मे वासवप्रभुः । पूर्वे पूर्वापरः पातु आग्नेय्यां चाग्निरक्षकः ॥ ४१ ॥ दक्षिणे दीक्षितार्थश्च नैर्ऋत्यामृतुना-यकः । पश्चिमे वरुणाधीशो वायव्ये वातजापतिः ॥ ४२ ॥ उत्तरे धृतखड्गश्च ईशान्ये पातु ईश्वरः । उपरिष्टात्तु भगवा-नन्तरिक्षे चिदम्बरः ॥ ४३ ॥ भूतले धरणीनाथः पाताले कूर्मनायकः । स्वर्गे पातु सुरेन्द्रेन्द्रो ब्रह्माण्डे ब्रह्मणस्पतिः ॥ ४४ ॥ अटव्यां नृहरिः पातु जीवने जगजीवनः । मार्गे पातु मनोगम्यः स्थाने पातु स्थिरासनः ॥ ४५ ॥ सबा-ह्याभ्यन्तरं पातु पुण्डरीकवरप्रियः । विष्णुर्मे विषयान्पातु वासनाः पातु वामनः ॥ ४६ ॥ कर्ता कर्मेन्द्रियं पातु ज्ञाता ज्ञानेन्द्रियं सदा । प्राणान्पातु प्राणनाथ आत्मारामो मनादिपु ॥ ४७ ॥ जागृतिं मे जगद्ब्रह्म स्वप्नं पातु सुते-जकः । सुषुप्तिं मे समाधीशस्तुर्यां पातु मुनिप्रियः ॥ ४८ ॥



भार्यां पातु रमाकान्तः पुत्रान्पातु प्रजानिधिः । कन्या मे

करुणानाथो बान्धवान्भक्तवत्सलः ॥ ४९ ॥ धनं पातु धनाध्यक्षो धान्यं विश्वकुटुम्बकः। पशून्मे पालकः पातु त्रियां पातु कलानिधिः ॥ ५० ॥ वाचस्पतिः पातु वादे सभायां विश्वमोहनः। कामक्रोधोद्भवात्पातु पूर्णकामो मनोरमः ॥ ५१ ॥ वस्त्रं रत्नं भूषणं च नाम रूपं कुलं गृहम्। सर्वं सर्वात्मकः पातु शुद्धब्रह्मपरात्परः ॥ ५२ ॥ क्लीं श्रीं ॐ ॐ श्रीं क्लीं। विठ्ठलं मूर्ध्नि विन्यस्य ललाटे श्रीकरं न्यसेत्। पाण्डुरङ्गं भ्रुवोर्मध्ये नेत्रयोर्व्यापकं न्यसेत् ॥ ५३ ॥ कर्णयोर्निगमार्थं च गल्लयोर्वल्लभं न्यसेत्। नासिकायां न्यसेत्कृष्णं मुखे वै माधवं न्यसेत् ॥ ५४ ॥ ओष्ठयोर्मुरलीकान्तं दन्तपङ्क्त्यां सुहासकम्। रसनायां रसाधीशं जिह्वाग्रे कीर्तनं न्यसेत् ॥ ५५ ॥ कण्ठे न्यसेन्महाविष्णुं स्कन्धयोः कमलापतिम्। बाह्वोर्बलानुजं न्यस्य करे चक्रधरं न्यसेत् ॥ ५६ ॥ पाणितले पद्मधरं कराग्रे वरदाभयम्। वक्षःस्थले वरेण्यं च हृदये श्रीहरिं न्यसेत् ॥ ५७ ॥ उदरे विश्वभर्तारं नाभौ नाभिकरं न्यसेत्। कट्यां न्यसेत्क्रियातीतमूरौ तु उद्धवप्रियम् ॥ ५८ ॥ जानुजङ्घे न्यसेच्छक्तिं पादयोः पावनं न्यसेत्। सबाह्याभ्यन्तरं न्यस्य देवदेवं जगद्गुरुम् ॥ ५९ ॥ क्लीं श्रीं ॐ ॐ श्रीं क्लीं। विठ्ठलाय नमस्तुभ्यं नमो विज्ञानहेतवे। विष्णुजिष्णुस्वरूपाय श्रीविष्णवे नमो नमः ॥ ६० ॥ नमः पुण्डरिकाक्षाय पूर्ण-

विश्वात्मने नमः। नमस्ते पाण्डुरङ्गाय पावनाय नमो नमः ॥ ६१ ॥ नमः पूर्णप्रकाशाय नमस्ते पूर्णतेजसे। पूर्णैश्वर्य-स्वरूपाय पूर्णज्ञानात्मने नमः ॥ ६२ ॥ सच्चिदानन्दकन्दाय नमोऽनन्तसुखात्मने। नमोऽनन्ताय शान्ताय श्रीरामाय नमो नमः ॥ ६३ ॥ नमो ज्योतिःस्वरूपाय नमो ज्योति-र्मयात्मने। नमो ज्योतिःप्रकाशाय सर्वोत्कृष्टात्मने नमः ॥ ६४ ॥ ॐ नमो ब्रह्मरूपाय नम ॐकारमूर्तये। निर्वि-कल्पाय सत्याय शुद्धसत्त्वात्मने नमः ॥ ६५ ॥ महद्ब्रह्म नमस्तेऽस्तु सत्यसंकल्पहेतवे। नमः सृष्टिप्रकाशाय गुणसा-म्याय ते नमः ॥ ६६ ॥ ब्रह्मविष्णुमहेशाय नानावर्णात्मरू-पिणे। सदोदिताय शुद्धाय गुणातीताय ते नमः ॥ ६७ ॥ नमः सहस्रनाम्ने च नमः सहस्ररूपिणे। नमः सहस्रवक्त्राय सहस्राक्षाय ते नमः ॥ ६८ ॥ केशवाय नमस्तुभ्यं नमो नारायणाय च। माधवाय नमस्तेऽस्तु गोविन्दाय नमो नमः ॥ ६९ ॥ श्रीविष्णवे नमस्तुभ्यं मधुसूदनरूपिणे। त्रिविक्रमसुदीर्घाय वामनाय नमो नमः ॥ ७० ॥ श्रीधराय नमस्तुभ्यं हृषीकेशाय ते नमः। नमस्ते पद्मनाभाय दामो-दराय ते नमः ॥ ७१ ॥ नमस्ते संकर्षणाय वासुदेवाय ते नमः। प्रद्युम्नाय नमस्तेऽस्तु अनिरुद्धाय ते नमः ॥ ७२ ॥ नमः पुरुषोत्तमायाधोक्षजाय ते नमो नमः। नमस्ते नार-



सिंहाय अच्युताय नमो नमः ॥ ७३ ॥ नमो जनार्दनाया-

स्तूपेन्द्राय च नमो नमः । श्रीहरये नमस्तुभ्यं श्रीकृष्णाय नमो नमः ॥ ७४ ॥ नमः पण्ढरिनाथाय भीमातीरनिवासिने । नमो ऋषिप्रसन्नाय वरदाय नमो नमः ॥ ७५ ॥ इष्टिकारूढरूपाय समपादाय ते नमः । कटिविन्यस्तहस्ताय सुखब्रह्मात्मने नमः ॥ ७६ ॥ नमस्तीर्थस्वरूपाय क्षेत्ररूपात्मने नमः । नमोऽस्तु मूर्तिमूर्ताय त्रिमूर्तये नमो नमः ॥ ७७ ॥ नमस्ते बिन्दुतीर्थाय नमोऽमृतेश्वराय च । नमः पुष्करतीर्थाय चन्द्रभागाय ते नमः ॥ ७८ ॥ नमस्ते जानुदेवाय धीरावत्यै नमो नमः । नमस्ते पुण्डरीकाय भीमरथ्यै नमो नमः ॥ ७९ ॥ मुक्तिकेशप्रवराय वेणुवादात्मने नमः । नमस्तेऽनन्तपादाय द्विपदाय नमो नमः ॥ ८० ॥ नमो गोवत्सपादाय गोपालाय नमो नमः । नमस्ते पद्मतीर्थाय नरनारायणात्मने ॥८१॥ नमस्ते पितृतीर्थाय लक्ष्मीतीर्थाय ते नमः । नमोऽस्तु शङ्खचक्राय गदापद्माय ते नमः ॥ ८२ ॥ नमोऽश्वत्थनृसिंहाय कुण्डलाख्यस्वरूपिणे । नमस्ते क्षेत्रपालाय महालिङ्गाय ते नमः ॥ ८३ ॥ नमस्ते रङ्गशालाय नमः कीर्तनरूपिणे । नमो रुक्मिणिनाथाय महामूर्त्यै नमो नमः ॥ ८४ ॥ नमो वैकुण्ठनाथाय नमः क्षीराब्धिशायिने । सर्वब्रह्म नमस्तुभ्यमहंब्रह्मात्मने नमः ॥ ८५ ॥ नमो नमो नमस्तुभ्यं नमस्तेऽस्तु नमो नमः । क्लीं श्रीं ॐ । आद्यन्ते संपुटीकृत्य बीजैश्च प्राणवल्लभे ॥८६॥ अष्टोत्तरशत मन्त्रान्

हृदयं नमनैः सह । अनन्यैः कीर्तितं यैश्च तेषामाज्ञां वहाम्यहम् ॥८७॥ यावान्यस्य यथा भावो यन्नामन्यासपूर्वकम् । तावदेव हि विज्ञानं गदितं मदनुग्रहात् ॥ ८८ ॥ श्रीशंकर उवाच ॥ इत्युक्तं वासुदेवोक्तं गोप्याद्गोप्यतरं महत् । नित्यं संकीर्तनं यस्य प्राप्तमुक्तिर्न संशयः ॥८९॥ इति गुह्यं हि हृदयं विठ्ठलस्य महाद्भुतम् । शृणुयाच्छ्रद्धया युक्तो वैकुण्ठे लभते रतिम् ॥ ९० ॥ एवमुक्त्वा महादेवः पार्वतीमनुकम्पया । समाधिस्थो भवेच्छम्भुः हस्मितां पुलकाततताम् ॥ ९१ ॥

इति श्रीभविष्योत्तरपुराणे पाण्डुरङ्गमाहात्म्ये श्रीमद्विठ्ठलहृदयस्तोत्रं संपूर्णम् ।

---

## २८८ श्रीविठ्ठलाष्टोत्तरशतनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रुत्वा नामसहस्रं श्रीविठ्ठलस्य गुणान्वितम् । पार्वती परिपप्रच्छ शंकरं लोकशंकरम् ॥ १ ॥ श्रीपार्वत्युवाच ॥ देवदेव महादेव देवानुग्रहविग्रह । अष्टोत्तरशतं नाम्नां तस्य देवस्य मे वद ॥ २ ॥ जनः कलिमलादिग्धोऽलसः कामाविलो जडः। पाठायस्य सकृद्वापि सौशील्यादिरतो भवेत् ॥३॥ तदहं श्रोतुमिच्छामि तवाज्ञानं न विद्यते॥ सूत उवाच ॥ इत्युक्तो भार्यया शंभुः संस्मरन्पुरुषोत्तमम् ॥ ४ ॥ कटिस्थितकरद्वन्द्वं जगाद नगपुत्रिकाम् ॥ श्रीशंकर उवाच ॥ देवि लोकोपकाराय कृतः प्रश्नस्त्वयानघ ॥ ५ ॥

हिताय सर्वजन्तूनां नाम्नामष्टोत्तरं शतम् । श्रीविठ्ठलस्य देवस्य वाग्मिसिद्धिप्रदं नृणाम् ॥६॥ अष्टोत्तरशतस्याहमृषिः प्रोक्तो मनीषिभिः । छन्दोऽनुष्टुब्देवता श्रीविठ्ठलः परिकीर्तितः ॥७॥ अथ ध्यानम् ॥ ध्यायेच्छ्रीविठ्ठलाख्यं समपदकमलं पद्मपत्रायताक्षं गम्भीरस्निग्धहासं कटिनिहितकरं नीलमेघावभासम् । विद्युद्वासो वसानं मणिमयमुकुटं कुण्डलोद्भासिगण्डं मायूरस्रग्विभूषाभयवरसहितं कौस्तुभोद्भासिताङ्गम् ॥८॥ ॐ क्लीं । विठ्ठलः पुण्डरीकाक्षः पुण्डरीकनिभेक्षणः । पुण्डरीकाश्रमपदः पुण्डरीकजलाप्लुतः ॥ ९ ॥ पुण्डरीकक्षेत्रवासः पुण्डरीकवरप्रदः । शारदाधिष्ठितद्वारः शारदेन्दुनिभाननः ॥ १० ॥ नारदाधिष्ठितद्वारो नारदेशप्रपूजितः । भुवनाधीश्वरीद्वारो भुवनाधीश्वरीश्वरः ॥ ११ ॥ दुर्गाश्रितोत्तरद्वारो दुर्गमागमसंवृतः । क्षुल्लपेशीपिनद्धोरुगोपेष्ट्याश्लिष्टजानुकः ॥ १२ ॥ कटिस्थितकरद्वन्द्वो वरदाभयमुद्रितः । त्रेतातोरणपालस्थत्रिविक्रम इतीरितः ॥ १३ ॥ तितऊक्षेत्रपोश्वत्थकोटीश्वरवरप्रदः । स एव करवीरस्थो नारीनारायणीति च ॥ १४ ॥ नीरासंगमसंस्थश्च सैकतः प्रतिमार्चितः । वेणुनादेन देवानां मनश्रवणमङ्गलः ॥१५॥ देवकन्याकोटिकोटिनीराजितपदाम्बुजः । पद्मतीर्थस्थिताश्वत्थो नरो नारायणो महान् ॥१६॥ चन्द्रभागासरोनीरकेलिलोलदिगम्बरः। सध्रीचीत्सवीपूचीरितिश्रुत्यर्थरूपधृक् ॥ १७ ॥ ज्योतिर्मयक्षेत्रवासी सर्वोत्कृ-

छत्रयात्मकः । स्वकुण्डलप्रतिष्ठाता पञ्चायुधजलप्रियः ॥१८॥ क्षेत्रपालाग्रपूजार्थी पार्वतीपतिपूजितः । चतुर्मुखस्तुतो विष्णुर्जगन्मोहनरूपधृक् ॥ १९ ॥ मन्त्राक्षरावलीहस्तस्थकौस्तुभोरस्थलप्रियः । स्वमन्त्रोज्जीवितजनः सर्वकीर्तनवल्लभः ॥ २० ॥ वासुदेवो दयासिन्धुर्गोगोपीपरिवारितः । युधिष्ठिरहतारातिर्मुक्तकेशीवरप्रदः ॥ २१ ॥ बलदेवोपदेष्टा च रुक्मिणीपुत्रनायकः । गुरुपुत्रप्रदो नित्यमहिमा भक्तवत्सलः ॥ २२ ॥ भक्तारिहा महादेवो भक्ताभिलषितप्रदः । सव्यसाची ब्रह्मविद्यागुरुर्मोहापहारकः ॥ २३ ॥ भीमामार्गप्रदाता च भीमसेनमतानुगः । गन्धर्वानुग्रहकरो ह्यपराधसहो हरिः ॥ २४ ॥ स्वप्नदर्शी स्वप्नदृश्यो भक्तदुःस्वप्नशान्तिकृत् । आपत्कालानुपेक्षी चानपेक्षोऽपेक्षितो जनैः ॥ २५ ॥ सत्योपयाचनः सत्यसंधः सत्याभितारकः । सत्याजानी रमाजानी राधाजानी रथाङ्गभाक् ॥ २६ ॥ सिञ्चनः क्रीडनो गोपैर्दधिदुग्धापहारकः । बोधिन्युत्सवयुक्तीर्थः शयन्युत्सवभूमिभाक् ॥ २७ ॥ मार्गशीर्षोत्सवाक्रान्तवेणुनादपदाङ्कभूः । दध्यन्नव्यञ्जनाभोक्ता दधिभुक्कामपूरकः ॥ २८ ॥ बिलान्तर्धानसत्केलिलोलुपो गोपवल्लभः । सखिनेत्रे पिधायाद्य कोऽहं पृच्छाविशारदः ॥ २९ ॥ समासमप्रश्नपूर्वमुष्टिमुष्टिप्रदर्शकः । कुटिलीलासु कुशलः कुटिलालकमण्डितः ॥ ३० ॥ सारीलीलानुसारी च वाहक्रीडापरः सदा । कार्णा-

टकीरतिरतो मङ्गलोपवनास्थितः ॥ ३१ ॥ माध्याह्नतीर्थ-
पूरेक्षाविस्मायितजगत्रयः । निवारितक्षेत्रविघ्नो दुष्टदुर्बुद्धि-
भञ्जनः ॥ ३२ ॥ वालुकावृक्षपाषाणपशुपक्षिप्रतिष्ठितः ।
आशुतोषो भक्तवशः पांडुरङ्गः सुपावनः ॥ ३३ ॥ पुण्य-
कीर्तिः परं ब्रह्म ब्रह्मण्यः कृष्ण एव च । अष्टोत्तरशतं
नाम्नां विट्ठलस्य महात्मनः ॥ ३४ ॥ इति ते कथितं देवि
पवित्रं मङ्गलं महत् । त्रिकालमेककालं वा यः पठेन्नियतः
शुचिः ॥ ३५ ॥ करस्थाः सिद्धयस्तस्य सत्यं सत्यं वदा-
म्यहम् । अपुत्रो बहुपुत्रः स्यादविद्यः सर्वविद्यते ॥ ३६ ॥
निर्धनो धनदो नूनं भवेदस्य निषेवणात् । अविनाभूतभा-
र्यश्च जितारातिर्निरामयः ॥ ३७ ॥ बहुनोक्तेन किं देवि
हरिवल्लभतामियात् ॥ सूत उवाच ॥ श्रुत्वा तन्महदाश्चर्यम-
ष्टोत्तरशतं परम् ॥३८॥ पुनः पुनः प्रणम्येशं पार्वती वाक्य-
मब्रवीत् ॥ पार्वत्युवाच ॥ तत्क्षेत्रवसतिश्चैव तत्तीर्थस्यात्रगा-
हनम् ॥ ३९ ॥ तन्मूर्तिदर्शनं चैव तन्नामावलिकीर्तनम् ।
देहि मे सर्वदा स्वामिन्नेकाग्रमनसा विभो ॥ ४० ॥ श्रीशं-
कर उवाच ॥ तदस्तु तव देवेशि ममाप्येतन्मनीषितम् ।
इत्युक्त्वा प्रययौ तस्य निवासं परमादरात् ॥ ४१ ॥

इति श्रीपद्मपुराणे पञ्चोनषष्टिसाहस्र्यां संहितायां हररहस्ये
उमामहेश्वरसंवादे विट्ठलनामाष्टोत्तरशतं संपूर्णम् ।

## २८९ श्रीविठ्ठलस्तवराजः ।

श्रीगणेशाय नमः ॥ अस्य श्रीमद्विठ्ठलस्तवराजमन्त्रस्य भगवान् वेदव्यास ऋषिः । अनुष्टुप् छन्दः । श्रीविठ्ठलः परमात्मा देवता । त्रिमूर्त्यात्मकायेति बीजम् । सृष्टिसंरक्षणार्थेति शक्तिः । वरदाभयहस्तेति कीलकम् । मम सर्वाभीष्टसिद्ध्यर्थं जपे विनियोगः ॥ अथ न्यासः ॥ ॐ नमो भगवते विठ्ठलाय अङ्गुष्ठाभ्यां नमः । ॐ तत्त्वप्रकाशात्मने तर्जनीभ्यां नमः । शङ्खचक्रगदाधरात्मने मध्यमाभ्यां नमः । सृष्टिसंरक्षणार्थाय अनामिकाभ्यां नमः । ॐ त्रिमूर्त्यात्मकाय कनिष्ठिकाभ्यां नमः । ॐ वरदाभयहस्ताय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ॐभूर्भुवः स्वरोमिति दिग्बन्धः ॥ अथ ध्यानम् ॥ श्रीगुरुं विठ्ठलानन्दं परात्परजगत्प्रभुम् । त्रैलोक्यव्यापकं देवं शुद्धमत्यन्तनिर्मलम् । ॥१॥ नासाग्रेऽवस्थितं देवमाब्रह्मस्तम्बसंयुतम् । ऊर्णातन्तुनिभाकारं सूत्रज्ञं विठ्ठलं स्वयम् ॥ २ ॥ गङ्गायमुनयोर्मध्ये त्रिकूटं रङ्गमन्दिरम् । ज्ञानं भीमरथीतीरं स्वदेवं पण्ढरीपुरम् ॥ ३ ॥ रुक्मिणीशक्तिहस्तेन क्रीडन्तं चललोचनम् । आज्ञाब्रह्मबिलान्तस्थज्योतिर्मयस्वरूपकम् ॥ ४ ॥ सहस्रदलपद्मस्थं सर्वाभरणभूषितम् । सर्वदेवसमुत्पन्नमोमितिज्योतिरूपकम् ॥५॥ समपर्वतऊर्ध्वस्थं श्रोणित्रयसहस्रकम् स्तम्भाख्यं मध्यस्थानं कलौ प्रकटनायकम् ॥ ६ ॥ पीत-

वस्त्रपरीधानं तुलसीवनमालिनम्। शङ्खचक्रधरं देवं वरदाभयहस्तकम् ॥७॥ ऊर्ध्वपुण्ड्रमयं देवं चित्राभरणभूषितम्। रत्नसिंहासनं देवं सुवर्णमुकुटोज्ज्वलम् ॥ ८ ॥ रत्नकिङ्किणिकेयूरं रत्नमण्डपशोभितम्। पौण्ड्रं च पालिनं रङ्गं यदूनां कुलदीपकम् ॥ ९ ॥ देवारिदैत्यदर्पघ्नं सर्वलोकैकनायकम्। ॐ नमः शान्तिरूपाय सर्वलोकैकसिद्धये ॥ ॥ १० ॥ सर्वदेवस्वरूपाय सर्वयन्त्रस्वरूपिणे। सर्वतन्त्रस्वरूपाय विठ्ठलाय नमो नमः ॥ ११ ॥ परमन्त्रप्रभुन्यायपरमन्त्रनिवारिणे। परतन्त्रविनाशाय विठ्ठलाय० ॥१२॥ परात्परस्वरूपाय परमात्मस्वरूपिणे। परब्रह्मस्वरूपाय विठ्ठलाय० ॥१३॥ विश्वरूपस्वरूपाय विश्वव्यापिस्वरूपिणे। विश्वम्भरस्वमित्राय विठ्ठलाय० ॥ १४ ॥ परहंसस्वरूपाय सोऽहंहंसस्वरूपिणे। हंसमन्त्रस्वरूपाय विठ्ठलाय० ॥ १५ ॥ अनिर्वाच्यस्वरूपाय अखण्डब्रह्मरूपिणे। आत्मतत्त्वप्रकाशाय विठ्ठलाय० ॥१६॥ क्षराक्षरस्वरूपाय अक्षराय स्वरूपिणे। ॐकारवाच्यरूपाय विठ्ठलाय० ॥ १७ ॥ बिन्दुनादकलातीतभिन्नदेहसमप्रभ। अभिन्नायैव विश्वाय विठ्ठलाय० ॥ १८ ॥ भीमातीरनिवासाय पण्ढरीपुरवासिने। पाण्डुरङ्गप्रकाशाय विठ्ठलाय० ॥ १९ ॥ सर्वयोगार्थतत्त्वज्ञ सर्वभूतहिते रत। सर्वलोकहितार्थाय विठ्ठलाय नमो नमः ॥ २० ॥ य इदं पठते नित्यं त्रिसंध्यं स्तौति माधवम्। सर्वयोगप्रदं नित्यं दीर्घमायु-

वर्धनम् ॥ २१ ॥ सर्वे ज्वरा विनश्यन्ति मुच्यते सर्वबन्ध-
नात् । आवर्तनसहस्रैस्तु लभते वाञ्छितं फलम् ॥ २२ ॥
य इदं परमं गुह्यं सर्वत्र न प्रकाशयेत् । स ब्रह्मज्ञानमाप्नोति
भुक्तिं मुक्तिं च विन्दति ॥ २३ ॥ सर्वभूतप्रशमनं सर्वदुःख-
निवारणम् । सर्वापमृत्युशमनं सर्वराजवशीकरम् ॥ २४ ॥
अलक्ष्मीनाशनं चैव सुलक्ष्मीसुखदायकम् । त्रिसंध्यं पठते
भक्त्या निर्भयो भवति ध्रुवम् ॥ २५ ॥ संग्रामे संकटे चैव
विवादे शत्रुमध्यगे । शृङ्खलाबन्धने चैव मुच्यते सर्वकिल्बि-
षात् ॥ २६ ॥ राजद्वारे सभास्थाने सिंहव्याघ्रभयेषु च ।
साधकः स्तम्भने चैव सर्वत्र विजयी भवेत् ॥२७॥

इति श्रीस्कन्दपुराणे नारदवसिष्ठसंवादे वामकेश्वरतन्त्रे
श्रीविठ्ठलस्तवराजस्तोत्रं संपूर्णम् ।

## २९० विहारिणोऽष्टकम् ।

श्रीगणेशाय नमः ॥ पुरा कल्पापाये पुरुष इति नाम्ना
समभवत्पुनः क्रोडीं बिभ्रत्तनुमपि ददारोल्बणमयम् । स्वदं-
ष्ट्राभिः स्वर्णेक्षणमपि च पृथ्वीं विधृतवान् विहारी कंसारि-
र्मम हरतु जाड्यं हृदि गतम् ॥ १ ॥ अयं मत्स्यो भूत्वा
मनुमुपगतोऽपाच्च कमठो दधाराद्रिं पृष्ठेऽमृतमथनकालेऽब्धि-
जठरे । समाने कण्डूयं रचितमिदमस्येक्षणवशाद्विहारी०
॥ २ ॥ नृसिंहोऽयं भूत्वा स्वजनमनुकम्पी दितिसुतादपात्तं

सीराग्रैरिव खरनखैः क्षेत्रमदरत् । उपेन्द्रोऽयं भूत्वा भुवमुपजहारोन्नतबलेर्विहारी० ॥ ३ ॥ ततो दृष्ट्वा राज्ञः सुररिपुकुलाचारपथगान्कुठारं चोत्थाप्य त्रिगुणनगकृत्वः प्रकुपितः । महीं कृत्वाऽक्षत्रां तपति च तपोऽयाप्ययसुरहा विहारी० ॥ ४ ॥ अयं क्षात्रोत्पन्नोऽप्युदधितरणादीनि कृतवाञ्जघानोग्रान्देवद्विष इति रमालालितपदः । भजन्ते यं नित्यं भवजलधिपारैकमनसो विहा० ॥ ५ ॥ स एष व्यासोऽभूज्जडमतिनरान्वीक्ष्य कृपया विभागं वेदानां बहुविधिमकार्षीच्च तपति । अथोरन्ध्रैर्ज्ञानं पिबति जनता यन्निगदितं विहा० ॥ ६ ॥ अयं कृष्णो भूत्वा भुवि भरमशाम्यत्पुनरयं खलानां मोहार्थं भुवि जिनसुतोऽभूच्च निखिलम् । अभापद्वैधर्म्यं न हितमपि पाखण्डरुचिरं विहा० ॥ ७ ॥ अयं कल्किर्भूत्वा दुरितमलिनान्नेष्यति पदभिदानीं सोऽप्यायो निजजनसुखं कर्तुमुदितः । स्थितो दुर्गान्ते यो भवति हि विशालेऽतिविमले विहारी कंसारिर्मम हरतु जाड्यं हृदि गतम् ॥ ८ ॥ इदं पठेद्वा रघुनाथनिर्मितं प्रभातकाले हि विहारिणोऽष्टकम् । धन्यं यशस्यं सुतकीर्तिसौख्यदं विहारिणोऽन्ते लभते परां गतिम् ॥ ९ ॥

इति श्रीपण्डितरघुनाथशर्मणा विरचितं विहारिणोऽष्टकं समाप्तम् ।

## २९१ दशावतारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवो नः शुभमातनोतु दशधा निर्वर्तयन्भूमिकां रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः । यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥१॥ निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैरन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् । निष्प्रत्यूहतरङ्गरिङ्गणमिथःप्रत्यूढपाथश्छटाडोलारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः ॥२॥ अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा निद्राणस्य परस्य कूर्मवपुषो निःश्वासवातोर्मयः । यद्विक्षेपणसंस्कृतोदधिपयःप्रेङ्खोलपर्यङ्किकानित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥ ३ ॥ गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृतब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः । यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिर्ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥ ४ ॥ प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैरव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः । यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥५॥ व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटस्त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः । यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधू-

यते ॥६॥ क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन्क्रमादक्ष-त्रामपि संततक्षय इमां त्रिःसप्तकृत्वः क्षितिम् । दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन्नब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः॥ ७ ॥ पारावारपयोविशोषणकला-पारीणकालानलज्वालाजालविहारहारिविशिखव्यापारघोर-क्रमः । सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती धर्मो विग्रह-वानधर्मविरतिं धन्वी स तन्वीत नः॥ ८ ॥ फक्कत्कौरवपट्ट-णप्रभृतयः प्रास्तप्रलम्बादयस्तालाङ्कस्य तथाविधा विहृतय-स्तन्वन्तु भद्राणि नः । क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैराकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९ ॥ नाथायैव नमः पदं भवतु नश्चित्रैश्चरित्रक्रमैर्भूयोभि-र्भुवनान्यमूनि कुहनागोपाय गोपायते । कालिंदीरसिकाय कालियफणिस्फारस्फटावाटिकारङ्गोत्सङ्गविशङ्कचङ्क्रमधु-रापर्याय चर्याय ते ॥ १० ॥ भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां कल्की विष्णुयशःसुतः कलिकथा-कालुष्यकूलंकषः । निःशेषक्षतकण्टके क्षितितले धाराजलौ-घैर्ध्रुवं धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ ११ ॥ इच्छामीन विहारकच्छप महापोत्रिन्यदृच्छाहरे रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् । क्रीडावल्लव कल्कवा-हन दशाकल्किन्निति प्रत्यहं जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥ १२ ॥ विद्यादन्वति वेङ्कटेश्वरकृतौ

जातौ जगन्मङ्गलं देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः । वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे शुद्धिः कापि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ १३ ॥

इति श्रीवेंकटेशार्यविरचितं दशावतारस्तोत्रं संपूर्णम् ।

---

## २९.२ कल्किस्तवः ।

श्रीगणेशाय नमः । राजान ऊचुः । जय जय निज-मायया कल्पिताशेषविशेषकल्पनापरिणामजलाप्लुतलोक-त्रयोपकारणमाकलय्य मनुमनिशम्य पूरितमविजनावि-जनाविर्भूतमहामीनशरीर त्वं निजकृतधर्मसेतुसंरक्षणकृता-वतारः ॥ १ ॥ पुनरिह जलधिमथनाहतदेवदानवगणानां मन्दराचलानयनव्याकुलितानां सहाय्येनाहतचित्तः पर्वतो-द्धरणामृतप्राशनरचनावतारः कूर्माकारः प्रसीद परेश त्वं दीननृपाणाम् ॥ २ ॥ पुनरिह दितिजबलपरिलङ्घितवास-वसदनाहतजितभुवनपराक्रमहिरण्याक्षनिधनपृथिव्युद्धरणसं-कल्पाभिनिवेशेन धृतकोलावतार पाहि नः ॥ ३ ॥ पुनरिह त्रिभुवनजयिनो महाबलपराक्रमस्य हिरण्यकशिपोरर्दितानां देववराणां भयभीतानां कल्याणाय दितिसुतवधप्रेप्सुर्ब्रह्मणो वरदानादवध्यस्य न शस्त्रास्त्रैरात्रिंदिवास्वर्गमर्त्यपातालतले देवगन्धर्वकिन्नरनरनागैरिति विचिन्त्य नरहरिरूपेण नखा-ग्रभिन्नोर्वीं दृढदन्तिच्छदं त्वमाशु कृतवानसि ॥ ४ ॥ पुनरिह

त्रिजगज्जयिनो बलेः सत्रे शक्रानुजो बटुवामनो दैत्यसंमोहनाय त्रिपदभूमियाञ्चाच्छलेन विश्वकायस्तदुत्सृष्टजलसंस्पर्शविवृद्धमनोभिलापस्त्वं भूतले बलेर्दौवारिकत्वमङ्गीकृतमुचितं दानफलम् ॥ ५ ॥ पुनरिह हयादिनृपाणाममितबलपराक्रमाणां नानामदोल्लङ्घितमर्यादावर्त्मनां निधनाय भृगुवंशजो जामदग्न्यः पितृहोमधेनुहरणप्रवृद्धमन्युवशात् त्रिःसप्तकृत्वो निःक्षत्रियां पृथिवीं कृतवानसि परशुरामावतारः ॥ ६ ॥ पुनरिह पुलस्त्यवंशावतंसस्य विश्रवसः पुत्रस्य निशाचरस्य रावणस्य लोकत्रयतापनस्य निधनमुररीकृत्य रविकुलजातदशरथात्मजो विश्वामित्रादस्त्राण्युपलभ्य वने सीताहरणवशात्प्रवृद्धमन्युनाऽम्बुधिं वानरैर्निबध्य सगणं दशकन्धरं हतवानसि रामावतारः ॥ ७ ॥ पुनरिह यदुकुलजलधिकलानिधिः सकलसुरगणसेवितपादारविन्दद्वन्द्वो विविधदानवदैत्यदलनलोकत्रयदुरिततापनो वसुदेवात्मजो रामावतारो बलभद्रस्त्वमसि ॥ ८ ॥ पुनरिह विधिकृतवेदधर्मानुष्ठानविहितनानादर्शनसघृणः संसारकर्मत्यागविधिना ब्रह्माभासविलासचातुरीं प्रकृतिविमाननामसंपादयन्बुद्धावतारस्त्वमसि ॥ ९ ॥ अधुना कलिकुलनाशावतारो बौद्धपाषण्डम्लेच्छादीनां च वेदधर्मसेतुपरिपालनाय कृतावतारः कल्किरूपेणास्मान् स्त्रीत्वनिरयादुद्धृतवानसि तवानुकम्पां किमिह कथयामः ॥ १० ॥ क्व ते ब्रह्मादीनामविजितविला-

सावतरणं क नः कामावामाकुलितमृगतृष्णार्तमनसाम् । सुदुष्प्राप्यं युष्मच्चरणजलजालोकनमिदं कृपापारावार प्रमुदितदृशाश्वासय निजान् ॥ ११ ॥

इति श्रीकल्किपुराणेऽनुभागवते भविष्ये द्वितीयांशे
नृपकृतकल्किस्तवः संपूर्णः ।

## २९. कल्किस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सुशान्तोवाच । जय हरेऽमराधीशसेवितं तव पदाम्बुजं भूरिभूषणम् । कुरु ममाग्रतः साधुसत्कृतं त्यज महामते मोहमात्मनः ॥ १ ॥ तव वपुर्जगद्रूपसंपदा विरचितं सतां मानसे स्थितम् । रतिपतेर्मनोमोहदायकं कुरु विचेष्टितं कामलम्पटम् ॥ २ ॥ तव यशो जगच्छोकनाशनं मृदुकथामृतं प्रीतिदायकम् । स्मितसुधोक्षितं चन्द्रवन्मुखं तव करोत्यलं लोकमङ्गलम् ॥ ३ ॥ मम पतिस्त्वयं सर्वदुर्जयो यदि तवाप्रियं कर्मणाचरेत् । जहि तदात्मनः शत्रुमुद्यतं कुरु कृपां न चेदीदृगीश्वरः ॥ ४ ॥ महदहंयुतं पञ्चमात्रया प्रकृतिजायया निर्मितं वपुः । तव निरीक्षणालीलया जगत्स्थितिलयोदयं ब्रह्मकल्पितम् ॥ ५ ॥ भूवियन्मरुद्वारितेजसां राशिभिः शरीरेन्द्रियाश्रितैः । त्रिगुणया स्वया मायया विभो कुरु कृपां भवत्सेवनार्थिनाम् ॥ ६ ॥

तव गुणालयं नाम पावनं कलिमलापहं कीर्तयन्ति ये । भव-

भयक्षयं तापतापिता ह्युरहो जनाः संसरन्ति नो ॥ ७ ॥
तव जन्तुः सतां मानवर्धनं जिनकुलक्षयं देवपालकम् । कृत-युगार्पकं धर्मपूरकं कलिकुलान्तकं शं तनोतु मे ॥ ८ ॥
मम गृहं पतिपुत्रनप्तृकं गजरथैर्ध्वजैश्चामरैर्धनैः । मणिवरासनं सत्कृतिं विना तव पदाब्जयोः शोभयन्ति किम् ॥ ९ ॥
तव जगद्वपुः सुन्दरस्मितं मुखमनिन्दितं सुन्दरारवम् । यदि न मे प्रियं वल्गुचेष्टितं परिकरोत्यहो मृत्युरस्त्विह ॥ १० ॥ हयचर भयहरकरहरशरणखरतरवरशर दशबलदमन । जय हतपरभर भववरनाशन शशधरशतसमरसभरमदन ॥ ११ ॥

इति श्रीकल्किपुराणे सुशान्ताकृतं कल्किस्तोत्रं संपूर्णम् ।

## दत्तस्तोत्राणि ।

### २९४ दत्तात्रेयस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जटाधरं पाण्डुरङ्गं शूलहस्तं कृपानिधिम् । सर्वरोगहरं देवं दत्तात्रेयमहं भजे ॥१॥ अस्य श्रीदत्तात्रेयस्तोत्रमन्त्रस्य भगवान्नारद ऋषिः । अनुष्टुप् छन्दः ।

श्रीदत्तः परमात्मा देवता । श्रीदत्तप्रीत्यर्थं जपे विनियोगः। जगदुत्पत्तिकर्त्रे च स्थितिसंहारहेतवे । भवपाशविमुक्ताय दत्तात्रेय नमोऽस्तु ते ॥ १ ॥ जराजन्मविनाशाय देहशुद्धिकराय च । दिगम्बर दयामूर्ते दत्तात्रेय० ॥ २ ॥ कर्पूरकान्तिदेहाय ब्रह्ममूर्तिधराय च । वेदशास्त्रपरिज्ञाय दत्तात्रेय० ॥३॥ ह्रस्वदीर्घकृशस्थूलनामगोत्रविवर्जित । पञ्चभूतैकदीप्ताय दत्तात्रेय० ॥ ४ ॥ यज्ञभोक्ते च यज्ञाय यज्ञरूपधराय च । यज्ञप्रियाय सिद्धाय दत्तात्रेय० ॥ ५ ॥ आदौ ब्रह्मा मध्ये विष्णुरन्ते देवः सदाशिवः । मूर्तित्रयस्वरूपाय दत्तात्रेय० ॥६॥ भोगालयाय भोगाय योग्ययोग्याय धारिणे । जितेन्द्रियजितज्ञाय दत्तात्रेय० ॥७॥ दिगम्बराय दिव्याय दिव्यरूपधराय च । सदोदितपरब्रह्म दत्तात्रेय० ॥ ८ ॥ जम्बूद्वीपे महाक्षेत्रे मातापुरनिवासिने । जयमान सतां देव दत्तात्रेय० ॥ ९ ॥ भिक्षाटनं गृहे ग्रामे पात्रं हेममयं करे । नानास्वादमयी भिक्षा दत्तात्रेय० ॥ १० ॥ ब्रह्मज्ञानमयी मुद्रा वस्त्रे चाकाशभूतले । प्रज्ञानघनबोधाय दत्तात्रेय० ॥११॥ अवधूत सदानन्द परब्रह्मस्वरूपिणे । विदेहदेहरूपाय दत्तात्रेय० ॥ १२ ॥ सत्यरूप सदाचार सत्यधर्मपरायण । सत्याश्रय परोक्षाय दत्तात्रेय० ॥ १३ ॥ शूलहस्त गदापाणे वनमालासुकन्धर । यज्ञसूत्रधर ब्रह्मन्दत्तात्रेय० ॥ १४ ॥ क्षराक्षरस्वरूपाय परात्परतराय च । दत्त मुक्तिपरस्तोत्र दत्तात्रेय०

॥ १५ ॥ दत्तविद्याढ्य लक्ष्मीश दत्तस्वात्मस्वरूपिणे । गुणनिर्गुणरूपाय दत्तात्रेय० ॥ १६ ॥ शत्रुनाशकरं स्तोत्रं ज्ञानविज्ञानदायकम् । सर्वपापं शमं याति दत्तात्रेय० ॥ १७ ॥ इदं स्तोत्रं महद्दिव्यं दत्तप्रत्यक्षकारकम् । दत्तात्रेयप्रसादाच्च नारदेन प्रकीर्तितम् ॥ १८ ॥

इति श्रीनारदपुराणे नारदविरचितं दत्तात्रेयस्तोत्रं संपूर्णम् ।

## २९५ शंकराचार्यकृतगुर्वष्टकम् ।

श्रीगणेशाय नमः ॥ शरीरं सुरूपं तथा वा कलत्रं यशश्चारु चित्रं धनं मेरुतुल्यम् । मनश्चेन्न लग्नं हरेरङ्घ्रिपद्मे ततः किं ततः किं ततः किं ततः किम् ॥ १ ॥ कलत्रं धनं पुत्रपौत्रादि सर्वं गृहं बान्धवाः सर्वमेतद्धि जातम् । गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं ततः किं० ॥२॥ षडङ्गादिवेदो मुखे शास्त्रविद्या कवित्वादि गद्यं सुपद्यं करोति । गुरोरङ्घ्रिपद्मे० ॥ ३ ॥ विदेशेषु मान्यः स्वदेशेषु धन्यः सदाचारवृत्तेषु मत्तो न चान्यः । गुरोरङ्घ्रिपद्मे० ॥ ४ ॥ क्षमामण्डले भूपभूपालवृन्दैः सदा सेवितं यस्य पादारविन्दम् । गुरोरङ्घ्रिपद्मे० ॥ ५ ॥ यशो मे गतं दिक्षु दानप्रतापाज्जगद्वस्तु सर्वं करे यत्प्रसादात् । गुरोरङ्घ्रिपद्मे० ॥ ६ ॥ न भोगे न योगे न वा वाजिराजौ न कान्तामुखे नैव वित्तेषु चित्तम् । गुरोरङ्घ्रिपद्मे० ॥ ७ ॥ अरण्ये न वा स्वस्य गेहे न कार्ये न देहे

मनो वर्तते मे त्वनर्घ्ये । गुरोरङ्घ्रिपद्मे० ॥ ८ ॥ अनर्घ्याणि रत्नानि भुक्तानि सम्यक्समालिङ्गिता कामिनी यामिनीषु । गुरोरङ्घ्रिपद्मे मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥९॥ गुरोरष्टकं यः पठेत्पुण्यदेही यतिर्भूपतिर्ब्रह्मचारी च गेही । लभेद्वाञ्छितार्थं पदं ब्रह्मसंज्ञं गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यकृतगुर्वष्टकं संपूर्णम् ।

---

## २९६ गुरुवरप्रार्थनापञ्चरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यं विज्ञातुं भृगुः स्वं पितरमुपगतः पञ्चवारं यथावज्ज्ञानादेवामृताप्तेः सततमनुपमं चिद्विवेकादि लब्ध्वा । तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्तानन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ १ ॥ यस्मान्नश्यस्य जन्मस्थितिविलयमिमे तैत्तिरीयाः पठन्ति स्वाविद्यामात्रयोगात्सुखशयनतले सुख्यतः स्वप्नवच्च । तस्मै० ॥ २ ॥ यो वेदान्तैकलभ्यः श्रुतिषु नियमितस्तैत्तिरीयैश्च काण्वैरन्यैरप्यानिषेकादुदयपरिमितं चारुसंस्कारभाजाम् । तस्मै० ॥ ३ ॥ यस्मिन्नेवावसन्नाः सकलनिगमवाङ्मौलयः सुप्तपुंसि प्रोक्तं तन्नाम यद्वन्निजमहिमगतध्वान्ततत्कार्यरूपे । तस्मै० ॥ ४ ॥ [illegible]

सृजति जगदिदं योगिवन्मायया यः स्वात्मन्येवाद्वितीये परमसुखदृशि स्वप्नवद्भूम्नि नित्ये । तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्तानन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ ९ ॥

इत्यच्युतविरचितं गुरुवरप्रार्थनापञ्चरत्नस्तोत्रं संपूर्णम् ।

---

## २९७ दक्षिणामूर्तिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया । यः साक्षी कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १ ॥ बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनर्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् । मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया तस्मै श्रीगुरु० ॥ २ ॥ यस्यैवं स्फुरणं सदात्मकमसत्कल्पार्थकं भासते साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् । यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ तस्मै श्रीगुरु० ॥ ३ ॥ नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते । जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्तस्मै श्रीगुरु० ॥४॥ देहप्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः स्त्रीबालान्धजडोपमास्त्वहमिति

भ्रान्ता भृशं वादिनः । मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे तस्मै श्रीगुरु० ॥ ५ ॥ राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् । प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै श्रीगुरु० ॥ ६ ॥ बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमानमहमित्यन्तःस्फुरन्तं सदा । स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया तस्मै श्रीगुरु० ॥ ७ ॥ विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबन्धतः शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः । स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितस्तस्मै श्रीगुरु० ॥ ८ ॥ भूरम्भांस्यनलोऽनिलोम्बरमहर्नाथो हिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् । नान्यत्किंचन विद्यते विमृशतां यस्मात्परस्माद्विभोस्तस्मै श्रीगुरु० ॥ ९ ॥ सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिंस्तवे तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च संकीर्तनात् । सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १० ॥ वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात् । त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं जननमरणदुःखच्छेददक्षं नमामि ॥ ११ ॥ चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्न-

संशयाः ॥ १२ ॥ ॐ नमः प्रणवार्थाय शुद्धज्ञानैकमूर्तये । निर्मलाय प्रशान्ताय दक्षिणामूर्तये नमः ॥ १३ ॥ निधये सर्वविद्यानां भिषजे भवरोगिणाम् । गुरवे सर्वलोकानां दक्षिणामूर्तये नमः ॥ १४ ॥ मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं वर्षिष्ठान्तेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः । आचार्येन्द्रं करकलितचिन्मुद्रमानन्दरूपं स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥ १५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं दक्षिणामूर्तिस्तोत्रं संपूर्णम् ।

---

## २९८ श्रीदत्तपादुकाष्टकम् ।
### ( वृत्तगर्भम् )

श्रीगणेशाय नमः ॥ कृष्णावेणीपञ्चगङ्गायुतिस्थं श्रीपादं श्रीवल्लभं भक्तहृत्स्थम् । दत्तात्रेयं पादुकारूपिणं तं वन्दे विद्यां शालिनीं संगृणन्तम् ॥ १ ॥ उपेन्द्रवज्रायुधपूर्वदेवैः सपूर्वदेवैर्मुनिभिश्च गीतम् । नृसिंहसंज्ञं निगमागमाद्यं गमागमाद्यन्तकरं प्रपद्ये ॥ २ ॥ परिहृतनतजूर्तिः स्वीयकामप्रपूर्तिर्हृतनिजभजकार्तिः सच्चिदानन्दमूर्तिः । सदयहृदयवर्ती योगविच्चक्रवर्ती स जयति यतिराड्दिङ्मालिनीं यस्य कीर्तिः ॥ ३ ॥ द्रुतविलम्बितकर्मविचारणा फलसुसिद्धिरतोऽमरभाजनः । अनुभवत्यकमेव तदुद्धतो हरिरिहात्रिरभूत्स-

दरूद्यसौ ॥४॥ विद्युन्मालातुल्या संपत्प्राज्ञध्यान्तेष्वस्था आपत् । तत्ते धार्यं ज्योतिर्नित्यं ध्याने मेऽस्तु ब्रह्मन्सत्यम् ॥ ५ ॥ निद्वारं तव भजनं बहुप्रदीपं विघ्नेशामरपतियोगिनी-मरुज्ञैः । जाह्नव्या न्वतमभितोऽन्नपूर्णया च स्मृत्वा मे भवति मतिः प्रहर्षिणीयम् ॥ ६ ॥ तर्ति द्विजानां शिव सोपजातिं पुष्णाति कृष्णाऽत्र विनष्टतृष्णा । अवाक्प्रवाहाऽनुमताशिवाहा या साऽष्टतीर्था स्मृतिमेतु सार्था ॥ ७ ॥ कलौ मलौघान्तकरं करञ्जपुरे वरे जातमकामकामम् । चराचराद्यं भुवनावनार्थं क्षणे क्षणे सज्जनताननाङ्घ्रिम् ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीवासुदेवानन्दसरस्वती-विरचितं श्रीदत्तपादुकाष्टकं संपूर्णम् ।

---

## २९९ श्रीगुरुराजस्तवः ।

श्रीगणेशाय नमः ॥ सद्गुरुं भज सद्गुरुं भज सद्गुरुं भज बुद्धिमन्येन संसृतिपारमेष्यसि मुक्त इत्यपि गास्यसे । आसुरीं त्यज संपदं विपदां पदं मुनिगर्हितां तर्हि तां भज संपदं मुनिसं-स्तुतां भगवत्प्रियाम् ॥ १ ॥ गर्वपर्वतमस्तके तव संस्थिति-र्नहि शोभते पातमेष्यसि घातकर्मणि युज्यसे ननु पूज्यसे । तात्त्विकं फलमश्नुषे यदि सत्यवृत्तपरायणो दनुजस्तुरिवा-मरद्रुमगर्हणं भगवत्पदम् ॥ २ ॥ दम्भमार्गपरायणं यदि सत्फलाय भवत्यहो इल्वलादिकृताऽपि विप्रवरार्चना विषमा

कथम् । कष्टमेष्यसि दुष्टबुद्धिपरायणौ यदि चान्तरे मृष्टमृष्टपरं पदं तव दूरतस्तव कर्मणाम् ॥ ३ ॥ मुक्ततापि मुमुक्षुता कपटौघमूलनिकृन्तनी नीतिरर्भकता तथा यदि नास्ति जन्म निरर्थकम् । केषु ते गणना भवेद्वद विघ्नवेद्यसमान्तरे भासुरं जन जन्म शर्म निरर्थकं कुरुषे कुतः ॥ ४ ॥ साधुचित्तविखण्डनाद्भगवत्प्रियावपि दानवौ तत्र साधुविघर्षणादपि राक्षसौ मुनिभक्षकौ । तेन हीनबलावथो नृपनामदूपकराक्षसौ कृष्णहिंसनतत्पराविति कर्मणो गहना गतिः ॥ ५ ॥ ब्रह्मनिष्ठविमाननान्निजसद्गुरुगीतहरेः पदे द्वेष आविरभूद्धवग्रहमान्थिके निजसेविते । दानवस्य च दानधर्मपरायणस्य च रक्षसः शैवधर्मरतस्य मूलविनाशनोऽप्यघनाशने ॥ ६ ॥ जीवतामपहापयन्छिन्नतां दिशत्यतिकौशलात्पूर्ववत्स्थितविश्वमेष तिरःकरोत्यतिलीलया । तं गुरुं भज नम्रमोचनकारकं भवतारकं तत्र शात्रवमत्र यच्छति वृक्षतां पितृकानने ॥ ७ ॥ श्रीगुरोः पदपङ्कजं भजतां सतां सततं हरिः संनिधाविति सर्वशासनसारमेतदुदीरितम् । तन्महत्त्वमहाम्बुधेरपरं तटं न हि केचन प्राप्नुवन्ति परावराः सुपण्डिताः सनकादयः ॥ ८ ॥ शब्दमूलमहो गुरुः शिवजीवविश्वभिदास्पदं विश्वजीवशिवादिनामत एष एव हि बुध्यते । वाच्यकोटिनिविष्टमेव हि तत्रयं कृतपत्रयं लक्ष्यभूतवपुर्गुरुस्तमु जानते नहि केचन ॥ ९ ॥ कृष्णनाश्रित

चित्स्वरूपक एष एव संमप्रभो वृत्तिरूढचिदम्बरं खलु जीव ईश इदं जगत् । जन्ममृत्युनियामकः परमेश्वरः स तु भोगभुक् जन्ममृत्युनिवारकः परमेश्वरादतिरिच्यते ॥ १० ॥ ब्रह्मरन्ध्रपदं गुरोर्हृदयं शिवस्य निजास्पदं स्थानमेव हि तत्स्वरूपविनिर्णयाय भवत्फलम् । ह्यतो विषयान्भजत्यथ नत्र किंचन रन्ध्रगो यच्छति क्रमतः फलं वद मुक्तिदोऽस्त्यनयोऽस्तु कः ॥ ११ ॥ तत्स्वरूपविमर्शनं गुरुपादुकामन्त्रसंश्रितं तन्मन्त्रस्तु तदीयपूर्णकृपाभरेण हि लभ्यते । लाभतो गुरुणा सहैक्यविमर्शनं परमं पदं तत्र मुक्तिवराङ्गना वृणुते स्वयं निजसंपदा ॥ १२ ॥ तत्र यो विमुखो नरो निजघातकीति निगद्यते तस्य संमुखतां भजन् परमद्वयं भवति क्षणात् । ऋक्श्रुतिः शतधारमित्यपि नौति तां गुरुपादुकां कृष्णभिक्षुरिमं स्तवं पदपङ्कजेऽर्पयते गुरोः ॥ १३ ॥ द्रोणपर्वतवासिने नतशालिने मतिकाशिने हारिणे विपदां मुहुर्मम दायिनेऽखिलसंपदाम् । सच्चिदादिसुखाभिधाय यतीश्वराय सहस्रशः सन्तु मे नतयो दयोदकसागराय दिने दिने ॥ १४ ॥ स्तोत्रमेतदभीष्टसिद्धिदमासुरव्रतहारकं तारकं निजदेशिकेन्द्रपदाब्जयोर्दृढसन्मतेः । यः पठेत्प्रयतः शुचिः सुविचार्य भूरि दिने दिने मुच्यते भवपाशपाशित एवमेव मतिर्मम १५

इति श्रीवासुदेवानन्दसरस्वतीकृतगुरुराजस्तवः ।

## ३०० गुरुतत्त्वविवेचनम् ।

श्रीगणेशाय नमः ॥ अन्धेनान्धीकृतं विश्वं सचक्षुस्तु सचक्षुषम् । दिदृक्षा चेद्व्रज त्वं तु देशिकेन्द्रं सचक्षुषम् ॥ १ ॥ अन्धस्य गुरुरेकाक्षस्तस्य द्व्यक्षो गुरुर्मतः । द्व्यक्षाणामपि सर्वेषां गुरुस्त्र्यक्षो न तत्समः ॥ २ ॥ सहस्राक्षादयः सर्वे द्व्यक्षा एव हि केवलम् । कार्यध्येयदृशो यस्मात्त्र्यक्षशिष्यपदे स्थिताः ॥ ३ ॥ त्र्यक्षस्तु भगवानादिपुरुषः शंकरो भवः । सृष्ट्वा सर्वाणि भूतानि कायमध्ये यं संदिशन् ॥ ४ ॥ उभयातीतममलं तृतीयाक्षस्य गोचरम् । ददाति प्रार्थितस्तुष्टः श्रीगुरुः परमेश्वरः ॥ ५ ॥ स आदिनाथो भगवाननादिर्ज्ञानाम्बुधिः स्वात्मरतिर्महात्मा । श्रीदेशिकेन्द्रः करुणाम्बुराशिर्नानास्वरूपैश्चरतीह लोके ॥ ६ ॥ क्वचिन्न किंचित्कुरुते मनस्वी क्वचिन्न किंचित् कुरुते प्रमत्तः । बालो यथा क्रीडति सर्वलोके तथैव स क्रीडति पामरेषु ॥ ७ ॥ स लभ्यते केनचिदेव पुंसा विज्ञायते केनचिदेव पुंसा । प्रस्तूयते केनचिदेव पुंसा शृणोति वा तं स नरोऽपि धन्यः ॥ ८ ॥

इति श्रीकृष्णानन्दयतिविरचितं गुरुतत्त्वविवेचनं संपूर्णम् ।

---

## ३०१ परमहंसकवचम् ।

श्रीगणेशाय नमः ॥ श्रीपार्वत्युवाच ॥ ॐ भगवन्सर्वधर्मज्ञ



सर्वतन्त्रविशारद । कवचं श्रोतुमिच्छामि हंसस्य परमस्य च

॥ १ ॥ त्वत्प्रसादान्महादेव श्रुतानि विविधानि च । तन्मे कथय देवेश यदि स्नेहोऽस्ति मां प्रति ॥ २ ॥ श्रीमहादेव उवाच ॥ शतवारसहस्राणि वारितासि पुनः पुनः । स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ॥ ३ ॥ तथापि कवचं दिव्यं कथयामि शृणु प्रिये । अप्रकाश्यमिदं भद्रे गोपनीयं प्रयत्नतः ॥ ४ ॥ न देयं परशिष्येभ्य अज्ञाय स्वल्पबुद्धये । शठाय ज्ञानहीनाय निन्दकाय दुरात्मने ॥ ५ ॥ गुरुभक्तिविहीनाय न देयं यस्य कस्यचित् । देयं शिष्याय भक्ताय साधकाय प्रकाशयेत् ॥ ६ ॥ ॐ अस्य श्रीपरमहंसकवचस्य श्रीमहादेव ऋषिः । विराट् छन्दः । परमहंसः परमात्मा देवता । हकारो बीजम् । सकारः शक्तिः । ॐकारः कीलकम् । मम चतुर्वर्गसिद्ध्यर्थे जपे विनियोगः । श्रीमहादेवऋषये नमः शिरसि । विराट्छन्दसे नमः मुखे । परमहंसपरमात्मदेवतायै नमो हृदि । हकाराय बीजाय नमः गुह्ये । सकाराय शक्तये नमः पादयोः । ॐकाराय कीलकाय: नमः नाभौ । जपे विनियोगः । इति सर्वाङ्गेषु ऋष्यादिन्यासः ॥ ॐ हां सां अङ्गुष्ठाभ्यां नमः । ॐ हीं सीं तर्जनीभ्यां नमः । ॐ हूं सूं मध्यमाभ्यां नमः । ॐ हैं सैं अनामिकाभ्यां नमः । ॐ हौं सौं कनिष्ठिकाभ्यां नमः । ॐ हं सः करतलकरपृष्ठाभ्यां नमः । इति करन्यासः । ॐ हां सां हृदयाय नमः । ॐ हीं सीं शिरसे स्वाहा । ॐ हूं सूं शिखायै

वषट् । ॐ हैं सैं कवचाय हुं । ॐ हौं सौं नेत्रत्रयाय वौषट् । ॐ हं सः अस्त्राय फट् । इति षडङ्गन्यासः ॥ अथ ध्यानम् ॥ हृदयकमलमध्ये दीपवद्वेदसारं प्रणवमयमतर्क्यं योगिभिर्ध्यानगम्यम् । हरिगुरुशिवयोग्यं सर्वभूतस्वरूपं सकृदपि मनसा वै ध्यायते यः स मुक्तः ॥ ७ ॥ ॐ शिरो मे सच्चिदानन्दः पातु मां तत्स्वरूपकः । नेत्रं दक्षिणमङ्गं च तद्रूपः पातु सर्वदा ॥ ८ ॥ वामनेत्रं सदा पायाज्ज्योतीरूपः सदाशिवः । नासिकां पातु शुद्धात्मा मुखं ब्रह्मस्वरूपकः ॥ ९ ॥ चिबुकं पातु देवेशस्तुरीयः परमेश्वरः । कटिं पातु महायोगी ह्यधः पातु शिवात्मकः ॥ १० ॥ दक्षिणांसे च भगवान्वामांसे योगिसत्तमः । हृदयं सत्स्वरूपी च पायाद्दोः स्तनयुग्मके ॥ ११ ॥ सच्चिदानन्दरूपी च पृष्ठं पातु परात्मकः । पार्श्वयुग्मं वियद्व्यापी चोदरे परमात्मकः ॥ १२ ॥ बाहुमूले च हंसो वै कूर्परं मधुसूदनः । मणिबन्धं सदा पातु अङ्गुल्यग्रे महात्मकः ॥ १३ ॥ कटीदेशे सदा पायादखण्डश्च सदाशिवः । लिङ्गमूले विधिः पातु सूक्ष्मदेशे च सिद्धकः ॥१४॥ गुह्यं पातु शक्तिरूपः पातु मूले त्रिविक्रमः । जानुनी पातु कामेशो जङ्घयोर्नलविक्रमः ॥ १५ ॥ गुल्फयोर्मे सदा पायात्केशवः कालरूपधृक् । पादयोर्मेघनक्षत्रस्त्वङ्गुलीपु च वामनः ॥ १६ ॥ आपादमस्तकं चैव हंसविद्याक्षरात्मकः । मूलाधारे सत्स्वरूपी स्वाधिष्ठाने तु रूपधृक् ॥ १७ ॥

मणिपूरे नाभिदेशे पायात्तेजःस्वरूपधृक् । अनाहते वायुरूपी विशुद्धे वाक्स्वरूपकः ॥ १८ ॥ आज्ञाचक्रे च ज्योतिष्मान्सहस्रारे चिदात्मकः । इडायां शक्तिरूपी च पिङ्गलायामनस्तिकः ॥ १९ ॥ सुषुम्नायां सर्वरूपी चित्रायां सूक्ष्मरूपकः । पूर्वे पातु महेन्द्रश्च वह्निदेशे त्रिविक्रमः ॥ २० ॥ पातु याम्यां सदा रामो नैर्ऋत्यां गरुडध्वजः । प्रतीच्यामच्युतः पातु वायव्यां गरुडेश्वरः ॥२१॥ उदीच्यां पातु कौबेर ईशान्यां शृङ्गारकः । ऊर्ध्वं पातु जगत्कर्ता अधोभागे त्वनन्तकः ॥ २२॥ यत्र कस्यचिदाख्यातं तदङ्गं पातु माधवः । इति ते कथितं सर्वं सारात्सारतरं शुभम् ॥२३॥ पठनाद्धारणाद्योगी दिव्यं विज्ञानमाप्नुयात् । ब्रह्मास्त्रादीनि शस्त्राणि नैव कृन्तन्ति तं जनम् ॥ २४ ॥ अग्निस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः । वायुतुल्यबलो लोके दुर्जयः शत्रुमर्दनः ॥ २५ ॥ शापानुग्रहकारी च तेजस्वी कामरूपधृक् । भूर्जे विलिख्य कवचं स्वर्णस्थं धारयेद्भुजे ॥ २६ ॥ हस्तिनः साधकं दृष्ट्वा पलायन्ते दिशो दश । गुरुं संपूज्य विधिवत्कवचं पठ्यते यदि ॥ २७ ॥ धर्मार्थकाममोक्षांश्च प्राप्नुयात्परमं पदम् । त्रिकालज्ञो भवेद्देवि त्वणिमाद्यष्टसिद्धयः ॥२८॥ करे तस्य महेशानी नात्र कार्या विचारणा । यस्तस्मादभ्यसेदिदं योगसिद्धिमवाप्नुयात् ॥ २९ ॥

मन्त्रस्य स्मरणादेव अभीष्टफलदायकः । किं बहुनोक्तेन

नागान्किन्नरान्वशयेद्ध्रुवम् ॥ ३० ॥ यक्षभूतपिशाचाद्या राक्षसाश्च भयानकाः । दूरतः साधकं दृष्ट्वा भस्मीभवन्ति निश्चयात् ॥ ३१ ॥ दुर्लभं परमं लोके संगोप्तव्यं प्रयत्नतः । दीयते मस्तके हस्तो मयोपरि महेश्वरि ॥ ३२ ॥ शिष्याय ज्ञानरूपाय गुरुभक्ताय शान्तये । आत्मजेभ्योऽप्यभक्तेभ्यो दत्त्वा नरकमाप्नुयात् ॥ ३३ ॥

इति श्रीरुद्रयामले तन्त्रे परमहंसकवच समाप्तम् ।

## ३०२ दत्तात्रेयकवचम् ।

श्रीगणेशाय नमः ॥ पीतांबरालंकृतपृष्ठभागं भस्मावगुण्ठामलरुक्मदेहम् । विद्युत्सदापिङ्गजटाभिरामं श्रीदत्तयोगीशमहं नतोऽस्मि ॥ १ ॥ ॐ श्रीदत्ताय नमः अङ्गुष्ठाभ्यां नमः । ॐदेवदत्ताय नमः तर्जनीभ्यां नमः । ॐब्रह्मदत्ताय नमः मध्यमाभ्यां नमः । ॐ विष्णुदत्ताय नमः अनामिकाभ्यां नमः । ॐ शिवदत्ताय नमः कनिष्ठिकाभ्यां नमः । ॐ अत्रिदत्ताय नमः करतलकरपृष्ठाभ्यां नमः । ॐ आत्रेयाय नमः हृदयाय नमः । ॐ अत्रिवरदाय नमः शिरसे स्वाहा । ॐ आनुसूयाय नमः शिखायै वौषट् । ॐ अनुसूयासूनवे नमः कवचाय हुम् । ॐ अवधूताय नमः नेत्रत्रयाय वौषट् । ॐ धर्माय नमः अस्त्राय फट् । ॐधर्मपरायणाय नमः शिरसि । ॐ धर्मपतये नमः ललाटे । ॐ सिद्धाय नमः दक्षिणकर्णे ।

ॐ सिद्धिदाय नमः वामनेत्रे । ॐ सिद्धिपतये नमः भ्रूमध्ये । ॐ सिद्धिसेविताय नमः दक्षिणभ्रुवि । ॐ गुरवे नमः वामभ्रुवि । ॐ गुरुगम्याय नमः दक्षिणनासापुटे । ॐ गुरोर्गुरुतराय नमः वामनासापुटे । ॐ गरिष्ठाय नमः दक्षिणकर्णे । ॐ वरिष्ठाय नमः वामकर्णे । ॐ महिष्ठाय नमः ऊर्ध्वोष्ठे । ॐ महात्मने नमः अधरोष्ठे । ॐ योगाय नमः हनौ । ॐ योगगम्याय नमः कण्ठे । ॐ योगादेशकराय नमः ककुदि । ॐ योगपतये नमः दक्षिणजत्रुणि । ॐ योगीशाय नमः वामजत्रुणि । ॐ योगाधीशाय नमः दक्षिणस्तने । ॐ योगपरायणाय नमः वामस्तने । ॐ योगिध्येयाङ्घ्रिपङ्कजाय नमः वक्षसि । ॐ दिगम्बराय नमः हृदये । ॐ दिव्याम्बराय नमः नाभौ । ॐ पीताम्बराय नमः मूलाधारे । ॐ श्वेताम्बराय नमः दक्षिणस्फिजि । ॐ चित्राम्बराय नमः वामस्फिजि । ॐ बालाय नमः दक्षिणोरौ । ॐ अबालवीर्याय नमः वामोरौ । ॐ कुमाराय नमः दक्षिणजानुनि । ॐ किशोराय नमः वामजानुनि । ॐ कन्दर्पमोहनाय नमः दक्षिणजङ्घायाम् । ॐ अर्धाङ्गालिङ्गिताङ्गनाय नमः वामजङ्घायाम् । ॐ सुरागाय नमः दक्षिणगुल्फे । ॐ विरागाय नमः वामगुल्फे । ॐ वीतरागाय नमः दक्षिणप्रपदे । ॐ अमृतवर्षिणे नमः वामप्रपदे । ॐ उग्राय नमः दक्षिणपादमूले । ॐ अनुग्ररूपाय नमः वामपादमूले । ॐ स्थविराय नमः

दक्षिणपादतले । ॐ स्थवीयसे नमः वामपादतले । ॐ शान्ताय नमः दक्षिणपादाग्रे । ॐ अघोराय नमः वामपादाग्रे । ॐ विमूढाय नमः दक्षिणपादाङ्गुष्ठे । ॐ ऊर्ध्वरेतसे नमः वामपादाङ्गुष्ठे । ॐ एकवक्त्राय नमः दक्षिणपादप्रथमाङ्गुल्याम् । ॐ अनेकवक्त्राय नमः दक्षिणपादद्वितीयाङ्गुल्याम् ॥५८॥ ॐ द्विनेत्राय नमः दक्षिणपादतृतीयाङ्गुल्याम् । ॐ त्रिनेत्राय नमः दक्षिणपादचतुर्थाङ्गुल्याम् । ॐ द्विभुजाय नमः वामपादप्रथमाङ्गुल्याम् । ॐ षड्भुजाय नमः वामपादद्वितीयाङ्गुल्याम् । ॐ दक्षिणमालिने नमः वामपादतृतीयाङ्गुल्याम् । ॐ कमण्डलुधारिणे नमः वामपादचतुर्थाङ्गुल्याम् । ॐ शूलिने नमः दक्षिणस्कन्धे । ॐ डमरुकधारिणे नमः वामस्कन्धे । ॐ शङ्खिने नमः दक्षिणभुजमूले । ॐ गदिने नमः वामभुजमूले । ॐ मुनये नमः दक्षिणकूर्परे । ॐ मौसलिने नमः वामकूर्परे । ॐ विरूपाय नमः दक्षिणमणिबन्धे ॐ स्वरूपाय नमः वाममणिबन्धे । ॐ सहस्रशिरसे नमः दक्षिणकरे । ॐ सहस्राक्षाय नमः वामकरे । ॐ सहस्रबाहवे नमः दक्षिणतर्जन्याम् । ॐ सहस्रायुधाय नमः दक्षिणमध्यमायाम् । ॐ सहस्रपादाय नमः दक्षिणानामिकायाम् । ॐ सहस्रपद्मार्चिताय नमः दक्षिणकनिष्ठिकायाम् । ॐ पद्महस्ताय नमः वामतर्जन्याम् । ॐ पद्मपादाय नमः वाममध्यमायाम् । ॐ पद्मनाभाय नमः वामा-

नामिकायाम् । ॐ पद्ममालिने नमः वामकनिष्ठिकायाम् । ॐ पद्मगर्भारुणाक्षाय नमः दक्षिणाङ्गुष्ठे । ॐ पद्मकिञ्जल्क-वर्चसे नमः वामाङ्गुष्ठे । ॐ ज्ञानिने नमः दक्षिणहस्ताग्रे । ॐ ज्ञानगम्याय नमः वामहस्ताग्रे । ॐ ज्ञानविज्ञानमूर्तये नमः हृदयादिहस्तयुगुले । ॐ ध्यानिने नमः हृदयादिपा-दयुगुले । ॐ ध्याननिष्ठाय नमः श्रोत्रेन्द्रिये । ॐ ध्यान-स्तिमितमूर्तये नमः त्वगिन्द्रिये । ॐ धूलिधूसरिताङ्गाय नमः चक्षुरिन्द्रिये । ॐ चन्दनलिप्तमूर्तये नमः रसनेन्द्रिये । ॐ भस्मोद्धूलितदेहाय नमः घ्राणेन्द्रिये । ॐ दिव्यगन्धा-लेपिने नमः वागिन्द्रिये । ॐ प्रसन्नाय नमः पाणीन्द्रिये । ॐ प्रमत्ताय नमः पादेन्द्रिये । ॐ प्रकृष्टार्थप्रदाय नमः पायौ । ॐ अष्टैश्वर्यप्रदानाय नमः उपस्थे । ॐ वरदाय नमः मनसि । ॐ वरीयसे नमः बुद्धौ । ॐ ब्रह्मणे नमः अहंकारे । ॐ ब्रह्मरूपाय नमः चित्ते । ॐ विष्णवे नमः रोमसु । ॐ विश्वरूपिणे नमः । ॐ शंकराय नमः । ॐ आत्मने नमः । ॐ अन्तरात्मने नमः । ॐ परमात्मने नमः हृदये । ॐ श्रीदत्तात्रेयाय नमो नम इति ॥ ओंकारादिनमोन्तानां नाम्ना-मष्टोत्तरं शतम् । श्रद्धया यः पठेन्नित्यं त्रिसन्ध्यं नियतः सुधीः ॥ १ ॥ सर्वपापविमुक्तात्मा जायते विमलान्तरः । भुक्त्वा यथेप्सितान्भोगान्प्रेत्य ब्रह्मणि लीयते ॥ २ ॥ इत्ये-



तत्कथितं वत्स प्रसङ्गेन तवानघ । देवनाम्नी प्रसङ्गेन दिव्य-

दृष्ट्या विलोकितम् ॥ ३ ॥ क्वचित्त्यागी क्वचिद्भोगी क्वचित्सङ्गी सदामदः । नग्नः पिशाचवेषी च तुष्टः पुष्टः कृशः क्वचित् ॥ ४ ॥ क्वचिद्दण्डी क्वचिन्मुण्डी शिखी सूत्री जटी क्वचित् । विद्वानुन्मत्तवद्देवो भिक्षुवच्चाटति क्वचित् ॥ ५ ॥ नित्यं गङ्गाम्भसि स्नानं भिक्षा च कमलालये । मातुलिङ्गपुरे निद्रा स्मृतसंनिधिकृत्सदा ॥ ६ ॥ भक्तिः क्षणक्षणं देविस्मृतिः सेवा स्ववेश्मनि । स्वभोज्यस्यार्पणं दानं फलमिन्द्रादिदुर्लभम् ॥ ७ ॥ य एतैर्नामभिर्दिव्यैः कवचं धारयेत्कृती। राजवेश्मनि कान्तारे दुर्गादिषु महद्भये ॥ ८ ॥ शत्रुचौरभयाकीर्णे स्मशाने प्रेतदूषिते । न भयं विद्यते तस्य दृष्ट्वा तं विद्रवेद्भयम् ॥ ९ ॥ धौताङ्घ्रिहस्त आचम्य स्मृत्वा दत्तं न्यसेत्सुधीः । कराङ्गन्यासौ विन्यस्य षड्भिः षड्भिस्ततः क्रमात् ॥ १० ॥ शिरोललाटनेत्रे च भ्रुवोर्मध्यं भ्रुवोस्तथा। नासे कर्णौ तथौष्ठौ च हनुः कण्ठः ककुत्तथा ॥ ११ ॥ जत्रुस्तनौ च वक्षश्च हृदयं नाभिरेव च । मूलाधारः स्फिजा ऊरू जानुबन्धाश्च गुल्फयोः ॥ १२ ॥ प्रपदो पादमूलाभ्यां तथा पादतले उभे । पादाग्राङ्गुष्ठयोश्चैव पादाङ्गुल्यस्तथैव च ॥ १३ ॥ स्कन्धयोर्भुजमूलाभ्यां सन्धिभ्यां करयोः पृथक्। अङ्गुल्यङ्गुष्ठयोश्चैव हस्ताग्राभ्यां तथैव च ॥ १४ ॥ हृदयाद्धस्तपादाग्रपर्यन्तं व्यापकं न्यसेत् । दशेन्द्रियान्तःकरणचतुष्टयं तं न्यसेत् ॥ १५ ॥ रोमस्वोजं च हृदयं स्पृष्ट्वा

नामानि पञ्च च । जपेद्भक्त्या स्मरन्देवं कृतकृत्यो भवेन्नरः ॥ १६ ॥ पुरश्चरणमस्यापि कर्तव्यं जापकेन वै । सद्गुरोः प्राप्य दीक्षां च दत्तमाराधयेत्सुधीः ॥ १७ ॥ नियुतं प्रतिमन्त्रं च जप्तव्यं स्यात्पुरश्चरे । तद्दशांशेन होमश्च कर्तव्यो घृतपायसः ॥१८॥ दशावृत्त्या च सर्वेषां नित्यो जप उदीरितः । कवचोक्तप्रकारेण न्यासः कार्यः सदा बुधैः ॥ १९ ॥ पीताम्बरालंकृतपृष्ठभागं भस्मावगुण्ठामलरुक्मदेहम् । विद्युत्सदापिङ्गजटाभिरामं श्रीदत्तयोगीशमहं नतोऽस्मि ॥२०॥ ध्यानं चेदं समाख्यातं दत्ताराधनकर्मणि । एवमाराधितः क्षिप्रं सिद्धिदो वरदो भवेत् ॥ २१ ॥ पठित्वा कवचं वापि सायं प्रातः समाहितः । दिवारात्रिकृतैः पापैर्मुच्यते नात्र संशयः ॥ २२ ॥ भक्तायैतद्दिशेद्धीमान्नाभक्ताय कदाचन । नाम्नां रहस्यमत्यन्तं गोपनीयं प्रयत्नतः ॥ २३ ॥ इदानीं संप्रवक्ष्यामि महिमानं महेशितुः । शृणु वत्स महाभाग दत्तचित्तो भवाधुना ॥ २४ ॥ सूत उवाच ॥ एवमुक्त्वा गुरुः शिष्यं वेदधर्मा तपोनिधिः । माहात्म्यं देवदत्तस्य श्रावयामास भक्तितः ॥ २५ ॥

इति श्रीब्रह्माण्डपुराणे दत्तात्रेयमाहात्म्ये गुरुशिष्यसंवादे कवचविवरणं समाप्तम् ।

---

## ३०३ गुरुस्तवराजः ।

श्रीगणेशाय नमः ॥ ब्रह्मस्थानसरोजमध्यविलसच्छान्तस्वरूपस्थितं सुस्फूर्यंतसूर्यंमूचिम्बराभयकरं (?) कर्पूरकुन्दोज्ज्वलम् । श्वेतस्रग्वसनानुलेपनयुतं विद्युद्युताकान्तया संश्लेपात्तदु प्रसन्नवदनं वन्दे गुरुं सागरम् ॥ १ ॥ मोहध्वान्तमहायिताग्रहवतां चक्षुः समुन्मीलयन् यश्चक्रे रुचिरानि तानि दययया ज्ञानाञ्जनाभ्यञ्जनैः । व्याप्तं ज्ञानमयं जगत्त्रयमयं तत्त्वप्रबोधोदयं तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥ २ ॥ मातङ्गी भुवनेश्वरी च बगला धूमावती भैरवी तारा च्छिन्नशिरोधरा भगवती श्यामा रमा सुन्दरी । दातुं न प्रभवन्ति वाञ्छितफलं यस्य प्रसादं विना तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥३॥ काशीद्वारवतीप्रयागमथुरायोध्यागयावन्तिकामायापुष्करकातिकोहकलरीश्रीशैलविन्ध्यादयः। नैते तारयितुं भवन्ति कुशला यस्य प्रसादं विना तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥४॥ रेवा सिन्धुसरस्वती त्रिपथगा सूर्यात्मजा कौशिकी गङ्गासागरसंगमाद्रितनया गोदा च चर्मण्वती । नालं प्रोक्तफलप्रदानविषये यस्य प्रसादं विना तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥५॥ सत्कीर्तिं विमलं यशः सुकविता पाण्डित्यमारोगिता वादे वाक्पटुता कुले चतुरता गाम्भीर्यमक्षोभिता । प्रागल्भ्यं प्रभुता गुणे निपुणता यस्य

प्रसादाद्भवेत्तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥ ६ ॥ लोकेशो हरिरम्बिका स्मरहरो माता पिताभ्यागता आचार्यः कुलपूजितो यतिवरो विप्रस्तथा भिक्षुकाः । नैते यस्य तुलां व्रजन्ति कलया कारुण्यवारांनिधिं तं वन्दे शिव-रूपिणं निजगुरुं सर्वार्थसिद्धिप्रदम् ॥ ७ ॥ ध्यानं दैवतपूजनं गुरुतपोदानाग्निहोत्रादयः पाठो होम नसेवजपितरस्तुपाम-भ्यागतार्चावली (?) । ये ते व्यर्थफला भवन्ति न हि तं यस्य प्रसादं विना तं वन्दे शिवरूपिणं निजगुरुं सर्वार्थ-सिद्धिप्रदम् ॥ ८ ॥ यः पूर्वाभिमुखः कृताञ्जलिपुटः श्लोका-ष्टकं वै पठेत्पुरश्चर्यविधिं विनोपलभते मन्त्रस्य सिद्धिं पराम् । नो विघ्नैः परिभूयते प्रतिदिनं प्राप्नोति पूजाफलं देहान्ते परमं पदं विजयते यद्योगिनां दुर्लभम् ॥ ९ ॥

इति श्रीवामकेश्वरतन्त्रे हरगौरीसंवादे गुरुस्तवराजः समाप्तः ।

## ३०४ परमहंसस्तोत्रम् ।

श्रीगणेशाय नमः ॥ पार्वत्युवाच ॥ श्रुत्वा परमहंसस्य नाम्नां सहस्रमीश्वर । पठित्वा पाठयित्वा च निवृत्तास्मि भवार्णवात् ॥१॥ इदानीं श्रोतुमिच्छामि स्तोत्रमस्य महा-त्मनः । मन्त्रगर्भमयं देव रहस्यं परमात्मनः ॥ २ ॥ प्रीतो यदि प्रिया तेऽहं तदा वद महेश्वर ॥ श्रीभैरव उवाच ॥



वारितासि पुनर्नित्यं मुहुर्मुहुरतन्द्रिता । सर्वदा कृहिता

भूत्वा पृच्छसि त्वं सुरेश्वरि ॥ ३ ॥ योऽसौ परमहंसाख्यः परमात्मा परः स्मृतः । तस्य ज्योतिःस्वरूपस्य परहंसस्य चेश्वरि ॥४॥ वक्ष्यामि परमं गोप्यं स्तवराजमिमं शुभम् । सर्वकामप्रदं नित्यं दुष्टेन्द्रियविनाशनम् ॥ ५ ॥ सर्वदुष्टप्रशमनं सर्वात्ययनिवारणम् । मुक्तिदं मुक्तिकामानामनन्तफलदायकम् ॥ ६ ॥ अनन्तपददातारं सर्वपापनिवारणम् । गायत्रीछन्द इत्युक्तं मुनिरस्य पुरातनः ॥ ७ ॥ ज्योतिः परमहंसाख्या देवता समुदाहृता । तारं बीजं च हं शक्तिः सश्च कीलकमीश्वरि ॥ ८ ॥ मोक्षार्थं देवदेवेशि विनियोग उदाहृतः ॥ ९ ॥ अस्य श्रीपरमहंसस्तवराजस्य पुरातनमुनिर्ऋषिः । गायत्री छन्दः । परमज्योतिःस्वरूपः परमहंसो देवता । ॐ बीजम् । हं शक्तिः । सा कीलकम् । मोक्षार्थे जपे विनियोगः ॥ १० ॥ ॐ तारं योऽनुदिनं च देवि जयते देवाधिराज्यं परं नित्यं सत्यमिदं परात्परमहाविस्फारिते मानसे । तस्य स्याद्विजयी हृषीकनिचये सर्वेन्द्रियाराधतो मायामोहविनाशवादनपटुर्मोक्षं लभेन्मानवः ॥ ११ ॥ सोऽहं पदं जयति नित्यमतन्द्रितो यः सारं परं जगति च प्रथितप्रभावः । याति स्फुटं निजमतप्रथितस्वरूपमानन्दजन्यसुलभं भुवि दुर्लभं च ॥ १२ ॥ सोऽहं यतिः स्फुटमिदं जयते मनुष्यो रात्रिंदिनं प्रतिपदं परमार्थसारम् । तत्त्वंपदार्थविनिवर्तितमोहजालं तत्त्वास्फुटं त्विह तत्परमात्मरूपवान् ॥ १३ ॥ परपदं

जयतीह निजं स्फुटं प्रतिदिनं यदि देवमुपासते । परमहंसपदं स व्रजेदिदं मुनिजनैः परितश्च परिष्ठितः ॥ १४ ॥ आत्मपदं यदि वा जपतेऽनिशं कण्ठगतं स भवेदपवर्गतः । स मुनिमानवदानवदुर्लभं व्रजति मुक्तिपदं सुरसुन्दरि ॥१५॥ चिन्मयं पदमिदं जयते यो मोक्षमार्गमपि यात्यचिरेण । चित्स्वरूपमपि पश्यति विश्वं भावयेत्स भुवि स्वप्रकाशकः ॥ १६ ॥ सत्पदं सदित्यरूपमनन्तं योजयेत्स यदि मुक्तिपदं सः । सत्यमेव परमं समुपैति ज्ञानरूपपरमार्थविशेषम् ॥ १७ ॥ चिद्रूपमेतच्च पठेद्धि नित्यं प्रज्ञानरूपः शिवरूप एव । स याति नित्यं परचित्स्वरूपं योगीश्वराणां भुवि दुर्लभं यत् ॥ १८ ॥ आनन्दं जयते च नित्यमचिरात्सच्चित्स्वरूपं जयेत्सर्वानन्दमयः सदा सुखरतः सर्वेष्टकामान्वितः । त्रैलोक्याधिपतिर्भवेद्भुवि नरो देवाधिपो जायते सर्वारिष्टनिवारणे च स भवेच्छ्रीविघ्नराजोपमः ॥ १९ ॥ सोऽहमित्येव जयते भुवि यो मनुष्यो हंसो भवेत्परमहंसस्वरूप एव । संसारसागरसमुद्धरणैकसारां शक्तिं लभेच्च भुवि मानवपोतकोऽपि ॥२०॥ ब्रह्मेति योऽयं जपते मनुष्यः सर्वास्ववस्थासु च सर्वकाले । स ब्रह्म प्राप्नोति नरोऽन्तकाले स देवरूपो भुवि जायते च ॥ २१ ॥ इति स्तोत्रं दिव्यं सकलमनुराजैकनिकषं सदानन्दासारं पठति परमात्मैकविभवः । सदा सेव्यो देवैः स भवति नरो भक्तिसुलभः स जीवन्मुक्तोऽपि सदति च भवे-

विधमचिरतः ॥ २२ ॥ इदं परमतत्त्वं हि ह्यङ्गभूतं च पञ्च-मम् । परमहंसदेवस्य स्तवराजं स्तवोत्तमम् ॥ २३ ॥ सदा गुप्तं सदा गोप्यं गोप्तव्यं च सदा प्रिये । राज्यं देयं शिरो देयं न देयमेतदीश्वरि ॥ २४ ॥ अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा नरकमाप्नुयात् । विना शिष्याय नो दद्या-दस्य कस्यापि कर्हिचित् ॥ २५ ॥ दुर्जनेभ्यः सदा गोप्यं गोप्तव्यं सर्वथा प्रिये ॥ २६ ॥

इति श्रीरुद्रयामले तन्त्रे परमहंसस्तोत्रं समाप्तम् ।

---

## ३०५ दत्तलहरिः ।

श्रीगणेशाय नमः ॥ दत्तादन ऋषिरुवाच ॥ विभुर्नित्या-नन्दः श्रुतिगणशिरोवेद्यमहिमा यतो जन्माद्यस्य प्रभवति स मायागुणवतः । सदाधारः सत्यो जयति पुरुषार्थैकफ-लदः सदा दत्तात्रेयो विहरति मुदा ज्ञानलहरिः ॥ १ ॥ हरीशब्रह्माणः पदकमलपूजां विदधतो जगद्रक्षाशिक्षाजन-नकरणे ते ह्यधिकृताः । अभूवन्निन्द्राद्या हरिदधिपतां देवमुनयः परं तत्त्वं प्रापुः शशिदिनकरौ ज्योतिरमलम् ॥ २ ॥ परं ज्योतिर्मूर्ते तव रुचिरतेजःकलरवाज्जगद्व्याप्ये-दानीं तपनशशितारा हुतभुजः । महातेजःपुञ्जाः सकल-जगदाराध्यचरिताश्चरन्त्येवं लोकान्नतजनमनोभीष्टफलदाः ॥ ३ ॥ भवन्मायारूपं जगदखिलजीवात्मकमिदं भवद्रूपं

प्राहुर्निखिलनिगमान्तश्रुतिचयाः । त्वया सृष्टं चादौ हृतम-
वितमेतत्तदधुना प्रभावं ते वेत्तुं प्रभवति जनः कोऽवनितले
॥ ४ ॥ कृपासिन्धो तावज्जनुरजननस्थाप्यकथिते जगद्रक्षा-
दीक्षा भवति खलु नो चेत्कथमिदम् । अनीहस्याकर्तुस्तव
जगति कर्मोपकृतये प्रमाणीकर्तुं वा स्वकृतनिगमार्थानिति
मतिः ॥ ५ ॥ महाविश्वारूपे भगवति निबद्धत्वस्तुचितं हृदा
वाचागम्ये परमपि विमुह्यन्ति कवयः । अविद्यातीतः किं
यदि गुणविहीनोऽपि गुणवानविद्यायुक्तोऽयं त्विति वदति
मायामुपितधीः ॥ ६ ॥ भवानादौ यादोनरमृगमुखश्वादि-
कतनूर्विधत्ते लोकानामवनकृतिहेतोरनुयुगम् । विशुद्धस्त्वं
लीलानरवपुरिदानीमटसि गां पवित्रीकर्तुं वा परिजननिवा-
साङ्गणतलम् ॥ ७ ॥ जगद्रक्षार्थं वा विचरसि जगत्यात्मज-
नतापरित्राणायाद्यः परमपुरुषोऽगम्यचरितः । नृपालोको
लोको वदति मनुजत्वं तदधुना यया श्रीकृष्णत्वं यदपन्नुवते
मूढमतयः ॥ ८ ॥ महायोगाधीशैरविदितमहायोगचतुरं कथं
जानन्ति त्वां कुटिलमतयो मादृशजनाः । तथापि त्वां जाने
तव पदयुगाम्भोजभजनान्न चेत्त्वत्पादाब्जस्मृतिविषयवाणी
कथमभूत् ॥ ९ ॥ अपारे संसारे सुतहितकलत्रादिभरणा-
द्युपाधौ मग्नास्तत्तरणकरणोपायरहिताः । पतन्ति त्वत्पा-
दाम्बुजयुगलसेवासु विमुखा नराः पापात्मानः प्रवरनरके
घोरनिलये ॥ १० ॥ [illegible]

कवने वितानैर्मुक्ताढ्यैर्नवमणिमये मण्डपवरे। अशेषैर्माणिक्यैः खचितहरिपीठेऽब्जकुहरे हुताशारे ध्यायेत्तव परममूर्तिं निखिलदाम् ॥ ११ ॥ धराधाराधारे हुतवहपुरेधीशगणपं विधिं श्रीशेषौ वानलपवनव्योमानि हृदये। युतौ जीवात्मानावधिक्रमवमत्या प्रविशते विधत्ते जायात्वं परकलितवामेन वपुषा ॥ १२ ॥ सहस्रारे नीरेरुहि सकलशीतांशुललिते सहंसे हंसं यः स्फुटमपि भवन्तं कलयते। सुषुम्नावर्तिन्यां तव चरणपीठेन्दुसुधयाऽऽप्लुतो भित्त्वा ग्रन्थित्रयममृतरूपो विचरति ॥ १३ ॥ तवाधारे शक्तिस्थितकमलकर्माद्यभिहते महापीठे वैश्वानरपुरमरुद्व्हनिलये। धराव्योमाकल्पे सुरमुनिमहेन्द्राद्यभिनुतं महातेजोराशिं निगमनिलयं नौमि हृदये ॥१४॥ भवत्पादाम्भोजं भवजलधिपोतं भजति यो महासंसाराब्धिं तरणितरतीत्येव निगमः। इहामुत्र त्रातुं तव चरणमेवात्मशरणं भवेद्धीरो वाऽहंकृतिपरमनस्कोऽयमधुना ॥ १९ ॥ यथा दारुष्वग्निर्निवसति तथा देहनिकरे प्रविश्य त्वं चैको बहुविध इवाभासि तु तथा। चलन्नीरे चन्द्रः शतविध इवाभाति गुणतो न चैतच्चन्द्रे स्यान्न शतविधता नापि चपलम् ॥ १६ ॥ दरिद्रो वा मूढः कठिनहृदयो वापि भवतां दयापात्रं स्याच्चेद्व्रजति महतामप्यधिकताम्। न विद्या रूपं वा न कुलमपि वा कारणमभूत्महतो लोकैः का तव पादयुगाम्भोजकृपा ॥ १७ ॥

न ते कारुण्यं स्यात्सकलगुणवानप्यगुणवान्भवत्कारुण्यं स्यादगुणगणपो वोरुगुणवान् । यथा पत्यौ रक्ते यदपि च विरक्ते च युवतौ तथा सौन्दर्यं स्यात्सकलमपि तेऽनुग्रहवशात् ॥ १८ ॥ अनाथे दीने मय्यधिगतभवत्पादशरणे शरण्यब्रह्मण्यप्रथितगुणसिन्धो कुरु दयाम् । महातेजोवार्धे स्वसुकृतमहिम्नैव सततं पुरापुण्यैर्हीनं पुरुषमुपकुर्वन्ति कृतिनः ॥ १९ ॥ महाश्वेतद्वीपेऽमरतरुगणात्यन्तरुचिरे मणेः पीठाम्भोजेऽनलशशिखगान्तर्निवसितम् । गदाचक्राजासिप्रसृतकरपद्मं सुररिपुं स धन्यस्त्वां ध्यायेत्परतरचिदानन्दवपुषम् ॥ २० ॥ लसन्मेरोः शृङ्गे सुरमणिमये कल्पकतरुप्रकीर्णे वाक्पीठे रविशशिकराकीर्णजलजे । स्थितं वाचाधीशैर्नुतमनुदिनं त्वां भजति यो भवेद्वाणीशानामपि गुरुरजेयोऽवनितले ॥ २१ ॥ समुद्यद्बालार्कायुतनिभशरीरं मुनिवरं स्थितं बीजे मारे त्रिदशपतिगोपातिरुचिरे । हृदि त्वां यः पश्यन् सुखकरमिति ध्यायति सदा स एवाहं नूनं स भवति जगन्मोहनकरः ॥२२॥ निधिर्विश्वेषां त्वं निजचरणपद्मद्वयवतां शरण्यश्चार्तानां चकितहृदयानामभयदः । वरेण्यः साधूनां वरद इति वा कामितधियां भवत्सेवा जन्तोः सुरतरुसमाना न फलति ॥ २३ ॥ यथा वै पाञ्चाली नटति कुहकेच्छानुशरणं कुलालेन भ्रान्तं भ्रमति च सकृच्चक्रमनिशम् । तथा विश्वं सर्वं वियति मनवश्चाहगुणिताः स्वतन्त्रः को वास्ते वद

परस्त्वेशस्त्रिभुवने ॥ २४ ॥ त्वयाऽऽज्ञप्तो धाता सृजति जगदीशोऽपि हरते हरिः पुष्णातीदं तपति तपनो वाति पवनः। धरां साद्रिद्वीपां वहति भुजगानामधिपतिः सुराः सर्वे युष्मद्भयपरवशाद्बिभ्रति बलिम् ॥ २५ ॥ स्वयं मुक्तेः पूर्वं स्वकृतसुकृतं यां नयति चेद्भवान्सत्त्वं का वा तव चरणपङ्केरुहरतिः। हरेत्पापौघं नः शुभमपि ददातीति च सदा भवन्त्याशाबद्धाः सकलमपि धातुर्वशमहो ॥ २६ ॥ प्रधानं वा कर्म स्थितिविलयसर्गेऽलमिति चेज्जडत्वात्क्षीणत्वात्कथमुचितमेतन्निगदितुम्। तयोरीशोऽनीशो भवति जगदुत्पत्तिविलयावनान्यासन् ब्रह्मास्त्विति वदति शास्त्रं श्रुतिरपि ॥२७॥ भवत्सेवा जन्तोर्भवदवहुताशाम्बुदनिभा महामोहध्वान्तप्रतिहतमतेर्दीपकलिका। सुधावर्षिण्येषा विहितमनसां निर्मलनृणामुपाध्याये ब्रह्मप्रवचनविधानेऽतिचतुरा ॥२८॥ अवज्ञायै लोके बहुपरिचितिः प्राकृतमतिर्निरस्यापो गाङ्गाः प्रसरति यथा नाल्पतटिनीम्। विशुद्ध्यर्थं तत्त्वं सकलपुरुषार्थैकफलदं भवन्तं हित्वान्यं भजति गुरुमाशापरवशः ॥ २९ ॥ निमील्याक्षिद्वन्द्वं निगमनिरतो निश्चलमनाः प्रकाशन्तं दृष्ट्या त्रिभुवनमुदं ज्ञानपरया। ललाटेऽधोमुख्या रसजनितदिव्याञ्जनधरं स्मरेद्यस्त्वां योगी भवति निधिसिद्धेरधिपतिः ॥३०॥ महामायामन्त्राक्षरकमलपद्मासनयुतं महानीलच्छायं मधुमुदितयोगिन्यभिवृतम्। दधानं सद्ध्या-

सितकनकगोक्षीरतिलकं मुने यस्त्वां पश्येद्भवति सकला-दृश्यकृततनुः ॥३१॥ सुधाधारे हेतौ सकलजगतां स्वर्णकलिते सिताम्भोजे तेजोधिकृतपनशिभ्रन्श्रुतितनुम् । मणिप्रोते पीठे निखिलसुरवृन्दैः परिवृते स्थितं त्वामारोग्यं स्मरति हृदि तस्यामृतमयम् ॥ ३२ ॥ परत्रादाता चेद्भवति न ददात्यैहिकसुखं ददात्येतत्सौख्यं न वितरति चामुष्मिकसुखम् । भवत्सेवा जन्तोरिह परसुखप्राभयकरी सुराणामन्येपामनुशरणमात्मैवमकरोत् ॥ ३३ ॥ जटी वल्की क्वापि क्वचिदपि सुभूपाम्बरभृती क्वचिद्भूत्यालिप्तः क्वचिदपि सुगन्धाङ्कितनुः । क्वचिद्योगी भोगी क्वचिदपि विरागी विहरसे बहुज्ञानी ज्ञातुं तव गतिमशक्ताश्च मुनयः ॥ ३४ ॥ विशुद्धं चैतन्यं क्वचन जडवत्क्वापि सकलागमज्ञोऽप्यज्ञस्याद्विहरसि कदाचिद्बहुविधः। ऋषिभ्यस्त्वं तत्त्वं परममुपदेष्टासि विततं चरित्रं ते वेत्तुं चतुरधिरवक्त्रा न चतुराः ॥ ३५ ॥ मणिर्वा मन्त्रो वा विविधविमलैश्वर्यमपि वा महायोगोऽष्टाङ्गाभ्यसनविहितो वा त्रिभुवनम् । समर्थं चैकैकं प्रभवति वशीकर्तुमधिकं स्थितं त्वय्येवेदं तव किमुत लोकैकवशता ॥३६॥ सरस्वत्याधारस्थितमरुदतिप्रेरितपरां नृपो धारां भित्त्वा रसकमलवासाधिपपुरी। परं तेजोरूपं सकलभुवनालोकनिरतो भवं ते संयोगात्परमसमवेतं मुनिपतिः ॥ ३७ ॥ अपां तत्त्वं हंसं सकलभवदेवे जलरुहे तडिद्भास्वद्दीप्तिप्रकटदलपङ्क्ति सुल-

ललिते। परं स्वाधिष्ठाने रुचिरतररूपं निरुपमं स्थितं ध्यायेत्त्वां यो मदनसमरूपो विजयते ॥ ३८ ॥ परीतं त्वां विष्णो हुतवहनमायाविलसिते सरोजे नीलाभे मणिरचितपीठे मणिगृहे। महासिद्धेः कल्पद्रुमवरतले स्वर्णनिचयान्प्रवर्षद्भिः स स्यात्परमतनुभूतिः स्मरति यः ॥३९॥ मरुत्ताराप्राभे कनकरुचिपद्मे श्रुतिमयं प्रभुं लोकातीतं निखिलनिगमावेद्यचरितम्। भजन्ते ये त्वां ते सुदृढतरतादात्म्यकदृशा चिदानन्दं मायागुणविरहितं यान्ति परमम् ॥४०॥ सुधाशुद्धे व्योम्नि द्रुहिणरमणीबीजलसिते विशुद्धाम्भोजान्ते सुरनरखगाद्यन्तरहितम्। भवन्तं भावोत्थैः कुसुमसुखपूजोपकरणैः समहंल्लोके ना द्वितयपरमं ब्रह्म भजते ॥ ४१ ॥ तडिल्लेखाशोचिर्द्विदलकमले भाति परमो महामुक्तानङ्गोनलशशिदृशोक्षीणि भवते। अशेषश्रोत्रेषु द्विरसजलवानङ्कनकः श्रुतिप्राणोष्टाङ्गप्रगुणितकलापीठनिलयः ॥४२॥ क्वचिद्गुह्यं जिह्वा क्व च गुदकमन्यत्र कविता क्वचिद्वागन्यत्र श्रुतिरपरतो लोचनयुगम्। समाकर्षन्त्यात्मानमिव बहुभार्याः प्रलुभितास्ततो ध्यातुं स्थातुं कथमपि न सक्तास्तव पदम् ॥ ४३ ॥ अशक्तोहं स्नातुं क्षणमपि जपं कर्तुमपि वादनाभावादेवातिथिजनसपर्या च न कृता। कुतो ज्ञानं ध्यानं त्वकृतगुरुदेवस्य मम भो भवेदेवैकाशा वसति तव भक्तत्वजनिता ॥ ४४ ॥



अमन्दे मन्दारद्रुमचरसमीपे मणिमये सुखासीनं पीठे सुर-

वरमुनीन्द्रादिविनुतम् । स्वहृत्पद्मे वापि स्थितमनुदिनं त्वां भजति यः स चेहामुष्मिन्वा सकलजनपूज्यश्च भवति ॥४५॥ तृणं मेरुं कुर्यात्सुरवरगिरिं वापि च तृणं भवत्सामर्थ्यं वाऽघटितघटनाप्रौढिमतनो । इदं जाने तस्मै पुनरपि न जानन्ति कवयोऽप्यहो युष्मन्माया सकलजनमोहोन्मदकरी ॥ ४६ ॥ नटो भूयो वेषैर्बहुविध इवाभाति गुणिनो यथैको वाऽऽकाशो घटमठगुहास्वन्तरगतः । यथैकं गाङ्गेयं कटकमुकुटाद्याकृतिवशात्तथा दत्तात्रेय त्वमपि बहुरूपस्त्रिभुवनम् ॥ ४७ ॥ सहस्रांशुप्राब्जे सुरतरुसमाढ्येऽधिकतरे विमाने हंसाख्ये स्थितममृतनीहारवपुषम् । परीतं त्वां ध्यायेद्यदरजसमारूढमनिलैरशेषैराज्ञायां भवति खचरो व्योमगमनैः ॥ ४८ ॥ स्थितं मूलाधारे कनकरुचिराङ्गं हुतभुजः शिखाभिः प्रख्याभिर्वृतमखिलतेजोरसघटम् । धरन्तं भ्रूमध्ये प्रसृतनयनः पश्यति च यः परं त्वां सत्यं स्यादखिलरसविद्यातिनिपुणः ॥ ४९ ॥ शिरःप्रान्तभ्रान्तायतकुटिलबालार्कमतुलं प्रदीप्तस्वर्णाढ्यारुणशतलसत्कुण्डलधरम् । मरुत्पुत्रं लङ्काधिपतनुजनाशोद्यतकरं स्मरेद्यस्त्वां यत्नात्सकलभयभूतापहरणे ॥५०॥ गरुत्मन्तं चञ्चच्चलकनकपक्षद्वययुतं सुधाकुम्भोद्भास्वत्करमखिललोकाभिगमनम् । अचिन्त्यं वेदैस्त्वां परममुनिनाथं स्मरति यः स दक्षोऽसौ वादी कपटविषजन्तुप्रहरणे ॥ ५१ ॥ स्फुरितं

नन्दन्तं यो मनुजमुपतिष्ठत्यतिबलात्कृताशाभिध्यात्वात्प्रणत-

जनमन्दार भवता। अदत्ते दत्तत्वादमकतरचिद्रम्यविभवा-त्सदा दत्तात्रेयो भजसि भजतामिष्टफलदः ॥९२॥ विधिं विष्णुं मायां श्रणिमदनयोनिं दिनकरं मिलित्वानङ्गेनानलयुवतियुक्तां जपति यः। तराख्यामख्येयां निखिलनिगमाढ्यामखिलदां स संपद्भिर्देवाधिपविभवयुक्तो विहरति ॥ ९३ ॥ परा माया वाणी मदनकमलाबीजसहितं मनुं प्रत्येकं ते जपति सततं निश्चलधिया। यतामेत्यैश्वर्याश्रुतसकलविद्यानिपुणतां वशित्वं ग्रहौश्यं स्वपिति यदि यायात्परमुनेः ॥ ९४ ॥ अविज्ञानं किंचित्तत्र जगति नास्ति प्रभवितुस्तदा विज्ञातोऽहं यदपि सकलज्ञेन भवता। अदृष्टं मन्येऽहं प्रतिभटमविज्ञानकरणे मुने दत्तात्रेय प्रकुरु मयि कारुण्यमतुलम् ॥९५॥ भवत्पादाम्भोजद्वयशुभरसास्वादचतुरं भ्रमद्भृङ्गीशङ्कायितहृदयवर्त्ति कलय माम्। अनाथाराधाराश्रितसुरतरो तावकजने मुने कारुण्याब्धे प्रकुरु मयि संपत्प्रकटनम् ॥ ९६ ॥ वदन्त्येके पार्थं तव गतिमनेकार्थहरिणीमजानन्तो ज्ञेयामनधिगत-तत्वार्थमतयः। महायोगिँल्लोके जडमतिकृते त्वं धृतवपु-स्तदा नो चेद्भक्तस्वजनपरिरक्षा कथमहो ॥ ९७ ॥ स्मृत-स्त्वच्छिष्यो वा जगति कृतवीर्यस्य तनयोऽर्जुनो राजा चोराद्भयमहिभयं वृश्चिकभयम्। हिनस्त्याजौ शत्रूनपि भयं चेति गदितं यतेमस्त्वच्छिष्याः किमुत हत-चोराधिकभयाः ॥ ९८ ॥ पदानां सेव्यो वा न भवसि

यदा किंचन नृणां प्रियः साधूनां त्वं तव च सुहृदस्तेऽपि सुजनाः । मयि त्वार्ते दीने जननमरणाद्यैः कुरु दयां दयावान्को वा मे भ्रमनिगडनिर्मोचनविधौ ॥५९॥ यथा माता पुत्रं सकलगुणहीनं च कुटिलं प्रपुष्णात्यन्नाद्यैरनुदिनमतीवादरहिता । तथा त्वं लोकानां मम च पितराविस्यभिमतं ततस्त्रातुं दातुं फलमभिमतं चार्हसि विभो ॥ ६० ॥ जडं वाचाधीशं सुधियमपि मूकं च कुरुपे रवेः स्वाशां यान्तं यदि च पुरुपे दृष्टिवसतेः । अकर्तुं कर्तुं वान्यदपि परिकर्तुं च मनुजस्तदा सर्वं कुर्याः क्वचन किमसाध्यं त्रिभुवने ॥६१॥ पुमान्यो वै युष्मच्चरणपरिचर्याकृतिपरो महालापास्थानाशनशयनपानानि कुरुते । स वै धन्यो लोके सकलजगदाराध्यजनिमा अहो भाग्यं तस्यागणितयशसः कोऽपि न भजेत् ॥ ६२ ॥ प्रसादात्ते यस्मिन्प्रबलतरदारिद्र्यविभवः स यायादिन्द्रत्वं सकलसुरनारीपरिवृतः । तवोपेक्षा यस्मिन्भवति स सुराणामधिपतिः परत्र ह्यत्यन्तं प्रविहतमहैश्वर्यविभवः ॥ ६३ ॥ सदा मन्त्रैर्जाप्यः पुनरपि मनूनेव जपति स्वयं तन्त्रध्येयो यदपि कुरुते तन्त्रनिचयम् । सदा ब्रह्मानन्दामृतजलधिकेलीकलितधीः स भूतेर्भूयस्या भवतु भगवन्नः कुरु दयाम् ॥ ६४ ॥ तुरीयाग्निश्वेतद्युतिदिनकृदर्केन्दुतनिपतेर्महाविद्याखण्डैः परिणतमहाहुष्टुभमनो । चतुर्भिश्चक्राब्जाङ्कुशगुणधरं सामि युवति नृसिंहं त्वद्रूपं भजति स पुम-

थैंकनिलयः ॥६५॥ मुने ते माणिक्यप्रवरखचिते हैममुकुटे पुरा कल्पध्वंसे परिकलितसूर्शापररुचः । वसन्त्यस्मिन्नूनं नहि यदि तदा भूतमुनयो न विद्यन्ते लोकाः प्रखरतिमिरान्तैकचतुराः ॥ ६६ ॥ अहो योगिन्नानामणिखचितभावाक्तमुकुटाशिखाग्रालम्बिन्या त्रिकतलमसौरत्नशिखरात् । महामेरोर्लीलां कलयति सदा यामकलितां शरत्सौदामिन्याः कटकवरतेजोमयतनो ॥ ६७ ॥ सुविज्ञातं लोकैरनवधिसदादेशनपरैः सुधाखण्डं लब्ध्वा तव निबिडभावाङ्कमरणम् । द्वितीयं सोमेन्दुस्फुटमुकुटतः कान्तमनघं महामूर्तिज्योत्स्ना हरति नतदारिद्र्यतिमिरम् ॥ ६८ ॥ धृतं पुण्ड्रं मात्रात्रितयरुचिरं साक्षरमिदं सहस्रारे हंसैः स्थितपरमहंसाजिगमिषो । वहन्ती पादाब्जद्वयसरललाक्षारसपदं परां शक्तेश्चन्द्रोपलरचितसोपानपदवी ॥ ६९ ॥ श्रयेते हैमन्ते तरुविमलपत्रे मधुकरौ शुभं मर्माम्भोजे स्थितमिति सुचित्रं शमनिधे । कठोरेन्दुप्रांशुप्रवरनिकरीभूततिमिरं सुधांशुर्भावाक्तो मुकुलयति विद्युच्च वलयम् ॥ ७०॥ तमोभिर्मूकालीगृहमिदमहुज्जृम्भितमिति त्वदीये नेत्राब्जे कमलसदनाजृम्भितवती । सदा सुज्ञानेनाविशति सदयाक्षि प्रसरति प्रभो यस्मिन्स्यात्ते ध्रुवमतिघनोऽयं मुनिपते ॥७१॥ यदा योगिन्नीपद्दलिरतिलसत्कारकहशोरुपान्ते नीलाली उदरयुगली कञ्जदलयोः । वरं कारायते कनकमकरीकुण्डलयुगं कटाक्षो चाम्पयस्तवकवि-

चरन्ताविव वरौ ॥ ७२ ॥ त्रयीविद्यारूपत्रितनुरहिमांशुः प्रतिदिनं श्रुतौ भावात्केचिद्द्विविधमकरीकुण्डलपदः । मिलित्वात्मायं ते घनतरसुपाधिद्वयमपि व्यनक्ति श्रीकारे निखिलजगदुद्दीपकमुने ॥ ७३ ॥ कपालौ यौष्माकौ स्फुटमुकुटबिम्बप्रतिभटौ भृशं संघर्षित्वात्प्रतिदिनसमारोपितरुचौ । निजा कान्तिर्नित्या कनकनिकषोत्यन्तमहिमा त्वदीयो नीचैव प्रचुरतरकान्तिस्तव मुने ॥ ७४ ॥ मुखेन्दुं दृष्ट्वा ते यदि विशति राहुप्रतिभयात् शशी वक्त्रं प्राप्य द्विगुणितकलानां निधिरभूत् । द्विजानां राजत्वं प्रकटितमते दत्तशरणीत्वलेनाहो स्वामिन् कथमपि च लभ्यो हि महिमा ॥७५॥ तवायं बिम्बोष्ठश्चुबुकसहितो विद्रुमलतासमाक्षिप्ता तिर्यग्यदि बहुपदं स्यात्फलयुगम् । व्रजे तत्साम्यं तन्निहितमुत वा पल्लवदलं यदि स्यात्ते नारस्तुलयितुमहो संयमिपते ॥ ७६ ॥ भवद्वाणीश्रेणीं श्रवणपुटसौख्यप्रकरणीं विजेतुं वाक् श्रुत्वा स्वयमुत विदित्वाहमिति भाक् । अशक्तां तेऽत्यन्तं फणिललितजिह्वाग्रमिपतः प्रविष्टा वक्त्रान्तं सितमणिलसद्विद्रुमगृहम् ॥ ७७ ॥ तवावृत्ता रेखात्रयविलसिताकस्वरभवच्छराणामाधारः कथमभवदेतन्न यदि चेत् । अथेमामूदेहात्विह कश्चिद्दराद्याकृतिधरां तदा नो चेद्वेदत्रितयकलितां वापि गणये ॥ ७८ ॥ महानन्तश्चासीद्द्विपधरवरो वासुकिरसौ



निवहन्तौ मत्याधिकमयकरत्व गणयताम् । सुमत्कौ स्यौ

तत्र तु भुजसत्त्वं विदधतां मुने भूतौ स्निग्धौ सपदि वरदौ चाभयकरौ ॥ ७९ ॥ मुने गङ्गास्रोतोमरवरगिरिप्रास्थफलके प्रसादे स्वर्णाढ्ये प्रभवभवदुद्घागलुलितम् । त्रिसूत्रं सुस्निग्धं धवलमुपवीतं कलयते महायोगिन्मूर्तित्रयमपि विलीनं तदथवा ॥ ८० ॥ प्रसिद्धः स्वर्णाद्रिर्दिवि विबुधवाचो वितरणात्प्रशस्तौ तौ शस्तावखिलपुरुषार्थप्रकरणात् । जनानां पादाब्जद्वितयमधिकं प्रेम भजतां मुनीन्द्र त्रैलोक्याद्भुतगणमणिक्षीरजलधे ॥ ८१ ॥ इयं रोम्णां राजिर्विलसति महानाभिसरसः प्रवृत्ता कुल्येव प्रतिपतितभङ्ग्यस्त्रिवलयः । नवालेखालोकत्रयविभजनार्थं विरचिता मुने दत्तात्रेय त्वदुदरविलग्ना विलसिताः ॥ ८२ ॥ ध्रुवं शं मा मौञ्जीत्रितयवलिरेखावरतनो रुरुक्षोः प्रासादं स्वशयहृदयाख्यं तव हरे । महालक्ष्म्याश्चञ्चत्कनकमयसोपानपदवी न चेन्नाभीकुण्डे पुरिचिदुपलब्धा परिदया ॥ ८३ ॥ प्रवृत्तावूरू ते लसदुदरलोकव्रजधृतिर्धृता सा कुर्वीन्द्रस्फुटपटुकरौ संप्रकटितौ । कटैर्विस्तारौ यत्कटकफलकौ ताविव मुने महायोगिन्विश्वंभर इति च नूनं त्वमधिभूः ॥ ८४ ॥ कृपालो विश्वेश त्रिभुवनतले ते प्रमितितो दिवारात्रौ स्थानं मिलति वपुषो जानुयुगलम् । अभक्तानित्येतत्कथितमभियुक्तैः समतनोः प्रदुष्यन्ते संप्रत्यपि तदिदमर्थं हि सुदृढम् ॥ ८५ ॥ जगन्मूकं

मसरस्य: प्रकुरुते । प्रकृष्टौ तौ वीरौ भ्रमयितविलक्ष्योऽल्प-
गुणवान्मुने तेनानङ्गस्तव तु विमुखो लक्षणवतः ॥ ८६ ॥
नराणां नानार्थप्रदरसगुटित्वं च दधतो मुने गुल्फौ गूढौ
तव चरणपुष्टौ प्रकटितौ । घटान्त्तिर्नार्योरिव सकलकौ
वृत्तरुचिरौ विराजेते तेजोनिकरकवितायां सुवपुषा ॥ ८७ ॥
सदाधारं युष्मत्प्रपदमतिपूज्यं सुरुचिरं ध्रुवात्मानं मत्वा
जितमिति सदा कच्छपपतिः । विवेशादौ भूमेर्यदि तदिद-
मेकं स्मयकरं त्विदानीं तज्जातिर्मुकुलितशिराश्चाभवदहो
॥ ८८ ॥ मया दत्तं किंचिन्न यदि कलितं वासवमहं तदा
रोचिर्जानं जननमपि पङ्कप्रकटिनम् । प्रविश्येत्यायोज्यं न
चलति ह यत्तत्वदभिधा पदं ते तु श्रीदं सकलसमये श्रीनि-
लयनम् ॥ ८९ ॥ मुने ते पादाब्जं नवमसृतपादोद्भवमहो
श्रितः सौन्दर्यं तत्पशुपतिशिरोऽब्जं हिमकरः । निवृत्तं स्वस्यांकं
भजति भवदेकात्मपुरुषाः कथं ब्रह्मागारे परमपुरुषानाङ्घ्रि-
भजनाः ॥ ९० ॥ न चित्रं ते पादौ वितरत इति प्रार्थित-
फलं विधिं श्रीशं रक्षाकलुषविपदं दृश्यमतुलम् । स्मरान्त-
श्रीगङ्गाधरचरणशङ्खाम्बुजसुरद्रुमाश्चञ्चद्भावानतजनपदानन्द-
कलनात् ॥ ९१ ॥ त्रिखण्डैः श्रीविद्यामनुवरभवैर्भावकरिपो
विवृद्धस्ते मन्त्रो विषवदतियोज्योतिरमलम् । षडर्णाचन्द्रा-
र्कप्रकररुचि तन्मे प्रभवतां सदा ज्ञानानन्दं युवतिनृमयं
लोचनपदम् ॥ ९२ ॥ समुन्मीलद्भानुप्रकररुचि धान्नीजन-

मलं मरुत्वद्गोपाभां मदनलिपिमाधारकमले । हृदब्जे शक्त्याख्यं सितकरकराभं शिरसिजे सरोजे त्वां ध्यायेत्सकलपुरुषार्थान् स लभते ॥ ९३ ॥ चिदंशत्वाद्रूपं किमपि सवितुर्मण्डलगतं वरेण्यं भर्गो वै त्रिविधतनुर्देवस्य वपुषि । स्तुने धीमह्यासीद्धरिरपि धियो यो न इतरत्प्रचोदायास्तत्त्वं स्थितिलयसृजस्त्वं मुनिपते ॥ ९४ ॥ हरिस्तन्तुः प्रोतः सदसि शिखरे शुभ्रकपटो जगन्मूलस्थाणुस्त्वमिति सुभवस्पन्दमुनिभिः । ज्वरीभिः स्वर्णाढ्यः पवनहततद्विन्दुनिकरैर्जरासक्ताव्जाहीरुचिरमभिषिक्तः स्थित इव ॥ ९५ ॥ दुराचारो जारश्चपलमतिराजः परवशः परद्रव्याकाङ्क्षी बहुजनविरोधी च सततम् । तदा चाहं पूतस्तव पदयुगे स्पर्शवशतो ह्ययःखण्डः स्वर्णं भवति हि यदा शुद्धहरतिः ॥९६॥ परिक्रान्ता देशा बहुतरधनस्यार्जनधिया कुलाचारं हित्वा कुमतिनृपसेवापि च कृता । विधायासौ श्रान्तः किमपि न च लब्धं तु वपुषा श्रितं त्वत्पादाब्जं श्रितमनुजमन्दारमधुना ॥ ९७ ॥ त्वदीयो मे देहस्त्वमपि पितरौ भ्रातृसुहृदस्त्वमेव ब्रह्मन्मे सुतहितगृहक्षेत्रनिवहाः । त्वमेव प्राणो मे धनमपि ममत्वात्तव पदं न जाने मय्येव स्थिततर मुहुर्नीयमधुना ॥ ९८ ॥ नमस्ते तारायामृतजलधिधाम्नेऽधिमहसे नमस्ते ब्रह्माद्यैर्मुनिसुरवरैः क्लृप्तमनसे । नमस्ते यत्नारायणमुनिविलासाय भवते मनुजां कौपीनप्रचलमपितां च

पतये ॥ ९९ ॥ नमस्ते देवैरप्यविदितमहिम्नेऽतियशसे नमस्ते दिक्पालप्रकटमुकुटालंकृतपदे । नमस्ते तेजस्विन्नतमनुजमन्दारवपुषे नमो दत्तात्रेयाकृतिहरिहराजाय महते ॥ १०० ॥ नमस्ते पापौघाचलविततिसंहारपतये नमस्ते दारिद्र्यव्यथितजनदैवान्तनिलये । नमस्ते रागार्तानतमनुजदिव्यौपधिदृशे नमस्ते दैवं मे नहि नहि जगत्यां तव पदम् ॥१०१॥ असौ दत्तात्रेयस्तुतियुतकृतिज्ञानलहरी सुधाधारापूराखिलनिगमसारानुपठताम् । श्रुतश्रीविद्यायुर्विभवधनधान्यामृतचयं ददात्येवात्यन्तं जयति सकलाह्लादजनिका ॥ १०२॥

इति श्रीदलादनमुनिविरचिता श्रीदत्तात्रेयज्ञानलहरी समाप्ता ।

---

# सद्गुरुस्तोत्राणि ।

## ३०६ दक्षिणामूर्तिनक्षत्रमाला ।

श्रीगणेशाय नमः ॥ श्रीकण्ठमिन्दुर्भकभासिचूडं श्रीज्ञानदानव्रतबद्धदीक्षम् । श्रीशाम्बुजन्मप्रभवादिपूज्यं श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ १ ॥ हरन्तमानम्रजनानुतापं हयेभवक्रेडितपादपद्मम् । हृदा मुनीन्द्रैः परिचिन्त्यमानं श्रीदक्षि० ॥ २ ॥ हस्ताब्जराजद्वरपुस्तमुद्रामुक्ताक्षमालामृतपूर्णकुम्भम् । हरिद्वराकाङ्क्षितपादसेवं श्रीदक्षि० ॥ ३ ॥ हंसाग्निचन्द्रेक्षणमन्धकारिमाकारनिर्धूतमनोजगर्वम् । हतादिमा-

ज्ञानमगोद्भवेशं श्रीदक्षि० ॥ ४ ॥ हत्वा पुरा कालमखर्वगर्वं मृकण्डुसूनोः परिरक्षणं यः । चकार कारुण्यवशात्तमेनं श्रीदक्षि० ॥ ५ ॥ हृत्वा तमः सत्वरमेव हार्दं दत्त्वा च बोधं परमार्थसंस्थम् । मोक्षं ददात्याशु नताय यस्तं श्रीदक्षि० ॥ ६ ॥ हसन्मुखाम्भोरुहमिन्दुकुन्दनीकाशदन्तावलिशोभमानम् । रदाम्बराधःकृतपक्वबिम्बं श्रीदक्षि० ॥ ७ ॥ हेलाकृतान्निर्मितविश्वबृन्दं बालारुणाभाङ्घ्रियुगं दयालुम् । पश्यन्तमुत्सङ्गगतं षडास्यं श्रीदक्षि० ॥ ८ ॥ हीमान्भवेद्देवगुरुर्यदीयपादाब्जसंसेवकलोकवाचा । तं दिव्यवाग्दानधुरीणमाशु श्रीदक्षि० ॥ ९ ॥ हारायिताहीशमनङ्गगर्वभङ्गप्रगल्भान्प्रणतानशेषान् । कुर्वन्तमिष्टप्रदमष्टमूर्तिं श्रीदक्षि० ॥ १० ॥ हरिर्जहाराचलकन्यका च यद्वर्ष्मणोऽर्धं तपसा हि पूर्वम् । अतोऽशरीरं तमशेषसंस्थं श्रीदक्षि० ॥ ११ ॥ हन्यादशेषं कलुषं यदङ्घ्रिपूजा प्रदद्यादपि सर्वमिष्टम् । तं पार्वतीमानसराजहंसं श्रीदक्षि० ॥ १२ ॥ हठादियोगान्प्रविधाय चित्तस्थैर्यं प्रपद्याङ्घ्रियुगं यदीयम् । ध्यायन्ति योगिप्रवरा मुदा तं श्रीदक्षि० ॥ १३ ॥ हितोपदेष्टा दयया नतानां निसर्गया यो यतिनां जवाद्धि । न्यग्रोधमूलैकनिकेतनं तं श्रीदक्षि० ॥ १४ ॥ हतारिषट्कैरनुभूयमानं नितान्तमानन्दघनस्वरूपम् । नतापराधान्सहमानमीशं श्रीदक्षि० ॥ १५ ॥



हित्वा धनापत्यकलत्रबन्धून्दत्त्वाभयं भूतपतेर्द्विजाद्याः ।

यं यान्ति लोके शरणं सदा तं श्रीदक्षि० ॥ १६ ॥ हृदम्बुजांते विनिवेश्य चित्तं निरुध्य चक्षुःप्रमुखाक्षवर्गम् । ध्यायन्ति यं शैलसुतायुतं तं श्रीदक्षि० ॥ १७ ॥ हासप्रभानिर्जितभाभिमानं प्रासार्थजुष्टां कवितां दिशन्तम् । नतोत्तमाङ्गेषु करं दधानं श्रीदक्षि० ॥ १८ ॥ हैयङ्गवीनं हृदयम्रदिम्ना स्वरेण हंसं चरणेन पद्मम् । हसन्तमंसाग्रलसज्जटालं श्रीदक्षि० ॥ १९ ॥ हरेर्विधेश्चैव विवादशान्त्यै लिङ्गात्मना यः प्रबभूव पूर्वम् । तमादिमध्यान्तविहीनरूपं श्रीदक्षि० ॥ २० ॥ हुताशनादित्यमहीप्रमुख्या यस्याष्टमूर्तीर्निजगाद वेदः । तं सर्वलोकावनसक्तचित्तं श्रीदक्षि० ॥ २१ ॥ हस्त्यन्तलक्ष्मीमपि दीनवर्यः प्राप्नोति यत्पादसरोजनत्या । तं कल्पवल्लीमदभङ्गदक्षं श्रीदक्षि० ॥ २२ ॥ हयाढ्यमारुह्य गजोत्तमं वा समेत्य यत्पादयुगार्चकाय । यच्छन्ति राज्यं धरणीधवास्तं श्रीदक्षि० ॥ २३ ॥ हवींषि संजुह्वति भूसुराढ्याः कालेषु वह्नौ यदनुग्रहार्थदम् । कर्मानुगुण्येन फलप्रदं तं श्रीदक्षि० ॥ २४ ॥ हेत्या ललाटस्थशुचेर्महाघवनं दहन्तं तरसैव मोदात् । कुर्वन्तमानतचित्तशुद्धिं श्रीदक्षि० ॥ २५ ॥ हेमाश्मनोः साम्यमतिं करोति यत्पादपाथोरुहसक्तचित्तः । वैराग्यदानैकधुरंधरं तं श्रीदक्षि० ॥ २६ ॥ हालास्यगोकर्णमुखेषु दिव्यक्षेत्रेषु वासं कृपया करोति । यः पादनम्रोद्धृतये सदा तं श्रीदक्षिणास्यं हृदि भावयेऽहम् ॥ २७ ॥ हंसेन केनापि परादिनमा कृता

प्रयत्नादतिमोहतश्च । नक्षत्रमालां दधतां नराणां कण्ठे भवि-
ष्यत्यचिरात्परासिः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्रा० श्रीसच्चिदानन्दशिवाभिनवनृसिंहभा-
रतीस्वामिविरचितं दक्षिणामूर्तिनक्षत्रमालास्तोत्रं सं० ।

## ३०७ दक्षिणामूर्तिपञ्चरत्नम् ।

श्रीगणेशाय नमः ॥ भवाम्भोधिपारं नयन्तं स्वभक्तान्कृ-
पापूरपूर्णैरपाङ्गैः स्वकीयैः । समस्तागमान्तप्रगीतापदानं
सदा दक्षिणास्यं तमाराधयेऽहम् ॥१॥ सुधासूतिबालोल्लस-
न्मौलिभागं सुधाकुम्भमालालसत्पाणिपद्मम् । सपुत्रं सदारं
सशिष्यं सवाहं सदा० ॥ २ ॥ जडायापि विद्यां प्रयच्छन्त-
माशु प्रपन्नार्तिविध्वंसदक्षाभिधानम् । जराजन्ममृत्यून्हरन्तं
प्रमोदात्सदा० ॥ ३ ॥ यमाराध्य पद्माक्षपद्मोद्भवाद्याः
सुराद्याः स्वकार्येषु शक्ता बभूवुः । रमाभारतीपार्वतीस्तूय-
मानं सदा० ॥ ४ ॥ चतुर्विंशदर्णस्य मन्त्रोत्तमस्य प्रजापादृढं
वश्यभावं समेत्य । प्रयच्छत्यरं यश्च विद्याममोघां सदा० ॥५॥
पिनद्धानि भक्त्याख्यसूत्रेण कण्ठे सदा पञ्च रत्नानि धत्ते
दृढं यः । मुदा मुक्तिकान्ता द्रुतं तं वृणीते स्वयं शान्तिदा-
न्तिप्रमुख्यालियुक्ता ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकश्रीसच्चिदानन्दशिवाभिनवनृ-
सिंहभारतीस्वामिविरचितं दक्षिणामूर्तिपञ्चकं संपूर्णम् ।

## ३०८ दक्षिणामूर्तिवर्णमालास्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐमित्येतद्यस्य बुधैर्नाम गृहीतं यद्भासेदं भाति समस्तं वियदादि । यस्याज्ञातः स्वस्वपदस्था विधिमुख्यास्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १ ॥ नम्राङ्गाणां भक्तिमतां यः पुरुषार्थान्दत्त्वा क्षिप्रं हन्ति च तत्सर्वंविपत्तीः । पादाम्भोजाधस्तनितापस्मृतिमीशं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २ ॥ मोदध्वस्त्यै वैणिकवैयासिकमुख्याः संविन्मुद्रापुस्तकवीणाक्षगुणान्यम् । हस्ताम्भोजैर्बिभ्रतमाराधितवन्तस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥३॥ भद्रारूढं भद्रदमाराधयितॄणां भक्तिश्रद्धापूर्वकमीशं प्रणमन्ति । आदित्या यं वाञ्छितसिद्ध्यै करुणाब्धिं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥४॥ गर्भान्तस्थाः प्राणिन एते भवपाशच्छेदे दक्षं निश्चितवन्तः शरणं यम् । आराध्याङ्घ्रिप्रस्फुरदम्भोरुहयुग्मं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ५ ॥ वक्त्रं धन्याः संसृतिवार्धेरतिमात्राद्भीताः सन्तः पूर्णशशाङ्कद्युति यस्य । सेवन्तेऽध्यासीनमनन्तं वटमूलं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ६ ॥ तेजःस्तोमैरङ्गदसंघट्टितभास्वन्माणिक्योत्थैर्भासितविश्वो रुचिरैर्यः । तेजोमूर्तिं खानिलतेजःप्रमुखाब्धिं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ७ ॥ दध्याज्यादिद्रव्यककर्माण्यखिलानि त्यक्त्वा काङ्क्षां कर्मफलेष्वत्र करोति । यज्जिज्ञासां [illegible]फलार्थी क्षितिदेवस्तं प्रत्यञ्चं

दक्षिणवक्त्रं कलयामि ॥ ८ ॥ क्षिप्रं लोके यं भजमानः पृथुपुण्यः प्रध्वस्ताधिः प्रोज्झितसंसृत्यखिलार्तिः । प्रत्यग्भूतं ब्रह्म परं सन्रमते यस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥९॥ णानेत्येवं यन्मनुमध्यस्थितवर्णान्भक्ताः काले वर्णगृहीत्यै प्रजपन्तः । मोदन्ते संप्राप्तसमस्तश्रुतितन्त्रास्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥१०॥ मूर्तिच्छायानिर्जितमन्दाकिनिकुन्दप्रालेयाम्भोराशिसुधाभूतिसुरेभा । यस्याभ्राभा हासविधौ दक्षशिरोधिस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ ११ ॥ तप्तस्वर्णच्छायजटाजूटकटाहप्रोद्यद्वीचीवल्लिविराजत्सुरसिन्धुम् । नित्यं सूक्ष्मं नित्यनिरस्ताखिलदोषं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १२ ॥ येन ज्ञातेनैव समस्तं विदितं स्याद्यस्मादन्यद्वस्तु जगत्यां शशशृङ्गम् । यं प्राप्तानां नास्ति परं प्राप्यमनादिं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥१३॥ मत्तो मारो यस्य ललाटाक्षिभवाग्निस्फूर्जत्कीलप्रोषितभस्मीकृतदेहः । तद्भस्मासीद्यस्य सुजातः पटवासस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥१४॥ ह्यम्भोराशौ संसृतिरूपे लुठतां तत्पारं गन्तुं यत्पदभक्तिर्दृढनौका । सर्वाराध्यं सर्वगमानन्दपयोधिं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १५ ॥ मेधावी स्यादिन्दुवतंसं धृतवीणं कर्पूराभं पुस्तकहस्तं कमलाक्षम् । चित्ते ध्यायन्यस्य वपुर्द्राङ्निमिषार्धं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १६ ॥

धाम्नां धाम प्रौढरुचीनां परमं यत्सूर्यादीनां यस्य स हेतुर्जगदादेः। एतावान्यो यस्य न सर्वेश्वरमीड्यं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १७ ॥ प्रत्याहारप्राणनिरोधादिसमर्थैर्भक्तैर्दान्तैः संयतचित्तैर्यतमानैः। स्वात्मत्वेन ज्ञायत एव त्वरया यस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ १८ ॥ ज्ञांशीभूतान्प्राणिन एतान्फलदाता चित्तान्तस्थः प्रेरयति स्वे सकलेऽपि। कृत्ये देवः प्राक्तनकर्मानुसरः संस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥१९॥ प्रज्ञामात्रं प्रापितसंविन्निजभक्तं प्राणाक्षादेः प्रेरयितारं प्रणवार्थम्। प्राहुः प्राज्ञा यं विदितानुश्रवतत्त्वास्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २० ॥ यस्याज्ञानादेव नृणां संसृतिबोधो यस्य ज्ञानादेव विमोक्षो भवतीति। स्पष्टं ब्रूते वेदशिरो देशिकमाद्यं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २१ ॥ छन्नेऽविद्यारूपपटेनैव च विश्वं यत्राध्यस्तं जीवपरेशत्वमपीदम्। भानोर्भानुष्वम्बुवदस्ताखिलभेदं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥ २२ ॥ स्वापस्वप्नौ जाग्रदवस्थापि न यत्र प्राणश्चेतः सर्वगतो यः सकलात्मा। कूटस्थो यः केवलसच्चित्सुखरूपस्तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥२३॥ हा हेत्येवं विस्मयमीयुर्मुनिमुख्या ज्ञाते यस्मिन्स्वात्मतयानात्मविमोहः। प्रत्यग्भूते ब्रह्मणि यातः कथमित्थं तं प्रत्यञ्चं दक्षिणवक्त्रं कलयामि ॥२४॥ यैषा रम्यैर्मत्तमयूरा-

भिधवक्त्रैरादौ क्लृप्ता यन्मन्त्रवर्णैर्मुनिभङ्गी। तामेवैतां दक्षिणवक्त्रः कृपयाऽसावूरीकुर्याद्देशिकसम्राट् परमात्मा ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ श्रीदक्षिणामूर्तिवर्णमालास्तोत्रं संपूर्णम् ।

## ३०९ दक्षिणामूर्तिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ उपासकानां यदुपासनीयमुपात्तवासं वटशाखिमूले । तद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥ १ ॥ अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे । मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमोनुदन्तम् ॥ २ ॥ विद्रावितशेषतमोगणेन मुद्राविशेषेण मुहुर्मुनीनाम् । निरस्य मायां दयया विधत्ते देवो महांस्तत्त्वमसीति बोधम् ॥३॥ अपारकारुण्यसुधातरङ्गैरपाङ्गपातैरवलोकयन्तम् । कठोरसंसारनिदाघतप्तान्मुनीनहं नौमि गुरुं गुरूणाम् ॥ ४ ॥ ममाद्य देवो वटमूलवासी कृपाविशेषात्कृतसंनिधानः । ओंकाररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु ॥ ५ ॥ कलाभिरिन्दोरिव कल्पिताङ्गं मुक्ताकलापैरिव बद्धमूर्तिम् । आलोकये देशिकमप्रमेयमनाद्यविद्यातिमिरप्रभातम् ॥ ६ ॥ स्वदक्षजानुस्थितवामपादं पादादरालंकृतयोगपट्टम् । अपस्मृतेराहितपादमङ्गे

प्रणौमि देवं प्रणिधानवन्तम् ॥ ७ ॥ तत्त्वार्थमन्ते वसता-मृषीणां युवापि यः सन्नुपदेष्टुमीष्टे । प्रणौमि तं प्राक्तनपु-ण्यजालैराचार्यमाश्चर्यगुणाधिवासम् ॥ ८ ॥ एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः । स्वजानुविन्यस्त-करः पुरस्तादाचार्यचूडामणिराविरस्तु ॥ ९ ॥ आलेपवन्तं मदनाङ्गभूत्या शार्दूलकृत्या परिधानवन्तम् । आलोकये कंचन देशिकेन्द्रमज्ञानवाराकरवाडवाग्निम् ॥ १० ॥ चारु स्थितं सोमकलावतंसं वीणाधरं व्यक्तजटाकलापम् । उपा-सते केचन योगिनस्त्वामुपात्तनादानुभवप्रमोदम् ॥ ११ ॥ उपासते यं मुनयः शुकाद्या निराशिषो निर्ममताधिवासाः । तं दक्षिणामूर्तितनुं महेशमुपास्महे मोहमहार्तिशान्त्यै ॥१२॥ कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वसन्कारुण्या-मृतवारिभिर्मुनिजनं संभावयन्वीक्षितैः । मोहध्वान्तविभेदनं विरचयन्बोधेन तत्तादृशा देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥ १३ ॥ अगौरनेत्रैरललाटनेत्रैरशान्तवेषै-रभुजङ्गभूषैः । अबोधमुद्रैरनपास्तनिद्रैरपूरकामैरमरैरलं नः ॥ १४ ॥ दैवतानि कति सन्ति चावनौ नैव तानि मनसो मतानि मे । दीक्षितं जडधियामनुग्रहे दक्षिणाभिमुखमेव दैवतम् ॥ १५ ॥ मुदिताय मुग्धशशिनावतंसिने भसिता-वलेपरमणीयमूर्तये । जगदिन्द्रजालरचनापटीयसे महसे नमोऽस्तु वटमूलवासिने ॥ १६ ॥ व्यालम्बिनीभिः परितो

जटाभिः कलावशेषेण कलाधरेण । पश्यँल्ललाटेन मुखेन्दुना च प्रकाशसे चेतसि निर्मलानाम् ॥ १७ ॥ उपासकानां त्वमुमासहायः पूर्णेन्दुभावं प्रकटीकरोषि । यदद्य ते दर्शनमात्रतो मे द्रवत्यहो मानसचन्द्रकान्तः ॥ १८ ॥ यस्य प्रसन्नामनुसंदधानो मूर्तिं मुदा मुग्धशशाङ्कमौलेः । ऐश्वर्यमायुर्लभते च विद्यामन्ते च वेदान्तमहारहस्यम् ॥ १९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ दक्षिणामूर्तिस्तोत्रं संपूर्णम् ।

## ३१० गुरुपादुकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ आकाशपुष्पमिव विश्वमहं निरीक्ष्य मग्नोऽस्मि नित्यसुखबोधरसामृताब्धौ । प्रत्यञ्चमद्वयमनन्तसुखैकबोधं साक्षात्करोमि सुखभावनया गुरूणाम् ॥ १ ॥ हेरम्बं क्षेत्रपालं च वागीशं बटुकं तथा । श्रीगुरुं नाथमानन्दभैरवं भैरवीं पराम् ॥ २ ॥ प्रणम्य संविन्मार्गस्थानागमज्ञान्महागुरून् । प्रायश्चित्तं प्रवक्ष्यामि सर्वतन्त्राविरोधतः । ॥ ३ ॥ साधकानां च पुत्राणां दीक्षितानां कुलागमे । योगिनीवीरमालापे प्रसादः सुलभः खलु ॥ ४ ॥ मनसश्चञ्चलत्वाच सर्वहीनतयापि च । कामिनीनां च संसर्गात्स च हीनां



चकारतः ॥ ५ ॥ प्रायश्चित्तविहीनस्य फलभोगाय केवलम् ।

सर्वसाक्षी महादेवो नरकादुत्सृजेत्प्रभुः ॥ ६ ॥ तस्मात्सर्वप्रयत्नेन प्रायश्चित्तमिहाचरेत् । कृतस्य कर्मणः कुर्यादनुतापो भवेद्यदि ॥ ७ ॥ प्रमादिकफलं दोषप्रविलापनकारणम् । प्रायश्चित्तं परं सत्यं श्रीगुरोः पादुकास्मृतिः ॥ ८ ॥ यस्य श्रीपादरजसा रञ्जते मस्तके शिवः । रमते सह पार्वत्या तस्य श्रीपादुकास्मृतिः ॥ ९ ॥ यो मोहकलुमाक्रान्त उद्धरत्यन्धकूपतः । केवलं कृपया नाथ तस्य श्री० ॥ १० ॥ यस्मै सर्वस्वमात्मानमप्येकवृत्तिभक्तितः । समर्पयति तच्छिष्यस्तस्य श्री० ॥ ११ ॥ यस्य पादतले सिद्धाः पादाग्रे कुलपर्वताः । गुल्फौ नक्षत्रवृन्दानि तस्य श्री० ॥ १२ ॥ ऊर्वोश्च सिद्धवीरेन्द्रा लिङ्गमूले च भैरवः । लिङ्गाग्रेऽप्सरसो यस्य तस्य श्री० ॥ १३ ॥ आधारे परमा शक्तिर्नाभिचक्रे हृदाश्रयोः । योगिनीनां चतुःषष्टिस्तस्य श्री० ॥ १४ ॥ हृदये मातरः कण्ठे शिवः कण्ठोपपीठयोः । चुबुके यस्य देवाश्च तस्य श्री० ॥ १५ ॥ यज्ञाः कपोलयोर्युग्मे जिह्वाग्रे च सरस्वती । यस्य दन्तेषु मन्त्राश्च तस्य श्री० ॥१६॥ स्कन्धयोः खेचरा देवास्त्रिनेत्रैः प्रमुखास्त्रयः । लिङ्गत्रयं ललाटे च तस्य श्री० ॥ १७ ॥ मूले हृदि ललाटे च द्वादशान्ते परः शिवः । यस्याज्ञापालयन्नास्ते तस्य श्री० ॥ १८ ॥ इडापिङ्गलयोरन्तर्मध्ये च सुषुम्ना तथा । मध्ये सरस्वती यस्य तस्य श्री० ॥ १९ ॥ शुक्लरक्तपदद्वन्द्वमस्तके यस्य राजते । शाम्भवं तु

तयोर्मध्ये तस्य श्री० ॥ २० ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुरग्निर्गुरुर्मन्त्रो भानुरिन्द्रस्तथैव च ॥ २१ ॥ अन्यत्सर्वं सप्रपञ्चं निष्प्रपञ्चा गुरोः स्मृतिः । तस्माच्छ्रीपादुकाध्यानं सर्वपापनिकृन्तनम् ॥ २२ ॥ पालनाद्दुरितच्छेदात्कामितार्थप्रपूरणात् । पादुकामन्त्रशब्दार्थं विमृशन्मूर्ध्नि पूजयेत् ॥ २३ ॥ इति शास्त्रार्थसंकेतरहस्यं कुलशासने । सकृल्लासवशादुक्तमस्माभिर्गुर्वनुग्रहात् ॥२४॥ श्रीगुरोः पादुकास्तोत्रं प्रातरुत्थाय यः पठेत् । नश्यन्ति सर्वपापानि वह्निना तूलराशिवत् ॥ २५ ॥ पठितव्यं प्रयत्नेन श्रोतव्यं भक्तिशालिभिः । भोगमोक्षार्थिभिस्तस्मात्पड्भिरागमपारगैः ॥ २६ ॥ काशीक्षेत्रं निवासस्तव चरणजलं जाह्नवी श्रीगुरो नः साक्षाद्विश्वेश्वरो नस्तव वचनतया तारकब्रह्मबोधे । त्वच्छ्रीपादाङ्किताभूरिह भवति गयास्त्वत्प्रसङ्गः प्रयागस्त्वत्तोन्यत्तीर्थदेव क्वचिदपि च वयं न प्रतीमः पृथिव्याम् ॥२७॥

इति श्रीवामकेश्वरतन्त्रे प्रायश्चित्तखण्डे गुरुपादुकास्मृतिर्नाम स्तोत्रं संपूर्णम् ।

---

## ३११ विद्यातीर्थाष्टकम् ।

श्रीगणेशाय नमः ॥ लम्बिकायोगनिरतमम्बिकापतिरूपिणम् । विद्याप्रदं नतौघाय विद्यातीर्थमहेश्वरम् ॥१॥ वर्ण-



नचतुष्कोऽपि व्यासोऽपि यस्य विद्वान् । विकसति सदा

स योगी भोगी च स्यान्न तत्र संदेहः ॥ २ ॥ हृद्या विद्या वृणुते यत्पदनम्रं नरं शीघ्रम् । तं कारुण्यपयोधिं विद्यातीर्थं नमामि योगीशम् ॥ ३ ॥ पापान्धकारसूर्यं तापाम्भोधिप्रवृद्धवडवाग्निम् । अद्यापि योगनिरतं विद्यातीर्थं० ॥ ४ ॥ पद्यावलिर्मुखाब्जादयत्नतो निःसरेच्छीघ्रम् । हृद्या यत्कृपया तं विद्यातीर्थं० ॥ ५ ॥ भक्त्या यत्पदपद्मं भजतां योगः षडङ्गयुतः । सुलभस्तं करुणाब्धिं विद्यातीर्थं० ॥६॥ विद्यारण्यप्रमुखैर्विद्यापारंगतैः सेव्यम् । नतहृन्मानसहंसं विद्यातीर्थं० ॥७॥ विद्यां दत्त्वाऽविद्यां क्षिप्रं वारयति यः प्रणम्राणाम् । दयया निसर्गया तं विद्यातीर्थं नमामि योगीशम् ॥ ८ ॥ विद्यातीर्थाष्टकमिदं पठन्भक्तिपुरःसरम् । विद्यामनन्यलामान्यां प्राप्य मोदमवाप्नयात् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिविरचितं विद्यातीर्थाष्टकं संपूर्णम् ।

---

## ३१२ पादारविन्ददशकम् ।

श्रीगणेशाय नमः ॥ संसाराम्बुधिमग्नलोकविततेः पोतं यदाहुर्विदः कंसारातिपुरारिभेदमतिहृत्स्वार्चापराणां चिरम् । विद्यारण्यमुखैर्महामुनिवरैः संपूजितं तन्मुदा विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ १ ॥ हृद्या पद्यतति-



र्मुखाब्जकुहराद्यत्पूजकानां जवान्निर्गच्छत्यमरापगेव सरसा

स्वेच्छाऽपि तद्भक्तितः । तुङ्गाभिख्यनदीतटान्तविलसच्छ्री-मन्दिरे संस्थितं विद्यातीर्थ० ॥ २ ॥ यत्प्रीतिप्रतिपित्सुभिर्हरिहराभिख्याख्यभूपालकैर्विप्रेभ्यः श्रुतिविज्ञ एव बहवो ग्रामा विसृष्टाः पुरा । तद्राजत्रजवन्द्यमानमनिशं राजाधिराजत्वदं विद्यातीर्थ० ॥ ३ ॥ यत्प्रीत्यर्थमतीव सुन्दरतमं श्रीयन्त्रतुल्यं गृहं बुक्कक्ष्मापतिवंशजेन धरणीशानेन निर्मापितम् । तन्नम्राखिलभाग्यदानचतुरं भूदेवभाग्योदयं विद्यातीर्थ० ॥ ४ ॥ हंसाद्यैर्यतिभिः स्वधर्मनिरतैः संसेव्यमानं सदा निःसारत्वधियं तनोति तरसा सर्वेषु भोग्येषु यत् । आम्नायान्तरहस्यबोधनचणं तत्सर्वसिद्धिप्रदं विद्यातीर्थ० ॥ ५ ॥ श्रद्धाभक्तिविरक्तिमुख्यसुगुणान्दत्त्वा चिरात्सेवकान्संप्राप्ताखिलयोगजालजनितानन्दान्प्रकुर्वंस्तथा । ब्रह्माहं न च दृश्यवस्त्विति महावाक्योत्थबोधान्वितान्विद्यातीर्थ० ॥ ६ ॥ शृङ्गाभिख्यमहीधरेन्द्रनिवसल्लोकान्वराकानपि व्याजात्प्राप्तनिजेक्षणान्करुणया पुण्यौघयुक्तांस्तथा । कुर्वद्भक्तिभृतान्तरङ्गकमलानप्याशु यत्तन्मुदा विद्यातीर्थ० ॥७॥ यच्चित्ते दधतो मुदा परमया लोकान्समस्तान्नृपाः सेवन्ते भयभक्तिनम्रवपुषः सर्वस्वमप्यादरात् । दत्त्वा यान्ति च दासतां चिरतरां तद्भुक्तिमुक्तिप्रदं विद्यातीर्थ० ॥८॥ घण्टानादपुरःसरं प्रतिदिनं रात्रौ गणानां गणैर्भक्त्या पूरितमानसैः सुमवरैः कर्पूरनीराजनैः । धूपैर्दीपवरैर्मनोहरतरैः संपूज्यमानं मुहुर्विद्यातीर्थ०

॥ ९ ॥ तुङ्गातीरविहारिमानसलसद्धंसायितं संततं तुङ्गाप-त्तिवारणैकनिपुणं श्टङ्गारजन्मालयम् । गङ्गावारिविनिर्मलं विरचयच्चित्तं नतानां जवाद्विद्यातीर्थपदारविन्दयुगलं वन्दे जगत्पावनम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दशिवा-
भिनवनृसिंहभारतीस्वामिविरचितं पादार-
विन्ददशकं संपूर्णम् ।

## ३१३ नृसिंहभारत्यष्टकम् ।

श्रीगणेशाय नमः ॥ श्रीकीर्तिप्रतिभानां भवनं भविता यदीयपदनत्या । तान्दासीकृतभूपान्वन्दे नरसिंहभारतीपादान् ॥ १ ॥ चित्रं यन्मुखचन्द्रालोकाद्विकसन्ति चित्तपाद्मानि । शिष्याणामनिशं तान्वन्दे नर० ॥ २ ॥ सरसान्कवितासारान् वर्षत्यास्येषु नम्रजनतायाः । यदपाङ्गवारिदस्तान्वन्दे नर० ॥ ३ ॥ एनःपर्वतभेदे शतकोटिधुरं दधाति यद्भक्तिः । विश्वोत्तंसितपादान्वन्दे नर० ॥ ४ ॥ यद्वाक्छुतिर्नराणां भवसागरतारणे नौका । शीलितनिगमान्तांस्तान्वन्दे नर० ॥ ५ ॥ त्रासितकामगजेन्द्रान्स्ववचश्चातुर्यतोपितायजनात् । क्रोधाहिवैनतेयान्वन्दे नर० ॥ ६ ॥ वितरणधिक्कृतकर्णान्क्षमया निर्धूतमेदिनीगर्वान् । वैभाण्डकपुरभूपान् वन्दे नर० ॥ ७ ॥ यत्पादाम्बुजभक्तिस्तत्त्वप्रासादगमन-

निःश्रेणी । तान्नतसुखाब्धिचन्द्रान्वन्दे नरसिंहभारतीपादान् ॥ ८ ॥ स्तुतिमेनां गुरुकृपया रचितामवनावहर्निशं पठताम् । करुणानीरधयः स्युर्हृष्टा नरसिंहभारतीपादाः ॥ ९ ॥

इति श्रीनृसिंहभारत्यष्टकं संपूर्णम् ।

## ३१४ गुरुस्तवः ।

श्रीगणेशाय नमः ॥ श्रीमातृचिन्तनरतः श्रीशाङ्करभाष्यजलधिराकेन्दुः । श्रीबोधदाननिरतः श्रीमान्मम मनसि देशिकः स्फुरतु ॥ १ ॥ नृपमौलिराजिताङ्घ्रिर्नृहरिपदाम्भोजपूजनासक्तः । नृवराराधितचरणो नृत्यतु गुरुराण्मदीयहृद्रङ्गे ॥ २ ॥ सिन्धुरसमानगमनः सिन्धुतरङ्गाभनैजवाक्प्रसरः । सिंहः प्रतिवादिगजे सिन्दूरसदृक्षवस्त्रयुग्जयति ॥ ३ ॥ हसितविनिर्जितचन्द्रो हरिदन्तविराजमानसत्कीर्तिः । हरतादघमखिलं मे हतरिपुषट्कः सदानन्दः ॥ ४ ॥ भाति नरोऽल्पविदां यो भारत्येव प्रकृतबुद्धीनाम् । भाधीशतुल्यकान्तिर्भातु स मे चित्तसरसिजे गुरुराट् ॥ ५ ॥ रतिरमणगर्वहारी रजताचलसदनसक्तचेतस्कः । रचयतु मम हृदयाब्जं रजसा तमसा विहीनमाशु गुरुः ॥ ६ ॥ तीर्णभववारिराशिस्तीर्थाटनलोलहृदयकंजातः । तीव्राज्ञानमिदं मे तीर्थेट् शमयेद्रुतं दयया ॥ ७ ॥ जडताम्बुधिवडवाग्निर्जनकमहीपादितुल्यबोधयुतः । जनयतु तत्त्वज्ञानं जगद्गुरुर्नृसिंहयति

राण्मे ॥ ८ ॥ यतिपतिनिषेव्यपादो यमनियमाद्यङ्गयुक्तयोगज्ञः । यमभयवारणदक्षो यच्छतु मह्यं गुरूत्तमो योगम् ॥ ९ ॥ तिष्ठति यदीयचित्तं तिर्यग्विबुधाग्रिमेषु समदर्शि । तिर्यक्त्रिपुण्ड्रफालस्तिरयतु सोऽन्तर्बहिश्च शत्रून्मे ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिविरचितो गुरुस्तवः समाप्तः ।

## ३१५ शंकराचार्याष्टकम् ।

श्रीगणेशाय नमः ॥ ओमिति दिविषत्प्रवराः शीर्षं कुर्वन्ति शासनं यस्य । ओंकारपद्मभृङ्गं तमहं प्रणमामि शंकराचार्यम् ॥ १ ॥ नत्वा यत्पदयुग्मं वाचस्पतिगर्वहारिवाक्ततयः । प्रभवन्ति हि भुवि मूकास्तमहं प्रणमामि शंकराचार्यम् ॥२॥ मन्मथमातङ्गजये कण्ठीरवतां प्रयाति जनसंघः । यत्पादाम्बुजनत्या तमहं प्रणमामि शंकराचार्यम् ॥ ३ ॥ शंपा प्राप पुरात्तैः पुण्यैर्नूनं यदीयतनुसाम्यम् । शङ्कादुर्द्रुमपरशुं तमहं प्रणमामि शंकराचार्यम् ॥ ४ ॥ कम्बुस्तपश्चलान्तर्नं प्राप तुलां यदीयकण्ठस्य । काङ्क्षितदानधुरीणं तमहं प्रणमामि शंकराचार्यम् ॥ ५ ॥ राजाधिराजपदवीं सद्यः प्राप्नोति दीनधौरेयः । यस्यापाङ्गालोकात्तमहं प्रणमामि शंकराचार्यम् ॥ ६ ॥ अज्ञोऽप्यश्रुतशास्त्राण्याशु किल व्याकरोति यत्कृपया । निखिलकलाधिपमीशं तमहं प्रणमामि शं-

राचार्यम् ॥ ७ ॥ यमनियमाद्यङ्गयुतो योगः सुलभो यदीय-पदभाजाम् । यमभीतिभञ्जनकरं तमहं प्रणमामि शंकराचार्यम् ॥ ८ ॥ स्तवराजं गुरुकृपया कृतवाञ्छ्रीसच्चिदानन्दः । अवनौ भक्त्या पठतां शं तनुताच्छंकराचार्यः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिविरचितं शंकराचार्याष्टकं संपूर्णम् ।

## ३१६ सदाशिवेन्द्रस्तुतिः ।

श्रीगणेशाय नमः ॥ परतत्त्वलीनमनसे प्रणमद्भवबन्धमोचनायाशु । प्रकटितपरतत्त्वाय प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ १ ॥ परमशिवेन्द्रकराम्बुजसंभूताय प्रणम्रवरदाय । पदधूतपङ्कजाय प्रणतिं० ॥ २ ॥ विजननदीकुञ्जगृहे मञ्जुलपुलिनैकमञ्जुतरतल्पे । शयनं कुर्वाणाय प्रणतिं० ॥ ३ ॥ कामादिद्विजपतये शमदमसुखदिव्यरत्नवारिधये । शमनाय मोहवितते: प्रणतिं० ॥ ४ ॥ नमदात्मबोधदात्रे रमते परमात्मतत्त्वसौधाग्रे । समबुद्धयेऽश्महेम्नोः प्रणतिं० ॥ ५ ॥ गलिताविद्याहालाहलहृतपुर्यष्टकाय बोधेन । मोहान्धकाररवये प्रणतिं० ॥ ६ ॥ शमसुखषट्कमुमुक्षाविवेकवैराग्यदाननिरताय । तरसा नतजनततये प्रणतिं० ॥ ७ ॥ सिद्धान्तकल्पवल्लीसुखकृतिकर्त्रे कृपालिभक्तिकृते । करतलमुक्तिफलाय प्रणतिं० ॥ ८ ॥ तृण-

रणाय प्रणतिं० ॥ ९ ॥ निगृहीतहृदयहरये प्रगृहीतात्मस्वरूपरत्नाय। प्रणताङ्घ्रिपूर्णशशिने प्रणतिं० ॥ १० ॥ अज्ञानतिमिररवये प्रज्ञानाम्भोधिपूर्णचन्द्राय। प्रणताघविपिनशुचये प्रणतिं० ॥ ११ ॥ मतिमलमोचनदक्षप्रत्यक्त्रह्मैक्यदाननिरताय। स्मृतिमात्रतुष्टमनसे प्रणतिं० ॥ १२ ॥ निजगुरुपरमशिवेन्द्रश्लाघितविज्ञानकाष्ठाय। निजतत्त्वनिश्चलहृदे प्रणतिं० ॥ १३ ॥ प्रविलाप्य जगदशेषं परिशिष्टाखण्डवस्तुनिरताय। आस्यप्राप्तान्नभुजे प्रणतिं० ॥ १४ ॥ उपधानीकृतबाहुः परिरब्धविरक्तिरामो यः। वसनीकृतखायास्मै प्रणतिं० ॥१५॥ सकलागमान्तसारप्रकटनदक्षाय नम्रपक्षाय। सच्चित्सुखरूपाय प्रणतिं० ॥ १६ ॥ द्राक्षाशिक्षणचतुरव्याहाराय प्रभूतकरुणाय। वीक्षापावितजगते प्रणतिं० ॥ १७ ॥ योऽनुत्पन्नविकारो बाहौ म्लेच्छेन छिन्नपतितेऽपि। अविदितममतायास्मै प्रणतिं० ॥ १८ ॥ न्यपतन्सुमानि मूर्धनि येनोच्चरितेषु नामसूग्रस्य। तस्मै सिद्धवराय प्रणतिं० ॥ १९ ॥ यः पापिनोऽपि लोकान् तरसा प्रकरोति पुण्यनिष्ठाढ्यान्। करुणाम्बुराशयेऽस्मै प्रणतिं० ॥ २० ॥ सिद्धेश्वराय बुद्धेः शुद्धिप्रदपादपद्मनमनाय। बद्धौ प्रमोचकाय प्रणतिं० ॥२१॥ हृद्याय लोकविततेः पद्यावलिदाय जन्ममूकेभ्यः। प्रणतेभ्यः पदयुगले प्रणतिं० ॥ २२ ॥ जिह्वोपस्थरतानप्याह्वोच्चारेण जातु नैजस्य। कुर्वाणाय विरक्तान्प्रणतिं० ॥ २३ ॥ कर्म-

नीयकत्रनक्त्रे शमनीयभयापहारचतुराय। तपनीयसदृशवपुषे प्रणतिं० ॥ २४ ॥ तारकविद्यादात्रे तारकपतिगर्ववारकास्याय। तारजपप्रवणाय प्रणतिं० ॥ २५ ॥ मूकोऽपि यत्कृपा चेल्लोकोत्तरकीर्तिराशु जायेत। अद्भुतचरितायास्मै प्रणतिं० ॥ २६ ॥ दुर्जनदूरायतरां सज्जनसुलभाय हस्तपात्राय। तरुतलनिकेतनाय प्रणतिं० ॥२७॥ भवसिन्धुधारयित्रे भवभक्ताय प्रणम्रवश्याय। भवबन्धविरहिताय प्रणतिं० ॥ २८ ॥ त्रिविधस्यापि त्यागं वपुषः कर्तुं स्थलत्रये य इव। अकरोत्समाधिमस्मै प्रणतिं० ॥ २९ ॥ कामिनमपि जितहृदयं क्रूरं शान्तं जडं सुधियम्। कुरुते यत्करुणाऽस्मै प्रणतिं० ॥३०॥ वेदस्मृतिस्थविद्वल्लक्षणलक्ष्येषु संदिहानानाम्। निश्चयकृते विहर्त्रे प्रणतिं० ॥३१॥ बालारुणनिभवपुषे लीलानिर्धूतकामगर्वाय। लोलाय चितिपरस्यां प्रणतिं० ॥ ३२ ॥ शरणीकृताय सुगुणैर्णीकृतरक्तपङ्कजाताय। धरणीसदृक्क्षमाय प्रणतिं० ॥ ३३ ॥ प्रणताय यतिवरेण्यैर्गणनाथेनाप्यसाध्यविघ्नहते। गुणदासीकृतजगते प्रणतिं० ॥ ३४ ॥ सहमानाय सहस्राण्यप्यपराधान्प्रणम्रजनरचितान्। सहसैव मोक्षदात्रे प्रणतिं० ॥ ३५ ॥ धृतदेहाय नतावलितूणप्रज्ञाप्रदानवाञ्छातः। श्रीदक्षिणवक्त्राय प्रणतिं कुर्मः सदाशिवेन्द्राय ॥ ३६ ॥ तापत्रयातहृदयस्तापत्रयहारदक्षनसनम-

हम् । गुरुवरबोधितमहिमन्शरणं यास्ये तवाङ्घ्रिकमलयु-
गम् ॥ ३७ ॥ सदात्मनि विलीनहृत्सकलवेदशास्त्रार्थवित्
सरित्तटविहारकृत्सकललोकहृत्तापहृत् । सदाशिवपदाम्बुज-
प्रणतलोकलभ्य प्रभो सदाशिवयतीट् सदा मयि कृपामपारां
कुरु ॥ ३८ ॥ पुरा यवनकर्तनस्रवदमन्दरक्तोऽपि यः पुनः
पदसरोरुहप्रणतमेनमेनोविधिम् । कृपापरवशः पदं पतनव-
र्जितं प्राप यत्सदाशिवयतीट् स मय्यनवधिं कृपां सिञ्चतु
॥ ३९ ॥ हृषीकहृतचेतसि प्रहृतदेहके रोगकैरनेककष्टजिना-
लये शमदमादिगन्धोज्झिते । तवाङ्घ्रिपतिते यतौ यतिपते
महायोगिराट् सदाशिव कृपां मयि प्रकुरु हेतुशून्यां द्रुतम्
॥ ४० ॥ न चाहमतिचातुरीरचितशब्दसङ्घैः स्तुतिं विधातु-
मपि च क्षमो न च जपादिकेऽप्यस्ति मे । बलं बलवतां वर
प्रकुरु हेतुशून्यां विभो सदाशिव कृपां मयि प्रवर योगिनां
सत्वरम् ॥४१॥ शब्दार्थविज्ञानयुता हि लोके वसन्ति लोका
बहवः प्रकामम् । निष्ठायुता न श्रुतदृष्टपूर्वा विना भवन्तं
यतिराज नूनम् ॥ ४२ ॥ स्तोकार्चनप्रीतहृदम्बुजाय पादा-
ब्जचूडापररूपधर्त्रे । शोकापहर्त्रे तरसा नतानां पाकाय
पुण्यस्य नमो यतीश ॥ ४३ ॥ नाहं हृषीकाणि विजेतुमीशो
नाहं सपर्याभजनादि कर्तुम् । निसर्गया त्वं दययैव पाहि
सदाशिवेमं करुणापयोधे ॥ ४४ ॥ कृतयाऽनयानतावलिक्षो-

टिगतेनातिमन्दबोधेन । मुदमेहि नित्यतृप्तप्रवर स्तुत्या सदाशिवायाशु ॥ ४९ ॥

इति श्रीमत्परमहंसेत्यादिसमस्तबिरुदाङ्कितश्रीजगद्गुरुशृङ्गगिरिश्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिर्विरचिता सदाशिवमहेन्द्रस्तुतिः समाप्ता ।

## ३१७ सदाशिवपञ्चरत्नम् ।

श्रीगणेशाय नमः ॥ यत्संदर्शनमात्राद्भक्तिर्जाताप्यविद्धकर्णस्य । तत्संदर्शनमधुना कृत्वा नूनं कृतार्थोऽस्मि ॥ १ ॥ योऽनिशमात्मन्येव ह्यात्मानं संदधद्वीथ्याम् । भस्मच्छन्नानल इव जडाकृतिश्चरति तं नौमि ॥ २ ॥ यस्य विलोकनमात्राच्चेतसि संजायते शीघ्रम् । वैराग्यमचलमखिलेष्वपि विषयेषु प्रणौमि तं यमिनम् ॥ ३ ॥ पुरतो भवतु कृपाब्धिः पुरवैरिनिविष्टमानसः सोऽयम् । परमशिवेन्द्रकराम्बुजसंजातो यः सदाशिवेन्द्रो मे ॥ ४ ॥ उन्मत्तवत्संचरतीह शिष्यस्तवेति लोकस्य वचांसि शृण्वन् । खिद्यन्नुवाचास्य गुरुः पुराहो ह्युन्मत्तता मे न हि तादृशीति ॥ ५ ॥ पञ्चकमेतद्भक्त्या श्लोकानां विरचितं लोके । यः पठति सोऽपि लभते करुणां शीघ्रं सदाशिवेन्द्रस्य ॥ ६ ॥

इति श्रीसदाशिवपञ्चरत्नं संपूर्णम् ।

## ३१८ गुरुपरंपरास्तोत्रम् ।

श्रीगणेशाय नमः॥ शुद्धस्फटिकसंकाशं शुद्धविद्याप्रदायकम् । शुद्धं पूर्णं चिदानन्दं सदाशिवमहं श्रये ॥ १ ॥ सीमातीतमनाद्यन्तं नामोच्चारणभेषजम् । कामिताशेषफलदं श्रीमद्विष्णुमहं श्रये ॥ २ ॥ योगिहृत्पद्मनिलयं नतजीवहिते रतम् । श्रुतीनां जन्मभूमिं त्वां चतुर्मुखमहं भजे ॥ ३ ॥ प्रसमाहितमत्यन्तं प्रथिमामिततेजसम् । वशीकृतपरानन्दं वसिष्ठं गुरुमाश्रये ॥ ४ ॥ शुक्तौ रूप्यमिवाभाति यद्रूपं मयि कल्पितम् । शक्त्या परिहृतं येन शक्तिं तं गुरुमाश्रये ॥ ५ ॥ करणातीतचिद्रूपं परिपूर्णं परायणम् । परमानन्दसंतुष्टं पराशरमहं भजे ॥ ६ ॥ वेदव्यासं स्वात्मरूपं सत्यसन्धं परायणम् । शान्तं जितेन्द्रियक्रोधं सशिष्यं प्रणमाम्यहम् ॥ ७ ॥ त्रिकालातीतचिन्मात्रप्रशान्तस्वान्तसंयुतम् । विकाराद्यैरसंस्पृष्टं शुकं गुरुमहं श्रये ॥ ८ ॥ गूढा माया यस्य वाक्यैर्व्रीडिता विलयं गता । क्रीडन्तं विद्यया सार्धं गौडपादं तमाश्रये ॥ ९ ॥ जीवेशभेदरहितं नाविकं भववारिधेः । भावाभावविदूरस्थं गोविन्दं गुरुमाश्रये ॥ १० ॥ शङ्करूपेण मच्चित्तं पङ्कीकृतमभूद्यया । किंकरी यस्य सा माया शंकराचार्यमाश्रये ॥ ११ ॥ विश्वं मायामयत्वेन रूपितं प्रत्यबोधतः । विश्वं च यत्स्वरूपं तं वार्तिकाचार्यमाश्रये ॥१२॥ अनाद्यविद्याम्रुत्सार्य प्रज्ञानघनरूपताम् । यो बोधयति

सच्छिष्यान् तं बोधघनमाश्रये ॥ १३ ॥ सितादिघनादिदृष्टान्तैर्यत्स्वरूपं श्रुतिर्जगौ । प्रज्ञानघन एवेति तं ज्ञानघनमाश्रये ॥ १४ ॥ ज्ञानानामुत्तमं ज्ञानं ज्ञानिनामुत्तमो यतः । ज्ञानोत्तम इति ख्यातं गुरुं तमहमाश्रये ॥ १५ ॥ ज्ञाननिःश्रेणिमालम्ब्य ब्रह्माख्यं गिरिमुन्नतम् । आरुह्य कृतकृत्यो यस्तं ज्ञानगिरिमाश्रये ॥ १६ ॥ दुर्वादिदुष्टमातङ्गविदारणपटीयसे । नमः श्रीसिंहगिरये गुरवे दिव्यचक्षुषे ॥ १७ ॥ ईप्सितार्थप्रदो नित्यं प्रणतानां च देहिनाम् । यतिरीश्वरतीर्थाख्यस्तं नमामि गुरुं शिवम् ॥ १८ ॥ श्रुतिमस्तककूटस्थमज्ञानद्विपभेदिनम् । श्रीमन्त्रराजमूर्तिं तं नृसिंहं गुरुमाश्रये ॥ १९ ॥ अविद्याच्छन्नभावानां नृणां विद्योपदेशतः । प्रकाशयति यस्तत्त्वं तं विद्यातीर्थमाश्रये ॥ २० ॥ अज्ञानां जाह्नवीतीर्थं विद्यातीर्थं विवेकिनाम् । सर्वेषां सुखदं तीर्थं भारतीतीर्थमाश्रये ॥ २१ ॥ अविद्यारण्यकान्तारे भ्रमतां प्राणिनां सदा । विद्याधर्मोपदेष्टारं विद्यारण्यगुरुं श्रये ॥ २२ ॥ विद्याविद्याविवेकेन पारं संसारवारिधेः । प्रापयत्यनिशं भक्तांस्तं विद्यारण्यमाश्रये ॥ २३ ॥ अविद्यारण्यसंक्लेशक्रूशात्रुभृशतापितः । संश्रये सततं भूत्यै चन्द्रशेखरचन्द्रिकाम् ॥ २४ ॥ अविद्याख्यद्विपद्वैधीभावे दक्षं समाश्रये । नृसिंहभारतीशाख्यहरिं श्रुतिगुहाश्रयम् ॥ २५ ॥ पुरुषोत्तमतां यान्ति यमाश्रित्य जनाः श्रये । क्षराक्षरमतीतं तं पुरुषोत्-

मयोगिनम् ॥२६॥ किंकरीकृतभूपालं पङ्केरुहसमाननम् । तं कारुण्यपयोराशिं शंकराख्यं गुरुं श्रये ॥ २७ ॥ चन्द्रिकाधवलोदारसान्द्रकीर्तिच्छटाधरम् । इन्द्रियैर्दुर्जयं नौमि चन्द्रशेखरभारतिम् ॥ २८ ॥ प्रसिद्धविद्यानिलयं लसमानगुणोत्कटम् । बिसजाक्षार्चकं भक्त्या नृसिंहं तीर्थमाश्रये ॥ २९ ॥ पुरुहूतादिदेवौघ पौरुषेयगुणोत्कटम् । पुरुषार्थप्रदं नौमि पुरुषोत्तमयोगिनम् ॥ ३० ॥ कामद्विरदपञ्चास्यरामणीयकमन्दिरम् । सोमोपमाननं श्रीमद्रामचन्द्रगुरुं भजे ॥३१॥ सुरसिन्धुलसत्कीर्तिं स्मरसिन्धुघटोद्भवम् । नारसिंहार्चकं श्रीमन्नारसिंहयतिं भजे ॥ ३२ ॥ सारासारविवेकज्ञं मारकाननकुञ्जरम् । शूरं दाने च निरतं नारसिंहयतिं भजे ॥ ३३ ॥ नृसिंहतां प्रयान्त्याशु यमाश्रित्य जना भुवि । नृसिंहभारतिं वन्दे द्विगुणोपपदं सदा ॥ ३४ ॥ तं सर्वभूताभयदं विभवैरन्वितं परम् । नारसिंहं गुरुं चापि नवं ज्ञानार्णवं भजे ॥ ३५ ॥ सत्यस्वरूपं सद्ज्ञाननिष्ठं साक्षाच्छिवं परम् । सदा दानरतं दान्तं सच्चिदानन्दमाश्रये ॥ ३६ ॥ महामेरुसमं धैर्यें माधुर्येऽप्यमृतोपमम् । ऊहापोहार्थनिष्णातं नारसिंहं गुरुं भजे ॥ ३७ ॥ सच्चिन्ताम्बुजमित्राय सच्चरित्रयुजे नमः । सच्चिदानन्दभारत्यै सच्चिदानन्दमूर्तये ॥ ३८ ॥ सच्चिदानन्दभारत्यै नव्यायास्तु नमोऽनिशम् । अध्यात्मज्ञाननिर्धूताविद्याकार्यापलब्धये ॥ ३९ ॥

मारमातङ्गपञ्चास्यं मदसर्पद्विजर्षभम् । नृसिंहभारतिं वन्दे जिताक्षतुरगं सदा ॥ ४० ॥ तत्त्वमस्यादिवेदान्तवाक्यार्थ-ज्ञानवारिधेः । पूर्णचन्द्रमसं वन्दे सच्चिदानन्दयोगिनम् ॥ ४१ ॥ अभिनवपदपूर्वान्सच्चिदानन्दसंज्ञान् निगमशिखर-वेद्यान्नित्यकल्याणरूपान् । त्रिभुवनजनवन्द्यान्सर्वलोकैकहृद्यान् हृदयकमलमध्ये भावयाम्यम्बुजास्यान् ॥ ४२ ॥ प्रह्लादवरदो देवो यो नृसिंहः परो हरिः । नृसिंहोपासकं नित्यं तं नृसिंहगुरुं भजे ॥ ४३ ॥ श्रीगुरुः सच्चिदानन्दशिवा-भिनवपूर्वकः । नृसिंहभारतीस्वामी जयत्यत्र जगद्गुरुः ॥ ४४ ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षा-त्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ ४५ ॥

इति श्रीगुरुपरंपरास्तोत्रं संपूर्णम् ।

---

## ३१९ मठाम्नायस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चतुर्दिक्षु प्रसिद्धासु प्रसिद्ध्यर्थं स्वनामतः । चतुरोऽथ मठान्कृत्वा शिष्यान्संस्थापयद्विभुः ॥ १ ॥ चकार संज्ञामाचार्यश्चतुर्णां नामभेदतः । क्षेत्रं च देवतां चैव शक्तिं तीर्थं पृथक् पृथक् ॥ २ ॥ संप्रदायं तथा-म्नायभेदं च ब्रह्मचारिणाम् । एवं प्रकल्पयामास लोकोपक-रणाय वै ॥ ३ ॥ दिग्भागे पश्चिमे क्षेत्रं द्वारका कालिका-मठः । कीटवाडः संप्रदायस्तीर्थाश्रमपदे शुभे ॥ ४ ॥ देव-

सिद्धेश्वरः शक्तिर्भद्रकालीति विश्रुता। स्वरूपब्रह्मचार्याख्य आचार्यः पद्मपादकः ॥ ५ ॥ विख्यातं गोमतीतीर्थं सामवेदश्च तद्गतम्। जीवात्मपरमात्मैक्यबोधो यत्र भविष्यति ॥ ६ ॥ विख्यातं तन्महावाक्यं वाक्यं तत्त्वमसीति च। द्वितीयः पूर्वदिग्भागे गोवर्धनमठः स्मृतः ॥ ७ ॥ भोगवालः संप्रदायस्तत्रारण्यवने पदे। तस्मिन्देवो जगन्नाथः पुरुषोत्तमसंज्ञितम् ॥ ८ ॥ क्षेत्रं च वृषला देवी सर्वलोकेषु विश्रुता। प्रकाशब्रह्मचारीति हस्तामलकसंज्ञकः ॥ ९ ॥ आचार्यः कथितस्तत्र नाम्ना लोकेषु विश्रुतः। ख्यातं महोदधिस्तीर्थंमृग्वेदः समुदाहृतः ॥ १० ॥ महावाक्यं च तत्रोक्तं प्रज्ञानं ब्रह्म चोच्यते। उत्तरस्यां श्रीमठः स्यात्क्षेत्रं बदरिकाश्रमम् ॥११॥ देवो नारायणो नाम शक्तिः पूर्णगिरीति च। संप्रदायो नन्दवालस्तीर्थं चालकनन्दिका ॥ १२ ॥ आनन्दब्रह्मचारीति गिरिपर्वतसागराः। नामानि तोटकाचार्यो वेदोऽथर्वणसंज्ञकः ॥ १३ ॥ महावाक्यं च तत्रायमात्मा ब्रह्मेति कीर्त्यते। तुरीयो दक्षिणस्यां च शृङ्गेर्यां शारदामठः ॥१४॥ मलहानिकरं लिङ्गं विभाण्डकसुपूजितम्। यत्रास्ते ऋष्यशृङ्गस्य महर्षेराश्रमो महान् ॥ १५ ॥ वराहो देवता तत्र रामक्षेत्रमुदाहृतम्। तीर्थं च तुङ्गभद्राख्यं शक्तिः श्रीशारदेति च ॥ १६ ॥ आचार्यस्तत्र चैतन्यब्रह्मचारीति विश्रुतः। वार्तिकादिनिबन्धकर्ता यो मुनिपूजितः ॥ १७ ॥ सुरेश्वराचार्य

इति साक्षाद्ब्रह्मावतारकः। सरस्वती पुरी चेति भारत्यारण्यतीर्थकौ ॥ १८ ॥ गिर्याश्रमसुखानि स्युः सर्वनामानि सर्वदा। संप्रदायो भूरिवालो यजुर्वेद उदाहृतः ॥ १९ ॥ अहं ब्रह्मास्मीति तत्र महावाक्यमुदीरितम्। चतुर्णां देवताशक्तिक्षेत्रनामान्यनुक्रमात् ॥ २० ॥ महावाक्यानि वेदांश्च सर्वमुक्तं व्यवस्थया। इति श्रीमत्परमहंसपरिव्राजकभूपतेः ॥२१॥ आम्नायस्तोत्रपठनादिहामुत्र च सद्गतिम्। प्राप्यान्ते मोक्षमाप्नोति देहान्ते नात्र संशयः ॥ २२ ॥

इति मठाम्नायस्तोत्रं संपूर्णम्।

## ३२० अष्टोत्तरशतनामस्तोत्रम्।

श्रीगणेशाय नमः ॥ श्रीशंकराचार्यनवावतारः श्रीशंकरानुग्रहलब्धविद्यः। श्रीचन्द्रमौलीशनिवेशितात्मा श्रीसच्चिदानन्दशिवाभिधानः ॥ १ ॥ श्रीशृङ्गपुरपीठेशः श्रीविद्याजपतत्परः श्रीनृसिंहगुरुभ्राजत्कराम्भोरुहसंभवः ॥ २ ॥ श्रीमत्परमहंसादिसमस्तबिरुदाङ्कितः। श्रीदेशिकपदाम्भोजयुगलासक्तमानसः ॥ ३ ॥ श्रीमत्कर्णाटसिंहाङ्कासनस्थापनपण्डितः। श्रीचामराजसंसेव्यः श्रीवाणीद्वयराजितः ॥ ४ ॥ सकलागमतत्त्वज्ञः सर्वलोकैकपूजितः। सदद्वैतोपसंवेष्टा सर्वप्राणिदयाकरः ॥ ५ ॥ सत्यवाक्सत्यसंकल्पः सत्यधर्मपरायणः। सदा भक्तजनाभीष्टप्रपूरणतत्परः ॥ ६ ॥

सुपैङ्गलशरत्कृष्णफाल्गुनैकादशीभवः । सुक्षोधनसितज्येष्ठ-सावित्रीपरिसंस्कृतः ॥ ७ ॥ स्वीकृताक्षयनामाब्दपारिव्रा-ज्यसमुज्ज्वलः। स्वापदानस्तुवद्बन्दिनादोद्घोषितदिक्तटः ॥८॥ स्फुरन्मरकतोदारहारविभ्राजितोदरः । सद्रत्नपदकोपेतस्थू-लमुक्तासराञ्चितः ॥ ९ ॥ साष्टस्तम्भस्फुरद्रौप्यमण्डपोपेत-हस्तिकः । सौवर्णपञ्चकलशमञ्जूषावरवाहनः ॥ १० ॥ सुपञ्चकलशभ्राजच्छ्रेतच्छत्रविभूषितः। चिदेकरससंपूर्णश्चि-त्तनैर्मल्यभूषितः ॥ ११॥ चित्तदूरीकृताशेषविषयौघपरिभ्रमः। चामरद्वयसंवीतश्चामीकरनिभाकृतिः ॥ १२ ॥ चातुर्वर्ण्या-श्रमाचारविचारणविचक्षणः । दारिद्र्यतूलवातूलो दाक्षि-ण्यैकनिवासभूः ॥ १३ ॥ दीर्घबाहुद्वयोपेतो दीनरक्षणत-त्परः । दूरीकृताज्ञानमूलो दूषिताशेषदुर्मतः ॥ १४ ॥ नव-रत्नकिरीटाढ्यो नलिनायतलोचनः । दरस्मेरमुखाम्भोजो दैनन्दिनमहोत्सवः ॥ १५ ॥ दुरितध्वान्तमार्तण्डो दुष्टशि-क्षणदूषितः । दक्षिणामूर्तिसन्मन्त्रयन्त्रतन्त्रविशारदः ॥ १६ ॥ शंकरादिसदाचार्यपारंपर्यक्रमागतः । शारदापदपाथोजप-रिचर्यापरायणः ॥ १७ ॥ शतद्वयाराववि भ्राजद्राजधानी-गतागतः । वेदमार्गप्रतिष्ठाता वेदवेदाङ्गपारगः ॥ १८ ॥ विशालहृदयो वाग्मी वाचस्पतिसदृङ्मतिः । भूमण्डलाचा-र्यवर्यो भूतिभूषितविग्रहः ॥ १९ ॥ भक्तप्रणामसमयकृत-नारायणस्मृतिः । निजौदार्यपराभूतकामधुक्कल्पभूरुहः ॥ २०॥

नागराजोपरिन्यस्तभेरीभाङ्कारणाञ्चितः। निजदेहप्रभापुञ्ज-भूषिताशेषभूषणः ॥ २१ ॥ वैशेषिकन्यायतन्त्रोभयसिद्धा-न्तपारगः। वैयासिकाद्वैततन्त्रतत्त्वार्थपरिचिन्तकः ॥२२॥ विभिन्नहृदयग्रन्थिर्विच्छिन्नाखिलसंशयः। विद्याशंकरपादा-ब्जपरिचर्यापरायणः ॥ २३ ॥ विद्वद्वृन्दशिरश्लाघ्यकवि-ताप्रौढिमान्वितः। नृपाल्याकाङ्क्षितानेहा नृसिंहाराधन-प्रियः ॥ २४ ॥ नृपालिमौलिमाणिक्यप्रभारञ्जितपादुकः। सिंहसंहननः सिन्धुगम्भीरः सङ्गवर्जितः ॥ २५ ॥ हैय-ङ्गवीनहृदयो हासपूर्वसुभाषितः। हस्तदीपप्रभाजालभासि-तोभयपार्श्वगः ॥ २६ ॥ भ्राजत्पञ्चशिखोपेतकरदीपसमा-वृतः। धर्मदण्डपरिभ्राजच्छतशिष्यसमावृतः ॥ २७ ॥ मल्ल-भूषितहस्ताब्जपदाति गणसंवृतः। भवसंतापसंतप्तज्योत्स्ना-यितदरस्मितः॥ २८ ॥ रत्नगर्भितहेरम्बसमाराधनलालसः। रमोमाराधनासक्तो राकेन्दुसदृशाननः ॥ २९ ॥ रमणीयगु-णारामो रञ्जिताखिलभूसुरः। राजार्पिताश्वारोहादिभृत्यौघ-समलंकृतः ॥३०॥ तुरङ्गोपरिविन्यस्तढक्कानादसुलाञ्छितः। तुङ्गभद्रातीरवासी त्रिपुण्ड्राङ्कितमस्तकः ॥ ३१ ॥ तीर्थपा-दस्तीर्थसेवी तीर्णसंसृतिनीरधिः। तत्त्वमस्यादिवाक्यार्थधा-रावाहिकबुद्धिमान् ॥ ३२ ॥ द्रविणाश्वसमज्ञानो द्रवीभूतहृ-दम्बुजः। जितेन्द्रियो जितानङ्गो जगद्विजयकौतुकः ॥ ३३ ॥ जगद्विख्यातपाण्डित्यो जगद्विजयवैभवः। जगतीतलवि-

ख्यातलसन्मकरतोरणः ॥ ३४ ॥ जितपाखण्डवर्गाप्तशङ्खा-रावसमञ्चितः । योगशास्त्रार्थविद्योगी योगिवर्यंसुपूजितः ॥ ३५ ॥ तिरस्कृतार्यमानेकप्रतिसूर्यकसंवृतः । तिर्यगान्दोलिकारोहसमुल्लासितभूतलः ॥ ३६ ॥

इति श्रीनृसिंहभारत्यष्टोत्तरशतनाम स्तोत्रं संपूर्णम् ।

---

## ३२१ जयलाभयशःप्राप्तिस्तोत्रम् ।

दत्तात्रेयं महात्मानं वरदं भक्तवत्सलम् । प्रपन्नार्तिहरं वन्दे स्मर्तृगामी सनोऽवतु ॥ १ ॥ दीनबंधुं कृपासिंधुं सर्वकारणकारणम् । सर्वरक्षाकरं वन्दे स्मर्तृगामी० ॥ २ ॥ शरणागतदीनार्तपरित्राणपरायणम् । नारायणं विभुं वन्दे स्मर्तृगामी० ॥ ३ ॥ सर्वानर्थहरं देवं सर्वमङ्गलमङ्गलम् । सर्वक्लेशहरं वन्दे स्मर्तृगामी० ॥ ४ ॥ ब्रह्मण्यं धर्मतत्त्वज्ञं भक्तकीर्तिविवर्धनम् । भक्ताभीष्टप्रदं वन्दे स्मर्तृगामी०॥५॥ शोषणं पापपंकस्य दीपनं ज्ञानतेजसः । तापप्रशमनं वन्दे स्मर्तृगामी० ॥ ६ ॥ सर्वरोगप्रशमनं सर्वपीडानिवारणम् । आपदुद्धरणं वन्दे स्मर्तृगामी० ॥ ७ ॥ जन्मसंसारबन्धघ्नं स्वरूपानंददायकम् । निःश्रेयसप्रदं वन्दे स्मर्तृगामी० ॥ ८ ॥ जयलाभयशःकामदातुर्दत्तस्य यः स्तवम् । भोगमोक्षप्रदस्येमं प्रपठेत्स कृती भवेत् ॥ ९ ॥

इति श्री० प० वासुदेवानन्द० स० वि० ज० स्तोत्रं संपूर्णम् ।

## ३२२ श्रीदत्तशरणस्तोत्रम् ।

श्रीपादश्रीवल्लभ त्वं सदैव श्रीदत्तास्मान्पाहि देवाधिदेव। भावग्राह्यक्लेशहारिन्सुकीर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ १ ॥ त्वं नो माता त्वं पिताप्तोऽधिपस्त्वं त्राता योगक्षेमकृत्सद्गुरुस्त्वम् । त्वं सर्वस्वं नो प्रभो विश्वमूर्ते घोरात्कष्टा० ॥ २ ॥ पापं तापं व्याधिमाधिं च दैन्यं भीतिं क्लेशं त्वं हराशु त्वदन्यम् । त्रातारं नो वीक्ष ईशास्तजूर्ते घोरात्कष्टा० ॥ ३ ॥ नान्यस्त्राता नापि दाता न भर्ता त्वत्तो देव त्वं शरण्योऽकहर्ता । कुर्वात्रेयानुग्रहं पूर्णराते घोरात्कष्टा० ॥ ४ ॥ धर्मे प्रीतिं सन्मतिं देवभक्तिं सत्संगाप्तिं देहि भुक्तिं च मुक्तिम् । भावासक्तिं चाखिलानंदमूर्ते घोरा० ॥ ५ ॥ श्लोकपंचकमेतद्यो लोकमंगलवर्धनम् । प्रपठेन्नियतो भक्त्या स श्रीदत्तप्रियो भवेत् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवासुदेवानन्दसरस्वतियतिविरचितं दत्तशरणाष्टकस्तोत्रं संपूर्णम् ।

# हनुमत्स्तोत्राणि ।

## २२३ एकमुखहनुमत्कवचम् ।

श्रीगणेशाय नमः ॥ ॐ नमो भगवते हनुमदाख्यरुद्राय सर्वदुष्टजनमुखस्तम्भनं कुरु कुरु ॐ ह्रां ह्रीं ह्रूं ठं ठं ठं फट् स्वाहा । ॐ नमो हनुमते अञ्जनीगर्भसंभूताय रामलक्ष्मणानन्दकाय कपिसैन्यप्राकाराय पर्वतोत्पाटनाय सर्वसाध्यंकराय परोच्चाटनाय कुमारब्रह्मचर्याय गंभीरस्वरोदयाय ॐ ह्रां ह्रीं ह्रूं सर्वदुष्टनिवारणाय स्वाहा ॐ नमो हनुमत्सर्वग्रहान्भूतभविष्यवर्तमानदूरस्थसमीपस्थान् सर्वकालदुष्टबुद्धीन् उच्चाटय उच्चाटय परबलानि क्षोभय क्षोभय मम सर्वकामं

साधय साधय ॐ ह्रां ह्रीं ह्रां स्वाहा फट् देहि देहि ॐ ॐ शिवं सिद्धं ॐ ह्रां ह्रूं स्वाहा ॐ परकृतयन्त्रमन्त्रपराहंकारभूतप्रेतपिशाचपरदृष्टिसर्वविघ्नदुर्जनचेटकविद्यासर्वग्रहभयं निवारय गर्वं पच पच दल विलय विलय कीलय कीलय सर्वप्राणिदृष्टिवशं ॐ फट् स्वाहा ॐ हनुमते पाहि एहि एहि सर्वग्रहभूतानि डाकिनीः सर्वविषपान् आकर्षय आकर्षय मर्दय मर्दय क्षोदय क्षोदय प्रभूतमर्त्यान्शोषय शोषय ज्वल प्रज्वल भूतमण्डलपिशाचमण्डलनिरसनाय भूतज्वरपित्तज्वरचातुर्थिकज्वरमाहेश्वरज्वरान् छिन्धि छिन्धि आमशूलपक्षशूलशिरोभ्यन्तरशूलगुल्मशूलपित्तशूलब्रह्मराक्षसकुलं प्रबलन्यकुलनागकुलविषं निर्विषं कुरु कुरु फट् स्वाहा ॐ ह्रां सर्वदुष्टग्रहनिवारणाय स्वाहा ॐ नमो हनुमन् पापदृष्टिं षोडशदृष्टिं हनुमदाज्ञास्फुर ॐ स्वाहा ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रः हं हनुमते नमः ॥ श्रीरामचन्द्रं शरणं प्रपद्ये ॥ श्रीरामचन्द्र उवाच ॥ ॐ हनुमान्पूर्वतः पातु दक्षिणे पवनात्मजः ॥ पातु प्रतीच्यां रक्षोघ्न उड्डानोत्तीर्णसागरः ॥ १ ॥ उदीच्यामूर्ध्वगः पातु केशरीप्रियनन्दनः । अधस्ताद्विष्णुभक्तस्तु पातु मध्ये तु पावनिः ॥ २ ॥ ॐ उत्तरदिशः पातु पितृशोकविनाशकः । लङ्काप्रदाहकः पातु सर्वविघ्ननिवारकः ॥ ३ ॥ सुग्रीवसचिवः पातु मस्तकं वायुनन्दनः ॥ भालं पातु महावीरो भवो मध्यं निरन्तरम् ॥ ४ ॥ नेत्रे छायापहारी च पातु मां लवगेश्वरः ।

कपोलकर्णमूले च पातु श्रीरामकिंकरः ॥ ५ ॥ नासाग्रे अञ्जनीसूनुः पातु चक्षुर्हरीश्वरः । वाचं रुद्रप्रियः पातु जिह्वां पिङ्गललोचनः ॥६॥ पातु दृष्टान्फनेष्ट(?)श्चिबुकं दैत्यकोटिहृत् पातु कण्ठं च दैत्यारिः स्कन्धौ पातु सुरार्चितः ॥ ७ ॥ भुजौ पातु महातेजा करौ तु चरणायुधः । नखान् नखायुधः पातु कुक्षौ पातु कपीश्वरः ॥ ८ ॥ रक्षोमुद्रापहारी च पातु पार्श्वे भुजायुध । लङ्काविभञ्जकः पातु पृष्ठदेशे निरन्तरः ॥९॥ नाभिं च रामदूतश्च कटिं पात्वनिलात्मजः । गुह्यं पातु महाप्राज्ञो लिङ्गं पातु सदाशिवः ॥ १० ॥ ऊरू च जानुनी पातु लङ्काप्रासादभञ्जनः । जङ्घे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ॥ ११ ॥ अचलोद्धारकः पातु पादौ भास्करसंनिभः । अञ्जनीसुतसत्त्वाढ्यः पातु पादाङ्गुलीस्तथा । सर्वाणि च महाशूरः पातु मेऽङ्गानि चात्मवान् ॥१२॥ हनुमत्कवचं दिव्यं पठेद्विद्वान्विचक्षणः । स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च विन्दति । त्रिकालमेककालं वा यः पठेन्नात्र संशयः ॥१३॥ सर्वान् रिपून्क्षणाज्जित्वा स पुमाञ्जयमाप्नुयात् । मध्यरात्रौ जले स्थित्वा सप्तवारं पठेद्यदि ॥१४॥ क्षयापस्मारकुष्ठादितापज्वरनिवारणम् । अश्वत्थमूले रवेर्वारे स्थित्वा पठति यः पुमान् ॥१५॥ अचलां श्रियमाप्नोति संग्रामे विजयी भवेत् । श्रीरामाग्रे च यः कश्चिद्धनुमदग्रे पठेन्नरः ॥१६॥ लिखित्वा पूजयेत्तस्य सर्वत्र विजयो भवेत् । यः करे धारयेन्नित्यं सर्वान्

कामानवाप्नुयात् ॥ १७ ॥ विवादे युद्धकाले च द्यूते राजकुले रणे । दशवारं पठेद्रात्रौ मिताहारो जितेन्द्रियः ॥ १८ ॥ विजयं लभते लोके मानवो मानवाधिपः । भूतप्रेतमहादुर्गे रणे सागरसंप्लवे ॥ १९ ॥ सिंहव्याघ्रभये चाग्नौ सर्वशस्त्रास्त्रपातने । शृङ्खलाबन्धने चैव काराग्रहनियन्त्रणे ॥२०॥ शोके महारणे चैव कायस्तम्भे सुदारुणे । वह्निचक्रे सुक्षेत्रे च ब्रह्मग्रहविनाशनम् ॥२१॥ सर्वदा तु पठेन्नित्यं जयमाप्नोत्यसंशयम् । भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके ॥ २२ ॥ त्रिगन्धेनामास्यायां लिखित्वा धारयेन्नरः । पञ्चसप्तत्रिलोहैर्वा गोपितं कवचं शुभम् ॥ २३ ॥ गले कण्ठे बाहुमूले करे शिरसि धारितम् । सत्यं सत्यं पुनः सत्यं पुनः सत्यं पुनः पुनः ॥ २४ ॥ सर्वान्कामानवाप्नोति सत्यं श्रीरामभाषितम् ॥ २५ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिमाञ्जनेयम् ॥ २६ ॥

इति श्रीब्रह्मपुराणे नारदागस्त्यसंवादे श्रीरामचन्द्रप्रोक्तमेकमुखहनुमत्कवचं समाप्तम् ।

---

## ३२४ हनुमल्लाङ्गूलास्त्रस्तोत्रम् ।

श्रीगणेशाय नमः ॥ हनुमन्नञ्जनीसूनो महाबलपराक्रम । लोलल्लाङ्गूलपातेन ममारातीन्निपातय ॥ १ ॥ मर्कटाधिप

मार्तण्डमण्डलग्रासकारक । लो० ॥ २ ॥ अक्षक्षपण पिङ्गाक्ष दितिजासुक्षयंकर । लो० ॥ ३ ॥ रुद्रावतारसंसारदुःखभारापहारक । लो० ॥ ४ ॥ श्रीरामचरणाम्भोजमधुपायितमानस । लो० ॥ ५ ॥ वालिप्रमथनक्लान्तसुग्रीवोन्मोचनप्रभो । लो० ॥ ६ ॥ सीताविरहवारीशभग्नसीतेशतारक । लो० ॥ ७ ॥ रक्षोराजप्रतापाग्निदह्यमानजगद्वन । लो० ॥ ८ ॥ ग्रस्ताशेषजगत्स्वास्थ्य राक्षसाम्भोधिमन्दर । लो० ॥ ९ ॥ पुच्छगुच्छस्फुरद्वीर जगद्दग्धारिपत्तन । लो० ॥१०॥ जगन्मनोदुरुल्लङ्घ्यापारावारविलङ्घन । लो० ॥११॥ स्मृतमात्रसमस्तेष्टपूरक प्रणतप्रिय । लो० ॥ १२ ॥ रात्रिंचरतमोरात्रिकृन्तनैकविकर्तन । लो० ॥ १३ ॥ जानक्या जानकीजानेः प्रेमपात्र परंतप । लो० ॥ १४ ॥ भीमादिकमहाभीमवीरावेशावतारक । लो० ॥ १५ ॥ वैदेहीविरहक्लान्तरामरोषैकविग्रह । लो० ॥ १६ ॥ वज्राङ्गनखदंष्ट्रेश वज्रिवज्रावगुण्ठन । लो० ॥ १७ ॥ अखर्वगर्वगन्धर्वपर्वतोद्भेदनस्वर । लो० ॥ १८ ॥ लक्ष्मणप्राणसंत्राण त्राततीक्ष्णकरान्वय । लो० ॥ १९ ॥ रामादिविप्रयोगार्त भरताद्यर्तिनाशन । लो० ॥ २० ॥ द्रोणाचलसमुत्क्षेपसमुत्क्षिप्तारिवैभव । लो० ॥ २१ ॥ सीताशीर्वादसंपन्न समस्तावयवाक्षत । लोलल्लाङ्गूलपातेन ममारातीन्निपातय ॥ २२ ॥ इत्येवम-

श्वत्थतलोपविष्टः शत्रुंजयं नाम पठेत्स्वयं यः । स शीघ्रमेवास्तसमस्तशत्रुः प्रमोदते मारुतजप्रसादात् ॥ २३ ॥

इति श्रीहनुमल्लाङ्गूलास्त्रस्तोत्रं संपूर्णम् ।

---

## ३२५ एकादशमुखहनुमत्कवचम् ।

श्रीगणेशाय नमः ॥ लोपामुद्रा उवाच ॥ कुम्भोद्भव दयासिन्धो श्रुतं हनुमतः परम् । यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया ॥ १ ॥ दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे । कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २ ॥ इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रयान्वितम् । वक्तुं प्रचक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३ ॥ अगस्त्य उवाच ॥ नमस्कृत्वा रामदूतं हनुमन्तं महामतिम् । ब्रह्मप्रोक्तं तु कवचं शृणु सुन्दरि सादरम् ॥ ४ ॥ सनन्दनाय सुमहच्चतुराननभाषितम् । कवचं कामदं दिव्यं रक्षःकुलनिबर्हणम् ॥ ५ ॥ सर्वसंपत्प्रदं पुण्यं मर्त्यानां मधुरस्वरे । अस्य श्रीकवचस्यैकादशवक्त्रस्य धीमतः ॥ ६ ॥ हनुमत्स्तुतिमन्त्रस्य सनन्दन ऋषिः स्मृतः । प्रसन्नात्मा हनूमांश्च देवता परिकीर्तिता ॥ ७ ॥ छन्दोऽनुष्टुप्समाख्यातं बीजं वायुसुतस्तथा । मुख्यः प्राणः शक्तिरिति विनियोगः प्रकीर्तितः ॥ ८ ॥ सर्वकामार्थसिद्ध्यर्थं जप एवमुदीरयेत् । ॐ स्फ्रूंबीजं शक्तिधृक् पातु शिरो मे पवनात्मजः ॥ ९ ॥ क्रौंबीजात्मा नयनयोः पातु मां वानरे-

श्वरः । क्षंबीजरूपः कर्णौ मे सीताशोकविनाशनः ॥ १० ॥ ग्लौंबीजवाच्यो नासां मे लक्ष्मणप्राणदायकः । वंबीजार्थश्च कण्ठं मे पातु चाक्षयकारकः ॥ ११ ॥ रांबीजवाच्यो हृदयं पातु मे कपिनायकः । वंबीजकीर्तितः पातु बाहू मे चाञ्जनीसुतः ॥ १२ ॥ ह्रींबीजो राक्षसेन्द्रस्य दर्पहा पातु चोदरम् । हसौंबीजमयो मध्यं पातु लङ्काविदाहकः ॥ १३ ॥ ॐ ह्रीं बीजधरः पातु गुह्यं देवेन्द्रवन्दितः । रंबीजात्मा सदा पातु चोरू मे वार्धिलङ्घनः ॥ १४ ॥ सुग्रीवसचिवः पातु जानुनी मे मनोजवः । पादौ पादतले पातु द्रोणाचलधरो हरिः । आपादमस्तकं पातु रामदूतो महाबलः ॥ १५ ॥ पूर्वे वानरवक्त्रो मामाग्नेय्यां क्षत्रियान्तकृत् । दक्षिणे नारसिंहस्तु नैर्ऋत्यां गणनायकः ॥ १६ ॥ वारुण्यां दिशि मामव्यात्खगवक्त्रो हरीश्वरः । वायव्यां भैरवमुखः कौबेर्यां पातु मां सदा ॥ १७ ॥ क्रोडास्यः पातु मां नित्यमैशान्यां रुद्ररूपधृक् । ऊर्ध्वं हयाननः पातु गुह्याधः सुमुखस्तथा ॥ १८ ॥ रामास्यः पातु सर्वत्र सौम्यरूपो महाभुजः । इत्येवं रामदूतस्य कवचं यः पठेत्सदा ॥ १९ ॥ एकादशमुखस्यैतद्गोप्यं ते कीर्तितं मया । रक्षोघ्नकामदं सौम्यं सर्वसंपद्विधायकम् ॥ २० ॥ पुत्रदं धनदं चोग्रशत्रुसंघविमर्दनम् । स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् ॥ २१ ॥ एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न जायते । चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मको नरः ॥२२॥

एकवारं पठेन्नित्यं कवचं सिद्धिदं पुमान् । द्विवारं वा त्रिवारं वा पठन्नायुष्यमाप्नुयात् ॥ २३ ॥ क्रमादेकादशादेवमावर्तन-जपात्सुधीः । वर्षान्ते दर्शनं साक्षाल्लभते नात्र संशयः ॥२४॥ यं यं चिन्तयते चार्थं तं तं प्राप्नोति पूरुषः । ब्रह्मोदीरित-मेतद्धि तवाग्रे कथितं महत् ॥ २५ ॥ इत्येवमुक्त्वा वचनं महर्षिस्तूष्णीं बभूवेन्दुमुखीं निरीक्ष्य । संहृष्टचित्तापि तदा तदीयपादौ ननामातिमुदा स्वभर्तुः ॥ २६ ॥ अथ मन्त्रः ॥ ओं स्फें क्रौं क्षौं ग्लौं वं रां वां ह्रां ह्रौं ह्रीं रं । स्फें क्रों क्षौं ग्लौं क्षीं क्षौं हुं हां ह्लौं ह्रीं रं ।

इत्यगस्त्यसारसंहितायामेकादशमुखहनुमत्कवचं संपूर्णम् ।

## ३२९ पञ्चमुखहनुमत्कवचम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीपञ्चमुखहनुमत्कवच-मन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछन्दः । पञ्चमुखविराट् हनु-मान् देवता । ह्रीं बीजम् । श्रीं शक्तिः । क्रौं कीलकम् । क्रूं कवचम् । क्रैं अस्त्राय फट् । इति दिग्बन्धः ॥ श्रीगरुड उवाच ॥ अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि । यत्कृतं देवदेवेन ध्यानं हनुमतः प्रियम् ॥ १ ॥ पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् । बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् ॥ २ ॥ पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम् । दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ३ ॥ अस्यैव दक्षिणं वक्त्रं नारसिंहं महाद्भुतम् । अत्युग्रतेजोवपुषं भीषणं भय-

नाशनम् ॥ ४ ॥ पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाबलम् । सर्वनागप्रशमनं विषभूतादिकृन्तनम् ॥ ५ ॥ उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं नभोपमम् । पातालसिंहवेतालज्वररोगादिकृन्तनम् ॥ ६ ॥ ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् । येन वक्त्रेण विप्रेन्द्र तारकाख्यं महासुरम् ॥ ७ ॥ जघान शरणं तत्स्यात्सर्वशत्रुहरं परम् । ध्यात्वा पञ्चमुखं रुद्रं हनुमन्तं दयानिधिम् ॥ ८ ॥ खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम् । मुष्टिं कौमोदकीं वृक्षं धारयन्तं कमण्डलुम् ॥ ९ ॥ भिन्दिपालं ज्ञानमुद्रां दशभिर्मुनिपुङ्गवम् । एतान्यायुधजालानि धारयन्तं भजाम्यहम् ॥ १० ॥ प्रेतासनोपविष्टं तं सर्वाभरणभूषितम् । दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् । सर्वाश्चर्यमयं देवं हनुमद्विश्वतोमुखम् ॥ ११ ॥ पञ्चास्यमच्युतमनेकविचित्रवर्णवक्त्रं शशाङ्कशिखरं कपिराजवर्यम् । पीताम्बरादिमुकुटैरुपशोभिताङ्गं पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि ॥ १२ ॥ मर्कटेशं महोत्साहं सर्वशत्रुहरं परम् । शत्रुं संहर मां रक्ष श्रीमन्नापदमुद्धर ॥ १३ ॥ ॐ हरिमर्कट मर्कट मन्त्रमिदं परिलिख्यति लिख्यति वामतले । यदि नश्यति नश्यति शत्रुकुलं यदि मुञ्चति मुञ्चति वामलता ॥ १४ ॥ ॐ हरिमर्कटाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय सकलशत्रुसंहारणाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नर-

सिंहाय सकलभूतप्रमथनाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय सकलविषहराय स्वाहा । ॐ नमो भगवते पञ्चवदनायोत्तरमुखायादिवराहाय सकलसंपत्कराय स्वाहा । ॐ नमो भगवते पञ्चवदनायोर्ध्वमुखाय हयग्रीवाय सकलजनवशंकराय स्वाहा । ॐ अस्य श्रीपञ्चमुखहनुमन्मन्त्रस्य। श्रीरामचन्द्र ऋषिः। अनुष्टुप्छन्दः । पञ्चमुखवीरहनुमान् देवता । हनुमानिति बीजम् । वायुपुत्र इति शक्तिः । अञ्जनीसुत इति कीलकम् । श्रीरामदूतहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः ॥ इति ऋष्यादिकं विन्यस्य । ॐ अञ्जनीसुताय अङ्गुष्ठाभ्यां नमः । ॐ रुद्रमूर्तये तर्जनीभ्यां नमः । ॐ वायुपुत्राय मध्यमाभ्यां नमः । ॐ अग्निगर्भाय अनामिकाभ्यां नमः । ॐ रामदूताय कनिष्ठिकाभ्यां नमः । ॐ पञ्चमुखहनुमते करतलकरपृष्ठाभ्यां नमः । इति करन्यासः ॥ ॐ अञ्जनीसुताय हृदयाय नमः । ॐ रुद्रमूर्तये शिरसे स्वाहा । ॐ वायुपुत्राय शिखायै वषट् । ॐ अग्निगर्भाय कवचाय हुं । ॐ रामदूताय नेत्रत्रयाय वौषट् । ॐ पञ्चमुखहनुमते अस्त्राय फट् । पञ्चमुखहनुमते स्वाहा ॥ इति दिग्बन्धः ॥ अथ ध्यानम् । वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा । हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रिं हलं खट्वाङ्गं फणिभूरुहं दशभुजं सर्वा-

रिवीरापहम् ॥ १ ॥ इति ॥ अथ मन्त्रः ॥ ॐ श्रीरामदूतायाञ्जनेयाय वायुपुत्राय महाबलपराक्रमाय सीतादुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय फाल्गुनसखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिर्लङ्घनाय पिङ्गलनयनायामितविक्रमाय सूर्यबिम्बफलसेवनाय दुष्टनिवारणाय दृष्टिनिरालंकृताय सञ्जीविनीसञ्जीविताङ्गदलक्ष्मणमहाकपिसैन्यप्राणदाय दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीतासहितरामवरप्रदाय षट्प्रयोगागमपञ्चमुखवीरहनुमन्मन्त्रजपे विनियोगः ॥ ॐ हरिमर्कटमर्कटाय बंबंबंबंबं वौषट् स्वाहा। ॐ हरिमर्कटमर्कटाय फंफंफंफंफं फट्स्वाहा । ॐ हरिमर्कटमर्कटाय खेंखेंखेंखेंखें मारणाय स्वाहा । ॐ हरिमर्कटमर्कटाय लुंलुंलुंलुंलुं आकर्षितसकलसम्पत्कराय स्वाहा । ॐ हरिमर्कटमर्कटाय धंधंधंधंधं शत्रुस्तम्भनाय स्वाहा । ॐ टंटंटंटंटं कूर्ममूर्तये पञ्चमुखवीरहनुमते परयन्त्रपरतन्त्रोच्चाटनाय स्वाहा । ॐ कंखंगंघंङं चंछंजंझंञं टंठंडंढंणं तंथंदंधंनं पंफंबंभंमं यंरंलंवं शंषंसंहं ळंक्षं स्वाहा । इति दिग्बन्धः ॥ ॐ पूर्वकपिमुखाय पञ्चमुखहनुमते टंटंटंटंटं सकलशत्रुसंहरणाय स्वाहा । ॐ दक्षिणमुखाय पञ्चमुखहनुमते करालवदनाय नरसिंहाय ॐ हांहींहूंहैंहौंहः सकलभूतप्रेतदमनाय स्वाहा । ॐ पश्चिममुखाय मकरध्वजाय पञ्चमुखहनुमते मंमंमंमंमं सकलविषहराय

स्वाहा। ॐ उत्तरमुखायादिवराहाय लंलंलंलंलं नृसिंहाय नीलकण्ठमूर्तये पञ्चमुखहनुमते स्वाहा। ॐ ऊर्ध्वमुखाय हयग्रीवाय रुंरुंरुंरुंरुं रुद्रमूर्तये सकलप्रयोजननिर्वाहकाय स्वाहा। ॐ अञ्जनीसुताय वायुपुत्राय महाबलाय सीताशोकनिवारणाय श्रीरामचन्द्रकृपापादुकाय महावीर्यप्रमथनाय ब्रह्माण्डनाथाय कामदाय पञ्चमुखवीरहनुमते स्वाहा। भूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिन्यन्तरिक्षग्रहपरयन्त्रपरतन्त्रोच्चाटनाय स्वाहा। सकलप्रयोजननिर्वाहकाय पञ्चमुखवीरहनुमते श्रीरामचन्द्रवरप्रसादाय जंजंजंजंजं स्वाहा। इदं कवचं पठित्वा तु महाकवचं पठेन्नरः। एकवारं जपेत्स्तोत्रं सर्वशत्रुनिवारणम् ॥१५॥ द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम्। त्रिवारं च पठेन्नित्यं सर्वसंपत्करं शुभम् ॥ १६ ॥ चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम्। पञ्चवारं पठेन्नित्यं सर्वलोकवशङ्करम् ॥ १७ ॥ षड्वारं च पठेन्नित्यं सर्वदेववशङ्करम्। सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम् ॥ १८ ॥ अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम्। नववारं पठेन्नित्यं राजभोगमवाप्नुयात् ॥ १९ ॥ दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम्। रुद्रावृत्तिं पठेन्नित्यं सर्वसिद्धिर्भवेद्ध्रुवम् ॥ २० ॥ कवचस्मरणेनैव महाबलमवाप्नुयात् ॥ २१ ॥

इति श्रीसुदर्शनसं० श्रीरामचन्द्रसीताप्रोक्तं श्रीपं० ह० क० सं०

## ३२७ हनुमत्पञ्चरत्नम् ।

श्रीगणेशाय नमः ॥ वीताखिलविषयेच्छं जातानन्दाश्रुपुलकमत्यच्छम् । सीतापतिदूताद्यं वातात्मजमद्य भावये हृद्यम् ॥ १ ॥ तरुणारुणमुखकमलं करुणारसपूरपूरितापाङ्गम् । संजीवनमाशासे मञ्जुलमहिमानमञ्जनाभाग्यम् ॥ २ ॥ शम्बरवैरिशरातिगमम्बुजदलविपुललोचनोदारम् । कम्बुगलमनिलदिष्टं बिम्बज्वलितोष्ठमेकमवलम्बे ॥ ३ ॥ दूरीकृतसीतार्तिः प्रकटीकृतरामवैभवस्फूर्तिः । दारितदशमुखकीर्तिः पुरतो मम भातु हनुमतो मूर्तिः ॥ ४ ॥ वानरनिकराध्यक्षं दानवकुलकुमुदरविकरसदृक्षम् । दीनजनावनदीक्षं पवनतपःपाकपुञ्जमद्राक्षम् ॥ ५ ॥ एतत्पवनसुतस्य स्तोत्रं यः पठति पञ्चरत्नाख्यम् । चिरमिह निखिलान्भोगान्भुङ्क्त्वा श्रीरामभक्तिभाग्भवति ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ हनुमत्पञ्चरत्नस्तोत्रं संपूर्णम् ।

---

## ३२८ हनुमदष्टकम् ।

श्रीगणेशाय नमः ॥ श्रीरघुराजपदाब्जनिकेतन पङ्कजलोचन मङ्गलराशे चण्डमहाभुजदण्डसुरारिविखण्डनपण्डित पाहि दयालो । पातकिनं च समुद्धर मां महतां हि सता-

मपि मानसुदारं त्वां भजतो मम देहि दयाघन हे हरिमत्स्व-
पदाम्बुजदास्यम् ॥ १ ॥ संसृतितापमहानलदग्धतनूरुहम-
र्मतनोरतिवेलं पुत्रधनस्वजनात्मगृहादिषु सक्तमतेरतिकि-
ल्बिषमूर्तेः। केनचिदप्यमलेन पुराकृतपुण्यसुपुञ्जलवेन विभो
वै त्वां भजतो० ॥ २ ॥ संसृतिकूपमनल्पमघोनिदाघनि-
दानमजस्रमशेषं प्राप्य सुदुःखसहस्रभुजङ्गविषैकसमाकुलस-
र्वतनोर्मे । घोरमहाकृपणापदमेव गतस्य हरे पतितस्य
भवाब्धौ त्वां भजतो० ॥ ३ ॥ संसृतिसिन्धुविशालकराल-
महाबलकालझषग्रसनार्तं व्यग्रसमग्रधियं कृपणं च महा-
मदनक्रसुचक्रहृतासुम् । कालमहारसनोर्मिनिपीडितमुद्धर
दीनमनन्यगतिं मां त्वां भजतो० ॥ ४ ॥ संसृतिघोरमहागहने
चरतो मणिरञ्जितपुण्यसुमूर्तेः मन्मथभीकरघोरमहोग्रमृग-
प्रवरार्दितगात्रसुसन्धेः । मत्सरतापविशेषनिपीडितबाह्यम-
तेश्च कथंचिदमेयं त्वां भजतो० ॥ ५ ॥ संसृतिवृक्षमनेकश-
ताघनिदानमनन्तविकर्मसुशाखं दुःखफलं करणादिपलाशम-
नङ्गसुपुष्पमचिन्त्यसुमूलम् । तं ह्यधिरुह्य हरे पतितं शरणा-
गतमेव विमोचय मूढं त्वां भजतो० ॥ ६ ॥ संसृतिपन्न-
गवक्त्रभयंकरदंष्ट्रमहाविषदग्धशरीरं प्राणविनिर्गमभीतिसमा-
कुलमन्धमनाथमतीव विषण्णम् । मोहमहाकुहरे पतितं
दययोद्धर मामजितेन्द्रियकामं त्वां भजतो० ॥ ७ ॥ इन्द्रि-
यनामकचौरगणैर्हृततत्त्वविवेकमहाधनराशिं संसृतिजालनि-

पातितमेव महाबलिभिश्च विखण्डितकायम् । त्वत्पदपद्ममनु-त्तममाश्रितमाशु कपीश्वर पाहि कृपालो त्वां भजतो० ॥८॥ ब्रह्ममरुद्गणरुद्रमहेन्द्रकिरीटसुकोटिलसत्पदपीठं दाशरथिं जपति क्षितिमण्डल एष निधाय सदैव हृदब्जे । तस्य हनू-मत एव शिवङ्करमष्टकमेतदनिष्टहरं वै यः सततं हि पठेत्स नरो लभतेऽच्युतरामपदाब्जनिवासम् ॥ ९ ॥

इति श्रीमधुसूदनाश्रमशिष्याच्युतविरचितं श्रीम-द्धनुमदष्टकं संपूर्णम् ।

---

## ३२९ मारुतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐनमो भगवते विचित्रवीरहनुमते प्रलयकालानलप्रभाप्रज्वलनाय । प्रतापवज्रदेहाय । अञ्ज-नीगर्भसंभूताय । प्रकटविक्रमवीरदैत्यदानवयक्षरक्षोगणग्रहब-न्धनाय । भूतग्रहबन्धनाय । प्रेतग्रहबन्धनाय । पिशाचग्र-हबन्धनाय । शाकिनीडाकिनीग्रहबन्धनाय काकिनीका-मिनीग्रहबन्धनाय । ब्रह्मग्रहबन्धनाय । ब्रह्मराक्षसग्रहबन्ध-नाय । चोरग्रहबन्धनाय । मारीग्रहबन्धनाय । एहि एहि । आगच्छ आगच्छ । आवेशय आवेशय । मम हृदये प्रवेशय प्रवेशय । स्फुर स्फुर । प्रस्फुर प्रस्फुर । सत्यं कथय । व्याघ्र-मुखबन्धन । सर्पमुखबं० राजमु० नारीमु० सभामु० शत्रुमु० सर्वमु० लङ्काप्रासादभञ्जन । ( अमुकं ) मे वश-

मानय । क्लीं क्लीं क्लीं ह्रीं श्रीं श्रीं राजानं वशमानय । श्रीं ह्रीं क्लीं स्त्रीणां आकर्षय आकर्षय शत्रून्मर्दय मर्दय मारय मारय चूर्णय चूर्णय खे खे श्रीरामचन्द्राज्ञया मम कार्यसिद्धिं कुरु कुरु ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट् स्वाहा ॥ विचित्रवीर हनुमन् मम सर्वशत्रून् भस्म कुरु कुरु । हन हन हुं फट् स्वाहा । एकादशशतवारं जपित्वा सर्वशत्रून् वशमानयति नान्यथा इति ॥

इति मारुतिस्तोत्रं समाप्तम् ।

---

## ३३० हनुमत्स्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीहनुमान्वडवानलस्तोत्रमन्त्रस्य । श्रीरामचन्द्र ऋषिः । श्रीवडवानलहनुमान् देवता । मम समस्तरोगप्रशमनार्थं आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं समस्तपापक्षयार्थं सीतारामचन्द्रप्रीत्यर्थं हनुमद्वडवानलस्तोत्रजपमहं करिष्ये । ॐ ह्रां ह्रीं ॐ नमो भगवते श्रीमहाहनुमते प्रकटपराक्रम सकलदिङ्मण्डलयशोवितानधवलीकृतजगत्त्रितय वज्रदेह रुद्रावतार लङ्कापुरीदहन उमाअमलमन्त्र उदधिबन्धन दशशिरःकृतान्तक सीताश्वसन वायुपुत्र अञ्जनीगर्भसंभूत श्रीरामलक्ष्मणानन्दकर कपिसैन्यप्राकार सुग्रीवसाह्यरणपर्वतोत्पाटन कुमारब्रह्मचारिन् गभीरनाद सर्वपापग्रहवारण सर्वज्वरोच्चाटन डाकिनीविध्वंसन ॐ ह्रां ह्रीं

ॐनमो भगवते महावीरवीराय सर्वदुःखनिवारणाय ग्रहमण्डलसर्वभूतमण्डलसर्वपिशाचमण्डलोच्चाटन भूतज्वरएकाहिकज्वरद्व्याहिकज्वरत्र्याहिकज्वरचातुर्थिकज्वरसंतापज्वरविषमज्वरतापज्वरमाहेश्वरवैष्णवज्वरान् छिन्धि छिन्धि यक्षब्रह्मराक्षसभूतप्रेतपिशाचान् उच्चाटय उच्चाटय ॐ ह्रां श्रीं ॐ नमो भगवते श्रीमहाहनुमते ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः आं हां हां हां हां औं सौं एहि एहि एहि ॐहं ॐहं ॐहं ॐ नमो भगवते श्रीमहाहनुमते श्रवणचक्षुर्भूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वविषं हर हर आकाशभुवनं भेदय भेदय छेदय छेदय मारय मारय शोषय शोषय मोहय मोहय ज्वालय ज्वालय प्रहारय प्रहारय सकलमायां भेदय भेदय ॐ ह्रां ह्रीं ॐ नमो भगवते महाहनुमते सर्वग्रहोच्चाटन परबलं क्षोभय क्षोभय सकलबन्धनमोक्षणं कुरु कुरु शिरःशूलगुल्मशूलसर्वशूलान्निर्मूलय निर्मूलय नागपाशानन्तवासुकितक्षककर्कोटककालियान् यक्षकुलजलगतबिलगतरात्रिंचरदिवाचरसर्पान्निर्विषं कुरु कुरु स्वाहा। राजभयचोरभयपरमन्त्रपरयन्त्रपरतन्त्रपरविद्याश्छेदय छेदय स्वमन्त्रस्वयन्त्रस्वतन्त्रस्वविद्याः प्रकटय प्रकटय सर्वारिष्टान्नाशय नाशय सर्वशत्रून्नाशय नाशय असाध्यं साधय साधय हुं फट् स्वाहा॥

इति विभीषणकृतं हनुमद्वडवानलस्तोत्रं संपूर्णम्।

## ३३१ विभीषणकृतं हनुमत्स्तोत्रम् ।

श्रीगणेशाय नमः ॥ नमो हनुमते तुभ्यं नमो मारुतसूनवे । नमः श्रीरामभक्ताय श्यामास्याय च ते नमः ॥ १ ॥ नमो वानरवीराय सुग्रीवसख्यकारिणे । लङ्काविदाहनाथाय हेला-सागरतारिणे ॥ २ ॥ सीताशोकविनाशाय राममुद्राधराय च । रावणान्तकुलच्छेदकारिणे ते नमो नमः ॥३॥ मेघनाद-मखध्वंसकारिणे ते नमो नमः । अशोकवनविध्वंसकारिणे भयहारिणे ॥ ४ ॥ वायुपुत्राय वीराय आकाशोदरगामिने । वनपालशिरश्छेदलङ्काप्रासादभञ्जिने ॥ ५ ॥ ज्वलत्कनक-वर्णाय दीर्घलाङ्गूलधारिणे । सौमित्रिजयदात्रे च रामदूताय ते नमः ॥ ६ ॥ अक्षस्य वधकर्त्रे च ब्रह्मपाशनिवारिणे । लक्ष्मणाङ्गमहाशक्तिघातक्षतविनाशिने ॥ ७ ॥ रक्षोघ्नाय रिपु-घ्नाय भूतघ्नाय च ते नमः । ऋक्षवानरवीरौघप्राणदाय नमो नमः ॥ ८ ॥ परसैन्यबलघ्नाय शस्त्रास्त्रघ्नाय ते नमः । विषघ्नाय द्विषघ्नाय ज्वरघ्नाय च ते नमः ॥ ९ ॥ महाभयरिपुघ्नाय भक्तत्राणककारिणे । परप्रेरितमन्त्राणां यन्त्राणां स्तम्भ-कारिणे ॥ १० ॥ पयःपाषाणतरणकारणाय नमो नमः । बालार्कमण्डलग्रासकारिणे भवतारिणे ॥ ११ ॥ नखायुधाय भीमाय दन्तायुधधराय च । रिपुमायाविनाशाय रामाज्ञा-लोकरक्षिणे ॥१२॥ प्रतिग्रामस्थितायाथ रक्षोभूतवधार्थिने । करालशैलशस्त्राय द्रुमशस्त्राय ते नमः ॥ १३ ॥ बालैकब्रह्म-

चर्याय रुद्रमूर्तिधराय च विहङ्गमाय सर्वाय वज्रदेहाय ते नमः ॥ १४ ॥ कौपीनवाससे तुभ्यं रामभक्तिरताय च । दक्षिणाशाभास्कराय शतचन्द्रोदयात्मने ॥ १५ ॥ कृत्याक्षतव्यथाघ्नाय सर्वक्लेशहराय च । स्वाम्याज्ञापार्थसंग्रामसंख्ये संजयधारिणे ॥ १६ ॥ भक्तान्तदिव्यवादेषु संग्रामे जयदायिने । किल्किलाबुबुकोच्चारघोरशब्दकराय च ॥ १७ ॥ सर्पाग्निव्याधिसंस्तम्भकारिणे वनचारिणे । सदा वनफलाहारसंतृप्ताय विशेषतः ॥ १८ ॥ महार्णवशिलाबद्धसेतुबन्धाय ते नमः । वादे विवादे संग्रामे भये घोरे महावने ॥ १९ ॥ सिंहव्याघ्रादिचौरेभ्यः स्तोत्रपाठाद्भयं नहि । दिव्ये भूतभये व्याधौ विषे स्थावरजङ्गमे ॥ २० ॥ राजशस्त्रभये चोग्रे तथा ग्रहभयेषु च । जले सर्पे महावृष्टौ दुर्भिक्षे प्राणसंप्लवे ॥ २१ ॥ पठेत्स्तोत्रं प्रमुच्येत भयेभ्यः सर्वतो नरः । तस्य क्वापि भयं नास्ति हनुमत्स्तवपाठतः ॥ २२ ॥ सर्वदा वै त्रिकालं च पठनीयमिमं स्तवम् । सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ॥ २३ ॥ विभीषणकृतं स्तोत्रं तार्क्ष्येण समुदीरितम् । ये पठिष्यन्ति भक्त्या वै सिद्धयस्तत्करे स्थिताः ॥ २४ ॥

इति श्रीसुदर्शनसंहितायां विभीषणगरुडसंवादे विभीषणकृतं श्रीहनुमत्स्तोत्रं संपूर्णम् ।

# गङ्गादितीर्थस्तोत्राणि ।

## ३३२ गङ्गास्तुतिः ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ नमः शिवायै गङ्गायै शिवदायै नमो नमः । नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमो नमः ॥ १ ॥ नमस्ते विश्वरूपिण्यै ब्रह्ममूर्त्यै नमो नमः । सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ २ ॥ सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठयै नमोऽस्तु ते । स्थाणुजङ्गमसंभूतविषहन्त्र्यै नमो नमः ॥ ३ ॥ भोगोपभोगदायिन्यै भोगवत्यै नमो नमः । मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ॥ ४ ॥ नमस्त्रैलोक्यभूषायै जगद्धात्र्यै नमो नमः । नमस्त्रिशुक्लसंस्थायै तेजोवत्यै नमो नमः ॥ ५ ॥ नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः । नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥ ६ ॥ बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः । नमस्ते

विश्वमित्रायै नन्दिन्यै ते नमो नमः ॥ ७ ॥ पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः। शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥ ८ ॥ उस्रायै सुखदोग्ध्र्यै च संजीविन्यै नमो नमः । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥ ९ ॥ प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते । सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ॥ १० ॥ शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ ११ ॥ निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः । परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा ॥ १२ ॥ गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः । गङ्गे मे पार्श्वयोरेहि त्वयि गङ्गेऽस्तु मे स्थितिः ॥ १३ ॥ आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे । त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ॥ १४ ॥ गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे । य इदं पठति स्तोत्रं भक्त्या नित्यं नरोऽपि यः ॥ १५ ॥ शृणुयाच्छ्रद्धया युक्तः कायवाक्चित्तसंभवैः। दशधा संस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ॥ १६ ॥ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते । ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ॥१७॥ तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः। यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥ १८ ॥ सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः । अदत्तानामुपादानं हिंसा चैवाविधानतः ॥ १९ ॥



परदारोपसेवा च कायिकं त्रिविधं स्मृतम् । पारुष्यमनृतं चैव

पैशुन्यं चापि सर्वशः ॥ २० ॥ असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् । परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ॥ २१ ॥ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् । एतानि दश पापानि हर त्वं मम जाह्नवि ॥ २२ ॥ दशपापहरा यस्मात्तस्माद्दशहरा स्मृता । त्रयस्त्रिंशच्छतं पूर्वान् पितॄनथ पितामहान् ॥ २३ ॥ उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता ॥ २४ ॥ नमो भगवत्यै दशपापहरायै गङ्गायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै विश्वरूपिण्यै नन्दिन्यै ते नमो नमः ॥ २५ ॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् । विधिहरिहररूपां सेन्दुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि ॥ २६ ॥ आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ २७ ॥ गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ २८ ॥

इति धर्माब्धिस्था गङ्गास्तुतिः संपूर्णा ।

---

## ३३३ शंकराचार्यकृतगङ्गाष्टकम् ।



श्रीगणेशाय नमः ॥ भगवति तव तीरे नीरमात्राशनोऽहं

विगतविषयतृष्णः कृष्णमाराधयामि । सकलकलुषभङ्गे स्वर्गसोपानसङ्गे तरलतरतरङ्गे देवि गङ्गे प्रसीद ॥ १ ॥ भगवति भवलीलामौलिमाले तवाम्भःकणमणुपरिमाणं प्राणिनो ये स्पृशन्ति । अमरनगरनारीचामरग्राहिणीनां विगतकलिकलङ्कातङ्कमङ्के लुठन्ति ॥ २ ॥ ब्रह्माण्डं खण्डयन्ती हरशिरसि जटावल्लिमुल्लासयन्ती स्वर्लोकादापतन्ती कनकगिरिगुहागण्डशैलात्स्खलन्ती । क्षोणीपृष्ठे लुठन्ती दुरितचयचमूर्निर्भरं भर्त्सयन्ती पाथोधिं पूरयन्ती सुरनगरसरित्पावनी नः पुनातु ॥ ३ ॥ मज्जन्मातङ्गकुम्भच्युतमदमदिरामोदमत्तालिजालं स्नानैः सिद्धाङ्गनानां कुचयुगविगलत्कुङ्कुमासङ्गपिङ्गम् । सायंप्रातर्मुनीनां कुशकुसुमचयैश्छन्नतीरस्थनीरं पायान्नो गाङ्गमम्भः करिकलभकराक्रान्तरंहस्तरङ्गम् ॥ ४ ॥ आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् । भूयः शंभुजटाविभूषणमणिर्जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ ५ ॥ शैलेन्द्रादवतारिणी निजजले मज्जज्जनोत्तारिणी पारावारविहारिणी भवभयश्रेणीसमुत्सारिणी । शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥ ६ ॥ कुतो वीचिर्वीचिस्तव यदि गता लोचनपथं त्वमापीता पीताम्बरपुरनिवासं वितरसि । त्वदुत्सङ्गे गङ्गे पतति यदि कायस्त-

नुभूतां तदा मातः शातक्रतवपदलाभोऽप्यतिलघुः ॥ ७ ॥ गङ्गे त्रैलोक्यसारे सकलसुरवधूधौतविस्तीर्णतोये पूर्णब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे । प्रायश्चित्तं यदि स्यात्तव जलकणिका ब्रह्महत्यादिपापे कस्त्वां स्तोतुं समर्थस्त्रिजगदघहरे देवि गङ्गे प्रसीद ॥ ८ ॥ मातर्जाह्नवि शंभुसङ्गवलिते मौलौ निधायाञ्जलिं त्वत्तीरे वपुषोऽवसानसमये नारायणाङ्घ्रिद्वयम् । सानन्दं स्मरतो भविष्यति मम प्राणप्रयाणोत्सवे भूयाद्भक्तिरविच्युता हरिहराद्वैतात्मिका शाश्वती ॥ ९ ॥ गङ्गाष्टकमिदं पुण्यं यः पठेत्प्रयतो नरः । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गङ्गाष्टकस्तोत्रं संपूर्णम् ।

## ३३४ वाल्मीकिकृतगङ्गाष्टकम् ।

श्रीगणेशाय नमः ॥ मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि स्वर्गारोहणवैजयन्ति भवतीं भागीरथि प्रार्थये । त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खतस्त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥ १ ॥ त्वत्तीरे तरुकोटरान्तरगतो गङ्गे विहङ्गो वरं त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः । नैवान्यत्र मदान्धसिन्धुरघटासंघट्टघण्टारणत्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः

॥ २ ॥ उक्षा पक्षी तुरग उरगः कोऽपि वा वारणो वाऽवारीणः स्यां जननमरणक्लेशदुःखासहिष्णुः । न त्वन्यत्र प्रविरलरणत्कङ्कणक्वाणमिश्रं वारस्त्रीभिश्चमरमरुता वीजितो भूमिपालः ॥ ३ ॥ काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं स्रोतोभिश्चलितं तटाम्बुलुलितं वीचीभिरान्दोलितम् । दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः ॥ ४ ॥ अभिनवबिसवल्ली पादपद्मस्य विष्णोर्मदनमथनमौलेर्मालतीपुष्पमाला । जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः क्षपितकलिकलङ्का जाह्नवी नः पुनातु ॥ ५ ॥ एतत्तालतमालसालसरलव्यालोलवल्लीलताच्छन्नं सूर्यकरप्रतापरहितं शङ्खेन्दुकुन्दोज्ज्वलम् । गन्धर्वामरसिद्धकिन्नरवधूत्तुङ्गस्तनास्फालितं स्नानाय प्रतिवासरं भवतु मे गाङ्गं जलं निर्मलम् ॥ ६ ॥ गाङ्गं वारि मनोहारि मुरारिचरणच्युतम् । त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥ ७ ॥ पापापहारि दुरितारि तरङ्गधारि शैलप्रचारि गिरिराजगुहाविदारि । झङ्कारकारि हरिपादरजोपहारि गाङ्गं पुनातु सततं शुभकारि वारि ॥ ८ ॥ गङ्गाष्टकं पठति यः प्रयतः प्रभाते वाल्मीकिना विरचितं शुभदं मनुष्यः । प्रक्षाल्य गात्रकलिकल्मषपङ्कमाशु मोक्षं लभेत्पतति नैव नरो भवाब्धौ ॥ ९ ॥

इति श्रीवाल्मीकिना विरचितं गङ्गाष्टकं संपूर्णम् ।

## ३३५ गङ्गाष्टकम् ।

श्रीगणेशाय नमः ॥ कत्यक्षीणि करोटयः कति कति द्वीपिद्विपानां त्वचः काकोलाः कति पन्नगाः कति सुधाधाम्नश्च खण्डाः कति । किं च त्वं च कति त्रिलोकजननि त्वद्वारिपूरोदरे मज्जज्जन्तुकदम्बकं समुदयत्येकैकमादाय यत् ॥१॥ देवि त्वत्पुलिनाङ्गणे स्थितिजुषां निर्मानिनां ज्ञानिनां स्वल्पाहारनिबद्धशुद्धवपुषां तार्णं गृहं श्रेयसे । नान्यद्भूक्षितिमण्डलेश्वरशतैः संरक्षितो भूपतेः प्रासादो ललनागणैरधिगतो भोगीन्द्रभोगोन्नतः ॥ २ ॥ तत्तत्तीर्थगतैः कदर्थनशतैः किं तैरनर्थाश्रितैर्ज्योतिष्टोममुखैः किमीशविमुखैर्यज्ञैरवज्ञाहतैः । सूते केशववासवादिविबुधागाराभिरामां श्रियं गङ्गे देवि भवत्तटे यदि कुटीवासः प्रयासं विना ॥ ३ ॥ गङ्गातीरमुपेत्य शीतलशिलामालम्ब्य हेमाचलीं यैराकर्णि कुतूहलाकुलतया कल्लोलकोलाहलः । ते शृण्वन्ति सुपर्वपर्वतशिलासिंहासनाध्यासनाः सङ्गीतागमशुद्धसिद्धरमणीमञ्जीरधीरध्वनिम् ॥४॥ दूरं गच्छ सकच्छपं च भवतो नालोकयामो मुखं रे पाराक वराक साकमितरैर्नाकप्रदैर्गम्यताम् । सद्यः प्रोद्यतमन्दमारुतरजःप्राप्ता कपोलस्थले गङ्गाम्भःकणिका विमुक्तगणिकासङ्गाय संभाव्यते ॥ ५ ॥ विष्णोः संगतिकारिणी हरजटाजूटाटवीचारिणी प्रायश्चित्तनिवारिणी जलकणैः पुण्यौघविस्तारिणी । भूभृत्कन्दरदारिणी निजजले मज्जज्जनोत्ता-

रिणी श्रेयःस्वर्गविहारिणी विजयते गङ्गा मनोहारिणी ॥ ६ ॥ वाचालं विकलं खलं श्रितमलं कामाकुलं व्याकुलं चाण्डालं तरलं निपीतगरलं दोषाविलं चाखिलम् । कुम्भीपाकगतं तमन्तककराद्‍दाकृष्य कस्तारयेन्मातर्जह्नुनरेन्द्रनन्दिनि तव स्वल्पोदबिन्दुं विना ॥ ७ ॥ श्लेष्मश्लेषणयानलेऽमृतबिले शोकाकुले व्याकुले कण्ठे घर्घरघोषनादमलिने काये च संमीलति । यां ध्यायन्नपि भारभङ्गुरतरां प्राप्नोति मुक्तिं नरः स्नातुश्चेतसि जाह्नवी निवसतां संसारसंतापहृत् ॥ ८ ॥

इति श्रीकालिदासविरचितं गङ्गाष्टकस्तोत्रं संपूर्णम् ।

## ३३६ गङ्गाष्टकम् ।

श्रीगणेशाय नमः ॥ नमस्तेऽस्तु गङ्गे त्वदङ्गप्रसङ्गाद्भुजङ्गास्तुरङ्गाः कुरङ्गाः प्लवङ्गाः । अनङ्गारिरङ्गाः ससङ्गाः शिवाङ्गा भुजङ्गाधिपाङ्गीकृताङ्गा भवन्ति ॥ १ ॥ नमो जह्नुकन्ये न मन्ये त्वदन्यैर्निसर्गेन्दुचिह्नादिभिर्लोकभर्तुः । अतोऽहं नतोऽहं सतो गौरतोये वसिष्ठादिभिर्गीयमानाभिधेये ॥ २ ॥ त्वदामज्जनात्सज्जनो दुर्जनो वा विमानैः समानः समानैर्हि मानैः । समायाति तस्मिन्पुरारातिलोके पुरद्वारसंरुद्धदिक्पाललोके ॥ ३ ॥ स्वरावासदम्भोलिदम्भोऽपि रम्भापरीरम्भसंभावनाधीरचेताः । समाकाङ्क्षते त्वत्तटे वृक्षवाटीकुटीरे वसन्नेतुमायुर्दिनानि ॥ ४ ॥ त्रिलोकस्य

भर्तुर्जटाजूटबन्धात्स्वसीमान्तभागे मनाक्प्रस्खलन्तः । भवान्या रुषा प्रौढसापत्नभावात्करेणाहतास्त्वत्तरङ्गा जयन्ति ॥ ५ ॥ जलोन्मज्जदैरावतोदानकुम्भस्फुरत्प्रस्खलत्सान्द्रसिन्दूररागे । क्वचित्पद्मिनीरेणुभङ्गे प्रसङ्गे मनः खेलतां जह्नुकन्यातरङ्गे ॥ ६ ॥ भवत्तीरवानीरवातोत्थधूलीलवस्पर्शतस्तत्क्षणं क्षीणपापः । जनोऽयं जगत्पावने त्वत्प्रसादात्पदे पौरुहूतेऽपि धत्तेऽवहेलाम् ॥ ७ ॥ त्रिसंध्यानमल्लेखकोटीरनानाविधानेकरत्नांशुबिम्बप्रभाभिः । स्फुरत्पादपीठे हठेनाष्टमूर्तेर्जटाजूटवासे नताः स्मः पदं ते ॥ ८ ॥ इदं यः पठेदष्टकं जह्नुपुत्र्यास्त्रिकालं कृतं कालिदासेन रम्यम् । समायास्यतीन्द्रादिभिर्गीयमानं पदं केशवं शैशवं नो लभेत्सः ॥ ९ ॥

इति श्रीकालिदासकृतं गङ्गाष्टकस्तोत्रं संपूर्णम् ।

## ३३७ गङ्गास्तवः ।

श्रीगणेशाय नमः ॥ सूत उवाच ॥ शृणुध्वं मुनयः सर्वे गङ्गास्तवमनुत्तमम् । शोकमोहहरं पुंसामृषिभिः परिकीर्तितम् ॥ १ ॥ ऋषय ऊचुः ॥ इयं सुरतरङ्गिणी भवनवारिधेस्तारिणी स्तुता हरिपदाम्बुजादुपगता जगत्संसदः । सुमेरुशिखरामरप्रियजलामलक्षालिनी प्रसन्नवदना शुभा भवभयस्य विद्राविणी ॥ २ ॥ भगीरथरथानुगा सुरकरीन्द्रदर्पापहा महेशमुकुटप्रभा गिरिशिरःपताका सिता । सुरा-

सुरनरोरगैरजभवाच्युतैः संस्तुता विमुक्तिफलशालिनी कलुषनाशिनी राजते ॥ ३ ॥ पितामहकमण्डलुप्रभवमुक्तिबीजा लता श्रुतिस्मृतिगणस्तुतद्विजकुलालवालावृता । सुमेरुशिखराभिदा निपतिता त्रिलोकावृता सुधर्मफलशालिनी सुखपलाशिनी राजते ॥ ४ ॥ चरद्विहगमालिनी सगरवंशमुक्तिप्रदा मुनीन्द्रवरनन्दिनी दिवि मता च मन्दाकिनी । सदा दुरितनाशिनी विमलवारिसंदर्शनप्रणामगुणकीर्तनादिषु जगत्सु संराजते ॥ ५ ॥ महाभिषसुताङ्गना हिमगिरीशकूटस्तना सफेनजलहासिनी सितमरालसंचारिणी । चलल्लहरिसत्करा वरसरोजमालाधरा रसोल्लसितगामिनी जलधिकामिनी राजते ॥ ६ ॥ क्वचिन्मुनिगणैः स्तुता क्वचिदनन्तसंपूजिता क्वचित्कलकलस्वना क्वचिदधीरयादोगणा । क्वचिद्रविकरोज्ज्वला क्वचिदुदग्रपाताकुला क्वचिज्जनविगाहिता जयति भीष्ममाता सती ॥ ७ ॥ स एव कुशली जनः प्रणमतीह भागीरथीं स एव तपसां निधिर्जपति जाह्नवीमादरात् । स एव पुरुषोत्तमः स्मरति साधु मन्दाकिनीं स एव विजयी प्रभुः सुरतरङ्गिणीं सेवते ॥ ८ ॥ तवामलजलाचितं खगशृगालमीनक्षतं चलल्लहरिलोलितं रुचिरतीरजम्बालितम् । कदा निजवपुर्मुदा सुरनरोरगैः संस्तुतोऽप्यहं त्रिपथगामिनि प्रियमतीव पश्याम्यहो ॥ ९ ॥ त्वत्तीरे वसतिं तवामलजलस्नानं तव प्रेक्षणं त्वन्नामस्मरणं तवोदयकथासंलापनं पाव-

नम् । गङ्गे मे तव सेवनैकनिपुणोऽप्यानन्दितश्चादृतः स्तुत्वा चोद्धतपातको भुवि कदा शान्तश्चरिष्याम्यहम् ॥ १० ॥ इत्येतदृषिभिः प्रोक्तं गङ्गास्तवनमुत्तमम् । स्वर्ग्यं यशस्यमायुष्यं पठनाच्छ्रवणादपि ॥ ११ ॥ सर्वपापहरं पुंसां बलमायुर्विवर्धनम् । प्रातर्मध्याह्नसायाह्ने गङ्गासान्निध्यता भवेत् ॥ १२ ॥ इत्येतद्भार्गवाख्यानं शुकदेवान्मया श्रुतम् । पठितं श्रावितं चात्र पुण्यं धन्यं यशस्करम् ॥ १३ ॥ अवतारं महाविष्णोः कल्केः परममद्भुतम् । पठतां शृण्वतां भक्त्या सर्वाशुभविनाशनम् ॥ १४ ॥

इति श्रीकल्किपुराणेऽनुभागवते भ०तृ०अ०गङ्गास्तवः संपूर्णः ।

---

## ३३८ सत्यज्ञानानन्दतीर्थकृतगङ्गाष्टकम् ।

श्रीगणेशाय नमः ॥ यदवधि तव नीरं पातकी नैति गङ्गे तदवधि मलजालैर्नैव मुक्तः कलौ स्यात् । तव जलकणिकाऽलं पापिनां पापशुद्ध्यै पतितपरमदीनांस्त्वं हि पासि प्रपन्नान् ॥ १ ॥ तव शिवजललेशं वायुनीतं समेत्य सपदि निरयजालं शून्यतामेति गङ्गे । शमलगिरिसमूहाः प्रस्फुटन्ति प्रचण्डास्त्वयि सखि विशतां नः पापशङ्का कुतः स्यात् ॥२॥ तव शिवजलजालं निःसृतं यर्हि गङ्गे सकलभुवनजालं पूतपूतं तदाऽभूत् । यमभटकलिवार्ता देवि लुप्ता यमोऽपि व्यधि-

कृतवरदेहाः पूर्णकामाः सकामाः ॥ ३ ॥ मधुमधुवनपूगै रत्नपूगैर्नृपूगैर्मधुमधुवनपूगैर्देवपूगैः सपूगैः । पुरहरपरमाङ्गे भासि मायेव गङ्गे शमयसि विपतापं देवदेवस्य वन्द्यम् ॥ ४ ॥ चलितशशिकुलाभैरुत्तरङ्गैस्तरंगैरमितनदनदीनामङ्गसङ्गैरसङ्गैः । विहरसि जगदण्डे खण्डयन्ती गिरीन्द्रान् रमयसि निजकान्तं सागरं कान्तकान्ते ॥ ५ ॥ तव परमहिमानं चित्तवाचाममानं हरिहरविधिशक्रा नापि गङ्गे विदन्ति। श्रुतिकुलमभिधत्ते शङ्कितं तं गुणान्तं गुणगणसुविलापैर्नेति नेतीति सत्यम् ॥ ६ ॥ तव नुतिनतिनामान्यप्यघं पावयन्ति ददति परमशान्तिं दिव्यभोगान् जनानाम् । इति पतितशरण्ये त्वां प्रपन्नोऽस्मि मातर्ललिततरतरङ्गे चाङ्ग गङ्गे प्रसीद ॥ ७ ॥ शुभतरकृतयोगाद्विश्वनाथप्रसादाद्भवहरवरविद्यां प्राप्य काश्यां हि गङ्गे । भगवति तव तीरे नीरसारं निपीय मुदितहृदयकुञ्जे नन्दसूनुं भजेऽहम् ॥ ८ ॥ गङ्गाष्टकमिदं कृत्वा भुक्तिमुक्तिप्रदं नृणाम् । सत्यज्ञानानन्दतीर्थयतिना स्वर्पितं शिवे ॥ ९ ॥ तेन प्रीणातु भगवान् शिवो गङ्गाधरो विभुः । करोतु शंकरः काश्यां जनानां सततं शिवम् ॥ १० ॥

इति सत्यज्ञानानन्दतीर्थयतिना विरचितं गंगाष्टकं संपूर्णम् ।

---

## ३३९ प्रयागाष्टकम् ।

श्रीगणेशाय नमः ॥ मुनय ऊचुः ॥ सुरमुनिदितिजेन्द्रैः

सेव्यते योऽस्ततन्द्रैर्गुरुतरदुरितानां का कथा मानवानाम् । स भुवि सुकृतकर्तुर्वाञ्छितावाप्तिहेतुर्जयति विजितयागस्तीर्थराजः प्रयागः ॥ १ ॥ श्रुतिः प्रमाणं स्मृतयः प्रमाणं पुराणमप्यत्र परं प्रमाणम् । यत्रास्ति गङ्गा यमुना प्रमाणं स तीर्थराजो जयति प्रयागः ॥ २ ॥ न यत्र योगाचरणप्रतीक्षा न यत्र यज्ञेष्टिविशिष्टदीक्षा । न तारकज्ञानगुरोरपेक्षा स तीर्थं० ॥ ३ ॥ चिरं निवासं न समीक्षते यो ह्युदारचित्तः प्रददाति च क्रमात् । यः कल्पितार्थांश्च ददाति पुंसः स तीर्थ० ॥ ४ ॥ यत्राप्लुतानां न यमो नियन्ता यत्रास्थितानां सुगतिप्रदाता । यत्राश्रितानाममृतप्रदाता स तीर्थ० ॥ ५ ॥ पुर्यः सप्त प्रसिद्धाः प्रतिवचनकरीस्तीर्थराजस्य नार्यो नैकव्यान्मुक्तिदाने प्रभवति सुगुणा काश्यते ब्रह्म यस्याम् । सेयं राज्ञी प्रधाना प्रियवचनकरी मुक्तिदानेन युक्ता येन ब्रह्माण्डमध्ये स जयति सुतरां तीर्थ० ॥ ६ ॥ तीर्थावली यस्य तु कण्ठभागे दानावली वल्गति पादमूले । व्रतावली दक्षिणपादमूले स तीर्थ० ॥ ७ ॥ आज्ञापि यज्ञाः प्रभवोऽपि यज्ञाः सप्तर्षिसिद्धाः सुकृतानभिज्ञाः । विज्ञापयन्तः सततं हि काले स तीर्थ० ॥ ८ ॥ सितासिते यत्र तरङ्गचामरे नद्यौ विभाते मुनिभानुकन्यके । लीलातपत्रं वट एव साक्षात्स तीर्थराजो जयति प्रयागः ॥ ९ ॥ तीर्थराजप्र-

यागस्य माहात्म्यं कथयिष्यति । श्रृणुयात्सततं भक्त्या वाञ्छितं फलमाप्नुयात् ॥ १० ॥

इति श्रीमत्स्यपुराणे प्रयागराजमाहात्म्याष्टकं समाप्तम् ।

## ३४० काशीपञ्चकम् ।

श्रीगणेशाय नमः ॥ मनोनिवृत्तिः परमोपशान्तिः सा तीर्थवर्या मणिकर्णिका च । ज्ञानप्रवाहा विमलादिगङ्गा सा काशिकाहं निजबोधरूपा ॥ १ ॥ यस्यामिदं कल्पितमिन्द्रजालं चराचरं भाति मनोविलासम् । सच्चित्सुखैका परमात्मरूपा सा का० ॥ २ ॥ कोशेषु पञ्चस्वधिराजमाना बुद्धिर्भवानी प्रतिदेहगेहम् । साक्षी शिवः सर्वगणोन्तरात्मा सा का० ॥ ३ ॥ काश्यां हि काश्यते काशी काशी सर्वप्रकाशिका । सा काशी विदिता येन तेन प्राप्ता हि काशिका ॥ ४ ॥ काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः । विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा देहे सर्वो मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ॥ ५ ॥

इति श्रीमच्छंकराचार्यविरचितं काशीपञ्चकं संपूर्णम् ।

## ३४१ यमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ मुरारिकायकालिमाललामवारिधा-

रिणी तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी। मनोऽनुकूलकूलकुञ्जपुञ्जधूतदुर्मदा धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ १ ॥ मलापहारिवारिपूरिभूरिमण्डितामृता भृशं प्रपातकप्रपञ्चनातिपण्डिता निशा-। सुनन्दनन्दिनाङ्गसङ्गरागरञ्जिताहिता धुनोतु० ॥ २ ॥ लसत्तरङ्गसङ्गधूतभूतजातपातका नवीनमाधुरीधुरीणभक्तिजातचातका । तटान्तवासदासहंससंसृताह्निकामदा धुनोतु० ॥ ३ ॥ विहाररासखेदभेदधीरतीरमारुता गता गिरामगोचरे यदीयनीरचारुता। प्रवाहसाहचर्यपूतमेदिनीनदीनदा धुनोतु० ॥ ४ ॥ तरङ्गसङ्गसैकतान्तरान्तितं सदासिदा शरन्निशाकरांशुमञ्जरीसभाजिता। भवार्चनाप्रचारुणाम्बुनाधुनानिशारदा धुनोतु० ॥ ५ ॥ जलान्तकेलिकारिचारुराधिकाङ्गरागिणी स्वभर्तुरन्यदुर्लभाङ्गताङ्गतांशभागिनी । स्वदत्तसुप्तसप्तसिन्धुभेदिनातिकोविदा धुनोतु० ॥६॥ जलच्युताच्युताङ्गरागलम्पटालिशालिनी विलोलराधिकाकचान्तचम्पकालिमालिनी। सदावगाहनावतीर्णभर्तृभृत्यनारदा धुनोतु० ॥ ७ ॥ सदैव नन्दनन्दकेलिशालिकुञ्जमञ्जुला तटोत्थफुल्लमल्लिकाकदम्बरेणुसूज्ज्वला । जलावगाहिनां नृणां भवाब्धिसिन्धुपारदा धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ८ ॥

इति श्रीमच्छंकराचार्यविरचितं यमुनाष्टकं संपूर्णम् ।

## ३४२ यमुनाष्टकम्।

श्रीगणेशाय नमः॥ कृपापारावारां तपनतनयां तापशमनीं मुरारिप्रेयस्यां भवभयदवां भक्तिवरदाम्। वियज्ज्वालान्मुक्तां श्रियमपि सुखाप्तेः परिदिनं सदा धीरो नूनं भजति यमुनां नित्यफलदाम्॥ १॥ मधुवनचारिणि भास्करवाहिनि जाह्नविसङ्गिनि सिन्धुसुते मधुरिपुभूषिणि माधवतोषिणि गोकुलभीतिविनाशकृते। जगदघमोचनि मानसदायिनि केशवकेलिनिदानगते जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम्॥ २॥ अयि मधुरे मधुमोदविलासिनि शैलविहारिणि वेगभरे परिजनपालिनि दुष्टनिषूदिनि वाञ्छितकामविलासधरे। व्रजपुरवासिजनार्जितपातकहारिणि विश्वजनोद्धरिके जय यमुने०॥ ३॥ अतिविपदम्बुधिमग्नजनं भवतापशताकुलमानसकं गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम्। ऋणभयभीतिमनिष्कृतिपातककोटिशतायुतपुञ्जतरं जय यमुने०॥४॥ नवजलदद्युतिकोटिलसत्तनुहेममयाभररञ्जितके तडिदवहेलिपदाञ्चलचञ्चलशोभितपीतसुचैलधरे। मणिमयभूषणचित्रपटासनरञ्जितगञ्जितभानुकरे जय यमुने०॥ ५॥ शुभपुलिने मधुमत्तयदूद्भवरासमहोत्सवकेलिभरे उच्चकुलाचलराजितमौक्तिकहारमयाभररोदसिके। नवमणिकोटिकभास्करकञ्चुकिशोभिततारकहारयुते जय यमुने०॥ ६॥ करि-

वरमौक्तिकनासिकभूषणवातचमत्कृतचञ्चलके मुखकमलाम-लसौरभचञ्चलमत्तमधुव्रतलोचनिके । मणिगणकुण्डललोल-परिस्फुरदाकुलगण्डयुगामलके जय यमुने० ॥ ७ ॥ कल-रवनूपुरहेममयाञ्चितपादसरोरुहसारुणिके धिमिधिमिधि-मिधिमितालविनोदितमानसमञ्जुलपादगते । तव पदपङ्क-जमाश्रितमानवचित्तसदाखिलतापहरे जय यमुने० ॥ ८ ॥ भवोत्तापाम्भोधौ निपतितजनो दुर्गतियुतो यदि स्तौति प्रातः प्रतिदिनमनन्याश्रयतया । हयाह्रेषैः कामं करकुसुमपुञ्जैर-विरतां सदा भोक्ता भोगान्मरणसमये याति हरिताम् ॥९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरार्यविरचितं यमुनाष्टकं संपूर्णम् ।

---

## ३४३ नर्मदाष्टकम् ।

श्रीगणेशाय नमः ॥ सबिन्दुसिन्धुसुस्खलत्तरङ्गभङ्गरञ्जितं द्विषत्सु पापजातजातकारिवारिसंयुतम् । कृतान्तदूतका-लभूतभीतिहारिवर्मदे त्वदीयपादपङ्कजं नमामि देवि नर्मदे ॥ १ ॥ त्वदम्बुलीनदीनमीनदिव्यसंप्रदायकं कलौ मलौघभा-रहारि सर्वतीर्थनायकम् । सुमत्स्यकच्छनक्रचक्रचक्रवाकश-र्मदे त्वदीयपाद० ॥ २ ॥ महागभीरनीरपूरपापधूतभूतलं ध्वनत्समस्तपातकारिदारितापदं जलम् । जगल्लये महाभये मृकण्डुसूनुहर्म्यदे त्वदीयपाद० ॥ ३ ॥ गतं तदैव मे भयं

त्वदम्बु वीक्षितं यदा मृकण्डुसूनुशौनकासुरारिसेवि सर्वदा । पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्वदीयपाद० ॥ ४ ॥ अलक्षलक्षकिन्नरामरासुरादिपूजितं सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् । वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे त्वदी० ॥ ५ ॥ सनत्कुमारनाचिकेतकश्यपात्रिषट्पदैर्धृतं स्वकीयमानसेषु नारदादिषट्पदैः । रवीन्दुरन्तिदेवदेवराजकर्मशर्मदे त्वदीयपाद० ॥६॥ अलक्षलक्षलक्षपापलक्षसारसायुधं ततस्तु जीवजन्तुतन्तुभुक्तिमुक्तिदायकम् । विरिञ्चिविष्णुशंकरस्वकीयधामवर्मदे त्वदीयपाद० ॥ ७ ॥ अहो मृतं स्वनं श्रुतं महेशकेशजातटे किरातसूतवाडवेषु पण्डिते शठे नटे । दुरन्तपापतापहारिसर्वजन्तुशर्मदे त्वदीयपाद० ॥ ८ ॥ इदं तु नर्मदाष्टकं त्रिकालमेव सदा पठन्ति ते निरन्तरं न यान्ति दुर्गतिं कदा । सुलभ्यदेहदुर्लभं महेशधामगौरवं पुनर्भवा नरा न वै विलोकयन्ति रौरवम् ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं नर्मदाष्टकस्तोत्रं संपूर्णम् ।

---

## ३४४ पुष्कराष्टकम् ।

श्रीगणेशाय नमः ॥ श्रिया युतं त्रिदेहतापपापराशिनाशकं मुनीन्द्रसिद्धसाध्यदेवदानवैरभिष्टुतम् । तटेऽस्ति यज्ञपर्वतस्य मुक्तिदं सुखाकरं नमामि ब्रह्मपुष्करं सवैष्णवं सशंकरम् ॥ १ ॥ सदार्यमासशुक्लपञ्चवासरे वरागतं तदन्य-

थान्तरिक्षगं सुतन्त्रभावनानुगम् । तदम्बुपानमज्जनं दृशां सदामृताकरं नमामि०॥२॥ त्रिपुष्कर त्रिपुष्कर त्रिपुष्करेति संस्मरेत्स दूरदेशगोऽपि यस्तदङ्गपापनाशनम् । प्रपन्नदुःखभञ्जनं सुरञ्जनं सुखाकरं नमामि० ॥ ३ ॥ मृकण्डुमङ्कणौ पुलस्त्यकण्वपर्वतासिता अगस्त्यभार्गवौ दधीचिनारदौ शुकादयः । सपद्मतीर्थपावनैकदृष्टयो दयाकरं नमामि० ॥ ४ ॥ सदा पितामहेक्षितं वराहविष्णुनेक्षितं तथाऽमरेश्वरेक्षितं सुरासुरैः समीक्षितम् । इहैव भुक्तिमुक्तिदं प्रजाकरं घनाकरं नमामि० ॥ ५ ॥ त्रिदण्डिदण्डिब्रह्मचारितापसैः सुसेवितं पुरार्धचन्द्रप्राप्तदेवनन्दिकेश्वराभिधैः । सवैद्यनाथनीलकण्ठसेवितं सुधाकरं नमामि० ॥ ६ ॥ सुपञ्चधा सरस्वती विराजते यदन्तरे तथैकयोजनायतं विभाति तीर्थनायकम् । अनेकदैवपैत्रतीर्थसागरं रसाकरं नमामि० ॥ ७ ॥ यमादिसंयुतो नरस्त्रिपुष्करं निमज्जति पितामहश्च माधवोऽप्युमाधवः प्रसन्नताम् । प्रयाति तत्पदं तदात्ययत्नतो गुणाकरं नमामि० ॥ ८ ॥ इदं हि पुष्कराष्टकं सुनीतिनीरजाश्रितं स्थितं मदीयमानसे कदापि माऽपगच्छतु । त्रिसंध्यमापठन्ति ये त्रिपुष्कराष्टकं नराः प्रदीप्तदेहभूषणा भवन्ति मेशकिङ्कराः ॥ ९ ॥

इति श्रीपुष्कराष्टकं समाप्तम् ।

## ३४५ श्रीमणिकर्णिकाष्टकम् ।

श्रीगणेशाय नमः ॥ त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे । मद्रूपो मनुजोऽयमस्तु हरिणा प्रोक्तः शिवस्तत्क्षणात्तन्मध्याद्भृगुलाञ्छनो गरुडगः पीताम्बरो निर्गतः ॥ १ ॥ इन्द्राद्यास्त्रिदशाः पतन्ति नियतं भोगक्षये ते पुनर्जायन्ते मनुजास्ततोऽपि पशवः कीटाः पतङ्गादयः । ये मातर्मणिकर्णिके तव जले मज्जन्ति निष्कल्मषाः सायुज्येऽपि किरीटकौस्तुभधरा नारायणाः स्युर्नराः ॥ २ ॥ काशी धन्यतमा विमुक्तिनगरी सालंकृता गङ्गया तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किङ्करी । स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥ ३ ॥ गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः । देवानामपि दुर्लभं स्थलमिदं पापौघनाशक्षमं पूर्वोपार्जितपुण्यपुञ्जगमकं पुण्यैर्जनैः प्राप्यते ॥ ४ ॥ दुःखाम्भोनिधिमग्नजन्तुनिवहास्तेषां कथं निष्कृतिर्ज्ञात्वैतद्धि विरञ्चिना विरचिता वाराणसी शर्मदा । लोकाः स्वर्गसुखास्ततोऽपि लघवो भोगान्तपातप्रदाः काशी मुक्तिपुरी सदा शिवकरी धर्मार्थकामोत्तरा ॥ ५ ॥ एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरो योऽप्येकः किल शंकरो विषधरो गङ्गाधरो माधरः ।

ये मातर्मणिकर्णिके तव जले मज्जन्ति ते मानवा रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं कथम् ॥ ६ ॥ त्वत्तीरे मरणं तु मङ्गलकरं देवैरपि श्लाघ्यते शक्रस्तं मनुजं सहस्रनयनैर्द्रष्टुं सदा तत्परः। आयान्तं सविता सहस्रकिरणैः प्रत्युद्गतोऽभूत्सदा पुण्योऽसौ वृषगोऽथवा गरुडगः किं मन्दिरं यास्यति ॥७॥ मध्याह्ने मणिकर्णिकास्नपनजं पुण्यं न वक्तुं क्षमः स्त्रीयैरब्दशतैश्चतुर्मुखधरो वेदार्थदीक्षागुरुः। योगाभ्यासबलेन चन्द्रशिखरस्तत्पुण्यपारं गतस्त्वत्तीरे प्रकरोति सुप्तपुरुषं नारायणं वा शिवम् ॥८॥ कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत्। स्नात्वा स्तोत्रमिदं नरः पठति चेत्संसारपाथोनिधिं तीर्त्वा पल्वलवत्प्रयाति सदनं तेजोमयं ब्रह्मणः ॥ ९ ॥

इति मच्छंकराचार्यविरचितं मणिकर्णिकाष्टकस्तोत्रं संपूर्णम्।

---

## ३४६ गोदाष्टकम्। (दण्डकः)

श्रीगणेशाय नमः ॥ वेदान्तवस्तुजनखेदासहं कलितगोदावपुर्वहति भेदाय संसृतिभियाम्। मोदागमप्रचुरकेदारमस्तमितभेदां हृशं भवतु भेदात्तुमात्तकरुणम्। गोदा नयन्ति कलितोदावहाः शमलमोदाय भङ्गजविनोदा यदीयपयसः। मो दीनवा व्रजति मो दारके भवति वा दागम-

ध्यतुलकोदारतत्तटजुषि ॥१॥ स्नानाय वा त्वयि न पानाय याति हतमानादरः सुधुनि का नाम तस्य जननी । दानादिसत्कृतिवितानानि कानि भवहानाय चेत्त्वमसि मानातिगस्वचरिते । धानासु दृष्टिरिव नानाविधानि शुभगानानि भावुकनिधानानि सन्तु मयि ते। ध्यानाध्वनि प्रणययानाय देहि मतिमानाय्य मह्यमयि जानासि कर्तुमुचितम् ॥ २ ॥ वारांनिधेर्गृहिणि मारान्तकाहतविहारां कथं त्ववनिहारायमानसलिलाम् । त्वां राधयामि भवकारां गतः सुकृतभारार्चितां सततदारानुगोऽहमधमः । आरात्करिष्यसि कदारातिवेष्टितमगाराधिदैवतमपारावनव्रतधरे । धाराधरस्य किमु भाराय पल्वलमुदाराधिपे दिश विचाराय मोदमतुलम् ॥३॥ माताऽसि तोकमयि मा तापयाशु कुरु शान्ताधिमार्तसखि जातासि शर्वशिरसः । शातानि देहि जननान्तान्विनाशय कृतान्ताद्बिभेमि ननु मां तारयातिमलिनम् । त्वां तारिणीं विविधकान्तारर्णिं कृतनितान्तार क नु विधाता विहाय शरणम् । वातायनेन किमु याता सुखं भुजगपा···रो विषविघाताहते सुनिनुते ॥ ४ ॥ यामामनन्ति सरितामाद्यकां गिरिशमोदावहां प्रबलकामादिपड्रिपुहराम्। तामानयामि हृदि रामाभिभूषिततटाविरस्तु मयि सा मान्यपूजितपदा । धामाविनश्वरमुदामादिशापनयदामानि मोहमयदामाकृतानि गलतः । श्यामां मतिं नय विरामाय

याति बत यामादिभिर्विततिरामागुपो मम वृथा॥५॥बालाय किं प्रणतपालापि नार्पयसि शालामनल्पगुणजालां कृपामृतमयीम् । कालासिराग्रसति वालाग्रभागमपि शालागमं किमु करालाधिपस्त्यजति माम् । भालाक्षराणि भवहालान्धकस्य पतितालापहन्त्रि शतधा लान्तु नाशमयि मे । व्यालायते सुखविशालाक्षवर्तनमरालानि नाशय सुधा लास्यकानि ललिते ॥ ६ ॥ या काचिदद्भुतगुणा कामधेनुरिव साकाङ्क्षमृग्यचरणा कामपूरणकरी। पाकाय कर्मजविपाकातुरायगुरुवाकादरं सुरपताका ददातु ननु सा । शाकाय जीव किमु हा कामयस्यमृतपाकादृते न भविताकालसर्पविजयः । पाकारिरारटति नाकाधिपोऽपि बत मा कापथे त्रिनट राकाजलां श्रय धुनीम् ॥ ७ ॥ देवास्तु दिव्यधुनि के वा भजद्बलहसेत्राग्रहा जननि ते वारिबिन्दुपुरतः । हे वारिताखिलमले वायुजाधिपनुते वारणास्यनमिते वामनीकृतविधे । रेवादिसर्वफलदे वागतीतविभवे वारयाशुभमये वासयस्व निकटे । ते वा स्तवार्थमतये वासनां दधति ये वान्तवन्निखिलमेवाकलय्य तटगाः ॥ ८ ॥

इति गोदाष्टकं संपूर्णम् ।

---

## ३४७ गङ्गास्तोत्रम् ।

श्रीगणेशाय नमः ॥ गङ्गे गङ्गे विभातं तव विमलपयो

वारिधाराद्युधारा नारानाराम्बुरारिप्रपथपदगतेर्यावितासीर्विरासीः। देवीदेवीर्वदन्ति श्रवणमुपगतास्ते विमूढाविमूढा मातर्मातः स्वरित्थं भवविभवपदं प्रापिका प्रापिकासि ॥१॥ तेने तें नेह मातर्निजजननसुखा जाह्नवी जाह्नवीयां लोकेलोकेऽपवर्गो गतिरथ भवती सापुरारेः पुरारेः । मेनेमेने न हन्त्रीभुगत इति कृपां स्वां सुलभ्यासुलभ्यां याचेयाचे त एव त्रिभुवनमपथं यत्रपासी त्रपासी ॥ २ ॥ शंभो शं भोरतस्ते कलितकलिनये याकृपाली कृपाली मारामारारिकल्पान्कलयतु सततं सा समानासमाना । नाथानाथानथो नः प्रभवति भवती तावकीनावकीना दीनादीनानुकम्पिन्यलमिति वरये भावनीयावनीया ॥ ३ ॥ सौरासौराह्वताया अधर इति पुनः क्ष्माभृतः क्ष्माभृतस्ते नीता नीताशिवारांकणकलितकरैः स्वं पदं स्वःपदान्ते । भीताभीता न शेकुर्विकलितुममरा यर्हि येषां न येषां निन्युर्निन्युर्मुनौ तं हयमतिप्रहतिं योपदानां पदानाम् ॥ ४ ॥ रामारामायणं तज्जननि पुरहूतो याति यामे न यामे वामावामाङ्गि यत्र प्रणयभररतां तेशकामं प्रकामम् । नाम्नानाम्नाप्रसूर्दिग्विषमभरणतां नो सतां नोसतान्ते धाम्नाधाम्नाधिकानां मयि कुरु कृपया साधुतां साधुनां हि ॥ ५ ॥ सेहेसेहेतिजह्नुः कथमतितरसा निम्नगां निम्नगान्ते पाता पाताळगाया जघनस्थितिमहो माद्युजानेर्न

जाने । कान्तेकान्तेकलातेकलुषितसमने शांभवी शांभवीयां चेक्र चक्रे सलो किं गतिसुत जगतां वास एषामथैषा ॥ ६ ॥ नीरेनीरे सवेशं तुलयसि मनुयंते गतासुं गतासुं तीरे तीरेण तुल्यं कलयसि नियतं ते वशं तं वसन्तम् । श्रुत्वा श्रुत्वा गृणन्तं समगतिसुत किं यान्ति ये यान्ति मातः शैवा शैवा निमज्य त्वयि यदि कृपया नौ विदामो त्रिदामः ॥ ७ ॥ पीत्वा पीत्वा पयस्ते पुरहरदयिते तीर्थका तीर्थकानां कोट्यः कोट्यर्धमेवं त्रिभुवनविहृतः सङ्गताः सङ्गतायाः । तिस्रस्तिस्रोम्भसांते कणमितहनने मे प्रयत्नाप्रयत्नादीडे दीडे सुवृत्तीः सुविगमविगमाः पादपद्मं सुपद्मम् ॥ ८ ॥ गङ्गे ये स्तुवते स्तवेन मनुजा एतेन ते मानसीं सिद्धिं यान्ति पतन्त एव कृतिनस्त्वत्तोपतः संमताः । श्लोकानां वसुना सुनावसुचया शैवं पदं निर्भया भुक्त्वा भुक्तिविलासयामलपदैः संनिर्मिते नास्यते ॥ ९ ॥ नन्दिनीतिनलिनीति नाम ते विश्वकायसुभगा सुभेति च । सुप्रसन्नभुवनप्रसाधिनी जलपतां त्रिपथगामिनीति च ॥ १० ॥ वृन्दा पृथ्वी देवि विद्याधरीति क्षेम्या गङ्गा जाह्नवी वै शिवेति । शान्ता शान्तेः साधिनी सन्निधिस्तत्कीर्त्या मर्त्ये मज्जने सज्जनानाम् ॥ ११ ॥ मालवीयमधुसूदनात्मना कृष्णविश्रुतयशो बुधात्मना । देवपालपुरवासितद्रुवा गौतमेन चकृषु ? मुमुक्षुणा ॥ १२ ॥ कृत्वा

णिनी मणिनाशुभं विद्वज्जनमनसाम् । निर्मितमष्टकमेतदिति गङ्गाया यशसाम् ॥ १३ ॥

इति श्रीमालवकुलमणिशुक्कविरचितगङ्गास्तोत्रं संपूर्णम् ।

---

## ३४८ त्रिवेणीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मुक्तामयालंकृतमुद्रवेणी भक्ताभयत्राणसुबद्धवेणी । मत्तालिगुञ्जन्मकरन्दवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ १ ॥ लोकत्रयैश्वर्यनिदानवेणी तापत्रयोच्चाटनबद्धवेणी । धर्मार्थकामाकलनैकवेणी श्रीमत्प्र० ॥२॥ मुक्ताङ्गनामोहनसिद्धवेणी भक्तान्तरानंदसुबोधवेणी । वृत्त्यन्तरोद्वेगविवेकवेणी श्रीमत्प्र० ॥ ३ ॥ दुग्धोदधिस्फूर्जसुभद्रवेणी नीलाभ्रशोभाललिता च वेणी । स्वर्णप्रभाभासुरमध्यवेणी श्रीमत्प्र० ॥ ४ ॥ विश्वेश्वरोत्तुङ्गकपर्दिवेणी विरिञ्चिविष्णुप्रणतैकवेणी । त्रयीपुराणां सुरसार्धवेणी श्रीमत्प्र० ॥ ५ ॥ माङ्गल्यसंपत्तिसमृद्धवेणी मात्रान्तरन्यस्तनिदानवेणी । परंपरापातकहारिवेणी श्रीमत्प्र० ॥ ६ ॥ निमज्जदुन्मज्जमनुष्यवेणी त्रयोदयोभाग्यविवेकवेणी । विमुक्तजन्माविभवैकवेणी श्रीमत्प्र० ॥ ७ ॥ सौन्दर्यवेणी सुरसार्धवेणी माधुर्यवेणी महनीयवेणी । रत्नैकवेणी रमणीयवेणी श्रीम० ॥ ८ ॥ सारस्वताकारविघातवेणी कालिन्दकन्यामयलक्ष्यवेणी । भागीरथीरूपमहेशवेणी श्रीमत्प्र० ॥ ९ ॥ श्रीमद्भ-

वानीभवनैकवेणी लक्ष्मीसरस्वत्यभिमानवेणी । माता त्रिवेणीत्रयिरत्नवेणी श्रीमत्प्र० ॥ १० ॥ त्रिवेणीदशकं स्तोत्रं प्रातर्नित्यं पठेन्नरः । तस्य वेणी प्रसन्ना स्याद्विष्णुलोकं स गच्छति ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं त्रिवेणीस्तोत्रं संपूर्णम् ।

## ३४९. गङ्गालहरिः ।

श्रीगणेशाय नमः ॥ समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः । श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु ॥ १ ॥ विलीनो वै वैवस्वतनगरकोलाहलभरो गता दूराद्दूरं क्वचिदपि परेतान्मृगयितुम् । विमानानां व्रातो विदलयति वीथीर्दिविपदां कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥ २ ॥ दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम् । अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ ३ ॥ उदञ्चन्मात्सर्यस्फुटकपटहेरम्बजननीकटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः । भवन्तु त्वङ्गन्तो हरशिरसि गाङ्गाः पुनरमी तरङ्गाः प्रोत्तुङ्गा दुरितभरभङ्गाय भजताम् ॥ ४ ॥ स्मृतिं याता पुंसामकृतसु-

कृतानामपि च या हरन्त्यन्तस्तन्द्रां तिमिरमिव चन्द्रांशुसरणिः । इयं सा ते मूर्तिः सकलसुरसंसेव्यसलिला ममान्तःसन्तापं त्रिविधमथ तापं च हरताम् ॥ ५ ॥ तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः । इदानीमौदास्यं यदि भजसि भागीरथी तदा निराधारो हा रोदिमि कथय केषामिह पुरः ॥ ६ ॥ अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा विलोलद्वानीरं तव जननि तीरं श्रितवताम् । सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां जनानामानन्दः परिहसति निर्वाणपदवीम् ॥ ७ ॥ प्रभाते स्नातीनां नृपतिरमणीनां कुचतटीं गतो यावन्मातर्मिलति तव तोयैर्मृगमदः । मृगास्तावद्वैमानिकशतसहस्रैः परिवृता विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ॥ ८ ॥ स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि प्रगीतं यत्पापं झटिति भवतापं च हरति । इदं तद्गङ्गेति श्रवणरमणीयं खलु पदं मम प्राणप्रान्ते वदनकमलान्तर्विलसतु ॥ ९ ॥ यदन्तः खेलन्तो बहुलतरसंतोषभरिता न काका नाकाधीश्वरनगरसाकाङ्क्षमनसः । निवासाल्लोकानां जनिमरणशोकापहरणं तदेतत्ते तीरं श्रमशमनधीरं भवतु नः ॥ १० ॥ न यत्साक्षाद्वेदैरपि गलितभेदैरवसितं न यस्मिञ्जीवानां प्रसरति मनोवाग्व्यवहरः । निराकारं नित्यं निजमहिमनिर्वासिततमो विशुद्धं यत्तत्त्वं सुरतटिनि

तत्त्वं न विषयः ॥ ११ ॥ महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्न लभ्यं घोराभिः सुविमलतपोराशिभिरपि । अचिन्त्यं तद्विष्णोः पदमखिलसाधारणतया ददाना केनासि त्वमिह तुलनीया कथय नः ॥ १२ ॥ नृणामीक्षामात्रादपि परिहरन्त्या भवभयं शिवायास्ते मूर्तेः क इह महिमानं निगदतु । अमर्षम्लानायाः परममनुरोधं गिरिभुवो विहाय श्रीकण्ठः शिरसि नियतं धारयति याम् ॥ १३ ॥ विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितैरवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः । हरन्ती लोकानामनवरतमेनांसि कियतां कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे ॥ १४ ॥ स्खलन्ती स्वर्लोकादवनितलशोकापहृतये जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा । अये निर्लोभानामपि मनसि लोभं जनयतां गुणानामेवायं तव जननि दोषः परिणतः ॥ १५ ॥ जडानन्धान्पङ्गून्प्रकृतिबधिरानुक्तिविकलान्ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् । निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो नरानम्ब त्रातुं त्वमिह परमं भेषजमसि ॥ १६ ॥ स्वभावस्वच्छानां सहजशिशिराणामयमपामपारस्ते मातर्जयति महिमा कोऽपि जगति । मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः समासाद्याद्यापि स्फुटपुलकसान्द्राः सगरजाः ॥ १७ ॥ कृतक्षुद्राघौघानथ झटिति संतप्तमनसः समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः । अपि प्रायश्चित्तप्रसरणपथातीतचरि-

तान्नरान्दूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ १८ ॥ निधानं धर्माणां किमपि च विधानं नवमुदां प्रधानं तीर्थानाममलपरिधानं त्रिजगतः । समाधानं बुद्धेरथ खलु तिरोधानमधियां श्रियामाधानं नः परिहरतु तापं तव वपुः ॥ १९ ॥ पुरो धावं धावं द्रविणमदिराघूर्णितदृशां महीपानां नानातरुणतरखेदस्य नियतम् । ममैवायं मन्तुः स्वहितशतहंतुर्जडधियो वियोगस्ते मातर्यदिह करुणातः क्षणमपि ॥ २० ॥ मरुल्लीलालोलल्लहरिलुलिताम्भोजपटलस्खलत्पांसुव्रातच्छुरणविसरत्कौङ्कुमरुचि । सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिलं जलं ते जम्बालं मम जननजालं जरयतु ॥ २१ ॥ समुत्पत्तिः पद्मारमणपदपद्मामलनखान्निवासः कन्दर्पप्रतिभटजटाजूटभवने । अथायं व्यासङ्गो हतपतितनिस्तारणविधौ न कस्मादुत्कर्षस्तव जननि जागर्ति जगति ॥ २२ ॥ नगेभ्यो यान्तीनां कथय तटिनीनां कतमया पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे । कया वा श्रीभर्तुः पदकमलमक्षालि सलिलैस्तुलालेशो यस्यां तव जननि दीयेत कविभिः ॥ २३ ॥ विधत्तां निःशङ्कं निरवधिसमाधिं विधिरहो सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः । कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः सवित्री कामानां यदि जगति जागर्ति भवती ॥ २४ ॥ अनाथः स्नेहार्द्रां विगलितगतिः पुण्यमतिदां पतन्विश्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम् । सुधा-

सिन्धुं तृष्णाकुलितहृदयो मातरमयं शिशुः संप्राप्तस्त्वा-
महमिह विदध्याः समुचितम् ॥ २५ ॥ स्फुरत्कामक्रोधप्र-
बलतरसंजातजटिलज्वरज्वालाजालज्वलितवपुषां नः प्रति-
दिनम् । हरन्तां संतापं कमपि मरुदुल्लासिलहरिच्छटाचञ्च-
त्पाथःकणसरणयो दिव्यसरितः ॥ २६ ॥ इदं हि ब्रह्माण्डं
सकलभुवनाभोगभवनं तरङ्गैर्यस्यान्तर्लुठति परितस्तिन्दुक-
मिव । स एष श्रीकण्ठप्रविततजटाजूटजटिलो जलानां
संघातस्तव जननि तापं हरतु नः ॥ २७ ॥ त्रपन्ते तीर्थानि
त्वरितमिह यस्योद्धृतिविधौ करं कर्णे कुर्वन्त्यपि किल
कपालिप्रभृतयः । इमं तं मामम्ब त्वमियमनुकम्पार्द्रहृदये
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥ २८ ॥ श्वपाकानां
व्रातैरमितविचिकित्साविचलितैर्विमुक्तानामेकं किल सदन-
मेनःपरिषदाम् । अहो मामुद्धर्तुं जननि घटयन्त्याः परिकरं
तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः ॥२९॥ न कोऽप्ये-
तावन्तं खलु समयमारभ्य मिलितो यदुद्धारादाराद्भवति
जगतो विस्मयभरः । इतीमामीहां ते मनसि चिरकालं
स्थितवतीमयं संप्राप्तोऽहं सफलयितुमम्ब प्रणय नः ॥ ३० ॥
श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं कुतर्केष्वभ्यासः
सततपरपैशुन्यमननम् । अपि श्रावंश्रावं मम तु पुनरेवं
गुणगणानृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम्
॥ ३१ ॥ विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं

न याभ्यामालीढा परमरमणीया तव तनुः। अयं हि न्यक्कारो जननि मनुजस्य श्रवणयोर्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥३२॥ विमानैः स्वच्छन्दं सुरपुरमयन्ते सुकृतिनः पतन्ति द्राक् पापा जननि नरकांतः परवशाः। विभागोऽयं तस्मिन्नशुभमथ मूर्तौ जनपदे न यत्र त्वं लीलादलितमनुजाशेषकलुषा ॥ ३३ ॥ अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः पिबन्तो मैरेयं पुनरपि हरन्तश्च कनकम्। विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषामुपर्यम्ब क्रीडन्त्यखिलसुरसंभावितपदाः ॥ ३४ ॥ अलभ्यं सौरभ्यं हरति सततं यः सुमनसां क्षणादेव प्राणानपि विरहशस्त्रक्षतभृताम्। त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ॥ ३५ ॥ कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः परे पूतात्मानः कति च परलोकप्रणयिनः। सुखं शेते मातस्तव खलु कृपातः पुनरयं जगन्नाथः शश्वत्त्वयि विहितलोकद्वयभरः ॥ ३६ ॥ भवत्या हि व्रात्याधमपतितयाऽखण्डपरिपत्परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा। ममाप्येवं प्रेमा दुरितनिवहेष्वम्ब जगति स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥ ३७ ॥ प्रदोषान्ते नृत्यत्पुरमथनलीलोद्धृतजटातटाभोगप्रेङ्खल्लहरिभुजसन्तानविधुतिः। बिलक्रोडक्रीडज्जलडमरुडङ्कारसुभगस्तिरोधत्तां तापं त्रिदशतटिनीताण्डवविधिः

॥ ३८ ॥ सदैव त्वय्येवार्पितकुशलचिन्ताभरमिमं यदि त्वं मामम्ब त्यजसि समयेऽस्मिन्सुविषमे । तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥ ३९ ॥ कपर्दादुल्लस्य प्रणयमिलदर्धाङ्गयुवतेः पुरारेः प्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ । भवान्या सापत्न्यस्फुरितनयनं कोमलरुचा करेणोत्क्षिप्तास्ते जननि विजयन्तां लहरयः ॥ ४० ॥ प्रपद्यन्ते लोकाः कति न भवतीमत्रभवतीमुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि । अये तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ॥ ४१ ॥ ललाटे या लोकैरिह खलु सलीलं तिलकिता तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम् । विलुम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिं तदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥ ४२ ॥ नरान्मूढाँस्तत्तज्जनपदसमासक्तमनसो हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः । पुनानाः सौरभ्यैः सततमलिनो नित्यमलिनान्सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥ ४३ ॥ यजन्त्येके देवान् कठिनतरसेवांस्तदपरे वितानव्यासक्ता यमनियमरक्ताः कतिपये । अहं तु त्वन्नामस्मरणधुतकामस्त्रिपथगे जगज्जालं जाने जननि तृणजालेन सदृशम् ॥ ४४ ॥ अविश्रान्तं जन्मावधिसुकृतजन्मार्जनकृतां सतां श्रेयः कर्तुं कति न कृतिनः सन्ति विबुधाः । निरस्तालम्बानामकृतसुकृतानां तु भवती

विनाऽमुष्मिँल्लोके न परमवलोके हितकरम् ॥ ४५ ॥ पयः पीत्वा मातस्तव सपदि यातः सहचरैर्विमूढैः संरन्तुं क्वचिदपि न विश्रान्तिमगमम् । इदानीमुत्सङ्गे मृदुपवनसंचारशिशिरे चिरादुन्निद्रं मां सदयहृदये स्वापय चिरम् ॥ ४६ ॥ बधान द्रागेव द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः । न कुर्यास्त्वं हेलामितरजनसाधारणधिया जगन्नाथस्यायं सुरधुनि समुद्धारसमयः ॥ ४७ ॥ शरच्चन्द्रश्वेतां शशिशकलश्वेतालमुकुटां करैः कुम्भांभोजे वरभयनिरासौ विदधतीम् । सुधाधाराकाराभरणवसनां शुभ्रमकरस्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः ॥ ४८ ॥ दरस्मितसमुल्लसद्वदनकान्तिपूरामृतैर्भवज्वलनभर्जितानन्निशमूर्जयन्ती नरान् । चिदेकमयचन्द्रिकाचयचमत्कृतिं तन्वती तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ॥ ४९ ॥ मन्त्रैर्मीलितमौषधैर्विगलितं त्रस्तं सुराणां गणैः स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः । वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि त्वं तापं निरयाधुना मम भवज्वालावलीढात्मनः ॥ ५० ॥ द्यूते नागेन्द्रकृत्तिप्रमथगणफणिश्रेणिनन्दीन्दुमुख्यं सर्वस्वं हारयित्वा त्वमथ पुरभिदि द्राक्पणीकर्तुकामे । साकूतं हैमवत्या मृदुलहसितया वीक्षितायास्तवाम्ब व्यालोलोल्लासिवल्गल्लहरिनटघटीताण्डवं नः पुनातु ॥ ५१ ॥ विभूषितानङ्गरिपूत्तमाङ्गा सद्यः

कृतानेकजनार्तिभङ्गा। मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु ॥ ५२ ॥ इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् । यः पठेत्तस्य सर्वत्र जायन्ते सुखसंपदः॥ ५३ ॥

इति श्रीमत्तैलङ्गकुलोद्भवेन पण्डितजगन्नाथेन विरचिता पीयूषलहर्याख्या गङ्गालहरी संपूर्णा ।

## ३५० गङ्गास्तोत्रम् ।

श्रीगणेशाय नमः ॥ इति देववचः श्रुत्वा कृत्वा शापविमोक्षणम् । गङ्गा हृता शिवं प्राप्ता बद्धाञ्जलिरभाषत ॥ १ ॥ गङ्गोवाच ॥ ब्रह्मणोऽस्य करस्पर्शाद्विष्णोरस्याङ्घ्रिपङ्कजात् । शिवस्य शिरसः पूतां किं करोमि ब्रुवन्तु तत् ॥ २ ॥ देवा ऊचुः ॥ एतस्माद्याहि सह्याद्रिं गङ्गे गौरीवनं प्रति । पुंसां तत्र गतिर्नास्ति सतीशापो हि दुःसहः ॥ ३ ॥ गङ्गोवाच ॥ मुग्धा सापत्नसद्भावं दधाति हृदि पार्वति । कथं सरोषपारुष्यात्सख्यं शिक्ष्या मया तु सा ॥ ४ ॥ देवा ऊचुः ॥ नान्यथा मनसा मन्ये भवानी त्वां सपत्निकाम् । सांप्रतं स्यात्तयोर्दृष्ट्वा सखी पुण्याऽमला तव ॥ ५ ॥ देवा कैलासमावार्यं शिखरं तत्सिषेविरे । जाह्नवी च सरस्वत्या कालिन्द्या सहिता ययौ ॥ ६ ॥ ददृशुस्तेऽग्रतः शंभोर्ब्रह्माणं तु कृताञ्जलिम् । पुरुषाकृतयोऽभूवन्सर्वस्त्रीपुरुषास्तदा ॥ ७ ॥ सह्याद्रिशिखरस्था सा सखीभ्यां सह जाह्नवी ॥ ८ ॥ ददृशुस्ता-

रोर्मूलं प्रान्ते गौरीमपश्यत ॥ ८ ॥ सखीभिः सत्कृता देवीं तदा मन्दाकिनी शिवाम् । आसनस्थां हृदि स्वस्थां मीलिताक्षीं प्रतुष्टुवे ॥ ९ ॥ त्वं क्षमा त्वं दया शान्तिस्त्वं भूतिर्धृतिरुन्नतिः । त्वं भुक्तिस्त्वं परा मुक्तिस्त्वं गतिस्त्वं गिरा मतिः ॥ १० ॥ त्वं शान्तिस्त्वं गतिर्भक्तिः श्रद्धा मेधा कृपा तपः । त्वं सभा त्वं प्रभा ज्योत्स्ना त्वं काष्ठा त्वं परा कला ॥ ११ ॥ त्वं श्रीः संपद्विपत्त्वं च त्वं श्रुतिस्त्वं स्मृतिर्नुतिः । त्वं रौद्री वैष्णवी ब्राह्मी त्वं विद्या त्वं सरस्वती ॥ १२ ॥ चित्स्वरूपा चिदाकारा स्वप्रकाशात्मरूपिणी । ऋद्धिः सिद्धिर्विधिस्त्वं च या शक्तिस्त्वं च निर्वृतिः ॥ १३ ॥ पुष्टिस्तुष्टिः सुदृष्टिस्त्वं स्फूर्तिर्मूर्तिर्यशस्विनी । स्तुता सहस्रमुख्येति मन्दाकिन्या गिरेः सुता ॥ १४ ॥ समाधिस्था लयं त्यक्त्वा चक्षुर्भ्यामभ्यलोकयत् । यावच्चोपरिसंस्थाया दृष्टाऽधस्तात्सरिद्वरा ॥ १५ ॥ आसनात्सहसोत्थाय क्षेमालिङ्गनतत्परा । बाहुभ्यामालिलिङ्गे च गौरी विष्णुपदीं तथा ॥ १६ ॥ तत्पादग्रहणं कृत्वा सखीभ्यां सह पार्वती । संहृष्टा संभ्रमोद्विग्ना गौरी तुष्टाव जाह्नवीम् ॥ १७ ॥ पार्वत्युवाच ॥ नमो गङ्गे महोत्तुङ्गे त्रिविक्रमपदोद्भवे । जय शंभुशिरःसंस्थे मन्दाकिनि नमोऽस्तु ते ॥ १८ ॥ पवित्रे पुण्यदे शान्ते हिमवच्छिखरोद्भवे । त्रिमार्गे च त्रिलोकस्थे त्रिविधे च नमोऽस्तु ते ॥ १९ ॥ त्रिवर्गे त्रिदिवस्थे

च त्रिलोचनजटोद्भवे। जलदे संभृताम्भोधे जह्नुकन्ये नमोऽस्तु ते ॥ २० ॥ पतितार्तिहरे भूततारके स्वस्तरङ्गिणि। पितृ-संतर्पणे श्रेयस्विनि मातर्नमोऽस्तु ते ॥ २१ ॥ ब्रह्मोद्भवे प्रयागस्थे वाराणसिनिवासिनि। सरिद्वरे महावीर्ये स्वर्ग-दूति नमोऽस्तु ते ॥ २२ ॥ गम्भीरे विमले शुभ्रे सलिले श्वेतसैकते। मङ्गलेशि प्रिये पूर्ववाहिनी च नमोऽस्तु ते ॥२३॥ भागीरथि पितुर्वन्द्ये सगराघविनाशिनि। स्वर्गनिःश्रेणि सुज्येष्ठे गङ्गे देवि नमोऽस्तु ते ॥ २४ ॥ इति गङ्गास्तवं नाम गौरीप्रोक्तं च यः पठेत्। आजन्मजनितैः पापैर्मुच्यते स सुखी भवेत् ॥ २५ ॥

इति श्रीस्कन्दपुराणे गङ्गागौरीसंवादे गङ्गास्तोत्रं संपूर्णम्।

## ३५१ मुक्तिद्वारस्तोत्रम्।

श्रीगणेशाय नमः ॥ सप्त पुर्यस्त्रयो ग्रामा नवारण्या नवोपराः। चतुर्दश सुगुह्यानि मुक्तिस्थानानि भूतले ॥ १ ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरी द्वारावती चैव सप्तैता मुक्तिदायकाः ॥ २ ॥ शालग्रामो महामेरुः संभलो हरिमन्दिरे। नन्दिग्रामः कौसले तु त्रयो ग्रामाः प्रकीर्तिताः ॥ ३ ॥ दण्डकं सैन्धवारण्यं जम्बुमार्गं च पुष्करम्। उत्पलावर्तमारण्यं नैमिषं कुरुजाङ्गलम् ॥४॥ अर्बुदं हिमवन्तं च नवारण्यानि वै विदुः। रेणुका सूकरः

काशी कालिकालवटेश्वराः ॥ ५ ॥ कालञ्जरो महाकाल ऊषरा नव कीर्तिताः । कोकाकुब्जार्बुदाश्चैव मणिकुण्डस्तथा वटः ॥ ६ ॥ शालग्रामं शूकरं च मथुरा च मम प्रिया । गया निक्रमणं चैव यत्र लोहार्गलो मम ॥ ७ ॥ प्रोतः स्वामी प्रभासं च बदरी मम चाश्रमम् । द्विसप्तैतानि गुह्यानि मुक्तिस्थानानि भूतले ॥ ८ ॥ यानि तीर्थानि वाराहो जगाद धरणीं प्रति । तानि तीर्थानि विप्रर्षे तिष्ठन्ति नरविग्रहे ॥ ९ ॥ स्नानकाले सदा विद्वांस्तानि तीर्थानि संस्मरेत् । तत्तत्स्मरणमात्रेण तत्तत्स्नानफलं लभेत् ॥ १० ॥ ब्रह्मरन्ध्रे स्थितायोध्या सहस्रारं तु यद्विदुः । अष्टचक्रा नवद्वारा देवानां पूरयोध्यया ॥ ११ ॥ तस्यां हिरण्मयः कोश इत्येषा तैत्तिरी श्रुतिः । कर्मेन्द्रियाणि खलु पञ्च तथाऽपराणि ज्ञानेन्द्रियाणि मनआदिचतुष्टयं च ॥ १२ ॥ मथुराणां हतं चक्रं हृदये योगिनो विदुः । यत्र वीरो भवेत्कृष्णः सर्वलोकैकपालकः ॥ १३ ॥ मूलाधारे भवेन्माया सर्वाधारमयी यतः । आज्ञाचक्रं स्मृता काशी जाबालश्रुतिमालिनी ॥ १४ ॥ स्वाधिष्ठानं स्मृता कान्ती मणिपूरमवन्तिका । विशुद्धं द्वारका प्रोक्ता सप्तपुर्यो यथाक्रमात् ॥ १५ ॥ आकण्ठात्पादपर्यन्तं शालग्रामः प्रकीर्तितः । आकण्ठात्कटिपर्यन्तं प्रोच्यते हरिमन्दिरम् ॥ १६ ॥ आशिरः कण्ठपर्यन्तं नन्दिग्रामं विदुर्बुधाः । उपस्थे यानि

लोमानि तानि दण्डक उच्यते ॥ १७ ॥ श्मश्रूणि सैन्धवा-रण्यं प्रोच्यते मुनिपुङ्गवैः । चिबुके यानि लोमानि जम्बु-मालं च तद्विदुः ॥ १८ ॥ हृदये यानि लोमानि तानि पुष्कर-मुच्यते । दक्षिणे भूलता बाह्व उत्पलावर्तकाननम् ॥ १९ ॥ उत्तरे नैमिषारण्यं विदुर्भूवल्लरीं बुधाः । कुरुक्षेत्रं मुनिप्रोक्तं दक्षिणस्तनमण्डलम् ॥ २० ॥ अर्बुदं च स्तनं वामं कथितं तत्त्ववादिना । तत्कुक्षौ हिमवन्तं च सर्वैर्वृद्धैश्च उच्यते ॥ २१ ॥ नवारण्यानि चैतानि शरीरे सन्ति देहिनाम् । रेणुका कण्ठकूपस्था नासिकायां तु सूकरम् । भ्रुवोर्मध्ये स्थिता काशी तदेवानन्दकाननम् ॥ २२ ॥ भ्रुवोर्घाणस्य यः सन्धिरित्येषा शाश्वती श्रुतिः । वामपाणितले काली कालेश्वरस्तथोत्तरे ॥ २३ ॥ वटेशो पादयोस्तद्वत्तलदेशे प्रकी-र्तिते । कालञ्जरो ललाटे स्यात्साक्षाच्छम्भोर्निकेतनम् ॥२४॥ नाभिदेशे महाकालं तन्नाम्ना यत्र वै हरः । नाभि-देशे सदा विद्वांश्चिन्त्यते मोक्षकाङ्क्षिभिः ॥ २५ ॥ सव्यना-सापुटं कोकागुदं कुब्जाचलं स्मृतम् । दक्षिणेतरकक्षायां प्रोक्तं सा चार्बुदाचलः ॥ २६ ॥ राजदन्तबिलं तद्वत्प्रोच्यते मणिकर्णिका । प्रयागो नासिकाग्रे तु स एव वट उच्यते ॥ २७ ॥ केषांचिद्वामपादाब्धौ न तु तत्त्वविदां मतम् । इडाभागस्थिता गङ्गा पिङ्गला यमुना नदी ॥ २८ ॥ तयो-र्मध्ये गता नाडी सुषुम्नाख्या सरस्वती । त्रिवेणी तासां योगे

प्रयागः स्यादिति तत्त्वविदो विदुः ॥ २९ ॥ शालग्रामं तु पादाग्रे सूकरं दक्षनासिका। पुरीतन्मथुरा प्रोक्ता यत्र शेते हरिः स्वयम् ॥ ३० ॥ मुक्तौ प्रोक्तं गया क्षेत्रं लिङ्गं निष्क्रमणं स्मृतम्। लोहार्गलो दन्तपङ्क्ती रसना प्रोतनायकः ॥ ३१ ॥ ग्रीवा हनुस्तु जङ्घसन्धिः प्रभासं तत्प्रचक्षते। ब्रह्मस्वं बदरी प्रोक्तं नृदेहे मुनिसत्तम ॥ ३२ ॥ एतेषां स्मृतिमात्रेण सर्वस्नानफलं लभेत्। एतद्गुह्यं मया प्रोक्तं किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥ क्षमातीर्थं तपस्तीर्थं तीर्थमिन्द्रियनिग्रहः। सर्वभूतदया तीर्थं ध्यानतीर्थं च उच्यते ॥ ३४ ॥ एतानि सर्वतीर्थानि सप्तमध्यानि देहिनाम्। वसन्ति सर्वतीर्थेषु तत्र स्नानं समाचरेत् ॥ ३५ ॥

इति श्रीकृष्णनारदसंवादे मुक्तिद्वारस्तोत्रं संपूर्णम्।

## ३५२ दशहरास्तोत्रम्।

श्रीगणेशाय नमः ॥ ॐ नमः शिवायै गङ्गायै शिवदायै नमो नमः। नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ॥ १ ॥ नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः। सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ २ ॥ सर्वत्र सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते। स्थास्नुजङ्गमसंभूतविषहन्त्र्यै नमोऽस्तु ते ॥ ३ ॥ संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते। तापत्रितयसंहन्त्र्यै प्राणेश्यै ते नमो नमः ॥ ४ ॥ शान्ति-

संतानकारिण्यै नमस्ते शुद्धमूर्तये । सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्तये ॥ ५ ॥ भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः । भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते ॥ ६ ॥ मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः । नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ॥ ७ ॥ नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः । त्रिहुताशनसंस्थायै तेजोवत्यै नमो नमः ॥ ८ ॥ नन्दायै लिङ्गधारिण्यै सुधाधारात्मने नमः । नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥ ९ ॥ बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमोऽस्तु ते । नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ॥ १० ॥ पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः । परापरशताढ्यायै तारायै ते नमो नमः ॥ ११ ॥ पाशजालनिकृन्तिन्यै अभिन्नायै नमोऽस्तु ते । शान्तायै च वरिष्ठायै वरदायै नमो नमः ॥ १२ ॥ उग्रायै सुखजग्ध्यै च संजीविन्यै नमोऽस्तु ते । ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥ १३ ॥ प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते । सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ॥ १४ ॥ शरणागतदीनार्तपरित्राणपरायणे । सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ १५ ॥ निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः । परापरपरायै च गङ्गे निर्वाणदायिनि ॥ १६ ॥ गङ्गे ममाग्रतो भूया गङ्गे मे तिष्ठ पृष्ठतः । गङ्गे मे पार्श्वयोरेधि गङ्गे त्वय्यस्तु मे स्थितिः

॥ १७ ॥ आदौ त्वमन्ते मध्ये च शर्वलिङ्गगते शिवे । त्वमेव मूलप्रकृतिस्त्वं पुमान्पर एव हि । गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥ १८ ॥ य इदं पठते स्तोत्रं शृणुयाच्छ्रद्धयापि यः । दशभिर्मुच्यते पापैः कायवाक्चित्तसंभवैः ॥ १९ ॥ रोगस्थो रोगतो मुच्येद्विपद्भ्यश्च विपद्युतः। मुच्यते बन्धनाद्बद्धो भीतो भीतेः प्रमुच्यते ॥ २० ॥ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते । दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितः ॥ २१ ॥ गृहेऽपि लिखितं यस्य सदा तिष्ठति धारितम् । नाग्निचौरभयं तस्य न सर्पादिभयं क्वचित् ॥ २२ ॥ ज्येष्ठमासे सिते पक्षे दशमी हस्तसंयुता । संहरेत्त्रिविधं पापं बुधवारेण संयुता ॥ २३ ॥ तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः । यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः॥ २४ ॥ सोऽपि तत्फलमाप्नोति गङ्गां संपूज्य यत्नतः । पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितम् ॥२५॥ यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने। यो विधिर्विहितः सम्यक्सोऽपि गङ्गाप्रपूजने ॥२६॥ यथाहं त्वं तथा विष्णो यथा त्वं तु तथा ह्युमा। उमा यथा तथा गङ्गा चतूरूपं न भिद्यते॥ २७ ॥ विष्णुरुद्रान्तरं चैव श्रीगौर्योरन्तरं तथा। गङ्गागौर्यन्तरं चैव यो ब्रूते मूढधीस्तु सः॥ २८ ॥

इति श्रीस्कन्दपुराणे काशीखण्डे दशहरास्तोत्रं समाप्तम् ।

## ३५३ प्रयागस्तोत्रम् ।

श्रीगणेशाय नमः ॥ तिस्रः कोट्योऽर्धकोटी दिवि भुवि सुतले सन्ति तीर्थानि तेषां राजा मुख्यः प्रयागः स जयति जगतां भुक्तिमुक्तिप्रदाता । अक्षय्यं छत्रमेतद्वटविटपनिभं चामरे श्वेतनीले गङ्गे वाग्वादिनी सा कलयति च ततः को वदान्योऽस्ति मान्यः ॥१॥ अथोच्यते तीर्थराजः प्रयागः सर्वतोऽधिकः । तस्य शृण्वन्ति माहात्म्यं मुनयः शौनकादयः ॥ २ ॥ सुरमुनिदितिजेन्द्रैः सेव्यते योऽस्ततन्द्रैर्गुरुतरदुरितानां का कथा मानवानाम् । सुभुवि सुकृतकर्तुर्वाञ्छितावासहेतुर्जयति विजितयागस्तीर्थराजः प्रयागः ॥३॥ श्रुतिः प्रमाणं स्मृतयः प्रमाणं पुराणमप्यत्र परं प्रमाणम् । यत्रास्ति गङ्गा यमुना प्रमाणं स तीर्थराजो जयति प्रयागः ॥ ४ ॥ न यत्र योगाचरणप्रतीता न यत्र यज्ञेष्टिविशिष्टदीक्षा । न तारकज्ञानगुरोरपेक्षा स ती० ॥ ५ ॥ चिरं निवासं न समीक्षते यो ह्युदारचित्तः प्रददाति कामान् । यः कल्पितार्थांश्च ददाति पुंसां स ती० ॥ ६ ॥ यत्राप्लुतानां न यमो नियन्ता यत्रास्थितानां सुगतिप्रदाता । यत्र मृतानाममृतप्रदाता स ती० ॥७॥ पुर्यः सप्त प्रसिद्धाः पतिवचनकरीस्तीर्थराजस्य नार्यो नैकट्येन प्रसिद्धा भवति गुणगणैः काशते ब्रह्म यस्याम् । सेयं राज्ञी प्रधाना प्रियवचनकरी मुक्तिदाने नियुक्ता येन ब्रह्माण्डमध्ये स जयति सततं

तीर्थराजः प्रयागः ॥८॥ तीर्थावली यस्य तु कण्ठभागे दाना-वली वल्गति पादमूले । व्रतावली दक्षिणबाहुमूले स ती० ॥ ९ ॥ अज्ञः सुविज्ञाः प्रभवोऽपि यज्ञाः सत्यः स्वविज्ञाः सुकृतावभिज्ञाः । विज्ञापयन्तः सततं हि काले स ती० ॥१०॥ सितासिते यत्र तरङ्गचामरे नद्यौ विभाते मुनिभा-नुकन्यके । नीलातपत्रं वट एव साक्षात्स ती० ॥ ११ ॥ तीर्थराजं समायान्ति ह्यात्मसंशुद्धिहेतवे । मकरस्थे रवौ माघे प्रयागं माधवाज्ञया ॥ १२ ॥ प्रार्थयन्ति दिविस्थापि किं पुनर्मानवा भुवि । प्रयागवासिनां नृणां स्पर्शमात्रेण देहिनः ॥ १३ ॥ स्वर्गस्थोऽपि विमुच्येत का कथा भूनिवा-सिनाम् । अथोच्यते समस्तानां तीर्थानां नायकः प्रभुः ॥ १४ ॥ तत्सामर्थ्यबलेनैव तीर्थानामस्ति पुण्यता । एवं प्रयागमाहात्म्यं केन वर्ण्यं मुनीश्वराः ॥ १५ ॥

इति श्रीपद्मपुराणे प्रयागमाहात्म्यं संपूर्णम् ।

---

## ३५४ काश्यष्टकम् ।

श्रीगणेशाय नमः ॥ पापौघविध्वंसकरां प्रसिद्धां श्रीजा-ह्नवीभूषितदिव्यरूपाम् । निर्वाणदात्रीं सुतरां सुपूज्यां शिव-प्रियां चैव नमामि काशीम् ॥ १ ॥ देवासुरैर्वन्दितपादपद्मां गायन्ति मुनयः सुयशश्च दिव्याम् । प्रसिद्धवेदेषु प्रभाव-यस्याः शिवप्रियां चैव नमामि काशीम् ॥ २ ॥ सुरूपां

चैव शिवप्रदायिनीं वैकुण्ठश्रेणिं गुणमन्दिरां च। शिवालयां शोकविनाशिनीं च शिवप्रियां चैव नमामि काशीम् ॥ ३ ॥ विनाशशून्यां शिवरूपिणीं च मोहान्धकारस्य विनाशिनीं च । ब्रह्मात्मिकां कामप्रदायिनीं च शिवप्रियां वै प्रणमामि काशीम् ॥ ४ ॥ विशुद्धविज्ञानघनां चिदात्मिकां मोहाटवीं चैव दवाग्निभूताम् । शुद्धां सुशान्तां शिवभक्तिदायिनीं शिवप्रियां वै प्रणमामि काशीम् ॥ ५ ॥ भूतौघसंतापविनाशिनीं च लोकेश्वरैर्वन्दितदिव्यरूपाम् । महाव्रतां गर्भनिवासकृन्तनीं शिवप्रियां वै प्रणमामि काशीम् ॥ ६ ॥ विज्ञानदात्रीं प्रणवस्वरूपां चिन्तामणिं भक्तिप्रदां च नित्याम् । गोलोकदात्रीं भवभक्तिदात्रीं शिवप्रियां वै प्रणमामि काशीम् ॥ ७ ॥ बुद्धेः परां शंकरप्राणवल्लभां मोहार्णवं कुम्भसमुद्भवां च । पापेभव्याघ्रीं हरलोकदात्रीं शिवप्रियां वै प्रणमामि काशीम् ॥ ८ ॥ प्रातः प्रातः समुत्थाय ये पठन्ति नरोत्तमाः । अन्यदेशेऽपि वै भक्त्या काशीवासफलं लभेत् ॥ ९ ॥

इति श्रीगोपालव्यासेन कृतं श्रीकाश्यष्टकं संपूर्णम् ।

## ३५५ यमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ व्रजाधिराजनन्दनाम्बुदाभगात्रचन्दनानुलेपगन्धवाहिनीं भवाब्धिबीजदाहिनीम् । जगत्त्रये यशस्विनीं लसत्सुधोयस्विनीं भजे कलिन्दनन्दिनीं दुरन्तमो-

इभञ्जनीम् ॥ १ ॥ रसैकसीमराधिकापदाब्जभक्तसाधिकां तदङ्गरागपिञ्जरप्रभातपुञ्जमञ्जुलाम् । स्वरोचिषातिमञ्जुलां कृताजनाधिगंजनां भजे० ॥२॥ व्रजेन्द्रसूनुराधिकाहृदि प्रपूर्णमानयोर्महारसाब्धिपूरयोरिवातितीव्रवेगतः । वहिः समुच्छलन्नवप्रवाहरूपिणीमहं भजे० ॥ ३ ॥ विचित्ररत्नबद्धसत्तटद्वयश्रियोज्ज्वलां विचित्रहंससारसाद्यनन्तपक्षिसंकुलाम् । विचित्रहैममेखलां कृतातिदीनपालनां भजे० ॥ ४ ॥ वहन्ति काप्रियां हरेर्महाकृपास्वरूपिणीं विशुद्धभक्तिमुज्ज्वलां परे रसात्मिकां विदुः । सुधास्रुतिं त्वलौकिकीं परेशवर्णरूपिणीं भजे० ॥ ५ ॥ सुरेन्द्रवृन्दवन्द्यया रसादधिष्ठिते वने सदोपलब्धिमाधवाद्भुतैकसद्रसोन्मदाम् । अतीव विह्वलामिवोचलत्तरङ्गदोर्लतां भजे० ॥ ६ ॥ प्रफुल्लपङ्कजाननां लसन्नवोत्पलेक्षणां रथाङ्गनामयुग्मकस्तनीमुदारहंसकाम् । नितम्बचारुरोधसं हरेः प्रियां रसोज्ज्वलां भजे० ॥ ७ ॥ समस्तवेदमस्तकैरगम्यवैभवां सदा महामुनीन्द्रनारदादिभिः सदैव भाविताम् । अतुल्यपामरैरपि श्रितां पुमर्थसारदां भजे० ॥ ८ ॥ य एतदष्टकं बुधस्त्रिकालमादितः पठेत्कलिन्दनन्दिनीं हृदा विचिन्त्य विश्ववन्दिताम् । इहैव राधिकापतेः पदाब्जभक्तिमुत्तमामवाप्य स ध्रुवं भवेत्परत्र तुष्टयानुगः ॥ ९ ॥

इति श्रीगोस्वामिना विरचितं यमुनाष्टकं संपूर्णम् ।

## ३५६ श्रीयमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ नमामि यमुनामहं सकलसिद्धिहेतुं मुदा मुरारिपदपङ्कजस्स्फुरदमन्दरेणूत्कटाम् । तटस्थनवकाननप्रकटमोदपुष्पाम्बुना सुरासुरसुपूजितस्मरपितुः श्रियं बिभ्रतीम् ॥ १ ॥ कलिन्दगिरिमस्तके पतदमन्दपूरोज्ज्वला विलासगमनोल्लसत्प्रकटगण्डशैलोन्नता । सघोषगतिदन्तुरा समधिरूढदोलोत्तमा मुकुन्दरतिवर्धिनी जयति पद्मबन्धोः सुता ॥ २ ॥ भुवं भुवनपावनीमधिगतामनेकस्वनैः प्रियाभिरिव सेवितां शुकमयूरहंसादिभिः । तरङ्गभुजकङ्कणप्रकटमुक्तिकावालुकानितम्बतटसुन्दरीं नमत कृष्णतुर्यप्रियाम् ॥ ३ ॥ अनन्तगुणभूषिते शिवविरञ्चिदेवस्तुते घनाघननिभे सदा ध्रुवपराशराभीष्टदे । विशुद्धमथुरातटे सकलगोपगोपीवृते कृपाजलधिसंश्रिते मम मनः सुखं भावय ॥ ४ ॥ यया चरणपद्मजा मुररिपोः प्रियंभावुका समागमनतो भवेत्सकलसिद्धिदा सेवताम् । तया सदृशतामियात्कमलजासपत्नीव यद्धरिप्रियकलिन्दजा मनसि मे सदा स्थीयताम् ॥ ५ ॥ नमोऽस्तु यमुने सदा तव चरित्रमत्यद्भुतं न जातु यमयातना भवति ते पयःपानतः । यमोऽपि भगिनीसुतान्कथमु हन्ति दुष्टानपि प्रियो भवति सेवनात्तव हरेर्यथा गोपिकाः ॥ ६ ॥ ममास्तु तव सन्निधौ तनुनवत्वमेतावता न दुर्लभतमा रतिर्मुररिपौ मुकुन्दप्रिये । अतोऽस्तु तव

लालना सुरधुनी परं संगमात्तवैव भुवि कीर्तिता न तु कदापि पुष्टिस्थितैः ॥ ७ ॥ स्तुतिं तव करोति कः कमल- जासपत्नि प्रिये हरेर्यदनुसेवया भवति सौख्यमामोक्षतः । इयं तव कथाधिका सकलगोपिकासंगमस्मरश्रमजलाणुभिः सकलगात्रजैः संगमः ॥ ८ ॥ तवाष्टकमिदं मुदा पठति सूर- सूते सदा समस्तदुरितक्षयो भवति वै मुकुन्दे रतिः । तथा सकलसिद्धयो मुररिपुश्च संतुष्यति स्वभावविजयो भवेद्वदति वल्लभः श्रीहरेः ॥ ९ ॥

इति श्रीवल्लभाचार्यविरचितं श्रीयमुनाष्टकस्तोत्रं संपूर्णम् ।

---

## २५७ श्रीयमुनाष्टकम् ।

श्रीगणेशाय नमः ॥ मातर्देवि कलिन्दभूधरसुते नीला- म्बुजश्यामलस्निग्धोद्यद्विमलोर्मिताण्डवधरे तुभ्यं नमस्कु- र्महे । त्वं तुर्याऽप्यसि यत्प्रिया मुररिपोस्तद्बाल्यतारुण्य- योर्लीलानामवधायिकान्यमहिषीवृन्देषु वन्द्याधिकम् ॥ १ ॥ लोकान्याऩ्कलिकालकीलितमहादुष्कर्मकूटाङ्कितान् नेनिक्ते दिवसुत्पतिष्यति हि सा गीर्वाणकूलंकषा । तन्मातस्त्वयि संसृतिप्रसृमरक्लेशाभिभूतं मनः स्वर्निःश्रेणिमुपेतुमर्कतनये श्रद्धां निबध्नाति नः ॥ २ ॥ सोन्नादं निपतन् कलिन्दशिख- रिप्रोत्तुङ्गशृङ्गान्तराद्गच्छन् प्राच्यमपां निधिं जननि सद्वारां प्रवाहस्तव । मध्येमार्गमवाप्तभूरिविपदन्तरकालुमा-

जंयन् दिश्यान्नः श्रियमुद्धुरां मरकतश्यामाभिरामद्युतिः ॥ ३ ॥ शय्योत्थायमजस्रमात्मसदनात्त्वां वीक्ष्य लक्ष्यां क्षणान्मातः प्रातरपोहयामि विततं दुष्पातकव्रातकम् । संघीभूय समूलकाषमखिलं संकृष्य सत्कर्मणां काण्डं द्रागपवर्गमार्गगमने येनार्गलीभूयते ॥ ४ ॥ नावासं द्युसदां न पन्नगपुरं नान्याश्च भोगस्थलीः श्लाघेऽहं परमत्र किं तु विपुला श्रीभारतीया भुवः । स्वेच्छाधावदुदग्रदुष्कलिकरि-क्रीडाकृपाणायिता यास्वेतास्तव वारिणां रविसुते चञ्चन्ति वीचिच्छटाः ॥ ५ ॥ त्वत्कूले निवसन् वसन्नवजि-नव्यूहोऽभिपुण्वन्मुहुः पायंपायमपायवारि मधुरं वारि ग्रहेशात्मजे । दूरीकृत्य ऋणत्रयं सफलयन् जन्मात्मनो निर्भरानन्दास्वादनतत्परो गमयिता कालं कदाऽयं जनः ॥ ६ ॥ नो तत्त्वावगमस्पृहा न विपुलायासः सतां संगतौ नो तत्तन्निगमागमोक्तविविधानुष्ठाननिष्ठापि च । येषां तेऽपि जनाः पतङ्गतनये भित्त्वा पितुर्मण्डलं सोदर्यं च वधीर्यं ते सुकृतिनो ब्रह्मात्मतां बिभ्रति ॥ ७ ॥ वक्तुं ते महिमानमस्मि न विभुर्लोके विकुण्ठेऽप्यलं कंसारातिकुटुम्बिनि प्रकटयन्प्रीतिं परं कुण्ठिताम् । यद्वेदैरपि मृग्यमाणमनिशं तद्ब्रह्म मातर्यतस्त्वत्कूलस्थनिकुञ्जमञ्जुवलयक्रोडेषु विक्रीडति ॥ ८ ॥

सूरेः । तिष्ठन् कदाऽपि कुतुकात्तट एव तस्याः स्तुत्र्यधात्स्त-वमिमं तरणेः सुतायाः ॥ ९ ॥

इति रमेशसूरिसूनुविरचितं यमुनाष्टकं समाप्तम् ।

---

## ३५८ श्रीभागीरथीप्रेमकदम्बस्तवाष्टकम् ।

श्रीगणेशाय नमः ॥ वैरिंचाडं जीवकरंडं सुकठोरं भित्त्वा रिंखद्धार्मणभूमीधरमौलौ । शैलाच्छैलं खेलदलं खे लघुलंघि क्रांतक्षोणीकांचि द्रुमः किंचन वारि ॥ १ ॥ व्योमज्योत्स्नाभू-मिसमर्चांशुमनस्त्रक्पातालातिव्यायतपेटीवरहारः । क्षौमो-ष्णीषं कामजिघांसोः कमनीयं स्रोतोभूतं ब्रह्म सतां सिंचतु वार्नः ॥ २ ॥ ध्वस्ताघौघध्वांतमनंतांगनरंगा भंगत्वंगत्तुं-गतरंगोत्थितरंगम् । अंगीकुर्वत्संगरमिंदूत्तचमूभिर्मांगल्याय स्तान्मम गांगं सितमंभः ॥३॥ खेलद्वीचीखण्डितगण्डोपलस्तु-वद्वेगाभोगामर्दितकामारिकपर्दम् । पूतं पाथः पूरितपाथोधि सदा नः पातात्पातात्पातकपातालनिपातात् ॥ ४ ॥ धातु-र्घव्यामाह्निकसङ्कृष्टिगरुत्मत्केतोरंध्रैः केतुपटीकौतुककारि । मौलौ शम्भोर्मौक्तिककोटीरविजृंभि स्वच्छीभावं यच्छतु शश्वत्सलिलं नः ॥ ५ ॥ काचित्संज्ञाकापिलकोपानलगाढप्रौढ-ज्वालालीढपतङ्गप्रकरस्य । जह्नोर्लीलाजीवनरूपज्जलराशेः प्रालेयाद्रेः प्रेमझरी नः सरिदव्यात् ॥ ६ ॥ अच्छादच्छं कच्छपमत्स्यद्विपनक्राक्रीडक्रीडं कञ्जरजः पिञ्जरितोर्मि ।

डिण्डीरालीखण्डितमाखण्डितकूलाभोगस्तान्मे वारि मनोहार्यवगाहे ॥ ७ ॥ क्रीडद्देवीकुंकुमभास्वत्कुचपाली त्वलाद्वीचीमारुतदूरीकृतखेदा । योगारूढाकीर्णकुटीपूर्णतटीका जाह्नव्यंहो निह्नुतयेऽह्नाय भवेन्नः ॥८॥ श्रीमद्रामानन्दयतींद्रूदितमित्थं भागीरथ्याः प्रेमकदम्बस्तवमेतम् । कण्ठे कुर्वंकालभटालीदुरवापः कुण्ठीभावं नैति नरः क्वाप्यभिलाषे ॥९॥

इति श्रीमद्रामानन्दयतींद्रूदितभागीरथीप्रेमकदम्बस्तवाष्टकस्तोत्रं संपूर्णम् ।

---

## ३५९ श्रीकृष्णालहरीप्रारम्भः ।

चतुर्बाहुः श्रीमत्सजलजलदश्यामलतनुः प्रकाशाद्बर्केन्दुः सदुडुगणमुक्तावलिरपि । तडिद्भासा भास्वत्सुतिलकलसन्मौलिरघहृत्क्षमाध्रस्य च्छत्रैरपि जयति सूनुः स्वहितकृत् ॥ १ ॥ अपि श्रीकृष्णे ते महिमपरपारं व्रजति को न शेषोऽशेषास्यैरपि कथयितुं वा प्रभवति । अतो हीतो वाचः शुचय इह वच्म्यल्पकमिदं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २ ॥ अलक्ष्यं ते रूपं वचनहृदयाध्वातिगमतो नतोऽहं ते लक्ष्यं कथमपि च विज्ञाय वरदे । प्रवृत्तस्त्वां स्तोतुं स्वमतिगतितस्ते वरमुदे नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३ ॥ कृता साहित्यज्ञैरपि सुगुणलक्ष्यैकलिता मिताथोऽस्तामथो मम च सुदे साधि

कविता । समर्थाऽथापि त्वं शिशुवचनवन्मे शृणु मुदा नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४ ॥ रसज्ञा मे दत्ता मुनिनमितदत्तात्रिजपदे मुदे तस्यापीयं प्रभवति न किं साधु लहरी । हरीशात्मा कृष्णा यत इयमभूद्दत्तदयिता नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ५ ॥ नच प्राज्यं राज्यं नच विबुधपूज्यं सुरपदं पदं पूष्णो जिष्णोरपि मम न विष्णोरभिमतम् । मतं दत्तात्रेयप्रपदपरिपूतं तव तटं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ६ ॥ न भोगं नो योगं नच दुरितभङ्गं लपति मे मनोऽरोगं गाङ्गं जलमपि न साङ्गं श्रुतिगणम् । न यागं न स्वर्गं तव सततयोगं लपति मे नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ७ ॥ मनो मे श्रीकृष्णे त्वदपसरति क्वापि न कलौ मलौघघ्नीतिघ्नी भवति भवतीहेति सततम् । त्रिस्वस्तं स्रस्तं जगति गतिदे साधनचयान्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ८ ॥ महाभङ्गा गङ्गा यदि दुरितभङ्गाऽत्र कथिता मताऽपीह त्वत्तः कथमधिकतामेति विमता । हरेः साङ्घ्र्युद्भूता त्वमिव ननु मूर्ता हरितनुर्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ९ ॥ हरेर्गङ्गाङ्घ्र्यब्जाऽभिनवबिसवल्ली भवतु वाऽधितिष्ठत्वीट्शीर्षं स्रगिव च पताकेव सुतराम् । प्रकामं मुक्तेर्नं त्वमिव भवति श्रीहरितनुर्नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १० ॥ नते जीवे

कन्यां जगति बहुमान्यां शिखरिणीह सख्ये त्वां धन्यां जननि भगिनीत्वामरसरित् । समागत्याप्यब्दं परमनियमात्तिष्ठति मुदा नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ११ ॥ महाजम्बुद्वीपे वृजिनहरतीर्थानि वरदे समायान्ति त्वां तु त्रिविधमळदे तानि परदे । तदा त्वत्स्नानादेः फलमपि न वक्तुं प्रभुरजो नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १२ ॥ पितॄनुद्दिश्यैकं वितरति निवापाञ्जलिमये मनुष्यस्त्वय्यग्रे सकलपितरोऽस्य द्रुतरये । गतिं यान्ति श्राद्धादपि च पुनरावृत्तिरहितां नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १३ ॥ महापाप्याकल्पं यदि विधिवशाद्दुर्गतिगतो वृषोत्सर्गात्सोऽपि द्रुतमिह हि नारायणबलेः । त्रिपिण्डीश्राद्धाद्वा व्रजति सुगतिं दुर्लभतरां नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १४ ॥ सुतं लेभे वन्ध्या ऋणहतिमृणी दुःख्यपि सुखं नरो यो यो यं यं स्मरति हृदि कामं स स च तम् । अवापेति ज्ञात्वा जननि पतितस्तेऽद्य पुरतो नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥१५॥ अहो माहात्म्यं ते शुकजनक आहात्र हि महाबलेशादासिन्धोरुभयतटसंस्थेषु बहुषु । महातीर्थंष्वग्र्यं नृहरिपुरि तीर्थाष्टकमिदं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥१६॥ सुखं ते सद्बाधः सदयहृदयं ते नरहरेः पुरेऽस्याग्रे नामिः प्रपदयुगलं ग्रामनिपये । अये

श्रीकृष्णेऽदः प्रथितमिह रूपं मुनिमते नमः श्रीकृष्णे ते जय-शमिततृष्णे गुरुमते ॥ १७ ॥ नरः श्रीकृष्णे ते सुलभममृ-तस्पर्द्धि मधुरं वरं नाम ब्रूयात्कथमपि स निःश्रेयसमियात् । सुदूरस्थोऽस्वस्थोऽप्यथ किमुत साक्षाद्व्रजति यो नमः श्रीकृष्णे त जय शमिततृष्णे गुरुमते ॥ १८ ॥ पुरेष्टं वा दत्तं विहितमपि पूर्तं च सुकृतं स्वधीतं वा जप्तं श्रुतमपि यशोऽजस्य हि तदा । भवद्दृष्टिः कृष्णे भवति भवभीहृत्खलु नृणां नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ १९ ॥ प्रकृत्यैक्यं भिन्नं न हरिहरयोः प्रत्ययवशात् पृथग्वद्भातीति प्रथयितुमहो शम्भुवपुषा । युता वेण्याऽपि त्वं भगवति पृथक्त्वं न भजसे नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २० ॥ अये योगिध्येये निगमगणगेयेऽब्धिनिलयेऽनपाये दत्तायै कलुषविलये सह्यतनये । त्वदन्यं नो वीक्षे सुलभशरणं लीढ-मरणं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २१ ॥ परिक्रान्ता देशा भगवति चतस्रोऽपि च दिशा न शान्ता दुष्टाशाऽप्यजनि वपुषो मेऽन्तिमदशा । प्रशान्ताऽद्यैवाऽशा तव दृशिवशादास सुदशा नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥२२॥ त्वदीये सत्तोये जलचरगणा ये गतभया वयां-सीशे वाऽन्ये पशुमृगगणाः कीटकगणाः । अपि स्नाताः पीताः कथमपि ततस्ते दिवमिता नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २३ ॥ गतः क्रूरो जारो दिवमपि च चोरो वनचरो

वरोदे ते स्नानात्कथमपि नरो यः श्रुतपरः । स किं स्नानात्ते न व्रजति गतिमम्ब श्रुतमते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २४ ॥ अपि स्नातं तीर्थं सकलमखिलं दैवतमिहार्चितं सर्वं दत्तं हुतमपि च पूर्तं खलु कृतम् । तव स्नातं मातर्विधिवदिह येनाम्बु सुगते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २५ ॥ अवज्ञातं तीर्थं सकलमपि देवा अवमता न दत्तं मे नेष्टं मतमपि च पूर्तं किमपि नो । श्रितं त्वत्सामर्थ्यादरभरवशाद्देवि सरिते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २६ ॥ क्षमः कस्याप्यग्रे क्षणमपि न च स्थातुमभवे भवेयं तूर्ध्वास्योऽभवमिह हि हास्यास्पदमतः । तवेयं लज्जाऽऽस्तामयि सपदि माम्रुद्धर हिते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥२७॥ त्वया प्रत्याख्यातो यदि भवति भीतोऽयमभवे भवेदज्ञस्यास्य त्रिजगदुदरे किं नु शरणम् । रणन्नुच्चैरुच्चैस्तदिह मरणं यामि महिते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २८ ॥ महापापं तापं गतमपि सकम्पं गतकृपं सशापं लोको मां हसतु तन्नु तापं न गणये। विभेम्यंहोपाये तव विरुदभङ्गाद्भगवते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ २९ ॥ त्रितापघ्नी तिघ्नी भुवि पतितपावन्यघहरा त्रिपापघ्नी भीघ्नी विविधवरदात्री ऋणहरा । वरा सिन्धुश्चेतद्विरुदनिचयो जीवतु चिरं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३० ॥ यदाऽस्यां विभूता त्वमिह

तत आरभ्य पतिता विशोध्याप्युन्नीता अधिकतम एभ्योऽ-स्म्यत इमम् । यदोद्धर्तुं शक्ता त्वमसि तत उत्तिष्ठ सरिते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३१ ॥ अयं सामान्योऽस्तीत्यपि मनसि मा स्थापय यतः समस्ताघौ-घास्ते जननि मयि तिष्ठन्ति सुचिरम् । अतो बध्वोत्तिष्ठेश्वरि परिकरं त्वं दृढतरं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३२ ॥ ममोद्धारेणाद्य त्रिजगति सुकीर्तिर्भवतु तेऽसितेऽतीते काले न खलु विमले त्वीदृगभवत् । प्रसङ्गो-ऽसङ्गोऽहं तत उपरि यास्येऽभयपदं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३३ ॥ अतः प्रादुर्भूत्वा परमनिजरूपेण सहसा ममाघाद्रीन्भित्त्वा सकलमलहंत्रीह सहसा । कृपाक्षीरं धृत्वाङ्क उशति च मे देहि सहसा नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३४ ॥ कुतस्त्वय्येतावद्दुरितमिति शङ्काऽस्तु न यतोऽन्यथाऽऽत्मानं सन्तं तत इतरथा वेद्मि हि मया । निजात्मस्तेनेन प्रतिपदमघं किं न विहितं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३५ ॥ समं साक्षा-त्पश्यस्यखिलहृदयस्थे भगवति त्वदग्रे वक्तव्यं नहि नहि तथापीह वदति । प्रभोरग्रे लोकस्तदनुसरणं मेऽस्तु शरणं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३६ ॥ स्वभूरूपेण त्वं सृजसि हरिधाम्नाऽवसि हरात्मना हंसी-



न्द्राया विसृजसि विभूतीः स्वकलया । लयान्ते ते कुक्षि

विशति सकलं मंगलगते नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३७ ॥ इहापि त्वं प्रापिप्रचयमलसङ्क्षालनपटूद-कात्माभूराभूरपि सुरगणाः शापमिषतः । स्वतंत्रे सन्मन्त्रे सरित इह भूत्वा तत्र गता नमः श्रीकृष्णे ते जय शमित तृष्णे गुरुमते ॥ ३८ ॥ तमोनुत्ते भासा जगति खलु भास्वान्न भवति स्वयंज्योतिः स त्वां तपनमिव भं भासयत इत् । अये भातां त्वाऽनु द्युमणिसहितं भाति सकलं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ३९ ॥ गणी वेणी भूत्वाऽन्य-सुरसुरवाराहतपदो मदोद्धत्यै यद्दृग्भुवनजयिनोऽलं कुसु-मगोः । स गोवाहोऽपि त्वां परमसखिवत्संगत उत नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४० ॥ स्वयम्भू ब्रह्माऽयं भुवनरचनाभिज्ञधिषणः ककुद्मत्याख्याऽसौ सरिदिह हि भूत्वाऽपि सुतवत् । समायातस्त्वां सम्मुखमुकरहाटा-ख्यविषये नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४१ ॥ द्विजाः काले काले शुचिषु च चतुर्भिः फलदशश्चतुर्भिर्द्वाभ्यां पंचभिरपि बुधा जुह्वति सति । पुनर्द्वाभ्यां स्नानादपि नयसि नाकं त्वमखिलं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४२ ॥ प्रभावस्तेऽपीदृग्दहति दहनो वाति पवनो मनोल्हादे भीतस्तपति तपनो धावति स्मृतिः । दृपा वर्ष-त्यन्येऽत्त इह बलिभुज्झन्ति नियतं नमः श्रीकृष्णे ते जय



शमिततृष्णे गुरुमते ॥ ४३ ॥ क शक्तिस्तेऽनन्ते विविधगु-

कृताद्रिप्रहरणक्षमा सामान्यं मे त्रिविधमपि पापं क नु कियत् । नवाग्ने वह्नयग्ने त्रिरसवहुशष्पाद्रिवदहो नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४४ ॥ न कृच्छ्रा शक्ता यदघहरणायापि बहुशो नच प्रायश्चित्तं हवनजपनाद्यं क्षममभूत् । स कृष्णे त्वत्स्नानाद्व्रजति सुशुचिः सन्दिवमहो नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४५ ॥ कुसङ्गान्यात्यर्थापहरणमुखं कायिकमघं हरेज्याऽयौत्क्निन्दाकदशनमुखं वाचिकमघम् । कुचिन्ताऽन्यानर्थस्मरणमुखरं मानसमघं नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥ ४६ ॥ त्वदीयात्मस्पृष्टः स्पृशतु गतिदे स्पर्शन उत त्वदीयं पानीयं पततु वदनाब्जे मम यत । उताहो त्वन्नीरे तुहिनशिशिरेऽङ्गं पततु मे नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥४७॥ नुता तीर्थैः सर्वैरपि जगति सर्वाभिरमले सरिद्भिर्देवेन्द्रैरपि मुनिभिरत्याहततटाम् । न कस्त्वां सेवेत प्रवरसरिदत्राऽधिमथने नमः श्रीकृष्णे ते जय शमिततृष्णे गुरुमते ॥४८॥ धरेन्द्रतनयेऽभयेऽस्म्युपगतोऽनुकम्पोदये जयेश्वरि हरीशरूपिणि मणिद्युते त्वाऽर्थये । अये नदि न दीनतां व्रजतु हन्मदीयं स्वयेऽक्षये वपुषि तेऽसिते भवतु हक्त्वदीयेऽस्मये ॥ ४९ ॥ काचित्क्षालयति प्रभोः पदयुगं काचित्कम्पारोहति स्वेद्रात्कापि जटादितः प्रकटिता बद्धा परोद्धाहिता । उच्चैः काचन मानिनीह पतिता जाता गता काप्य-

धस्त्यक्तं ते न च नामरूपमपि सत्कृष्णे दशायामिह ॥५०॥ देवेड्ये वेदवेद्ये जय जय भयहृत्त्वं कृपाकृष्टकृष्णे त्राहि त्राहि ग्रहीतुं स्तव भवहवराख्यां सदा सत्यसन्धे । भूयो भूयोऽभयोक्तीर्वितर तव तनुर्येह मोहप्रहर्त्री सा मे कामेश मेध्या मनसि नयनयोरादरादस्तु कृष्णे ॥ ५१ ॥ कृष्णां यो वृणुते भक्तः पदं यायान्निरन्तरम् । तृष्णां यो वृणुते भक्तः खेदं यायान्निरन्तरम् ॥ ५२ ॥ कृष्णास्थप्रेरितमतिर्वासुदेवसरस्वती । कृष्णामस्तौत्ततः प्रीयान्नरसिंहसरस्वती ॥ १ ॥

इति श्री० प० प० वासुदेवानन्दसरस्वतीविरचिता कृष्णालहरी समाप्ता ।

---

# वेदान्तस्तोत्राणि ।

## ३६० निर्गुणमानसपूजा ।

श्रीगणेशाय नमः ॥ शिष्य उवाच ॥ अखण्डे सच्चिदानन्दे निर्विकल्पैकरूपिणि । स्थितेऽद्वितीयभावेऽपि कथं पूजा विधीयते ॥ १ ॥ पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् । स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥२॥ निर्मलस्य कुतः स्नानं वासो विश्वोदरस्य च । अगोत्रस्य त्ववर्णस्य कुतस्तस्योपवीतकम् ॥३॥ निर्लेपस्य कुतो गन्धः पुष्पं निर्वासनस्य च । निर्विशेषस्य का भूषा कोऽलंकारो निराकृतेः ॥ ४ ॥ निरञ्जनस्य किं धूपैर्दीपैर्वा सर्वसाक्षिणः। निजानन्दैकतृप्तस्य नैवेद्यं किं भवेदिह ॥ ५ ॥ विश्वानन्दयितुस्तस्य किं ताम्बूलं प्रकल्पते । स्वयं प्रकाशचिद्रूपो योऽसावर्कादिभासकः ॥ ६ ॥ गीयते श्रुतिभिस्तस्य नीराजनविधिः कुतः । प्रदक्षिणमनन्तस्य प्रमाणोऽद्वयवस्तुनः ॥ ७ ॥ वेदवाचामवेद्यस्य किं वा स्तोत्रं विधीयते । अन्तर्बहिः संस्थितस्य चोद्वासनविधिः कुतः ॥८॥ श्रीगुरुरुवाच ॥ आराधयामि मणिसंनिभमात्मलिङ्गं मायापुरीहृदयपङ्कजसंनिविष्टम् । श्रद्धानदीविमलचित्तजलाभिषेकैर्नित्यं समाधिकुसुमैरपुनर्भवाय ॥ ९ ॥ अयमेकोऽवशिष्टोऽस्मीत्येवमावाहयेच्छिवम् । आसनं कल्पयेत्पश्चात्स्वप्रतिष्ठात्मचिन्तनम्

॥ १० ॥ पुण्यपापरजःसङ्गो मम नास्तीति वेदनम् । पाद्यं समर्चयेद्विद्वान्सर्वकल्मषनाशनम् ॥ ११ ॥ अनादिकल्पविधृतमूलाज्ञानजलाञ्जलिम् । विसृजेदात्मलिङ्गस्य तदेवार्घ्यसमर्पणम् ॥ १२ ॥ ब्रह्मानन्दाब्धिकल्लोलकणकोट्यंशलेशकम् । पिबन्तीन्द्रादय इति ध्यानमाचमनं मतम् ॥ १३ ॥ ब्रह्मानन्दजलेनैव लोकाः सर्वे परिप्लुताः । अच्छेद्योऽयमिति ध्यानमभिषेचनमात्मनः ॥ १४ ॥ निरावरणचैतन्यं प्रकाशोऽस्मीति चिन्तनम् । आत्मलिङ्गस्य सद्वस्त्रमित्येवं चिन्तयेन्मुनिः ॥ १५ ॥ त्रिगुणात्माऽशेषलोकमालिकासूत्रमस्म्यहम् । इति निश्चयमेवात्र ह्युपवीतं परं मतम् ॥ १६ ॥ अनेकवासनामिश्रप्रपञ्चोऽयं धृतो मया । नान्येनेत्यनुसंधानमात्मनश्चन्दनं भवेत् ॥ १७ ॥ रजःसत्त्वतमोवृत्तित्यागरूपैस्तिलाक्षतैः । आत्मलिङ्गं यजेन्नित्यं जीवन्मुक्तिप्रसिद्धये ॥ १८ ॥ ईश्वरो गुरुरात्मेति भेदत्रयविवर्जितैः । बिल्वपत्रैरद्वितीयैरात्मलिङ्गं यजेच्छिवम् ॥ १९ ॥ समस्तवासनात्यागं धूपं तस्य विचिन्तयेत् । ज्योतिर्मयात्मविज्ञानं दीपं संदर्शयेद्बुधः ॥२०॥ नैवेद्यमात्मलिङ्गस्य ब्रह्माण्डाख्यं महोदरम् । पिबानन्दरसं स्वादु मृत्युरस्योपसेचनम् ॥ २१ ॥ अज्ञानोच्छिष्टकरस्य क्षालनं ज्ञानवारिणा । विशुद्धस्यात्मलिङ्गस्य हस्तप्रक्षालनं स्मरेत् ॥ २२ ॥ रागादिगुणशून्यस्य शिवस्य परमात्मनः । सरागविषयाभ्यासत्यागस्ताम्बूलच-

र्वणम् ॥ २३ ॥ अज्ञानध्वान्तविध्वंसप्रचण्डमतिभास्करम् । आत्मनो ब्रह्मताज्ञानं नीराजनमिहात्मनः ॥ २४ ॥ विविधब्रह्मसंदृष्टिर्मालिकाभिरलंकृतम् । पूर्णानन्दात्मतादृष्टिं पुष्पाञ्जलिमनुस्मरेत् ॥ २५ ॥ परिभ्रमन्ति ब्रह्माण्डसहस्राणि मयीश्वरे । कूटस्थाचलरूपोऽहमिति ध्यानं प्रदक्षिणम् ॥ २६ ॥ विश्ववन्द्योऽहमेवास्मि नास्ति वन्द्यो मदन्यतः । इत्यालोचनमेवात्र स्वात्मलिङ्गस्य वन्दनम् ॥२७॥ आत्मनः सत्क्रिया प्रोक्ता कर्तव्या भावभावना । नामरूपव्यतीतात्मचिन्तनं नामकीर्तनम् ॥ २८ ॥ श्रवणं तस्य देवस्य श्रोतव्याभावचिन्तनम् । मननं त्वात्मलिङ्गस्य मन्तव्याभावचिन्तनम्॥२९॥ ध्यातव्याभावविज्ञानं निदिध्यासनमात्मनः । समस्तभ्रान्तिविक्षेपराहित्येनात्मनिष्ठता ॥ ३० ॥ समाधिरात्मनो नाम नान्यच्चित्तस्य विभ्रमः । तत्रैव ब्रह्मणि सदा चित्तविश्रान्तिरिष्यते ॥ ३१ ॥ एवं वेदान्तकल्पोक्तस्वात्मलिङ्गप्रपूजनम् । कुर्वन्नामरणं वाऽपि क्षणं वा सुसमाहितः ॥३२॥ सर्वदुर्वासनाजालं पदपांसुमिव त्यजेत् । निर्धूयाज्ञानदुःखौघं मोक्षानन्दं समश्नुते ॥ ३३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ निर्गुणमानसपूजा समाप्ता ।

## ३६१ प्रश्नोत्तरी ।

श्रीगणेशाय नमः ॥ अपारसंसारसमुद्रमध्ये संमज्जतो मे शरणं किमस्ति । गुरो कृपालो कृपया वदैतद्विश्वेशपादाम्बुजदीर्घनौका ॥ १ ॥ बद्धो हि को यो विषयानुरागः का वा विमुक्तिर्विषये विरक्तिः । को वाऽस्ति घोरो नरकः स्वदेहः तृष्णाक्षयः स्वर्गपदं किमस्ति ॥ २ ॥ संसारहृत्कः श्रुतिजात्मबोधः को मोक्षहेतुः प्रथितः स एव । द्वारं किमेकं नरकस्य नारी का स्वर्गदा प्राणभृतामहिंसा ॥ ३ ॥ शेते सुखं कस्तु समाधिनिष्ठो जागर्ति को वा सदसद्विवेकी । के शत्रवः सन्ति निजेन्द्रियाणि कान्येव मित्राणि जितानि यानि ॥ ४ ॥ को वा दरिद्रो हि विशालतृष्णः श्रीमांश्च को यस्य समस्ति तोषः । जीवन्मृतः कस्तु निरुद्यमो यः का वाऽमृता स्यात्सुखदा निराशा ॥ ५ ॥ पाशो हि को यो ममताभिमानः संमोहयत्येव सुरेव का स्त्री । को वा महान्धो मदनातुरो यो मृत्युश्च को वाऽपयशः स्वकीयम् ॥ ६ ॥ को वा गुरुर्यो हि हितोपदेष्टा शिष्यस्तु को यो गुरुभक्तिरेव । को दीर्घरोगो भव एव साधो किमौषधं तस्य विचार एव ॥ ७ ॥ किं भूषणाद्भूषणमस्ति शीलं तीर्थं परं किं स्वमनो विशुद्धम् । किमत्र हेयं कनकं च कान्ता सेव्यं सदा किं गुरुवेदवाक्यम् ॥ ८ ॥ के हेतवो ब्रह्मगतेस्तु सन्ति सत्संगतिर्दान्तिविचारतोषाः । के सन्ति सन्तोऽखि-

ल्वीतरागा अपास्तमोहा शिवतत्त्वनिष्ठाः ॥ ९ ॥ को वा ज्वरः प्राणभृतां हि चिन्ता मूर्खोऽस्तु को यस्तु विवेकहीनः । कार्या प्रिया का शिवविष्णुभक्तिः किं जीवनं दोषविवर्जितं यत् ॥ १० ॥ विद्या हि का ब्रह्मगतिप्रदा या बोधोऽस्ति को यस्तु विमुक्तिहेतुः । को लाभ आत्मावगमो हि वैर्यजितं जगत्केन मनो हि येन ॥ ११ ॥ शूरान्महाशूरतमोऽस्ति को वा मनोजबाणैर्व्यथितो न यस्तु । प्राज्ञोऽस्ति धीरश्च समस्तु को वा प्राप्तो न मोहं ललनाकटाक्षैः ॥ १२ ॥ विषाद्विषं किं विषया समस्ता दुःखी सदा को विषयानुरागी । धन्योऽस्ति को यस्तु परोपकारी कः पूजनीयो ननु तत्त्वनिष्ठः ॥ १३ ॥ सर्वास्ववस्थास्वपि किं न कार्यं किं वा विधेयं विदुषां प्रयत्नात् । स्नेहश्च पापं पठनं च धर्मः संसारमूलं च किमस्ति चिन्ता ॥१४॥ विज्ञान्महाविज्ञतमोऽस्ति को वा नार्या पिशाच्या न च वञ्चितो यः । का शृङ्खला प्राणभृतां च नारी दिव्यं व्रतं किं च निरस्तदैन्यम् ॥१५॥ ज्ञातुं न शक्यं हि किमस्ति सर्वैर्योषिन्मनो यच्चरितं तदीयम् । सा दुस्त्यजा प्राणभृतां दुराशा विद्याविहीनः पशुरस्ति को वा ॥१६॥ वासो न सङ्गः सह कैर्विधेयो मूर्खैश्च पापैश्च खलैश्च नीचैः । मुमुक्षुणां किं त्वरितं विधेयं सत्संगतिर्निर्ममतेशभक्तिः ॥ १७ ॥ लघुत्वमूलं च किमर्थितैव गुरुत्वमूलं यदयाचनं किम् । जातोऽस्ति को यस्य पुनर्न जन्म को वा

मृतो यस्य पुनर्न मृत्युः ॥ १८ ॥ मूकोऽस्ति को वा बधिरश्च को वा युक्तं न वक्तुं समये समर्थः । तथ्यं सुपथ्यं न शृणोति वाक्यं विश्वासपात्रं न किमस्ति नारी ॥ १९ ॥ तत्त्वं किमेकं शिवमद्वितीयं किमुत्तमं सच्चरितं यदस्ति । किं कर्म कृत्वा न च शोचनीयः कामारिकंसारिसमर्चनाख्यम् ॥ २० ॥ शत्रोर्महाशत्रुतमोऽस्ति को वा कामः सकोपानृतलोभतृष्णः । न पूर्यते को विषयैः स एव किं दुःखमूलं ममताभिमानः ॥ २१ ॥ किं मण्डनं साक्षरता मुखस्य सत्यं च किं भूतहितं तदेव । त्यक्त्वा सुखं किं स्त्रियमेव सम्यग्देयं परं किं त्वभयं सदैव ॥२२॥ कस्यास्ति नाशो मनसो हि मोक्षः क्व सर्वथा नास्ति भयं विमुक्तौ । शल्यं परं किं निजमूर्खतैव के के ह्युपास्या गुरवश्च वृद्धाः ॥ २३ ॥ उपस्थिते प्राणहरे कृतान्ते किमाशु कार्यं सुधिया प्रयत्नात् । वाक्कायचित्तैः सुखदं यमघ्नं मुरारिपादाम्बुजमेव चिन्त्यम् ॥२४॥ के दस्यवः सन्ति कुवासनाख्या संशोभते कः सदसत्सु विद्या । मातेव का या सुखदा सुविद्या किमेधते दानवशात्सुविद्या ॥२५॥ कुतो हि भीतिः सततं विधेया लोकापवादाद्भवकाननाच्च । को वाऽस्ति बन्धुः पितरौ च कौ वा विपत्सहायः परिपालकौ यौ ॥ २६ ॥ बुद्ध्वा न बोध्यं परिशिष्यते किं शिवं प्रशान्तं सुखबोधरूपम् । ज्ञाते तु कस्मिन्विदितं जगत्स्यात्सर्वात्मके ब्रह्मणि पूर्णबोधे ॥ २७ ॥ किं

दुर्लभं सद्गुरुरस्ति लोके सत्संगतिर्ब्रह्मविचारणा च। त्यागो हि सर्वस्य शिवात्मबोधः किं दुर्जयं सर्वजनैर्मनोजः ॥२८॥ पशोः पशुः को न करोति धर्मं प्राधीत्य शास्त्राणि न चात्मबोधः । किं तद्विषं भाति सुधोपमं स्त्री के शत्रवो मित्रवदात्मजाद्याः ॥ २९ ॥ विद्युच्चलं किं नवयौवनायुर्दानं परं किं च सुपात्रदत्तम् । कण्ठे गतैरप्यसुभिर्न कार्यं किं किं विधेयं मलिनं शिवार्चा ॥ ३० ॥ किं कर्म यत्प्रीतिकरं मुरारेः क्वास्था न कार्या सततं भवाब्धौ । अहर्निशं किं परिचिन्तनीयं संसारमिथ्यात्वशिवात्मतत्त्वम् ॥ ३१ ॥ कण्ठं गता वा श्रवणं गता वा प्रश्नोत्तराख्या मणिरत्नमाला । तनोति मोदं विदुषां सुरम्या रमेशगौरीशकथेव सद्यः ॥ ३२ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशंकराचार्य-
विरचितं प्रश्नोत्तरं संपूर्णम् ।

---

## ३६२ वाक्यसुधा ।

श्रीगणेशाय नमः ॥ रूपं दृश्यं लोचनं दृक् दृक्दृश्यं दृक् तु मानसम् । दृश्याधीवृत्तयः साक्षी दृगेव न तु दृश्यते ॥ १ ॥ नीलपीतस्थूलसूक्ष्महस्वदीर्घादिभेदतः । नानाविधानि रूपाणि पश्येल्लोचनमेकधा ॥२॥ आन्ध्यमान्द्यपटुत्वेषु नेत्रधर्मेषु चैकधा । सङ्कल्पयेन्मनः श्रोत्रत्वगादौ योज्यतामिदम्



॥३॥ कामसंकल्पसंदेहाः श्रद्धाश्रद्धे धृतीतरे । ह्रीर्धीर्भीरि-

त्येवमादीन्भासयत्येकधा चितिः ॥ ४ ॥ नोदेति नास्तमायाति न वृद्धिं याति न क्षयम् । स्वयं विभात्यथाऽन्यानि भासयेत्साधनं विना ॥ ५ ॥ चिच्छायावेशतो बुद्धौ भानं धीस्तु द्विधा स्थिता । एकाऽहंकृतिरन्या स्यादन्तःकरणरूपिणी ॥ ६ ॥ छायाऽहंकारयोरैक्यं तप्तायःपिण्डवन्मतम् । तदहंकारतादात्म्याद्देहश्चेतनतामियात् ॥ ७ ॥ अहंकारस्य तादात्म्यं चिच्छाया देहसाक्षिभिः । सहजं कर्मजं भ्रान्तिजन्यं च त्रिविधं क्रमात् ॥ ८ ॥ सम्बन्धिनो सतोर्नास्ति निवृत्तिः सहजस्य तु । कर्मक्षयात्प्रबोधाच्च निवर्तेते क्रमादुभे ॥९॥ अहंकारलये सुप्तौ भवेद्देहोऽप्यचेतनः । अहंकृतिविकासोऽर्धः स्वप्नः सर्वस्तु जागरः ॥ १० ॥ अन्तःकरणवृत्तिश्च चितिच्छायैक्यमागता । वासनां कल्पयेत्स्वप्ने बोधे तु विषयान्बहिः ॥ ११ ॥ मनोऽहंकृत्युपादानं लिङ्गमेकं जडात्मकम् । अवस्थात्रयमन्वेति जायते म्रियते तथा ॥ १२ ॥ शक्तिद्वयं हि मायाया विक्षेपावृत्तिरूपकम् । विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं सृजेद्बहिः ॥ १३ ॥ सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्दवस्तुनि । अब्धौ फेनादिवत्सर्वं नामरूपप्रसारणा ॥१४॥ अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः । आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥१५॥ साक्षिणः पुरतो भातं लिङ्गं देहेन संयुतम् । चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥ १६ ॥ अस्य जीवत्वमारोपात्सा-

क्षिण्यप्यवभासते । आवृतौ तु विनष्टायां भेदे भाते प्रयाति तत् ॥ १७ ॥ तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति । या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ १८ ॥ अत्राप्यावृतिनाशेन विभाति ब्रह्मसर्गयोः । भेदस्तयोर्विकारः स्यात्सर्गे न ब्रह्मणि क्वचित् ॥ १९ ॥ अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम् । आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततोऽद्वयम् ॥२०॥ खं वाय्वग्निजलोर्वीषु देवतिर्यङ्नरादिषु । अभिन्ना सच्चिदानन्दा भिद्येते रूपनामनी ॥ २१ ॥ उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः । समाधिं सर्वदा कुर्याद्धृदये चाथवा बहिः ॥२२॥ सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि । दृश्यशब्दानुविद्धो यः सविकल्पः पुनर्द्विधा ॥२३॥ कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम् । ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः ॥ २४ ॥ असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः । अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः ॥ २५ ॥ स्वानुभूतिरसावेशाद्दृश्यशब्दानुपेक्षते । निर्विकल्पसमाधिः स्यान्निर्वातस्थितदीपवत् ॥ २६ ॥ हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि । समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ २७ ॥ अखण्डैकरसं वस्तु सच्चिदानन्दलक्षणम् । इत्यवच्छिन्नचिन्तेयं समाधिर्मध्यमो भवेत् ॥२८॥ स्तब्धीभावो रसास्वादात्तृतीयः पूर्ववन्मतः । एतैः समाधिभिः षड्भिर्नयेत्कालं निरन्तरम् ॥ २९ ॥ देहाभि-

माने गलिते विज्ञाते परमात्मनि। यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ ३० ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥३१॥ अवच्छिन्नश्चिदाभासस्तृतीयः स्वप्नकल्पितः। विज्ञेयस्त्रिविधो जीवस्तत्राद्यः पारमार्थिकः ॥ ३२ ॥ अवच्छेदः कल्पितः स्यादवच्छेद्यं तु वास्तवम्। तस्मिञ्जीवत्वमारोपाद्ब्रह्मत्वं तु स्वभावतः॥३३॥ अवच्छिन्नस्य रूपस्य पूर्णेन ब्रह्मणैकता। तत्त्वमस्यादिवाक्यानि जगुर्नेतरजीवयोः ॥ ३४ ॥ ब्रह्मण्यवस्थिता माया विक्षेपावृतिरूपिणी । आवृत्या खण्डतां तस्मिञ्जगज्जीवौ प्रकल्पितौ ॥ ३५ ॥ जीवो धीस्थचिदाभासो भवेद्भोक्ता हि कर्मकृत्। भोग्यरूपमिदं सर्वं जगत्स्याद्भूतभौतिकम् ॥ ३६ ॥ अनादिकालमारभ्य मोक्षात्पूर्वमिदं द्वयम्। व्यवहारे स्थितं तस्मादुभयं व्यावहारिकम् ॥ ३७ ॥ चिदाभासस्थिता निद्रा विक्षेपावृतिरूपिणी। आवृत्य जीवजगती पूर्वे नूत्ने तु कल्पयेत् ॥ ३८ ॥ प्रतीतकाल एवैते स्थितत्वात्प्रातिभासिके। न हि स्वप्नप्रबुद्धस्य पुनः स्वप्नस्थितिस्तयोः ॥ ३९ ॥ प्रातिभासिकजीवो यस्तज्जगत्प्रातिभासिकम्। वास्तवं मन्यतेऽन्यस्तु मिथ्येति व्यावहारिकः ॥ ४० ॥ व्यावहारिकजीवो यस्तज्जगद्व्यावहारिकम्। सत्यं प्रत्येति मिथ्येति मन्यते पारमार्थिकः ॥ ४१ ॥ पारमार्थिकजीवस्तु ब्रह्मैक्यं पारमार्थिकम्। प्रत्येति वीक्षते नान्य-

द्वीक्षते त्वनृतात्मनः ॥४२॥ माधुर्यद्रवशैत्यादिजलधर्मास्तर-
ङ्गके । अनुगम्याऽथ तन्निष्ठे फेनेऽप्यनुगता यथा ॥ ४३ ॥
साक्षिस्थाः सच्चिदानन्दाः सम्बन्धाद्व्यावहारिके । तद्द्वारेणा-
नुगच्छन्ति तथैव प्रातिभासिके ॥४४॥ लये फेनस्य तद्धर्मा
द्रवाद्यास्तु तरङ्गके । तस्यापि विलये नीरे तिष्ठन्त्येते यथा
पुरा ॥ ४५ ॥ प्रातिभासिकजीवस्य लये स्युर्व्यावहारिके ।
तल्लये सच्चिदानन्दाः पर्यवस्यन्ति साक्षिणि ॥ ४६ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशंकराचार्य-
विरचितं वाक्यसुधास्तोत्रं संपूर्णम् ।

---

## ३६३ आत्मावबोधनस्तुतिः ।

श्रीगणेशाय नमः ॥ जाग्रत्स्वप्नसुषुप्तिषु शैशवकौमारवा-
र्धकेष्वपि च । अनुवर्तमानमनिशं ब्रह्मास्म्याम्नायमस्तका-
वेद्यम् ॥ १ ॥ सद्गुरुसेवननिरतैः स्वाश्रमवर्णोचितानि
कर्माणि । कुर्वद्भिर्विविदिषितं ब्रह्मास्म्याम्नायमस्तकावेद्यम्
॥ २ ॥ स्थूलात्सूक्ष्माद्धेतोर्देहाद्भेदेन योगनिष्णातैः । अनुचि-
न्त्यमानमसकृद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ३ ॥ यददेह-
मखिलदेहेष्वनवस्थेषु व्यवस्थितं विभु च । महदात्मभूतम-
भयं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ४ ॥ हृदयस्थितानशे-
षांस्त्यक्त्वा कामान्समश्नुतेऽत्रैव । यत्परहंसस्तदहं ब्रह्मा-
स्म्याम्नायमस्तकावेद्यम् ॥ ५ ॥ यद्भासा जगदखिलं विभाति

पुरुषस्य सत्यतया । यद्बोधाच्च मृषा तद्ब्रह्मास्म्याम्नायम-स्तकावेद्यम् ॥ ६ ॥ प्रविलाप्य दृश्यमानं मिथ्येत्याचार्य-वाक्यतः शास्त्रात् । यत्प्राप्नोति नरस्तद्ब्रह्मास्म्याम्नायमस्त-कावेद्यम् ॥ ७ ॥ यस्याज्ञानादखिलानर्थादिमकारणं शरी-रादौ । आत्मत्वधीरभूत्तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥८॥ यत्साक्षात्कृतये हि श्रवणं मननं तथा ध्यानम् । प्राहुस्त्रय्य-न्तास्तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ९ ॥ नद्यास्तीरे पुलिने गिरिमौलौ काननस्य कोणे यत् । ध्यायन्ति यतिव-रास्तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १० ॥ यत्र स्थितो विजानातीन्द्रोपेन्द्रादिपदमपीषदिति । तत्सुखविश्रान्तिपदं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ ११ ॥ श्रुत्याचार्यकृपातो योगाभ्यासेन चेश्वरकटाक्षात् । प्रभवति यद्बोधस्तद्ब्रह्मा-स्म्याम्नायमस्तकावेद्यम् ॥ १२ ॥ यस्मिन्स्थितो न दुःखैरपि गुरुभिश्चाल्यते जातु । पुरुषः सुखरूपं तद्ब्रह्मास्म्याम्नायम-स्तकावेद्यम् ॥ १३ ॥ यत्पृथ्व्यादिषु तिष्ठद्यमयति यद्वेदनैव पृथ्व्यादिः । अन्तर्याम्यभिधं तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १४ ॥ उद्दालकः स्वपुत्रं यत्तत्त्वमसीति बोधयामास । साम्नामन्ते तदहं ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥१५॥ विष-यासक्तहृदां यद्दूरे तदसक्तचेतसां निकटे । उपरतवरलभ्यं तद्ब्रह्मास्म्याम्नायमस्तकावेद्यम् ॥ १६ ॥ सनकादिभ्यः पूर्वं

वटमूले शंभुराह मौनेन । चिन्मुद्रया च यत्तद्ब्रह्मास्म्यान्नाम-
यमस्तकावेद्यम् ॥ १७ ॥ विनियम्य चक्षुरादीन्प्राणापानौ
च चेतसा सह यत् । ध्यायन्ति योगिनस्तद्ब्रह्मास्म्यान्ना-
यमस्तकावेद्यम् ॥ १८ ॥

इत्यखिलविरुदाङ्कितशृङ्गगिरिपीठाधिष्ठिताभिनवनृसिंहभा-
रतीस्वामिविरचिता आत्मावबोधस्तुतिः संपूर्णा ।

---

## ३६४ वैराग्यपञ्चकम् ।

श्रीगणेशाय नमः ॥ शिलं किमनलं भवेदनलमौदरं
बाधितुं पयः प्रसृतिपूरकं किमु न धारकं सारसम् । अय-
त्नमलमल्पकं पथि पटच्चरं कच्चरं भजन्ति विबुधा मुधा
अहह कुक्षितः कुक्षितः ॥ १ ॥ दुरीश्वरद्वारबहिर्वितर्दिका-
दुरासिकायै रचितोऽयमञ्जलिः । यदञ्जनाभं निरपायमस्ति
मो धनञ्जयस्यन्दभूषणं धनम् ॥ २ ॥ काचाय नीचं कमनी-
यवाचा मोचाफलस्वादमुचा न याचे । दयाकुचेले धनदत्कु-
चेले स्थितेऽकुचेले श्रितमाकुचेले ॥ ३ ॥ क्षोणीकोणशतां-
शपालनकलदुर्वारगर्वानलक्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनां धन्यां
न मन्यामहे । देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः
पुरा धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेशताम् ॥४॥

मदं धनं दन्धनम्। धनञ्जयविवर्धनं धनमुदूढगोवर्धनं सुसाधनमबाधनं सुमनसां समाराधनम् ॥ ५ ॥

इति श्रीसर्वतन्त्रस्वतन्त्रवेदान्तदेशिकाचार्यकृतं वैराग्यपञ्चकं संपूर्णम्।

## ३६५ निर्वाणदशकम्।

श्रीगंणेशाय नमः॥ न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः। अनैकान्तिकत्वात्सुषुप्त्यैकसिद्धस्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥ न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणा ध्यानयोगादयोऽपि। अनात्माश्रयोऽहं ममाध्यासहीनात्तदेको० ॥ २ ॥ न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति। सुषुप्तौ निरस्तातिशून्यात्मकत्वात्तदेको० ॥ ३ ॥ न सांख्यं न शैवं न तत्पाञ्चरात्रं न जैनं न मीमांसकादेर्मतं वा। विशिष्टानुभूत्या विशुद्धात्मकत्वात्तदेको० ॥ ४ ॥ न शुक्लं न कृष्णं न रक्तं न पीतं न पीनं न कुब्जं न ह्रस्वं न दीर्घम्। अरूपं तथा ज्योतिराकारकत्वात्तदेको० ॥ ५ ॥ न जाग्रन्न मे स्वप्नको वा सुषुप्तिर्न विश्वो न वा तैजसः प्राज्ञको वा। अविद्यात्मकत्वात्त्रयाणां तुरीयं तदेको० ॥ ६ ॥ न शास्ता न शास्त्रं न शिष्यो न शिक्षा न च त्वं न चाहं न चायं

प्रपञ्चः। स्वरूपावबोधाद्विकल्पासहिष्णुस्तदेको० ॥ ७ ॥ न चोर्ध्वं न चाधो न चान्तर्न बाह्यं न मध्यं न तिर्यङ् न पूर्वा परा दिक्। वियद्व्यापकत्वादखण्डैकरूपस्तदेको० ॥ ८ ॥ अपि व्यापकत्वादितत्त्वात्प्रयोगात् स्वतःसिद्धभावादनन्याश्रयत्वात्। जगत्तुच्छमेतत्समस्तं तदन्यस्तदेको० ॥ ९ ॥ न चैकं तदन्यद्द्वितीयं कुतः स्यान्न चाकेवलत्वं न वा केवलत्वात्। न शून्यं न चाशून्यमद्वैतकत्वात्कथं सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

इति श्रीमच्छंकराचार्यविरचितं निर्वाणदशकस्तोत्रं संपूर्णम्।

---

## ३६६ निर्वाणषट्कम्।

श्रीगणेशाय नमः ॥ मनोबुद्ध्यहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे। न च व्योम भूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥ न च प्राणसंज्ञो न वै पञ्चवायुर्न वा सप्तधातुर्न वा पञ्चकोशः। न वाक्पाणिपादं न चोपस्थपायुश्चिदानन्द० ॥ २ ॥ न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः। न धर्मो न चार्थो न कामो न मोक्षश्चिदानन्द० ॥ ३ ॥ न पुण्यं न पापं न सौख्यं न दुःखं न मन्त्रो न तीर्थं न वेदा न यज्ञाः। अहं भोजनं नैव भोज्यं न भोक्ता चिदानन्द० ॥ ४ ॥

न मृत्युर्न शङ्का न मे जातिभेदः पिता नैव मे नैव माता च जन्म । न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदानन्द० ॥५॥ अहं निर्विकल्पी निराकाररूपी विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम् । न चासं गतं नैव मुक्तिर्न मेयश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ ६ ॥

इति श्रीमच्छंकराचार्यविरचितं निर्वाणषट्कं संपूर्णम् ।

---

## ३६७ आत्मपञ्चकम् ।

श्रीगणेशाय नमः ॥ नाहं देहो नेन्द्रियाण्यन्तरङ्गं नाहङ्कारः प्राणवर्गो न बुद्धिः । दारापत्यक्षेत्रवित्तादिदूरः साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् ॥ १ ॥ रज्ज्वज्ञानाद्भाति रज्जुर्यथाहिः स्वात्माज्ञानादात्मनो जीवभावः । आप्तोक्त्या हि भ्रान्तिनाशे स रज्जुर्जीवो नाहं देशिकोक्त्या शिवोऽहम् ॥ २ ॥ आभातीदं विश्वमात्मन्यसत्यं सत्यज्ञानानन्दरूपे विमोहात् । निद्रामोहात्स्वप्नवत्तन्न सत्यं शुद्धः पूर्णो नित्य एकः शिवोऽहम् ॥ ३ ॥ मत्तो नान्यत्किंचिदत्रास्ति विश्वं सत्यं बाह्यं वस्तु मायोपक्लृप्तम् । आदर्शान्तर्भासमानस्य तुल्यं मय्यद्वैते भाति तस्माच्छिवोऽहम् ॥ ४ ॥ नाहं जातो न प्रवृद्धो न नष्टो देहस्योक्ताः प्राकृताः सर्वधर्माः । कर्तृत्वादिश्चिन्मयस्यास्ति नाहंकारस्यैव ह्यात्मनो मे शिवोऽहम् ॥ ५ ॥ नाहं जातो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पि-

पासे कुतो मे । नाहं चित्तं शोकमोहौ कुतो मे नाहं कर्ता बन्धमोक्षौ कुतो मे ॥ ६ ॥

इति श्रीमच्छंकराचार्यविरचितात्मपञ्चकस्तोत्रं संपूर्णम् ।

## ३६८ धन्याष्टकम् ।

श्रीगणेशाय नमः ॥ तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् । ते धन्या भुवि परमार्थनिश्चितेहाः शेषास्तु भ्रमनिलये परिभ्रमन्ति ॥ १ ॥ आदौ विजित्य विषयान्मदमोहरागद्वेषादिशत्रुगणमाहृतयोगराज्याः । ज्ञात्वाऽमृतं समनुभूय परात्मविद्याकान्तासुखा वनं गृहे विचरन्ति धन्याः ॥ २ ॥ त्यक्त्वा गृहे रतिमधोगतिहेतुभूतामात्मेच्छयोपनिषदर्थरसं पिबन्तः । वीतस्पृहा विषयभोगपदे विरक्ता धन्याश्चरन्ति विजनेषु विरक्तसङ्गाः ॥ ३ ॥ त्यक्त्वा ममाहमिति बन्धकरे पदे द्वे मानावमानसदृशाः समदर्शिनश्च । कर्तारमन्यमवगम्य तदर्पितानि कुर्वन्ति कर्मपरिपाकफलानि धन्याः ॥ ४ ॥ त्यक्त्वैषणात्रयमवेक्षितमोक्षमार्गा भैक्ष्यामृतेन परिकल्पितदेहयात्राः । ज्योतिः परात्परतरं परमात्मसंज्ञं धन्या द्विजा रहसि हृद्यवलोकयन्ति ॥ ५ ॥ नासन्न सन्न सदसन्न महन्न चाणु न स्त्री पुमान्न च नपुंसकमेकबीजम् । यैर्ब्रह्म तत्समनुपासितमेकचित्तैर्धन्या विरेजुरितरे भवपाशबद्धाः ॥ ६ ॥ अज्ञा-

नपङ्कपरिमग्नमपेतसारं दुःखालयं मरणजन्मजरावसक्तम्। संसारबन्धनमनित्यमवेक्ष्य धन्या ज्ञानासिना तदवशीर्य विनिश्चयन्ति ॥ ७ ॥ शान्तैरनन्यमतिभिर्मधुरस्वभावैरेकत्वनिश्चितमनोभिरपेतमोहैः। साकं वनेषु विचितात्मपदस्वरूपं शास्त्रेषु सम्यगनिशं विमृशन्ति धन्याः ॥८॥ अहिमिव जनयोगं सर्वदा वर्जयेद्यः कुणपमिव सुनारीं त्यक्तुकामो विरागी। विषमिव विषयान्यो मन्यमानो दुरन्तान् जयति परमहंसो मुक्तिभावं समेति ॥ ९ ॥ संपूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमा गाङ्गं वारि समस्तवारिनिवहः पुण्याः समस्ताः क्रियाः। वाचः प्राकृतसंस्कृताः श्रुतिशिरो वाराणसी मेदिनी सर्वावस्थितिरस्य वस्तुविषया दृष्टे परब्रह्मणि ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं धन्याष्टकस्तोत्रं संपूर्णम्।

---

## ३६९ विज्ञाननौका ।

श्रीगणेशाय नमः ॥ तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या। परित्यज्य सर्वं यदाप्नोति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥ दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य मत्या विचार्य स्वरूपम्। यदाप्नोति तत्त्वं निदिध्यास्य विद्वान्परं ब्रह्म० ॥ २ ॥ यदानन्दरूपं

प्रकाशस्वरूपं निरस्तप्रपञ्चं परिच्छेदशून्यम् । अहंब्रह्मवृत्त्यैकगम्यं तुरीयं परं ब्रह्म० ॥ ३ ॥ यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधे । मनोवागतीतं विशुद्धं विमुक्तं परं ब्रह्म० ॥ ४ ॥ निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदाभाति पूर्णम् । अवस्थात्रयातीतमेकं तुरीयं परं ब्रह्म० ॥ ५ ॥ यदानन्दलेशैः समानन्दि विश्वं यदाभाति सत्त्वे तदाभाति सर्वम् । यदालोचने रूपमन्यत्समस्तं परं ब्रह्म० ॥ ६ ॥ अनन्तं विभुं सर्वयोनिं निरीहं शिवं सङ्गहीनं यदोङ्कारगम्यम् । निराकारमत्युज्ज्वलं मृत्युहीनं परं ब्रह्म० ॥ ७ ॥ यदानन्दसिन्धौ निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपञ्चः । यदा न स्फुरत्यद्भुतं यन्निमित्तं परं ब्रह्म० ॥ ८ ॥ स्वरूपानुसंधानरूपां स्तुतिं यः पठेदादराद्भक्तिभावो मनुष्यः । शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥ ९ ॥ विज्ञाननावं परिगृह्य कश्चित्तरेद्यदज्ञानमयं भवाब्धिम् । ज्ञानासिना यो हि विच्छिद्य तृष्णां विष्णोः पदं याति स एव धन्यः ॥१०॥

इति श्रीमच्छंकराचार्यविरचिता विज्ञाननौका संपूर्णा ।

---

## ३७० द्वादशपञ्जरिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णाम् । यल्लभसे निजकर्मोपात्तं वित्तं

तेन विनोदय चित्तम् ॥ १ ॥ अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् । पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः ॥ २ ॥ का ते कान्ता कस्ते पुत्रः संसारोऽयमतीव विचित्रः । कस्य त्वं कः कुत आयातस्तत्त्वं चिन्तय यदिदं भ्रातः ॥ ३ ॥ मा कुरु जनधनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं त्वं प्रविश विदित्वा ॥ ४ ॥ कामं क्रोधं मोहं लोभं त्यक्त्वात्मानं भावय कोऽहम् । आत्मज्ञानविहीना मूढास्ते पच्यन्ते नरकनिगूढाः ॥ ५ ॥ सुरमन्दिरतरुमूलनिवासः शय्या भूतलमजिनं वासः । सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ ६ ॥ शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसंधौ । भव समचित्तः सर्वत्र त्वं वाञ्छस्यचिराद्यदि विष्णुत्वम् ॥ ७ ॥ त्वयि मयि चान्यत्रैको विष्णुर्व्यर्थं कुप्यसि सर्वसहिष्णुः । सर्वस्मिन्नपि पश्यात्मानं सर्वत्रोत्सृज भेदाज्ञानम् ॥ ८ ॥ प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम् । जाप्यसमेतसमाधिविधानं कुर्ववधानं महदवधानम् ॥ ९ ॥ नलिनीदलगतसलिलं तरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याध्यभिमानग्रस्तं लोकं शोकहतं च समस्तम् ॥ १० ॥ का तेऽष्टादशदेशे चिन्ता वातुल तव किं नास्ति नियन्ता । यस्त्वां हस्ते सुदृढनिबद्धं बोधयति प्रभवादिविरुद्धम् ॥ ११ ॥ गुरुचरणाम्बुजनिर्भरभक्तः संसारा-

दचिराद्भवमुक्तः । सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ॥ १२ ॥ द्वादशपञ्जरिकामय एष शिष्याणां कथितो ह्युपदेशः । येषां चित्ते नैव विवेकस्ते पच्यन्ते नरकमनेकम् ॥ १३ ॥

इति श्रीमच्छंकराचार्यविरचितं द्वादशपञ्जरिकास्तोत्रं संपूर्णम् ।

---

## ३७१ चर्पटपञ्जरिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ दिनमपि रजनी सायं प्रातः शिशिरवसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ १ ॥ भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते । प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ्करणे । अग्रे वह्निः पृष्ठे भानू रात्रौ चुबुकसमर्पितजानुः । करतलभिक्षा तरुतलवासस्तदपि न मुञ्चत्याशापाशः । भज गो० ॥२॥ यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः । पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे । भज गो० ॥ ३ ॥ जटिलो मुण्डी लुञ्चितकेशः काषायाम्बरबहुकृतवेषः । पश्यन्नपि च न पश्यति मूढ उदरनिमित्तं बहुकृतवेषः । भज गो० ॥४॥ भगवद्गीता किंचिदधीता गङ्गाजललवकणिका पीता । सकृदपि यस्य मुरारिसमर्चा तस्य यमः किं कुरुते चर्चाम् ॥ भज गो० ॥५॥ अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् । वृद्धो

याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम्। भज गो० ॥ ६ ॥ बालस्तावत्क्रीडासक्तस्तरुणस्तावत्तरुणीरक्तः। वृद्धस्तावच्चिन्तामग्नः परे ब्रह्मणि कोऽपि न लग्नः। भज गो० ॥ ७ ॥ पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम्। इह संसारे भवदुस्तारे कृपयाऽपारे पाहि मुरारे। भज गो०॥८॥पुनरपि रजनी पुनरपि दिवसः पुनरपि पक्षः पुनरपि मासः। पुनरप्ययनं पुनरपि वर्षं तदपि न मुञ्चत्याशामर्षम्। भज गो०॥९॥वयसि गते कः कामविकारः शुष्के नीरे कः कासारः। नष्टे द्रव्ये कः परिवारो ज्ञाते तत्त्वे कः संसारः। भज गो०॥१०॥ नारीस्तनभरनाभिनिवेशं मिथ्यामायामोहावेशम्। एतन्मांसवसादिविकारं मनसि विचारय वारंवारम्। भज गो० ॥ ११ ॥ कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः। इति परिभावय सर्वमसारं विश्वं त्यक्त्वा स्वप्नविचारम्। भज गो० ॥ १२ ॥ गेयं गीतानामसहस्रं ध्येयं श्रीपतिरूपमजस्रम्। नेयं सज्जनसङ्गे चित्तं देयं दीनजनाय च वित्तम्। भज गो० ॥१३॥ यावज्जीवो निवसति देहे कुशलं तावत्पृच्छति गेहे। गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये। भज गो० ॥ १४ ॥ सुखतः क्रियते रामाभोगः पश्चाद्धन्त शरीरे रोगः। यद्यपि लोके मरणं शरणं तदपि न मुञ्चति पापाचरणम्। भज गो० ॥ १५ ॥ रथ्याचर्पटविरचितकन्थः पुण्यापुण्यविवर्जि-

तपन्थः । नाहं न त्वं नायं लोकस्तदपि किमर्थं क्रियते शोकः । भज गो० ॥ १६ ॥ कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम् । ज्ञानविहीने सर्वमनेन मुक्तिर्न भवति जन्मशतेन । भज गो० ॥ १७ ॥

इति श्रीमच्छंकराचार्यविरचितं चर्पटपञ्जरिकास्तोत्रं संपूर्णम् ।

## ३७२ हस्तामलकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कस्त्वं शिशो कस्य कुतोऽसि गन्ता किं नाम ते त्वं कुत आगतोऽसि । एतन्मयोक्तं वद चार्भक त्वं मत्प्रीतये प्रीतिविवर्धनोऽसि ॥१॥ हस्तामलक उवाच । नाहं मनुष्यो न च देवयक्षौ न ब्राह्मणक्षत्रियवैश्यशूद्राः । न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः॥ २ ॥ निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः । रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥ ३ ॥ यमग्न्युष्णवन्नित्यबोधस्वरूपं मनश्चक्षुरादीन्यबोधात्मकानि । प्रवर्तन्त आश्रित्य निष्कम्पमेकं स नित्यो० ॥ ४ ॥ मुखाभासको दर्पणे दृश्यमानो मुखत्वात्पृथक्त्वेन नैवास्ति वस्तु । चिदाभासको धीषु जीवोऽपि तद्वत्स नित्यो० ॥५॥ यथा दर्पणाभाव आभासहानौ मुखं विद्यते कल्पनाहीनमेकम् । तथा धीवियोगे निराभासको यः स नित्यो० ॥ ६ ॥ मनश्चक्षुरादेर्वियुक्तः स्वयं यो

मनश्चक्षुरादेर्मनश्चक्षुरादिः । मनश्चक्षुरादेरगम्यस्वरूपः स नित्यो० ॥ ७ ॥ य एको विभाति स्वतः शुद्धचेताः प्रकाशस्वरूपोऽपि नानेव धीषु । शरावोदकस्थो यथा भानुरेकः स नित्यो० ॥ ८ ॥ यथाऽनेकचक्षुः प्रकाशो रविर्न क्रमेण प्रकाशीकरोति प्रकाश्यम् । अनेका धियो यस्तथैकः प्रबोधः स नित्यो० ॥ ९ ॥ विवस्वत्प्रभातं यथा रूपमक्षं प्रगृह्णाति नाभातमेवं विवस्वान् । यदाभात आभासयत्यक्षमेकः स नित्यो० ॥ १० ॥ यथा सूर्य एकोऽप्स्वनेकश्चलासु स्थिरास्वप्यनन्तद्विभाव्यस्वरूपः । चलासु प्रभिन्नाः सुधीष्वेक एव स नित्यो० ॥ ११ ॥ घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः । तथा बद्धवद्भाति यो मूढदृष्टेः स नित्यो० ॥ १२ ॥ समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि वस्तूनि यन्न स्पृशन्ति । वियद्वत्सदा शुद्धमच्छस्वरूपं स नित्यो० ॥१३॥ उपाधौ यथा भेदता सन्मणीनां तथा भेदता बुद्धिभेदेषु तेऽपि । यथा चन्द्रिकाणां जले चञ्चलत्वं तथा चञ्चलत्वं तवापीह विष्णो ॥ १४ ॥

इति श्रीमच्छंकराचार्यविरचितं हस्तामलकसंवादस्तोत्रं संपूर्णम् ।

---

## ३७३ आत्मबोधः ।

श्रीगणेशाय नमः ॥ तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् । मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते

॥ १ ॥ बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् । पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥२॥ अविरोधितया कर्म नाविद्यां विनिवर्तयेत् । विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसंघवत् ॥ ३ ॥ परिच्छिन्नमिवाज्ञानात्तन्नाशे सति केवलः । स्वयं प्रकाशते ह्यात्मा मेघापायेंऽशुमानिव ॥ ४ ॥ अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम् । कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ ५ ॥ संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः । स्वकाले सत्यवद्भाति प्रबोधे सत्यसद्भवेत् ॥ ६ ॥ तावत्सत्यं जगद्भाति शुक्तिकारजतं यथा । यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम् ॥ ७ ॥ सच्चिदात्मन्यनुस्यूते नित्ये विष्णौ प्रकल्पिताः । व्यक्तयो विविधाः सर्वा हाटके कटकादिवत् ॥ ८ ॥ यथाकाशो हृषीकेशो नानोपाधिगतो विभुः । तद्भेदाद्भिन्नवद्भाति तन्नाशे सति केवलः ॥९॥ नानोपाधिवशादेव जातिवर्णाश्रमादयः । आत्मन्यारोपितास्तोये रसवर्णादिभेदवत् ॥ १० ॥ पञ्चीकृतमहाभूतसंभवं कर्मसंचितम् । शरीरं सुखदुःखानां भोगायतनमुच्यते ॥ ११ ॥ पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ १२ ॥ अनाद्यविद्याऽनिर्वाच्या कारणोपाधिरुच्यते । उपाधित्रितयादन्यमात्मानमवधारयेत् ॥ १३ ॥ पञ्चकोशादियोगेन तत्तन्मय इव स्थितः । शुद्धात्मा नीलवस्त्रादियोगेन स्फटिको

यथा ॥ १४ ॥ वपुस्तुषादिभिः कोशैर्युक्तं युक्त्यावघाततः। आत्मानमन्तरं शुद्धं विविच्यात्तन्दुलं यथा ॥ १५ ॥ सदा सर्वगतोऽप्यात्मा न सर्वत्रावभासते । बुद्धावेवावभासेत स्वच्छेषु प्रतिबिम्बवत् ॥ १६ ॥ देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम् । तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा ॥ १७ ॥ व्यापृतेष्विन्द्रियेष्वात्मा व्यापारीवाविवेकिनाम् । दृश्यतेऽभ्रेषु धावत्सु धावन्निव यथा शशी ॥ १८ ॥ आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः । स्वकीयार्थेषु वर्तन्ते सूर्यालोकं यथा जनाः ॥ १९ ॥ देहेन्द्रियगुणान्कर्माण्यमले सच्चिदात्मनि । अध्यस्यन्त्यविवेकेन गगने नीलतादिवत् ॥ २० ॥ अज्ञानान्मनसोपाधेः कर्तृत्वादीनि चात्मनि । कल्प्यन्तेऽम्बुगते चन्द्रे चलनादि यथाम्भसः ॥२१॥ रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते । सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ॥२२॥ प्रकाशोऽर्कस्य तोयस्य शैत्यमग्नेर्यथोष्णता । स्वभावः सच्चिदानन्दनित्यनिर्मलतात्मनः ॥ २३ ॥ आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् । संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥ २४ ॥ आत्मनो विक्रिया नास्ति बुद्धेर्बोधो न जात्विति । जीवः सर्वमलं ज्ञात्वा कर्ता द्रष्टेति मुह्यति ॥ २५ ॥ रज्जुसर्पवदात्मानं जीवं ज्ञात्वा भयं वहेत् । नाहं जीवः परात्मेति ज्ञातं चेन्निर्भयो भवेत् ॥२६॥ आत्मावभासयत्येको बुद्ध्यादीनीन्द्रियाणि हि । दीपो

घटादिवस्त्वात्मा जडैस्तैर्नावभास्यते ॥२७॥ स्वबोधे नान्य-
बोधेच्छा बोधरूपतयात्मनः । न दीपस्यान्यदीपेच्छा यथा
स्वात्मा प्रकाशते ॥ २८ ॥ निषिध्य निखिलोपाधीन्नेति
नेतीति वाक्यतः । विद्यादैक्यं महावाक्यैर्जीवात्मपरमा-
त्मनोः ॥ २९ ॥ आविद्यकं शरीरादि दृश्यं बुद्बुदवत्क्षरम् ।
एतद्विलक्षणं विद्यादहंब्रह्मेति निर्मलम् ॥ ३० ॥ देहान्य-
त्वान्न मे जन्म जराकार्श्यलयादयः । शब्दादिविषयैः सङ्गो
निरिन्द्रियतया न च ॥ ३१ ॥ अमनस्त्वान्न मे दुःखरागद्वे-
षभयादयः । अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिशासनात्
॥ ३२ ॥ निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः ।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः ॥ ३३ ॥
अहमाकाशवत्सर्वंबहिरन्तर्गतोऽच्युतः । सदा सर्वसमः शुद्धो
निःसङ्गो निर्मलोऽचलः ॥३४॥ नित्यशुद्धविमुक्तैकमखण्डान-
न्दमद्वयम् । सत्यं ज्ञानमनन्तं यत्परं ब्रह्माहमेव तत् ॥३५॥
एवं निरन्तराभ्यस्ता ब्रह्मैवास्मीति वासना । हरत्यविद्या
विक्षेपान् रोगानिव रसायनम् ॥३६॥ विविक्तदेश आसीनो
विरागो विजितेन्द्रियः । भावयेदेकमात्मानं तमनन्तमन-
न्यधीः ॥ ३७ ॥ आत्मन्येवाखिलं दृश्यं प्रविलाप्य धिया
सुधीः । भावयेदेकमात्मानं निर्मलाकाशवत्सदा ॥३८॥ रूप-
वर्णादिकं सर्वं विहाय परमार्थवित् । परिपूर्णचिदानन्दस्व-

रूपेणावतिष्ठते ॥ ३९ ॥ ज्ञातृज्ञानज्ञेयभेदः परात्मनि न

विद्यते । चिदानन्दैकरूपत्वाद्दीप्यते स्वयमेव हि ॥ ४० ॥ एवमात्मारणौ ध्यानमन्थने सततं कृते । उदितावगतिर्ज्वाला सर्वज्ञानेन्धनं दहेत् ॥ ४१ ॥ अरुणेनेव बोधेन पूर्वं सन्तमसे हृते । तत आविर्भवेदात्मा स्वयमेवांशुमानिव ॥ ४२ ॥ आत्मा तु सततं प्राप्तोऽप्यप्राप्तवदविद्यया । तन्नाशे प्राप्तवद्भाति स्वकण्ठाभरणं यथा ॥ ४३ ॥ स्थाणौ पुरुषवद्भ्रान्त्या कृता ब्रह्मणि जीवता । जीवस्य तात्त्विके रूपे तस्मिन् दृष्टे निवर्तते ॥ ४४ ॥ तत्त्वस्वरूपानुभवादुत्पन्नं ज्ञानमञ्जसा । अहंममेति चाज्ञानं बाधते दिग्भ्रमादिवत् ॥ ४५ ॥ सम्यग्विज्ञानवान्योगी स्वात्मन्येवाखिलं स्थितम् । एवं च सर्वमात्मानमीक्षते ज्ञानचक्षुषा ॥ ४६ ॥ आत्मैवेदं जगत्सर्वमात्मनोऽन्यन्न विद्यते । मृदो यद्वद्घटादीनि स्वात्मानं सर्वमीक्षते ॥ ४७ ॥ जीवन्मुक्तस्तु तद्विद्वान्पूर्वोपाधिगुणांस्त्यजेत् । सच्चिदानन्दरूपत्वाद्भवेद्भ्रमरकीटवत् ॥ ४८ ॥ तीर्त्वा मोहार्णवं हत्वा रागद्वेषादिराक्षसान् । योगी शान्तिसमायुक्तो ह्यात्मारामो विराजते ॥ ४९ ॥ उपाधिस्थोऽपि तद्धर्मैर्न लिप्तो व्योमवन्मुनिः । सर्वविन्मूढवत्तिष्ठेदसक्तो वायुवच्चरेत् ॥ ५० ॥ बाह्यां नित्यसुखासक्तिं हित्वात्मसुखनिर्वृतः । घटस्थदीपवत्स्वच्छः स्वान्तरेव प्रकाशते ॥ ५१ ॥ उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः । जले जलं वियद्व्योम्नि तेजस्तेजसि वा यथा ॥ ५२ ॥

यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् । यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ॥ ५३ ॥ यद्दृष्ट्वा न परं दृश्यं यद्भूत्वा न पुनर्भवः । यज्ज्ञात्वा न परं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ॥ ५४ ॥ तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमव्ययम् । अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५५ ॥ अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽव्ययम् । अखण्डानन्दमेकं यत्तद्ब्रह्मेत्यवधारयेत् ॥ ५६ ॥ अखण्डानन्दरूपस्य तस्यानन्दलवाश्रिताः । ब्रह्माद्यास्तारतम्येन भवन्त्यानन्दिनोऽखिलाः ॥ ५७ ॥ तद्युक्तमखिलं वस्तु व्यवहारस्तदन्वितः । तस्मात्सर्वगतं ब्रह्म क्षीरे सर्पिरिवाखिले ॥ ५८ ॥ अनण्वस्थूलमह्रस्वमदीर्घमजमव्ययम् । अरूपगुणवर्णाख्यं तद्ब्रह्मेत्यवधारयेत्॥५९॥ यद्भासा भासतेऽर्कादि भास्यैर्यत्तु च भास्यते। येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत् ॥ ६० ॥ स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलं जगत् । ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत् ॥ ६१ ॥ जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन । ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥ ६२ ॥ दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् । तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम् ॥ ६३ ॥ सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते । अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ६४ ॥ श्रवणादिभिरुद्दीप्तो ज्ञानाग्निपरितापितः । जीवः सर्वमलान्मुक्तः स्वर्णवद्द्योतते स्वयम् ॥ ६५ ॥ हृदा-

काशोदितो ह्यात्मा बोधभानुस्तमोपहृत् । सर्वव्यापी सर्वधारी भाति सर्वं प्रकाशते ॥ ६६ ॥ दिग्देशकालाद्यनपेक्ष्य सर्वगं शीतादिहृन्नित्यसुखं निरञ्जनम् । यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो भवेत् ॥ ६७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यकृतः आत्मबोधः संपूर्णः ।

---

## ३७४ साधनपञ्चकम् ।

श्रीगणेशाय नमः ॥ वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामपचितिः काम्ये मतिस्त्यज्यताम् । पापौघः परिधूयतां भवसुखे दोषोऽनुसंधीयतामात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥१॥ सङ्गः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां शांत्यादिः परिचीयतां दृढतरं कर्माशु संत्यज्यताम् । सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुके सेव्यतां ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समाकर्ण्यताम् ॥ २ ॥ वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसंधीयताम् । ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्यज्यतां देहेऽहंमतिरुज्झ्यतां बुधजनैर्वादः परित्यज्यताम् ॥ ३ ॥ क्षुद्व्याधिश्च चिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न तु याच्यतां विधिवशात्प्राप्तेन सन्तुष्य-

ताम् । शीतोष्णादि विपह्यतां न तु वृथा वाक्यं समुच्चार्यतामौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥४॥ एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् । प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥ यः श्लोकपञ्चकमिदं पठते मनुष्यः सञ्चिन्तयत्यनुदिनं स्थिरतामुपेत्य । तस्याशु संसृतिदवानलतीव्रघोरतापः प्रशान्तिमुपयाति चितिप्रसादात् ॥ ६ ॥

इति श्रीमच्छंकराचार्यविरचितं साधनपञ्चकं संपूर्णम् ।

## ३७५ मनीषापञ्चकम् ।

श्रीगणेशाय नमः ॥ सत्याचार्यस्य गमने कदाचिन्मुक्तिदायकम् । काशीक्षेत्रं प्रति सह गौर्या मार्गे तु शङ्करम् ॥१॥ अन्त्यवेषधरं दृष्ट्वा गच्छ गच्छेति चाब्रवीत् । शङ्करः सोऽपि चाण्डालस्तं पुनः प्राह शङ्करम् ॥ २ ॥ अन्नमयादन्नमयमथवा चैतन्यमेव चैतन्यात् । द्विजवर दूरीकर्तुं वाञ्छसि किं ब्रूहि गच्छ गच्छेति ॥ ३ ॥ किं गङ्गाम्बुनि बिम्बितेम्बरमणौ चण्डालवाटीपयःपूरे चान्तरमस्ति काञ्चनघटीमृत्कुम्भयोर्वाम्बरे । प्रत्यग्वस्तुनि निस्तरङ्गसहजानन्दावबोधाम्बुधौ विप्रोऽयं श्वपचोऽयमित्यपि महान् कोयं

विभेदभ्रमः ॥ ४ ॥ जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते या ब्रह्मादिपिपीलिकान्ततनुषु प्रोता जगत्साक्षिणी। सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञापि यस्यास्ति चेच्चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥ ५ ॥ ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं सर्वं चैतदविद्यया त्रिगुणयाशेषं मया कल्पितम्। इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले चाण्डालोऽस्तु० ॥ ६ ॥ शश्वन्नश्वरमेव विश्वमखिलं निश्चित्य वाचा गुरोर्नित्यं ब्रह्म निरन्तरं विमृशता निर्व्याजशान्तात्मना। भूतं भावि च दुष्कृतं प्रदहता संविन्मये पावके प्रारब्धाय समर्पितं स्ववपुरित्येषा० ॥ ७ ॥ या तिर्यङ्नरदेवताभिरहमित्यन्तःस्फुटा गृह्यते यद्भासा हृदयाक्षदेहविषया भान्ति स्वतोऽचेतनाः। तां भास्यैः पिहितार्कमण्डलनिभां स्फूर्तिं सदा भावयन्योगी निर्वृतमानसो हि गुरुरित्येषा० ॥ ८ ॥ यत्सौख्याम्बुधिलेशत इमे शक्रादयो निर्वृता यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः। यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्यः कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥ ९ ॥

इति श्रीमच्छंकराचार्यविरचितं मनीषापञ्चकं संपूर्णम्।

## ३७६ वाक्यवृत्तिः ।

श्रीगणेशाय नमः ॥ सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् । निर्मुक्तबन्धनमपारसुखाम्बुराशिं श्रीवल्लभं विमलबोधघनं नमामि ॥ १ ॥ यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च । इत्थं विजानामि सदात्मरूपस्तस्याङ्घ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥२॥ तापत्रयार्कसंतप्तः कश्चिदुद्विग्नमानसः । शमादिसाधनैर्युक्तः सद्गुरुं परिपृच्छति ॥ ३ ॥ अनायासेन येनास्मान्मुच्येयं भवबन्धनात् । तन्मे संक्षिप्य भगवन्कैवल्यं कृपया वद ॥ ४ ॥ साध्वी ते वचनव्यक्तिः प्रतिभाति वदामि ते । इदं तदिति विस्पष्टं सावधानमनाः शृणु ॥ ५ ॥ तत्त्वमस्यादिवाक्योत्थं यज्जीवपरमात्मनोः । तादात्म्यविषयं ज्ञानं तदिदं मुक्तिसाधनम् ॥ ६ ॥ को जीवः कः परश्चात्मा तादात्म्यं वा कथं तयोः । तत्त्वमस्यादिवाक्यं वा कथं तत्प्रतिपादयेत् ॥ ७ ॥ अत्र ब्रूमः समाधानं कोऽन्यो जीवस्त्वमेव हि । यस्त्वं पृच्छसि मां कोऽहं ब्रह्मैवासि न संशयः ॥ ८ ॥ पदार्थमेव जानामि नाद्यापि भगवन् स्फुटम् । अहंब्रह्मेति वाक्यार्थं प्रतिपद्ये कथं वद ॥ ९ ॥ सत्यमाह भवानत्र विज्ञानं नैव विद्यते । हेतुः पदार्थबोधो हि वाक्यार्थावगतेरिह ॥ १० ॥ अन्तःकरणतद्वृत्तिसाक्षी चैतन्यविग्रहः । आनन्दरूपः सत्यः सन् किं नात्मानं प्रपद्यसे ॥ ११ ॥ सत्या-

नन्दस्वरूपं धीसाक्षिणं बोधविग्रहम् । चिन्तयात्मतया नित्यं त्यक्त्वा देहादिगां धियम् ॥ १२ ॥ रूपादिमान्यतः पिण्डस्ततो नात्मा घटादिवत् । वियदादिमहाभूतविकारत्वाच्च कुम्भवत् ॥ १३ ॥ अनात्मा यदि पिण्डोऽयमुक्तहेतुबलान्मतः । करामलकवत्साक्षादात्मानं प्रतिपादय॥१४॥ घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा । देहद्रष्टा तथा देहो नाहमित्यवधारय ॥१५॥ एवमिन्द्रियदृङ्नाहमिन्द्रियाणीति निश्चिनु । मनो बुद्धिस्तथा प्राणो नाहमित्यवधारय ॥१६॥ संघातो हि तथा नाहमिति दृश्यविलक्षणम् । द्रष्टारमनुमानेन निपुणं संप्रधारय ॥ १७ ॥ देहेन्द्रियादयो भावा हानादिव्यापृतिक्षमाः । यस्य सन्निधिमात्रेण सोऽहमित्यवधारय ॥ १८ ॥ अनापन्नविकारः सन्नयस्कान्तवदेव यः । बुद्ध्यादींश्चालयेत्प्रत्यक् सोऽहमित्यवधारय ॥ १९ ॥ अजडात्मवदाभान्ति यत्सान्निध्याज्जडा अपि । देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥ २० ॥ अगमन्मे मनोऽन्यत्र सांप्रतं च स्थिरीकृतम् । एवं यो वेत्ति धीवृत्तिं सोऽहमित्यवधारय ॥ २१ ॥ स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा । यो वेत्त्यविक्रियः साक्षात्सोऽहमित्यवधारय ॥ २२ ॥ घटावभासको दीपो घटादन्यो यथेष्यते । देहावभासको देही तथाहं बोधविग्रहः ॥ २३ ॥ पुत्रवित्तादयो भावा यस्य शेषतया प्रियाः । द्रष्टा सर्वप्रियतमः सोऽहमित्यवधारय

॥ २४ ॥ परप्रेमास्पदतया मा न भूवमहं सदा । भूयासमिति यो द्रष्टा सोऽहमित्यवधारय ॥ २५ ॥ यः साक्षिलक्षणो बोधस्त्वंपदार्थः स उच्यते । साक्षित्वमपि बोद्धृत्वमविकारितयाऽऽत्मनः ॥ २६ ॥ देहेन्द्रियमनःप्राणाहंकृतिभ्यो विलक्षणः। प्रोज्झिताशेषषड्भावविकारस्त्वंपदाभिधः॥२७॥ त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः। अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥ २८ ॥ निरस्ताशेषसंसारदोषोऽस्थूलादिलक्षणः । अदृश्यत्वादिगुणकः पराकृततमोमलः ॥ २९ ॥ निरस्तातिशयानन्दः सत्यप्रज्ञानविग्रहः । सत्तास्वलक्षणः पूर्णः परमात्मेति गीयते ॥ ३० ॥ सर्वज्ञत्वं परेशत्वं तथा संपूर्णशक्तिता । वेदैः समर्थ्यते यस्य तद्ब्रह्मेत्यवधारय ॥ ३१ ॥ यज्ज्ञानात्सर्वविज्ञानं श्रुतिषु प्रतिपादितम् । मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ॥ ३२ ॥ यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ । तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय ॥ ३३ ॥ विजिज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः । समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय ॥ ३४ ॥ जीवात्मना प्रवेशश्च नियन्तृत्वं च तान् प्रति । श्रूयते यस्य वेदेषु तद्ब्रह्मेत्यवधारय ॥ ३५ ॥ कर्मणां फलदातृत्वं यस्यैव श्रूयते श्रुतौ । जीवानां हेतुकर्तृत्वं तद्ब्रह्मेत्यवधारय ॥ ३६ ॥ तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना । तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः ॥३७॥

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः । अखण्डैक-रसत्वेन वाक्यार्थो विदुषां मतः ॥ ३८ ॥ प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः । अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥३९॥ इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् । अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥ ४० ॥ तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु । पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ४१ ॥ तत्त्वमस्यादिवाक्यं च तादात्म्यप्रतिपादने । लक्ष्यौ तत्त्वंपदार्थौ द्वावुपादाय प्रवर्तते ॥४२॥ हित्वा द्वौ शबलौ वाच्यौ वाक्यं वाक्यार्थबोधने । यथा प्रवर्ततेऽस्माभिस्तथा व्याख्यातमादरात् ॥ ४३ ॥ आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः । अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ४४ ॥ मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः । पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ४५ ॥ प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता । विरुध्यते यतस्तस्माल्लक्षणा संप्रवर्तते ॥ ४६ ॥ मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे । मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ ४७ ॥ तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा । सोऽहमित्यादिवाक्यस्थपदयोरिव नापरा ॥४८॥ अहंब्रह्मेतिवाक्यार्थबोधो यावद्दृढीभवेत् । शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ ४९ ॥ श्रुत्याचार्यप्रसादेन दृढो बोधो यदा भवेत् । निरस्ताशेषसंसारनिदानः पुरुषस्तदा

॥ ९० ॥ विशीर्णकार्यकरणो भूतसूक्ष्मैरनावृतः । विमुक्तकर्मनिगडः सद्य एव विमुच्यते ॥ ९१ ॥ प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत् । किंचित्कालमनारब्धकर्मबन्धस्य संक्षये ॥ ९२ ॥ निरस्तातिशयानन्दं वैष्णवं परमं पदम् । पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते ॥ ९३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता वाक्यवृत्तिः समाप्ता ।

## ३७७ परापूजा ।

श्रीगणेशाय नमः ॥ पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम् । स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः ॥१॥ निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च । निरालम्बस्योपवीतं पुष्पं निर्वासनस्य च ॥ २ ॥ निर्लेपस्य कुतो गन्धो रम्यस्याभरणं कुतः । नित्यतृप्तस्य नैवेद्यस्ताम्बूलं च कुतो विभोः ॥ ३ ॥ प्रदक्षिणा ह्यनन्तस्य ह्यद्वयस्य कुतो नतिः । वेदवाक्यैरवेद्यस्य कुतः स्तोत्रं विधीयते ॥ ४ ॥ स्वयं प्रकाशमानस्य कुतो नीराजनं विभोः । अन्तर्बहिश्च पूर्णस्य कथमुद्वासनं भवेत् ॥ ५ ॥ एवमेव परा पूजा सर्वावस्थासु सर्वदा । एकबुद्ध्या तु देवेशे विधेया ब्रह्मवित्तमैः ॥ ६ ॥



इति परापूजा समाप्ता ।

## ३९८ प्रश्नोत्तरमालिका ।

श्रीगणेशाय नमः ॥ कः खलु नालंक्रियते दृष्टादृष्टार्थसाधनपटीयान्। अनया कण्ठस्थितया प्रश्नोत्तररत्नमालिकया ॥ १ ॥ भगवन्किमुपादेयं गुरुवचनं हेयमपि च किमकार्यम्। को गुरुरधिगततत्त्वः सत्त्वहितायोद्यतः सततम् ॥ २ ॥ त्वरितं किं कर्तव्यं सुधिया संसारसंततिच्छेदः। किं मोक्षतरोर्बीजं सम्यग्ज्ञानं क्रियासहितम् ॥ ३ ॥ कः पथ्यतरो धर्मः कः शुचिरिह यस्य मानसं शुद्धम्। कः पण्डितो विवेकी किं विषमवधीरणा गुरुषु ॥ ४ ॥ किं संसारे सारं बहुशो विचिन्त्यमानमिदमेव। मनुजेषु दृष्टतत्त्वं स्वपरहितायोद्यतं जन्म ॥ ५ ॥ मदिरेव जनमोहकः कः स्नेहः के च दस्यवो विषयाः। का भववल्ली तृष्णा को वैरी यस्त्वनुद्योगः ॥ ६ ॥ कस्माद्भयमिह मरणादन्धादपि को विशिष्यते रागी। कः शूरो यो ललनालोचनबाणैर्न च व्यथितः ॥ ७ ॥ पातुं कर्णाञ्जलिभिः किममृतमिव युज्यते सदुपदेशः। किं गुरुताया मूलं यदेतदप्रार्थनं नाम ॥ ८ ॥ किं गहनं स्त्रीचरितं कश्चतुरो यो न खण्डितस्तेन। किं दारिद्र्यमतोषः किं लाघवं परधनादिपरियाच्ञा ॥ ९ ॥ किं जीवितमनवद्यं किं जाड्यं पाटवेऽप्यनभ्यासः। को जागर्ति विवेकी का निद्रा मूढता जन्तोः॥१०॥नलिनीदलगतजलवत्तरलं किं यौवनं धनं चायुः। के शशधरकरनिकरानुकारिणः सज्जना एव ॥ ११ ॥ को

नरकः परवशता किं सौख्यं सर्वसङ्गविरतिर्या । किं साध्यं भूतहितं किन्तु प्रियं प्राणिनामसवः ॥ १२ ॥ किं दानमनाकाङ्क्षं किं मित्रं यन्निवर्तयति पापात् ॥ १३ ॥ कोऽलंकारः शीलं किं वाचां मण्डनं सत्यम् । किमनर्थफलं मानः सुसंगतिः का सुखावहा मैत्री ॥ १४ ॥ सर्वव्यसनविनाशे को दक्षः सर्वथा परित्यागी । कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति न हितानि ॥१५॥ को मूको यः काले प्रियाणि वक्तुं न जानाति । किं मरणं मूर्खत्वं किमनर्घ्यं दत्तमवसरे यच्च ॥ १६ ॥ आमरणात्किं शल्यं प्रच्छन्नं यत्कृतं पापम् । कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने ॥ १७ ॥ अवधीरणा क कार्या खलपरयोषित्परधनेषु । काऽहर्निशमनुचिन्त्या संसारासारता न तु प्रमदा ॥ १८ ॥ का प्रेयसी विधेया करुणा दीनेषु सज्जने मैत्री । कण्ठगतैरप्यसुभिः कस्यात्मा न वश्यमुपयाति ॥१९॥ मूर्खस्य विषादवतो गर्ववतोऽपि च कृतघ्नस्य । कः पूज्यः सद्वृत्तः कमधममाचक्षते चलितवृत्तम् ॥ २० ॥ केन जितं जगदेतत्सत्यतितिक्षावता पुंसा । कुत्र विधेयो वासः सज्जननिकटेऽथवा काश्याम्॥२१॥ कस्मै नमस्क्रिया स्याद्देवानामपि दयाप्रधानस्य । कस्मादुद्वेजितव्यं संसारारण्यतः सुधिया ॥ २२ ॥ कस्य वशे प्राणिगणः सत्यप्रियभाषिणो विनीतस्य । क स्थातव्यं न्याय्ये पथि दृष्टादृष्टलाभाय ॥ २३ ॥ विद्युद्विलसितचपलं

किं दुर्जनसंगतिर्व्रतयश्च । कुलशीलनिष्प्रकम्पाः के कलिकालेऽपि सत्पुरुषाः ॥ २४ ॥ किं शोच्यं कार्पण्यं सति विभवे किं प्रशस्यमौदार्यम् । तनुतरविभवस्य प्रभविष्णोर्वा किंच यत्सहिष्णुत्वम् ॥ २५ ॥ चिन्तामणिरिव दुर्लभमिह किं कथयामि चतुर्भद्रम् । किं तद्वदेति भूयो विधूततमसो विशेषेण ॥ २६ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । वित्तं त्यागसमेतं दुर्लभमेतच्चतुर्भद्रम् ॥२७॥ इति कण्ठगता विमला प्रश्नोत्तररत्नमालिका येषाम् । तेऽमुक्ताभरणा अपि विभान्ति विद्वत्समाजेषु ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता प्रश्नोत्तरमालिका संपूर्णा ।

---

## ३७९ कौपीनपञ्चकं स्तोत्रम् ।

श्रीगणेशाय नमः ॥ वेदान्तवाक्येषु सदा रमन्तो भिक्षान्नमात्रेण च तुष्टिमन्तः । अशोकवन्तः करुणैकवन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ १ ॥ मूलं तरोः केवलमाश्रयन्तः पाणिद्वये भोक्तुममन्त्रयन्तः । कन्थामपि स्त्रीमिव कुत्सयन्तः कौपीनवन्तः ख० ॥ २ ॥ देहाभिमानं परिहृत्य दूरादात्मानमात्मन्यवलोकयन्तः । अहर्निशं ब्रह्मणि ये रमन्तः कौपीनवन्तः ख० ॥ ३ ॥ स्वानन्दभावे परितुष्टिमन्तः स्वशान्तसर्वेन्द्रियवृत्तिमन्तः । नान्तं न मध्यं न बहिः

स्मरन्तः कौपीनवन्तः ख० ॥ ४ ॥ पञ्चाक्षरं पावनमुच्चरन्तः पतिं पशूनां हृदि भावयन्तः । भिक्षाशना दिक्षु परिभ्रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं कौपीनपञ्चकस्तोत्रं संपूर्णम् ।

---

## ३८० शिवानन्दलहरी ।

श्रीगणेशाय नमः ॥ पुरे पौरान्पश्यन्नरयुवतिनामाकृतिमयान् सुवेशान्स्वर्णालङ्करणकलिताञ्चित्रसदृशान् । स्वयं साक्षी द्रष्टेत्यपि च कलयंस्तैः सह रमन् मुनिर्नं व्यामोहं भजति गुरुदीक्षाक्षततमा ॥ १ ॥ वने वृक्षान्पश्यन्दलफलभरान्नम्रसुशिखान्घनच्छायाछन्नान्बहुलकलकूजद्द्विजगणान् । भजन्घस्रे रात्राववनितलतल्पैकशयनो मुनिर्नं० ॥ २ ॥ कदाचित्प्रासादे क्वचिदपि तु सौधे च धवले कदाकाले शैले क्वचिदपि च कूले च सरिताम् । कुटीरे दान्तानां मुनिजनवराणामपि वसन्मुनिर्नं० ॥ ३ ॥ क्वचिद्बालैः सार्धं करतलजतालैश्च हसितैः क्वचिद्वै तारुण्याङ्कितचतुरनार्या सह रमन् । क्वचिद्वृद्धैश्चिन्तां क्वचिदपि तदन्यैश्च विलपन्मुनिर्नं० ॥ ४ ॥ कदाचिद्विद्वद्भिर्विविधसुपुरानन्दरसिकैः कदाचित्काव्यालंकृतरसरसालैः कविवरैः । वदन्वादांस्तैः



रहमितिपरैस्तार्किकवरैर्मुनिर्नं० ॥ ५ ॥ कदा ध्यानाभ्यासैः

क्वचिदपि सपर्यां विकसितैः सुगन्धैः सत्पुष्पैः क्वचिदपि दलैरेव विमलैः । प्रकुर्वन्देवस्य प्रमुदितमनाः संस्तुतिपरो मुनिर्नं० ॥ ६ ॥ शिशयाः शंभोर्वा क्वचिदपि च विष्णो-रपि कदा गणाध्यक्षस्यापि प्रकटतपनस्यापि च कदा । पठन्वै नामालिं नयनरचितानन्दसलिलो मुनिर्नं० ॥ ७ ॥ कदा गङ्गाम्भोभिः क्वचिदपि च कूपोत्थितजलैः क्वचित्का-सारोत्थैः क्वचिदपि सदुष्णैश्च शिशिरैः । भजन्स्नानैर्भूत्या क्वचिदपि च कर्पूरनिभया मुनिर्नं० ॥ ८ ॥ कदाचिज्जा-गृत्यां विषयकरणैः संव्यवहरन्कदाचित्स्वप्रस्थानपि च विषयानेव च भजन् । कदाचित्सौषुप्तं सुखमनुभवन्नेव सततं मुनिर्नं० ॥ ९ ॥ कदाप्याशावासाः क्वचिदपि च दिव्याम्बरधरः क्वचित्पञ्चास्योत्थां त्वचमपि दधानः कटि-तटे । मनस्वी निःसङ्गः स्वजनहृदयानन्दजनको मुनिर्नं० ॥ १० ॥ कदाचित्सत्त्वस्थः क्वचिदपि रजोवृत्तियुगतस्तमो-वृत्तिः क्वापि त्रितयरहितः क्वापि च पुनः । कदाचित्संसारी श्रुतिपथविहारी क्वचिदपि मुनिर्नं० ॥ ११ ॥ कदाचिन्मौ-नस्थः क्वचिदपि च व्याख्याननिरतः कदाचित्सानन्दं हसति रभसत्यक्तवचसा । कदाचिल्लोकानां व्यवहृतिसमालोकनपरो मुनिर्नं० ॥ १२ ॥ कदाचिच्छक्तीनां विकचमुखपद्मेषु कव-लान्विपर्यस्तानां क्वापि स्वयमपि च गूढस्वसुखतः । महा-द्वैतं रूपं निजपरविहीनं प्रकटयन्मुनिर्नं० ॥ १३ ॥ क्वचि-

च्छैवैः सार्धं क्वचिदपि च शाक्तैः सह वसन्कदा विष्णो-र्भक्तैः क्वचिदपि च सौरैः सह वसन् । कदा गाणापत्यैर्गतसकलभेदोऽद्वयतया मुनिर्नं० ॥ १४ ॥ निराकारं क्वापि क्वचिदपि च साकारममलं निजं शैवं रूपं विविधगुणभेदेन बहुधा । कदाऽऽश्चर्यं पश्यन्किमिदमिति हृष्यन्नपि कदा मुनिर्नं० ॥ १५ ॥ कदा द्वैतं पश्यन्नखिलमपि सत्यं शिवमयं महावाक्यार्थानामवगतसमभ्यासवशतः । गतद्वैताभावः शिव शिव शिवेत्येव विलपन्मुनिर्नं० ॥ १६ ॥ इमां मुक्तावस्थां परमशिवसंस्थां गुरुकृपासुधापाङ्गावाप्यां सहजसुखवाप्यामनुदिनम् । मुहुर्मज्जन्मज्जन्भजति सुकृती चेन्नरस्तदा योगी त्यागी कविरिति वदन्तीह कवयः ॥१७॥ मौने मौनी गुणिनि गुणवान्पंडिते पण्डितश्च दीने दीनः सुखिनि सुखवान्भोगिनि प्राप्तभोगः । मूर्खे मूर्खो युवतिषु युवा वाग्मिनि प्रौढवाग्मी धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥ १८ ॥

इति श्रीमच्छङ्कराचार्यविरचितं श्रीशिवानन्दलहर्याख्यं स्तोत्रं संपूर्णम् ।

## ३८१ शयनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ आस्तीर्य सर्वत इदं परमात्मरूपं प्रावार्य सर्वत इदं परमात्मरूपम् । शेते सुखेन निजलाभ-

विनिर्वृतात्मा श्रीदेशिकेन्द्रकरुणालयदृष्टिदृष्टः ॥ १ ॥ संपूर्णवैदिकविधानसुतोषितेशो गार्हस्थ्यभोगविधिदोषविवेकभूमिः । त्यक्तैषणो विगतमानमदादि शेते श्रीदे० ॥ २ ॥ मायामयत्वमखिलेषु सदात्मकत्वं निर्णीय वेदवचनाद्गुरुवाक्यतोऽपि । त्यक्तक्रियोऽहिरिव दिष्टभुगेव शेते श्रीदे० ॥ ३ ॥ धृत्वा वपुर्गुरुवरस्य निधाय पूर्णं बोधं हृदि क्व नु गतं निजकर्म पूर्वम् । गच्छत्वनेन किमिति स्वसुखेन शेते श्रीदे० ॥ ४ ॥ स्वाप्नो गुरुर्निजसुखोन्नतिबोधहेतुरीशोऽपि भाति निजरूपतयैव नित्यम् । नेहेति वेदवचनानि निषिध्य शेते श्रीदे० ॥ ५ ॥ सङ्गाद्भयं परिमृशन्जनताविरुद्धं कर्माचरन् विततजङ्गलकोणकेषु । शून्यालये कलशकारगृहेऽपि शेते श्रीदे० ॥ ६ ॥ त्रैलोक्यराज्यमथवा कमलासनस्य विष्णोः शिवस्य विभवं च तृणाय मत्वा । कौपीनमप्यधिकमित्यहह प्रशेते श्रीदे० ॥ ७ ॥ आत्मानुसंधिगलिताखिलवासनो यो विस्मृत्य विश्वमखिलं सशरीरमेतत् । खादन् हसन् भ्रमणमाकलयंश्च शेते श्रीदे० ॥ ८ ॥ बाहूपधानविनिषण्णशिराः शिलायां मञ्चे तटे सुसरितो रविचन्द्रदीपे । आलिङ्गितस्वधिषणावनितस्तु शेते श्रीदे० ॥ ९ ॥ चिन्मुद्रयाल्पकर…वेतचित्तवृत्तिः स्थित्या स्वया प्रकटयन्नधिकारिवर्गे । ब्राह्मीं स्थितिं बहुलपुण्यचयेन शेते श्रीदे० ॥ १० ॥ द्रोणा-



चले स्वकृतपुण्यमयेन केन भाग्योदयेन गुरुणा निजबोध-

दाने। संदत्तचिन्मयसुखावचनीयनिद्रः कृष्णो मुनिः स्वपिति देशिकदृष्टिहृष्टः ॥ ११ ॥ इदं हि जनुषः फलं जननमृत्युविच्छेदकृत् स्वकीयसुखचिद्धने यदिह लब्धविश्रान्तिता। ततोऽपि च महत्फलं यदधिकारिवर्गे निजां दधात्यतुलसंविदं तत इदं गुरोराश्रयः ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचितं शयनस्तोत्रं संपूर्णम्।

## ३८२ भ्रष्टाष्टकम्।

श्रीगणेशाय नमः ॥ विश्वं सत्यं मनुते तनुते कर्माणि लोकसंसिद्ध्यै। वाचा मिथ्या जगदिति जल्पति नो वेत्ति यो महाभ्रष्टः ॥ १ ॥ ब्रह्मैवेदं जल्पति दोषादोषोत्तमाधमान्पश्यन्। नग्नो भूत्वा विचरत्यवधूतत्वं प्रदर्शय भ्रष्टः ॥ २ ॥ कृत्याकृत्यमशेषं त्यक्तुमशक्तं श्रुतेरगोचरताम्। आत्मनि जल्पन्हास्यास्पदतामित्येष मानवो भ्रष्टः ॥ ३ ॥ पाशाष्टकसंकष्टश्लिष्टतनुर्मृष्टभोजनप्रीतः। शिष्टोऽहं मन्वानः कष्टमहो दुष्टमानवो भ्रष्टः ॥ ४ ॥ आत्मैवेदं जल्पँल्लोकोक्तीरसहमानमेधावी। स्तुतिवाक्यानि श्रोतुं धावंस्तुष्टो न किं भवेद्भ्रष्टः ॥ ५ ॥ यस्मिन्स्वस्य च निष्ठा तद्धर्मिष्ठानशिष्टगणनायाम्। कुर्वन्कर्म हतोऽयं यद्यपि शिष्टो न किं भवेद्भ्रष्टः ॥ ६ ॥ सर्वत्रैवं मोक्षत्वं मन्वानः स्वात्मनि प्रमो

शंभौ। रोदिति हा किं कृतमिति किं वा भोक्तव्यमित्यसौ भ्रष्टः ॥ ७ ॥ चिन्मात्रं स्वात्मानं देहं मन्वान एजते यमतः। सर्वात्मानमबुद्ध्वा ब्रह्मापि स्यादहो किल भ्रष्टः ॥ ८ ॥ भ्रष्टाष्टकमेतद्यत्प्रविचारयतीह मानवो धन्यः। मान्यः स्याल्लोकेषु भ्रष्टत्वं वेत्ति निजचारित्रात् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचितं भ्रष्टाष्टकं संपूर्णम्।

## ३८३ शिष्टस्तोत्रम्।

श्रीगणेशाय नमः ॥ भज विश्रान्तिं त्यज रे भ्रांतिं निश्चिनु शैवं निजरूपम्। हेयादेयातीतं सच्चित्सुखरूपस्त्वं भव शिष्टः ॥ १ ॥ दृश्यमशेषं त्वत्तो भिन्नं मा भैषीः किल भूमानम्। विद्धयात्मानं वेदनरूपं वेदशिरस्थं भव शिष्टः ॥ २ ॥ तृणवत्त्यज धनवनितापुत्रान् लोकं शोकं भेदभवम्। इदमहमित्थं कलनां हित्वा पूर्णानन्दो भव शिष्टः ॥३॥ कृत्याकृत्ये त्यज रे दूरे विधिगोचरतां मा गास्त्वम्। मानागोचररूपं ज्ञात्वा किं त्वं कर्ता भव शिष्टः ॥ ४ ॥ लोकविलक्षणचरितो भूया लोकातीतं पदमिच्छन्। पावय सकलपृथिवीमेनामात्मारामो भव शिष्टः ॥ ५ ॥ निन्दास्तोत्रे मानामानौ समदृष्टेस्ते किं कुरुताम्। कुरुतां लोकः कामं स्वेष्टं का ते हानिर्भव शिष्टः ॥६॥ शैवः शाक्तो गणप-

तिभक्तो वैष्णवसौरावितिनाना । अज्ञात्वायं जाता लोके स त्वं शंभुर्भव शिष्टः ॥७॥ जलबुद्बुदवज्जगदिदमखिलं पश्य-न्नात्मनि तिष्ठ त्वम् । को वा मोहः शोकः को वा द्वैतदृश-स्तव भव शिष्टः ॥ ८ ॥ अजपामन्त्रं देशिकवचनाल्लब्ध्वा देवं स्वात्मानम् । ज्ञात्वा सहजावस्थायां वस भावातीतो भव शिष्टः ॥ ९ ॥ शिष्टस्तोत्रं ब्रह्मिष्ठानां तुष्टिकरं स्यादिति कलये । उक्तावस्था सर्वेषां स्याद्गुरुकृपया किल बुद्धिमताम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णान-न्दसरस्वतीविरचितं शिष्टस्तोत्रं संपूर्णम् ।

---

## ३८४ प्रश्नोत्तरमालिका ।

श्रीगणेशाय नमः ॥ किं साध्यं मनुजानां बुद्धेः शुद्धत्व-मेव बहुयत्नैः । किं त्याज्यं खलसङ्गो देहाहंकारममते च ॥ १ ॥ किं तीर्थं वेदशिरः किं देयं पात्र आत्मसंबोधः । किं भोग्यं सहजसुखं किं वाऽभोग्यं परेच्छया लब्धम् ॥२॥ किं कष्टं यत्सत्यं किं वा सहजं परं ब्रह्म । कर्तव्यं किं सर्वैरा-त्माऽकर्तेति बुद्धिरेव सदा ॥३॥ आशां तु संत्यक्तुं किमशक्यं ब्रह्म निजरूपम् । किं वा दुःखमबोधः किं सुखमात्मावबो-धतः शान्तिः ॥ ४ ॥ विषमं विषं तु किं वा यत्किंचित्क-स्यचिद्वा चिन्ता । परमामृतं तु किं वा श्रीगुरुवाक्यं

कृपानिविडम् ॥ ५ ॥ को गुरुरधिमन्तव्यो देशिकशिष्यत्व-बाधबोधयिता। अध्येतव्यं किं खलु यावद्वेदार्थदर्शकः प्रणवः ॥ ६ ॥ कोऽनध्यायोऽध्ययने यावत्सद्गुरुमलब्धवांस्तावत्। कः प्रणवार्थस्तूष्णीं किं ध्येयं ध्येयमात्रसंत्यागः ॥ ७ ॥ कः शूरो हृज्ज्ञात्वान्मायाभेत्ता स्वयंप्रकाशज्ञः। किं चिन्त्यं मनुजैरिह चिन्ताबीजं विचित्रजगत इति ॥ ८ ॥ किं पेशलं हि लोके विद्वच्चरितं विरुद्धशास्त्रमपि। सद्भक्त्या किं कार्यं सज्जनपदरजसि भूयसः स्नानम् ॥ ९ ॥ आबाल्यात्किं कार्यं निरहंकारेण साधुपदसेवा। भाग्योदयस्तु को वा गुरुवचनादद्वितीयपदलाभः ॥ १० ॥ मुक्तैः किं कर्तव्यं प्रारब्धाधीनसदसताभोगः। पुंसां किं सर्वस्वं सच्चित्सुखनामिका गुरोर्मूर्तिः ॥ ११ ॥ का कामधेनुरनघा वेदे देवे तथा गुरौ श्रद्धा। को वैद्यो रोगहरो ब्रह्मिष्ठः सदयहृदयगुरुराजः ॥१२॥ कः पुत्रः स्वोद्धर्ता ज्ञातस्त्वात्मैव चिन्मयः पुरुषः। कः सुखशायी लोके संसृतिमिथ्यात्वपक्वमतितृप्तः ॥ १३ ॥ किं त्याज्यं साधुकृते चरिते कुत्सितमतिस्तु साधुजनैः। कः शत्रुर्दुःखकरो गुरुवचने संशयो महाशत्रुः ॥ १४ ॥ कः शोभते नितान्तं निस्पृहताशालिनिजबोधः। किं याच्यं सद्गुरुषु स्वोद्धारः सर्वदैन्यपरिहारः ॥ १५ ॥ को वा मान्यः सिद्धो बालोऽपि ब्रह्मभावमतिमान्यः। का वा दरिद्रसीमा स्व-



प्रियसिद्ध्यहंकृतिः प्रोक्ता ॥ १६ ॥ किं सोढव्यं विदुषा खल-

वचनं विषविनिर्मितं कठिनम् । स्थेयं कथं खलेषु स्वीयां निष्ठां दृढं समाच्छाद्य ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वती-
विरचिता प्रश्नोत्तरमालिका संपूर्णा ।

## ३८५ निगमसारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शब्दं स्पर्शं च रूपं रसमथ सकलं गन्धमप्यङ्ग येन त्वं जानीषे स शुंभस्त्रिपुरसुखलवान् पश्यति स्वप्रदीप्त्या । एकोऽप्यानन्त्यमागान्निजपरममहामाययेक्षोत्थया यः स्वातन्त्र्यान्नो जहाति स्वकपरशिवतां स त्वमेवक्षुं गीतः ॥ १ ॥ अन्नं प्राणो मनो धीरहमिति च वपुः पञ्चकानुप्रविष्टः साक्षी सच्चित्सुखाब्धिः सकलनरनरीधीगुहासु प्रदीपः । स्वाराज्यं यस्य लाभादिति वदति सदा याजुषी श्रौतवाणी सोऽहं ब्रह्मास्म्यखण्डो गुरुवचनबलात्स्वप्रथामात्ररूपः ॥ २ ॥ सत्तासामान्यरूपा गलितनिजपरा देवता या पराख्या सृष्ट्वाकाशादिभूतान्यनु निजवपुषा तत्र जृम्भामवाप । व्यामिश्रीकृत्य तानि त्रियमथ पुरुषं बुध्यते रामगीता सैव त्वं कार्यहेतू कलय भव सखे सर्वबोधैकभूमिः ॥ ३ ॥ योऽश्नीते परिकल्पितान्स्वकरणैरर्थान्बहिः पूरुषो विश्वाख्यः स्वपने मनोजनियमाद्भुक्तं स तेजोमयः । तत्सर्वं विनिपीय सुप्तिसमये प्राज्ञोऽभवत्तत्त्रयं मायां तद्वश-

माह चाङ्गिरसगीर्भूयोऽयमात्मा बृहत् ॥ ४ ॥ स्वाभाविकी-भिर्निजशक्तिभिर्यो क्रीडां विधत्ते शिवयुक्क्षमन्ताम् । सृष्टिं विधायापि गतान्यरूपा सान्तत्तराहं परिमीयपादा ॥ ५ ॥ भज शिवं सहजं सततं त्यज प्रखरदुःखमयं सकलं जगत् । कलनया रहितो भव सन्मते किन्तु तया ततयासि च निष्कलः ॥ ६ ॥ निष्कलब्रह्मविद्याया माहात्म्यं को नु वेत्त्यहो । कृष्णानन्दस्तु तद्रूपो वेत्ति श्रीगुरुपादुकः ॥ ७ ॥ निगमागमसारसंग्रहं कलयेद्यो गुरुपादभक्तिमान् । लभते स तु निर्वृतिं परां कलनाशून्यपदे स्वसंविदि ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वती-विरचितं निगमागमसारसंग्रहस्तोत्रं संपूर्णम् ।

---

## ३८६ तत्त्वमसिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मनःकल्पितमेवेदं जगज्जीवेशकल्पनम् । तदेकं संपरित्यज्य निर्वाणमनुभूयताम् ॥ १ ॥ सति सर्वस्मिन्सर्वज्ञत्वं सत्यल्पे वा स्वल्पज्ञत्वम् । सर्वाल्पस्याभावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ २ ॥ सत्यां व्यष्टौ जीवोपाधिः सति सर्वस्मिन्नीशोपाधिः । व्यष्टिसमष्ट्योर्ज्ञाने कस्माज्जीवेशौ वा तत्त्वमसि ॥ ३ ॥ सत्यज्ञाने जीवत्वोक्तिर्मायासत्त्वे त्वीशत्वोक्तिः । मायाविद्याबाधे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ४ ॥ सति वा कार्ये कारणतोक्तिः कारणसत्त्वे

कार्यत्वोक्तिः । कार्याकारणभावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ५ ॥ सति भोक्तव्ये भोक्ताऽयं स्याद्दातव्ये वा दाता स स्यात् । भोग्यो विध्यो भावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ६ ॥ सत्यज्ञाने गुरुणा बाध्यं सति वा द्वैते शिष्यैर्भाव्यम् । अद्वैतात्मनि गुरुशिष्यौ कौ त्यज रे भेदं तत्त्वमसि ॥ ७ ॥ सत्यद्वैते प्राप्तौ यत्नः सति वा द्वैते बाधे यत्नः । द्वैताद्वैते ते संकल्पस्त्यज रे शेषं तत्त्वमसि ॥ ८ ॥ साक्षित्वं यदि दृश्यं सत्यं दृश्यासत्त्वे साक्षी त्वं कः । उभयाभावे दर्शनमपि किं तूष्णीं भव रे तत्त्वमसि ॥ ९ ॥ प्रज्ञानामलविग्रहनिजसुखजृम्भणमेतन्नेतरथा । तस्मान्नैवादेयं हेयं तूष्णीं भव रे तत्त्वमसि ॥ १० ॥ ब्रह्मैवाहं ब्रह्मैव त्वं ब्रह्मैवैकं नान्यत्किञ्चित् । निश्चित्येत्थं निजसमसुखभुक्तूष्णीं भव रे तत्त्वमसि ॥ ११ ॥ एतत्स्तोत्रं प्रपठता विचार्य गुरुवाक्यतः । प्राप्यते ब्रह्मपदवी सत्यं सत्यं न संशयः ॥१२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीविरचितं तत्त्वमसिस्तोत्रं संपूर्णम् ।

---

## ३८७ परमेश्वरस्तुतिसारः ।

श्रीगणेशाय नमः ॥ त्वमेकः शुद्धोऽसि त्वयि निगमबाह्यामलमयं प्रपञ्चं पश्यन्ति भ्रमपरवशाः पापनिरताः । बहिस्तेभ्यः कृत्वा स्वपदशरणं मानय विभो गजेन्द्रे दृष्टं ते

शरणद वदान्यं स्वपददम् ॥ १ ॥ न सृष्टेस्ते हानिर्यदि हि कृपयातोऽवसि च मां त्वयाऽनेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे । अतो मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां न रिक्तां मे याच्ञां स्वजनरत कर्तुं भव हरे ॥ २ ॥ कदाऽहं भोः स्वामिन्नियतमनसा त्वां हृदि भजन्नभद्रे संसारे ह्यनवरतदुःखेऽतिविरसः । लभेयं तां शान्तिं परममुनिभिर्या ह्यधिगता दयां कृत्वा मे त्वं वितर परशान्तिं भवहर ॥ ३ ॥ विधाता चेद्विश्वं सृजति सृजतां मे शुभकृतिं विधुश्चेत्पाता माऽवतु जनिमृतेर्दुःखजलधेः । हरः संहर्ता संहरतु मम शोकं सजनकं यथाहं मुक्तः स्यां किमपि तु यथा ते विदधताम् ॥ ४ ॥ अहं ब्रह्मानन्दस्त्वमपि च तदाख्यः सुविदितस्ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुतिदृशा । तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं स्वमायां संवार्य प्रभव मम भेदं निरसितुम् ॥ ५ ॥ कदाऽहं हे स्वामिन् जनिमृतिमयं दुःखनिविडं भवं हित्वा सत्येऽनवरतसुखे स्वात्मवपुषि । रमे तस्मिन्नित्यं निखिलमुनयो ब्रह्मरसिका रमन्ते यस्मिँस्ते कृतसकलकृत्या यतिवराः ॥ ६ ॥ पठन्त्येके शास्त्रं निगममपरे तत्परतया यजन्त्यन्ये त्वां वै ददति च पदार्थांस्तव हितान् । अहं तु स्वामिँस्ते शरणमगमं संसृतिभयाद्यथा ते प्रीतिः स्याद्धितकर तथा त्वं कुरु विभो ॥ ७ ॥ अहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः

श्रुतेः सिद्धाऽद्वैतः कथमपि न भिन्नोऽस्मि विधुतः । इति ज्ञाते तत्त्वे भवति च परः संसृतिलयादतस्तत्त्वज्ञानं मयि विघटयेस्त्वं हि कृपया ॥ ८ ॥ अनादौ संसारे जनिमृतिमये दुःखितमना मुमुक्षुः सन्कश्चिद्व्रजति हि गुरुं ज्ञानपरमम् । ततो ज्ञात्वा यं वै तुदति न पुनः क्लेशनिवहैर्भजेऽहं तं देवं भवति च परो यस्य भजनात् ॥ ९ ॥ विवेको वैराग्यं न च शमदमाद्याः षडपरे मुमुक्षा मे नास्ति प्रभवति कथं ज्ञानममलम् । अतः संसाराब्धेस्तरणसरणिं मामुपदिशन् स्वबुद्धिं श्रौतीं मे वितर भगवंस्त्वं हि कृपया ॥ १० ॥ कदाहं भो स्वामिन्निगममतिवेद्यं शिवमयं चिदानन्दं नित्यं श्रुतिहृतपरिच्छेदनिवहम् । त्वमर्थाभिन्नं त्वामभिरम इहात्मन्यविरतं मनीषामेवं मे सफलय वदान्य स्वकृपया ॥११॥ यदर्थं सर्वं वै प्रियमसुधनादि प्रभवति स्वयं नान्यार्थो हि प्रिय इति च वेदे प्रविदितम् । स आत्मा सर्वेषां जनिमृतिमतां वेदगदितस्ततोऽहं तं वेद्यं सततममलं यामि शरणम् ॥ १२ ॥ मया त्यक्तं सर्वं कथमपि भवेत्स्वात्मनि मतिस्त्वदीया माया मां प्रति तु विपरीतं कृतवती । ततोऽहं किं कुर्यां न हि मम मतिः क्वापि चरति दयां कृत्वा नाथ स्वपदशरणं देहि शिवदम् ॥ १३ ॥ नगा दैत्याः कीशा भवजलधिपारं हि गमितास्त्वया चान्ये स्वामिन्किमिति समयेऽस्मिन्छयितवान् । न हेलां त्वं कुर्यास्त्वयि निहित-

सर्वं मयि विभो न हि त्वाहं हित्वा कमपि शरणं चान्यमगमम् ॥ १४ ॥ अनन्ताया विज्ञानगुणजलधेस्तेऽन्तमगमन्नतः पारं यायात्तव गुणगणानां कथमयम् । गृणन्यावद्धित्वा जनिमृतिहरं याति परमां गतिं योगिप्राप्यामिति मनसि बुद्ध्वाऽहमनवम् ॥ १५ ॥

इति श्रीमद्ब्रह्मानन्दविरचितं परमेश्वरस्तुतिसारस्तोत्रं सं० ।

---

## ३८८ भगवच्छरणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ सच्चिदानन्दरूपाय भक्तानुग्रहकारिणे । मायानिर्मितविश्वाय महेशाय नमो नमः ॥ १ ॥ रोगा हरन्ति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहन्ति चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥ २ ॥ देहो विनश्यति सदा परिणामशीलश्चित्तं च खिद्यति सदा विषयानुरागि । बुद्धिः सदा हि रमते विषयेषु नान्तस्तस्मा० ॥ ३ ॥ आयुर्विनश्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला नवयौवनश्रीः । वृद्धा प्रधावति यथा मृगराजपत्नी तस्मा० ॥४॥ आयाद्व्ययो मम भवत्यधिको विनीतेः कामादयो हि बलिनो निबलाः शमाद्याः । मृत्युर्यदा तुदति मां बत किं वदेयं तस्मा० ॥५॥ तप्तं तपो नहि कदाऽपि मयेह तन्वा वाण्या तथा नहि कदापि तपश्च तप्तम् । मिथ्याभिभाषणपरेण न

मानसं हि तस्मा० ॥ ६ ॥ स्तब्धं मनो मम सदा नहि याति सौम्यं चक्षुश्च मे न तव पश्यति विश्वरूपम् । वाचा तथैव न वदेन्मम सौम्यवाणीं तस्मा० ॥ ७ ॥ सत्त्वं न मे मनसि याति रजस्तमोभ्यां विद्धे तदा कथमहो शुभकर्म-वार्ता । साक्षात्परं परतया सुखसाधनं तत्तस्मा० ॥ ८ ॥ पूजा कृता नहि कदापि मया त्वदीया मन्त्रं त्वदीयमपि मे न जपेद्रसज्ञा । चित्तं न मे स्मरति ते चरणौ ह्यवाप्य तस्मा० ॥९॥ यज्ञो न मेऽस्ति हुतिदानदयादियुक्तो ज्ञानस्य साधनगणो न विवेकमुख्यः । ज्ञानं क्व साधनगणेन विना क्व मोक्षस्तस्मा० ॥ १० ॥ सत्संगतिर्हि विदिता तव भक्ति-हेतुः साप्यद्य नास्ति बत पण्डितमानिनो मे । तामन्तरेण न हि सा क्व च बोधवार्ता तस्मा० ॥ ११ ॥ दृष्टिर्न भूत-विषया समताभिधाना वैषम्यमेव तदियं विषयीकरोति । शान्तिः कुतो मम भवेत्समता न चेत्स्यात्तस्मा० ॥ १२ ॥ मैत्री समेषु न च मेऽस्ति कदाऽपि नाथ दीने तथा न करुणा मुदिता च पुण्ये । पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मा० ॥ १३ ॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नान्तर्मुखं भवति तामविहाय तस्य । क्वान्तर्मुखत्वमपहाय सुखस्य वार्ता तस्मा० ॥ १४ ॥ त्यक्तं गृहाद्यपि मया भवतापशान्त्यै नासीदसौ हृतहृदो मम मायया ते । सा चाधुना किमु विधास्यति नेति जाने तस्मा ॥ १५ ॥ प्राप्ता

धनं गृहकुटुम्बगजाश्वदारा राज्यं यदैहिकयथेन्द्रपुरश्च नाथ। सर्वं विनश्वरमिदं न फलाय कस्मै तस्मा० ॥ १६ ॥ प्राणानिरुद्ध्य विधिना न कृतो हि योगो योगं विनास्ति मनसः स्थिरता कुतो मे। तां वै विना मम न चेतसि शान्तिवार्ता तस्मा० ॥ १७ ॥ ज्ञानं यथा मम भवेत्कृपया गुरूणां सेवां तथा न विधिनाकरवं हि तेषाम्। सेवापि साधनतया विदितास्ति वित्तेस्तस्मा० ॥ १८ ॥ तीर्थादि-सेवनमहो विधिना हि नाथ नाकारि येन मनसो मम शोधनं स्यात्। शुद्धिं विना न मनसोऽवगमापवर्गौ तस्मा० ॥१९॥ वेदान्तशीलनमपि प्रमितिं करोति ब्रह्मात्मनः प्रमितिसाधन-संयुतस्य। नैवास्ति साधनलवो मयि नाथ तस्यास्तस्मा० ॥ २० ॥ गोविन्द शंकर हरे गिरिजेश मेश शंभो जनार्दन गिरीश मुकुन्द साम्ब। नान्या गतिर्मम कथंचन वां विहाय तस्मात्प्रभू मम गतिः कृपया विधेया ॥ २१ ॥ एतत्स्तवं भगवदाश्रयणाभिधानं ये मानवाः प्रतिदिनं प्रणताः पठन्ति। ते मानवा भवरतिं परिभूय शान्तिं गच्छन्ति किं च पर-मात्मनि भक्तिमद्धा ॥ २२ ॥

इति श्रीमद्ब्रह्मानन्दविरचितं भगवच्छरणस्तोत्रं संपूर्णम्।

---

# नवग्रहस्तोत्राणि ।

## ३८९ आदित्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नवग्रहाणां सर्वेषां सूर्यादीनां पृथक् पृथक् । पीडा च दुःसहा राजञ्जायते सततं नृणाम् ॥१॥ पीडानाशाय राजेन्द्र नामानि शृणु भास्वतः । सूर्यादीनां च सर्वेषां पीडा नश्यति शृण्वतः ॥ २ ॥ आदित्यः सविता सूर्यः पूषार्कः शीघ्रगो रविः । भगस्त्वष्टार्यमा हंसो हेलिस्तेजोनिधिर्हरिः ॥ ३ ॥ दिननाथो दिनकरः सप्तसप्तिः प्रभाकरः । विभावसुर्वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ४ ॥ हरिदश्वः कालवक्त्रः कर्मसाक्षी जगत्पतिः । पद्मिनीबोधको भानुर्भास्करः करुणाकरः ॥ ५ ॥ द्वादशात्मा विश्वकर्मा लोहिताङ्गस्तमोनुदः । जगन्नाथोऽरविन्दाक्षः कालात्मा कश्यपात्मजः ॥ ६ ॥ भूताश्रयो ग्रहपतिः सर्वलोकनमस्कृतः । जपाकुसुमसंकाशो भास्वानदितिनन्दनः ॥७॥ ध्वान्तेभसिंहः सर्वात्मा लोकनेत्रो विकर्तनः । मार्तण्डो मिहिरः सूरस्तपनो लोकतापनः ॥ ८ ॥ जगत्कर्ता जगत्साक्षी शनैश्चरपिता जयः । सहस्ररश्मिस्तरणिर्भगवान्भक्तवत्सलः ॥ ९ ॥ विवस्वानादिदेवश्च देवदेवो दिवाकरः । धन्वन्तरिर्व्याधिहर्ता दद्रुकुष्ठविनाशनः ॥ १० ॥ चराचरात्मा मैत्रेयोऽमितो विष्णुर्विकर्तनः । कोकशोकापहर्ता च कमलाकर आत्मभूः ॥ ११ ॥

नारायणो महादेवो रुद्रः पुरुष ईश्वरः। जीवात्मा परमात्मा च सूक्ष्मात्मा सर्वतोमुखः॥ १२ ॥ इन्द्रोऽनलो यमश्चैव नैर्ऋतो वरुणोऽनिलः। श्रीद ईशान इन्दुश्च भौमः सौम्यो गुरुः कविः॥ १३ ॥ शौरिर्विधुन्तुदः केतुः कालः कालात्मको विभुः। सर्वदेवमयो देवः कृष्णः कामप्रदायकः॥ १४ ॥ य एतैर्नामभिर्मर्त्यो भक्त्या स्तौति दिवाकरम्। सर्वपापविनिर्मुक्तः सर्वरोगविवर्जितः॥ १५ ॥ पुत्रवान्धनवान् श्रीमाञ्जायते स न संशयः। रविवारे पठेद्यस्तु नामान्येतानि भास्वतः॥ १६ ॥ पीडाशान्तिर्भवेत्तस्य ग्रहाणां च विशेषतः। सद्यः सुखमवाप्नोति चायुर्दीर्घं च नीरुजम्॥१७॥

इति श्रीभविष्यपुराणे आदित्यस्तोत्रं संपूर्णम्।

---

## ३९० चन्द्राष्टाविंशतिनामस्तोत्रम्।

श्रीगणेशाय नमः॥ चन्द्रस्य शृणु नामानि शुभदानि महीपते। यानि श्रुत्वा नरो दुःखान्मुच्यते नात्र संशयः॥१॥ सुधाकरश्च सोमश्च ग्लौरब्जः कुमुदप्रियः। लोकप्रियः शुभ्रभानुश्चन्द्रमा रोहिणीपतिः॥ २ ॥ शशी हिमकरो राजा द्विजराजो निशाकरः। आत्रेय इन्दुः शीतांशुरोषधीशः कलानिधिः॥ ३ ॥ जैवातृको रमाभ्राता क्षीरोदार्णवसंभवः। नक्षत्रनायकः शंभुशिरश्चूडामणिर्विभुः॥ ४ ॥ तापहर्ता नभोदीपो नामान्येतानि यः पठेत्। प्रत्यहं भक्तिसंयुक्तस्तस्य

पीडा विनश्यति ॥ ५ ॥ ग्रहादीनां च सर्वेषां भवेच्चन्द्रबलं सदा ॥ ६ ॥

इति श्रीचन्द्राष्टाविंशतिनामस्तोत्रं संपूर्णम् ।

## ३९१ अङ्गारकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अङ्गारकः शक्तिधरो लोहिताङ्गो धरासुतः । कुमारो मङ्गलो भौमो महाकायो धनप्रदः ॥१॥ ऋणहर्ता दृष्टिकर्ता रोगकृद्रोगनाशनः । विद्युत्प्रभो व्रणकरः कामदो धनहृत्कुजः ॥ २ ॥ सामगानप्रियो रक्तवस्त्रो रक्तायतेक्षणः । लोहितो रक्तवर्णश्च सर्वकर्मावबोधकः ॥ ३ ॥ रक्तमाल्यधरो हेमकुण्डली ग्रहनायकः । नामान्येतानि भौमस्य यः पठेत्सततं नरः ॥ ४ ॥ ऋणं तस्य च दौर्भाग्यं दारिद्र्यं च विनश्यति । धनं प्राप्नोति विपुलं स्त्रियं चैव मनोरमाम् ॥ ५ ॥ वंशोद्योतकरं पुत्रं लभते नात्र संशयः । योऽर्चयेदह्नि भौमस्य मङ्गलं बहुपुष्पकैः ॥ ६ ॥ सर्वा नश्यति पीडा च तस्य ग्रहकृता ध्रुवम् ॥ ७ ॥

इति श्रीस्कन्दपुराणे अङ्गारकस्तोत्रं संपूर्णम् ।

## ३९२ ऋणमोचकमङ्गलस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मङ्गलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः । स्थिरासनो महाकायः सर्वकर्मविरोधकः ॥ १ ॥ लोहितो

लोहिताक्षश्च सामगानां कृपाकरः । धरात्मजः कुजो भौमो भूतिदो भूमिनन्दनः ॥ २ ॥ अङ्गारको यमश्चैव सर्वरोगापहारकः । वृष्टेः कर्ताऽपहर्ता च सर्वकामफलप्रदः ॥ ३ ॥ एतानि कुजनामानि नित्यं यः श्रद्धया पठेत् । ऋणं न जायते तस्य धनं शीघ्रमवाप्नुयात् ॥ ४ ॥ धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं च मङ्गलं प्रणमाम्यहम् ॥ ५ ॥ स्तोत्रमङ्गारकस्यैतत्पठनीयं सदा नृभिः । न तेषां भौमजा पीडा स्वल्पापि भवति क्वचित् ॥ ६ ॥ अङ्गारक महाभाग भगवन्भक्तवत्सल । त्वां नमामि ममाशेषमृणमाशु विनाशय ॥ ७ ॥ ऋणरोगादिदारिद्र्यं ये चान्ये ह्यपमृत्यवः । भयक्लेशमनस्तापा नश्यंतु मम सर्वदा ॥ ८ ॥ अतिवक्र दुराराध्य भोगमुक्तजितात्मनः । तुष्टो ददासि साम्राज्यं रुष्टो हरसि तत्क्षणात् ॥ ९ ॥ विरिञ्चिशक्रविष्णूनां मनुष्याणां तु का कथा । तेन त्वं सर्वसत्त्वेन ग्रहराजो महाबलः ॥ १० ॥ पुत्रान्देहि धनं देहि त्वामस्मि शरणं गतः । ऋणदारिद्र्यदुःखेन शत्रूणां च भयात्ततः ॥ ११ ॥ एभिर्द्वादशभिः श्लोकैर्यः स्तौति च धरासुतम् । महतीं श्रियमाप्नोति ह्यपरो धनदो युवा ॥ १२ ॥

इति श्रीस्कन्दपुराणे भार्गवप्रोक्तं ऋणमोचकमङ्गलस्तोत्रं संपूर्णम् ।

## ३९३ बुधपञ्चविंशतिनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ बुधो बुद्धिमतां श्रेष्ठो बुद्धिदाता धनप्रदः । प्रियङ्गुकलिकाश्यामः कञ्जनेत्रो मनोहरः ॥ १ ॥ ग्रहोपमो रौहिणेयो नक्षत्रेशो दयाकरः । विरुद्धकार्यहन्ता च सौम्यो बुद्धिविवर्धनः ॥ २ ॥ चन्द्रात्मजो विष्णुरूपी ज्ञानी ज्ञो ज्ञानिनायकः । ग्रहपीडाहरो दारपुत्रधान्यपशुप्रदः ॥३॥ लोकप्रियः सौम्यमूर्तिर्गुणदो गुणिवत्सलः । पञ्चविंशतिनामानि बुधस्यैतानि यः पठेत् ॥ ४ ॥ स्मृत्वा बुधं सदा तस्य पीडा सर्वा विनश्यति । तद्दिने वा पठेद्यस्तु लभते स मनोगतम् ॥ ५ ॥

इति श्रीपद्मपुराणे बुधपञ्चविंशतिनामस्तोत्रं समाप्तम् ।

---

## ३९४ बृहस्पतिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ गुरुर्बृहस्पतिर्जीवः सुराचार्यो विदां वरः । वागीशो धिषणो दीर्घश्मश्रुः पीताम्बरो युवा ॥ १ ॥ सुधादृष्टिर्ग्रहाधीशो ग्रहपीडापहारकः । दयाकरः सौम्यमूर्तिः सुरार्च्यः कुङ्मद्युतिः ॥ २ ॥ लोकपूज्यो लोकगुरुर्नीतिज्ञो नीतिकारकः । तारापतिश्चाङ्गिरसो वेदवैद्यपितामहः ॥३॥ भक्त्या बृहस्पतिं स्मृत्वा नामान्येतानि यः पठेत् । अरोगी बलवान् श्रीमान्पुत्रवान्स भवेन्नरः ॥ ४ ॥ जीवेद्वर्षशतं मर्त्यो पापं नश्यति नश्यति । यः पूजयेद्गुरुदिने पीतगन्धा-

क्षताम्बरैः ॥ ५ ॥ पुष्पदीपोपहारैश्च पूजयित्वा बृहस्पतिम् । ब्राह्मणान्भोजयित्वा च पीडाशान्तिर्भवेद्गुरोः ॥ ६ ॥

इति श्रीस्कन्दपुराणे बृहस्पतिस्तोत्रं संपूर्णम् ।

## ३९५ शुक्रस्तोत्रम् ।

श्रीगणेशाय नमः ॥ शुक्रः काव्यः शुक्ररेता शुक्लाम्बरधरः सुधीः । हिमाभः कुन्दधवलः शुभ्रांशुः शुक्लभूषणः ॥ १ ॥ नीतिज्ञो नीतिकृन्नीतिमार्गगामी ग्रहाधिपः । उशना वेदवेदाङ्गपारगः कविरात्मवित् ॥ २ ॥ भार्गवः करुणासिन्धुर्ज्ञानगम्यः सुतप्रदः । शुक्रस्यैतानि नामानि शुक्रं स्मृत्वा तु यः पठेत् ॥ ३ ॥ आयुर्धनं सुखं पुत्रं लक्ष्मीं वसतिमुत्तमाम् । विद्यां चैव स्वयं तस्मै शुक्रस्तुष्टो ददाति च ॥ ४ ॥

इति श्रीस्कन्दपुराणे शुक्रस्तोत्रं संपूर्णम् ।

## ३९६ शनैश्चरस्तवराजः ।

श्रीगणेशाय नमः ॥ नारद उवाच । ध्यात्वा गणपतिं राजा धर्मराजो युधिष्ठिरः । धीरः शनैश्चरस्येमं चकार स्तवमुत्तमम् ॥ १ ॥ शिरो मे भास्करिः पातु भालं छायासुतोऽवतु । कोटराक्षो दृशौ पातु शिखिकण्ठनिभः श्रुती ॥ २ ॥ घ्राणं मे भीषणः पातु मुखं वलिमुखोऽवतु । स्कन्धौ संवर्तकः पातु भुजौ मे भयदोऽवतु ॥ ३ ॥ सौरिर्मे

हृदयं पातु नाभिं शनैश्चरोऽवतु । ग्रहराजः कटिं पातु सर्वतो रविनन्दनः ॥ ४ ॥ पादौ मन्दगतिः पातु कृष्णः पात्वखिलं वपुः । रक्षामेतां पठेन्नित्यं सौरेर्नामबलैर्युताम् ॥ ५ ॥ सुखी पुत्री चिरायुश्च स भवेन्नात्र संशयः । शौरिः शनैश्चरः कृष्णो नीलोत्पलनिभः शनिः ॥ ६ ॥ शुष्कोदरो विशालाक्षो दुर्निरीक्ष्यो विभीषणः । शिखिकण्ठनिभो नीलश्छायाहृदयनन्दनः ॥ ७ ॥ कालदृष्टिः कोटराक्षः स्थूलरोमावलीमुखः । दीर्घो निर्मांसगात्रस्तु शुष्को घोरो भयानकः ॥ ८ ॥ नीलांशुः क्रोधनो रौद्रो दीर्घश्मश्रुर्जटाधरः । मन्दो मन्दगतिः खञ्जो तृप्तः संवर्तको यमः ॥ ९॥ ग्रहराजः कराली च सूर्यपुत्रो रविः शशी । कुजो बुधो गुरुः काव्यो भानुजः सिंहिकासुतः ॥ १० ॥ केतुर्देवपतिर्बाहुः कृतान्तो नैर्ऋतस्तथा । शशी मरुत्कुबेरश्च ईशानः सुर आत्मभूः ॥ ११ ॥ विष्णुर्हरो गणपतिः कुमारः काम ईश्वरः । कर्ता हर्ता पालयिता राज्यसे ? राज्यदायकः ॥ १२ ॥ छायासुतः श्यामलाङ्गो धनहर्ता धनप्रदः । क्रूरकर्मविधाता च सर्वकर्मावरोधकः ॥ १३ ॥ तुष्टो रुष्टः कामरूपः कामदो रविनन्दनः । ग्रहपीडाहरः शान्तो नक्षत्रेशो ग्रहेश्वरः ॥ १४ ॥ स्थिरासनः स्थिरगतिर्महाकायो महाबलः । महाप्रभो महाकालः कालात्मा कालकालकः ॥ १५ ॥ आदित्यभयदाता च मृत्युरादित्यनन्दनः । शतभिद्दक्षदयिता ? त्रयोदशीतिथिप्रियः ॥ १६ ॥

तिथ्यात्म ? स्तिथिगणनक्षत्रगणनायकः । योगराशिमुहूर्तात्मा कर्ता दिनपतिः प्रभुः ॥१७॥ शमीपुष्पप्रियः श्यामस्त्रैलोक्याभावदायकः । नीलवासाः क्रियासिन्धुर्नीलाञ्जनचयच्छविः ॥ १८ ॥ सर्वरोगहरो देवः सिद्धो देवगणस्तुतः। अष्टोत्तरशतं नाम्नां सौरेश्छायासुतस्य यः ॥ १९ ॥ पठेन्नित्यं तस्य पीडा समस्ता नश्यति ध्रुवम् । कृत्वा पूजां पठेन्मर्त्यो भक्तिमान्यः स्तवं सदा ॥ २० ॥ विशेषतः शनिदिने पीडा तस्य विनश्यति । जन्मलग्ने स्थितिर्वापि गोचरे क्रूरराशिगे ॥ २१ ॥ दशासु च गते सौरो तदा स्तवमिमं पठेत् । पूजयेद्यः शनिं भक्त्या शमीपुष्पाक्षताम्बरैः ॥२२॥ विधाय लोहप्रतिमां नरो दुःखाद्विमुच्यते । बाधा धान्यग्रहाणां च यः पठेत्तस्य नश्यति ॥ २३ ॥ भीतो भयाद्विमुच्येत बद्धो मुच्येत बन्धनात् । रोगी रोगाद्विमुच्येत नरः स्तवमिमं पठेत् ॥ २४ ॥ पुत्रवान्धनवान् श्रीमाञ्जायते नात्र संशयः ॥ २५ ॥ नारद उवाच । स्तवं निशम्य पार्थस्य प्रत्यक्षोऽभूच्छनैश्वरः । दत्त्वा राज्ञे वरः कामं शनिश्चान्तर्दधे तदा ॥ २६ ॥

इति श्रीभविष्यपुराणे शनैश्चरस्तवराजः समाप्तः ।

---

## ३९७ शनिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीशनैश्चरस्तोत्रस्य दशरथ

ऋषिः । शनैश्चरो देवता । त्रिष्टुप् छन्दः । शनैश्चरप्रीत्यर्थं जपे विनियोगः । दशरथ उवाच । कोणोऽन्तको रौद्रयमोऽथ बभ्रुः कृष्णः शनिः पिङ्गलमन्दसौरिः । नित्यं स्मृतो यो हरते च पीडां तस्मै नमः श्रीरविनन्दनाय ॥ १ ॥ सुरासुराः किंपुरुषोरगेन्द्रा गन्धर्वविद्याधरपन्नगाश्च । पीड्यन्ति सर्वे विषमस्थितेन तस्मै० ॥ २ ॥ नरानरेन्द्राः पशवो मृगेन्द्रा वन्याश्च ये कीटपतङ्गभृङ्गाः । पीड्यन्ति सर्वे विषमस्थितेन तस्मै० ॥ ३ ॥ देशाश्च दुर्गाणि वनानि यत्र सेनानिवेशाः पुरपत्तनानि । पीड्यन्ति सर्वे विषमस्थितेन तस्मै० ॥ ४ ॥ तिलैर्यवैर्माषगुडान्नदानैर्लोहेन नीलाम्बरदानतो वा । प्रीणाति मन्त्रैर्निजवासरे च तस्मै० ॥५॥ प्रयागकूले यमुनातटे च सरस्वतीपुण्यजले गुहायाम् । यो योगिनां ध्यानगतोऽपि सूक्ष्मस्तस्मै० ॥ ६ ॥ अन्यप्रदेशात्स्वगृहं प्रविष्टस्तदीयवारे स नरः सुखी स्यात् । गृहाद्गतो यो न पुनः प्रयाति तस्मै० ॥७॥ स्रष्टा स्वयंभूर्भुवनत्रयस्य त्राता हरीशो हरते पिनाकी । एकस्त्रिधा ऋग्यजुःसाममूर्तिस्तस्मै० ॥८॥ शन्यष्टकं यः प्रयतः प्रभाते नित्यं सुपुत्रैः पशुबान्धवैश्च । पठेत्तु सौख्यं भुवि भोगयुक्तः प्राप्नोति निर्वाणपदं तदन्ते ॥ ९ ॥ कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः । सौरिः शनैश्चरो मन्दः पिप्पलादेन संस्तुतः ॥१०॥ एतानि

दश नामानि प्रातरुत्थाय यः पठेत् । शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥ ११ ॥

इति श्रीशनैश्चरस्तोत्रं संपूर्णम् ।

---

## ३९८ राहुस्तोत्रम् ।

श्रीगणेशाय नमः ॥ राहुर्दानवमन्त्री च सिंहिकाचित्त-नन्दनः । अर्धकायः सदा क्रोधी चन्द्रादित्यविमर्दनः ॥ १ ॥ रौद्रो रुद्रप्रियो दैत्यः स्वर्भानुर्भानुभीतिदः । ग्रहराजः सुधा-पायी राकातिथ्यभिलाषकः ॥ २ ॥ कालदृष्टिः कालरूपः श्रीक-ण्ठहृदयाश्रयः । विधुंतुदः सैंहिकेयो घोररूपो महाबलः ॥ ३ ॥ ग्रहपीडाकरो दंष्ट्री रक्तनेत्रो महोदरः । पञ्चविंशति नामानि स्मृत्वा राहुं सदा नरः ॥ ४ ॥ यः पठेन्महती पीडा तस्य नश्यति केवलम् । आरोग्यं पुत्रमतुलां श्रियं धान्यं पशूं-स्तथा ॥ ५ ॥ ददाति राहुस्तस्मै यः पठते स्तोत्रमुत्तमम् । सततं पठते यस्तु जीवेद्वर्षशतं नरः ॥ ६ ॥

इति श्रीस्कन्दपुराणे राहुस्तोत्रं संपूर्णम् ।

---

## ३९९ केतुपञ्चविंशतिनामस्तोत्रम् ।

श्रीगणेशाय नमः ॥ केतुः कालः कलयिता धूम्रकेतुर्वि-वर्णकः । लोककेतुर्महाकेतुः सर्वकेतुर्भयप्रदः ॥ १ ॥ रौद्रो रुद्रप्रियो रुद्रः क्रूरकर्मा सुगन्धधृक् । पलालधूमसंकाशश्चि-

श्रयज्ञोपवीतधृक् ॥ २ ॥ ताराागणविमर्दी च जैमिनेयो ग्रहाधिपः । पञ्चविंशति नामानि केतोर्यः सततं पठेत् ॥ ३ ॥ तस्य नश्यति बाधा च सर्वकेतुप्रसादतः । धनधान्यपशूनां च भवेद्वृद्धिर्न संशयः ॥ ४ ॥

इति श्रीस्कन्दपुराणे केतोः पञ्चविंशतिनामस्तोत्रं संपूर्णम् ।

## ४०० नवग्रहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् । तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥ दधिशङ्खतुषाराभं क्षीरोदार्णवसंभवम् । नमामि शशिनं सोमं शंभोर्मुकुटभूषणम् ॥ २ ॥ धरणीगर्भसंभूतं विद्युत्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्यहम् ॥ ३ ॥ प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् । सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४ ॥ देवानां च ऋषीणां च गुरुं काञ्चनसंनिभम् । बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥ हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥ नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम् । छायामार्तण्डसंभूतं तं नमामि शनैश्चरम् ॥ ७ ॥ अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् । सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥ ८ ॥ पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् । रौद्रं रौद्रात्मकं घोरं तं केतुं

प्रणमाम्यहम् ॥ ९ ॥ इति व्यासमुखोद्गीतं यः पठेत्सुसमाहितः। दिवा वा यदि वा रात्रौ विघ्नशान्तिर्भविष्यति ॥ १० ॥ नरनारीनृपाणां च भवेद्दुःस्वप्ननाशनम् । ऐश्वर्यमतुलं तेषामारोग्यं पुष्टिवर्धनम् ॥ ११ ॥ ग्रहनक्षत्रजाः पीडास्तस्कराग्निसमुद्भवाः। ताः सर्वाः प्रशमं यान्ति व्यासो ब्रूते न संशयः ॥ १२ ॥

इति श्रीव्यासविरचितं नवग्रहस्तोत्रं संपूर्णम् ।

## ४०१ नवग्रहपीडाहरस्तोत्रम् ।

श्रीगणेशाय नमः॥ ग्रहाणामादिरादित्यो लोकरक्षणकारकः। विषमस्थानसंभूतां पीडां हरतु मे रविः ॥१॥ रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः। विषमस्थानसंभूतां पीडां हरतु मे विधुः ॥ २ ॥ भूमिपुत्रो महातेजा जगतां भयकृत्सदा। वृष्टिकृद्वृष्टिहर्ता च पीडां हरतु मे कुजः ॥३॥ उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः। सूर्यप्रियकरो विद्वान्पीडां हरतु मे बुधः ॥ ४ ॥ देवमन्त्री विशालाक्षः सदा लोकहिते रतः। अनेकशिष्यसंपूर्णः पीडां हरतु मे गुरुः ॥ ५ ॥ दैत्यमंत्री गुरुस्तेषां प्राणदश्च महामतिः। प्रभुस्ताराग्रहाणां च पीडां हरतु मे भृगुः ॥ ६ ॥ सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः। मन्दचारः प्रसन्नात्मा पीडां हरतु मे शनिः ॥ ७ ॥ महाशिरा महावक्त्रो दीर्घदंष्ट्रो

महाबलः । अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी ॥ ८ ॥ अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः । उत्पातरूपो जगतां पीडां हरतु मे तमः ॥ ९ ॥

इति नवग्रहपीडाहरस्तोत्रम् ।

# प्रकीर्णस्तोत्राणि ।

## ४०२ तुलसीकवचम् ।

श्रीगणेशाय नमः ॥ अस्य श्रीतुलसीकवचस्तोत्रमन्त्रस्य । श्रीमहादेव ऋषिः । अनुष्टुप् छन्दः । श्रीतुलसी देवता । मन-ईप्सितकामनासिद्ध्यर्थं जपे विनियोगः । तुलसि श्रीमहादेवि नमः पङ्कजधारिणि । शिरो मे तुलसी पातु भालं पातु यशस्विनी ॥ १ ॥ दृशौ मे पद्मनयना श्रीसखी श्रवणे मम । घ्राणं पातु सुगन्धा मे मुखं च सुमुखी मम ॥ २ ॥ जिह्वां मे पातु शुभदा कण्ठं विद्यामयी मम । स्कन्धौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ॥ ३ ॥ पुण्यदा मे पातु मध्यं नाभिं सौभाग्यदायिनी । कटिं कुण्डलिनी पातु ऊरू नारदवन्दिता ॥ ४ ॥ जननी जानुनी पातु जङ्घे सकलवन्दिता । नारायणप्रिया पादौ सर्वाङ्गं सर्वरक्षिणी ॥ ५ ॥ संकटे विषमे दुर्गे भये वादे महाहवे । नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ॥ ६ ॥ इतीदं परमं गुह्यं तुलस्याः कवचामृतम् । मर्त्यानाममृतार्थाय भीतानामभयाय च ॥ ७ ॥

मोक्षाय च मुमुक्षूणां ध्यायिनां ध्यानयोगकृत् । वशाय वश्यकामानां विद्यायै वेदवादिनाम् ॥ ८ ॥ द्रविणाय दरिद्राणां पापिनां पापशान्तये ॥ ९ ॥ अन्नाय क्षुधितानां च स्वर्गाय स्वर्गमिच्छताम् । पशव्यं पशुकामानां पुत्रदं पुत्रकाङ्क्षिणाम् ॥ १० ॥ राज्याय भ्रष्टराज्यानामशान्तानां च शान्तये । भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वान्तरात्मनि ॥ ११ ॥ जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः । उद्यन्तं चण्डकिरणमुपस्थाय कृताञ्जलिः ॥ १२ ॥ तुलसीकानने तिष्ठन्नासीनो वा जपेदिदम् । सर्वान्कामानवाप्नोति तथैव मम सन्निधिम् ॥ १३ ॥ मम प्रियकरं नित्यं हरिभक्तिविवर्धनम् । या स्यान्मृतप्रजा नारी तस्या अङ्गं प्रमार्जयेत् ॥ १४ ॥ सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम् । वन्ध्याया मार्जयेदङ्गं कुशैर्मन्त्रेण साधकः ॥ १५ ॥ सापि संवत्सरादेव गर्भं धत्ते मनोहरम् । अश्वत्थे राजवश्यार्थी जपेदग्नेः सुरूपभाक् ॥ १६ ॥ पलाशमूले विद्यार्थी तेजोर्ध्वभिमुखो रवेः । कन्यार्थी चण्डिकागेहे शत्रुहत्यै गृहे मम ॥ १७ ॥ श्रीकामो विष्णुगेहे च उद्याने स्त्री वशा भवेत् । किमत्र बहुनोक्तेन शृणु सैन्येश तत्त्वतः ॥ १८ ॥ यं यं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम् । मम गेहगतस्त्वं तु तारकस्य वधेच्छया ॥ १९ ॥ जपन् स्तोत्रं च

कवचं तुलसीगतमानसः । मण्डलात्तारकं हन्ता भविष्यसि न संशयः ॥ २० ॥

इति श्रीब्रह्माण्डपुराणे तुलसीमाहात्म्ये तुलसीकवच-
स्तोत्रं संपूर्णम् ।

## ४०३ तुलसीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रिय-वल्लभे । यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः ॥ १ ॥ नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे । नमो मोक्ष-प्रदे देवि नमः संपत्प्रदायिके ॥ २ ॥ तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा । कीर्तितापि स्मृता वापि पवित्रयति मानवम् ॥ ३ ॥ नमामि शिरसा देवीं तुलसीं विलसत्तनुम् । यां दृष्ट्वा पापिनो मर्त्या मुच्यन्ते सर्वकिल्बिषात् ॥ ४ ॥ तुलस्या रक्षितं सर्वं जगदेतच्चराचरम् । या विनिर्हन्ति पापानि दृष्ट्वा वा पापिभिर्नरैः ॥ ५ ॥ नमस्तुलस्यतितरां यस्यै बद्धा बलिं कलौ । कलयन्ति सुखं सर्वं स्त्रियो वैश्या-स्तथापरे ॥ ६ ॥ तुलस्या नापरं किंचिद्दैवतं जगतीतले । यया पवित्रितो लोको विष्णुसङ्गेन वैष्णवः ॥ ७ ॥ तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ । आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥८॥ तुलस्यां सकला देवा वसंति सततं यतः । अतस्तामर्चयेल्लोके सर्वान्देवान्समर्चयन् ॥९॥ नमस्तु-

लसि सर्वज्ञे पुरुषोत्तमवल्लभे । पाहि मां सर्वपापेभ्यः सर्वसंपत्प्रदायिके ॥ १० ॥ इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता । विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ॥ ११ ॥ तुलसी श्रीमहालक्ष्मीर्विद्याविद्या यशस्विनी । धर्म्या धर्मानना देवी देवदेवमनःप्रिया ॥ १२ ॥ लक्ष्मीप्रियसखी देवी द्यौर्भूमिरचला चला । षोडशैतानि नामानि तुलस्याः कीर्तयन्नरः ॥ १३ ॥ लभते सुतरां भक्तिमन्ते विष्णुपदं लभेत् । तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया ॥ १४ ॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे । नमस्ते नारदनुते नारायणमनःप्रिये ॥ १५ ॥

इति श्रीपुण्डरीककृतं तुलसीस्तोत्रं संपूर्णम् ।

## ४०४ अश्वत्थस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीनारद उवाच । अनायासेन लोकोऽयं सर्वान्कामानवाप्नुयात् । सर्वदेवात्मकं चैकं तन्मे ब्रूहि पितामह ॥ १ ॥ ब्रह्मोवाच । शृणु देवमुनेऽश्वत्थं शुद्धं सर्वात्मकं तरुम् । यत्प्रदक्षिणतो लोकः सर्वान्कामान्समश्नुते ॥ २ ॥ अश्वत्थाद्दक्षिणे रुद्रः पश्चिमे विष्णुरास्थितः । ब्रह्मा चोत्तरदेशस्थः पूर्वे त्विन्द्रादिदेवताः ॥ ३ ॥ स्कन्धोपस्कन्धपत्रेषु गोविप्रमुनयस्तथा । मूलं वेदाः पयो यज्ञाः संस्थिता मुनिपुंगव ॥ ४ ॥ पूर्वादिदिक्षु संयाता नदीनद-

सरीऽधयः । तस्मात्सर्वप्रयत्नेन ह्यश्वत्थं संश्रयेद्बुधः ॥ ५ ॥ त्वं क्षीर्यफलकश्चैव शीतलश्च वनस्पते । त्वामाराध्य नरो विन्द्यादैहिकामुष्मिकं फलम् ॥ ६ ॥ चलद्दलाय वृक्षाय सर्वदाश्रितविष्णवे । बोधितत्त्वाय देवाय ह्यश्वत्थाय नमो नमः ॥ ७ ॥ अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्वकाले । अतः श्रुतस्त्वं सततं तरूणां धन्योऽसि चारिष्टविनाशकोऽसि ॥ ८ ॥ क्षीरदस्त्वं च येनेह येन श्रीस्त्वां निषेवते । सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम् ॥ ९ ॥ एकादशात्मरुद्रोऽसि वसुनाथशिरोमणिः । नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥ १० ॥ अग्निगर्भः शमीगर्भो देवगर्भः प्रजापतिः । हिरण्यगर्भो भूगर्भो यज्ञगर्भ नमोऽस्तु ते ॥ ११ ॥ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ १२ ॥ सततं वरुणो रक्षेत्त्वामाराद्वृष्टिराश्रयेत् । परितस्त्वां निषेवन्तां तृणानि सुखमस्तु ते ॥ १३ ॥ अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनम् । शत्रूणां च समुत्थानं ह्यश्वत्थ शमय प्रभो ॥ १४ ॥ अश्वत्थाय वरेण्याय सर्वैश्वर्यप्रदायिने । नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥ १५ ॥ मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । अतन्तः शिवरूपाय वृक्षराजाय ते नमः ॥ १६ ॥ यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते । यदाश्रयाच्चिरंजीवी तमश्वत्थं नमाम्यहम्

॥ १७ ॥ अश्वत्थ सुमहाभाग सुभग प्रियदर्शन। इष्टकामांश्च मे देहि शत्रुभ्यस्तु पराभवम् ॥ १८ ॥ आयुः प्रजां धनं धान्यं सौभाग्यं सर्वसंपदम्। देहि देव महावृक्ष त्वामहं शरणं गतः ॥ १९ ॥ ऋग्यजुःसाममन्त्रात्मा सर्वरूपी परात्परः। अश्वत्थो वेदमूलोऽसावृषिभिः प्रोच्यते सदा ॥२०॥ ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीडितः। आवृत्य लक्षसंख्यं तत्स्तोत्रमेतत्सुखी भवेत् ॥ २१ ॥ ब्रह्मचारी हविष्याशी त्वधःशायी जितेन्द्रियः। पापोपहतचित्तोऽपि व्रतमेतत्समाचरेत् ॥ २२ ॥ एकहस्तं द्विहस्तं वा कुर्याद्गोमयलेपनम्। अर्चेत्पुरुषसूक्तेन प्रणवेन विशेषतः ॥ २३ ॥ मौनी प्रदक्षिणं कुर्यात्प्रागुक्तफलभाग्भवेत्। विष्णोर्नामसहस्रेण ह्यच्युतस्यापि कीर्तनात् ॥ २४ ॥ पदे पदान्तरं गत्वा करचेष्टाविवर्जितः। वाचा स्तोत्रं मनो ध्याने चतुरङ्गं प्रदक्षिणम् ॥ २५ ॥ अश्वत्थः स्थापितो येन तत्कुलं स्थापितं ततः। धनायुषां समृद्धिस्तु नरकात्तारयेत्पितॄन् ॥ २६ ॥ अश्वत्थमूलमाश्रित्य शाकान्नोदकदानतः। एकस्मिन्भोजिते विप्रे कोटिब्राह्मणभोजनम् ॥ २७ ॥ अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात्। अक्षयं फलमाप्नोति ब्रह्मणो वचनं तथा ॥ २८ ॥ एवमाश्वासितोऽश्वत्थः सदाश्वासाय कल्पते। यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात् ॥ २९ ॥ छिन्नो

येन वृथाश्वत्थश्छेदिताः पितृदेवताः । अश्वत्थः पूजितो यत्र पूजिताः सर्वदेवताः ॥ ३० ॥

इतिश्री ब्रह्मनारदसंवादे अश्वत्थस्तोत्रं संपूर्णम् ।

## ४०५ नवनागस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अनन्तं वासुकिं शेषं पद्मनाभं च कम्बलम् । शङ्खपालं धृतराष्ट्रं तक्षकं कालियं तथा ॥ १ ॥ एतानि नव नामानि नागानां च महात्मनाम् ; सायंकाले पठेन्नित्यं प्रातःकाले विशेषतः । तस्य विषभयं नास्ति सर्वत्र विजयी भवेत् ॥ २ ॥

इति श्रीनवनागस्तोत्रं संपूर्णम् ।

## ४०६ श्रीवेदव्यासाष्टकम् ।

श्रीगणेशाय नमः ॥ कलिमलास्तविवेकदिवाकरं समवलोक्य तमोवलितं जनम् । करुणया भुवि दर्शितविग्रहं मुनिवरं तमहं सततं भजे ॥ १ ॥ भरतवंशसमुद्धरणेच्छया स्वजननीवचसा परिनोदितः । अजनयत्तनयत्रितयं प्रभुर्मुनिवरं० ॥ २ ॥ मतिबलादि निरीक्ष्य कलौ नृणां लघुतरं कृपया निगमाम्बुधेः । समकरोदिह भागमनेकधा मुनिवरं० ॥ ३ ॥ सकलधर्मनिरूपणसागरं विविधचित्रकथासमलंकृतम् । व्यरचयच्च पुराणकदम्बकं मुनिवरं० ॥ ४ ॥ श्रुति-

विरोधसमन्वयदर्पणं निखिलवादिमतान्ध्यविदारणम् । ग्रथितवानपि सूत्रसमूहकं मुनिवरं० ॥ ५ ॥ यदनुभाववशेन दिवं गतः समधिगम्य महास्त्रसमुच्चयम् । कुरुचमूमजयद्विजयो द्रुतं मुनिवरं० ॥ ६ ॥ समरवृत्तविबोधसमीहया कुरुवरेण मुदा कृतयाचनः । सपदि सूतमदादमलेक्षणं मुनिवरं० ॥७॥ वननिवासपरौ कुरुदम्पती सुतशुचा तपसा च विकर्शितौ । मृततनूजगणं समदर्शयन्मुनिवरं तमहं सततं भजे ॥ ८ ॥ व्यासाष्टकमिदं पुण्यं ब्रह्मानन्देन कीर्तितम् । यः पठेन्मनुजो नित्यं स भवेच्छास्त्रपारगः ॥ ९ ॥

इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं श्रीवेदव्यासाष्टकं संपूर्णम् ।

---

## ४०७ अभिलाषाष्टकम् ।

श्रीगणेशाय नमः ॥ कदा पक्षीन्द्रांसोपरिगतमजं कञ्जनयनं रमासंश्लिष्टाङ्गं गगनरुचमापीतवसनम् । गदाशङ्खाम्भोजारिवरकरमालोक्य सुचिरं गमिष्यत्येतन्मे ननु सफलतां नेत्रयुगलम् ॥ १ ॥ कदा क्षीराब्ध्यन्तः सुरतरुवनान्तर्मणिमये समासीनं पीठे जलधितनयालिङ्गिततनुम् । स्तुतं देवैर्नित्यं मुनिवरकदम्बैरभिनुतं स्तवैः संस्तोष्यामि श्रुतिवचनगर्भैः सुरगुरुम् ॥ २ ॥ कदा मामाभीतं भवजलधितस्तापसतनुं गता रागं गङ्गातटगिरिगुहावाससहनम् । लपन्तं हे विष्णो

सुरवर रमेशेति सततं समभ्येत्योदारं कमलनयनो वक्ष्यति वचः ॥ ३ ॥ कदा मे हृत्पद्मे भ्रमर इव पद्मे प्रतिवसन्सदा ध्यानाभ्यासादनिशमुपहूतो विभुरसौ । स्फुरज्ज्योतीरूपो रविरिव रमासेव्यचरणो हरिष्यत्यज्ञानाज्जनिततिमिरं तूर्णमखिलम् ॥ ४ ॥ कदा मे भोगाशा निबिडभवपाशादुपरतं तपःशुद्धं बुद्धं गुरुवचनतोदैरचपलम् । मनो मौनं कृत्वा हरिचरणयोश्चारु सुचिरं स्थितिं स्थाणुप्रायां भवभयहरां यास्यति पराम् ॥ ५ ॥ कदा मे संरुद्धाखिलकरणजालस्य परितो जिताशेषप्राणानिलपरिकरस्य प्रजपतः । सदोङ्कारं चित्तं हरिपदसरोजे धृतवतः समेष्यत्युल्लासं मुहुरखिलरोमावलिरियम् ॥ ६ ॥ कदा प्रारब्धान्ते परिशिथिलतां गच्छति शनैः शरीरे चाक्षौघेऽप्युपरतवति प्राणपवने । वदत्यूर्ध्वं शश्वन्मम वदनकञ्जे मुहुरहो करिष्यत्यावासं हरिरिति पदं पावनतमम् ॥ ७ ॥ कदा हित्वा जीर्णां त्वचमिव भुजङ्गस्तनुमिमां चतुर्बाहुश्चक्राम्बुजदरकरः पीतवसनः । घनश्यामो दूतैर्गगनगतिनीतो नतिपरैर्गमिष्यामीशस्यान्तिकमखिलदुःखान्तकमिति ॥ ८ ॥

इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितमभिलाषाष्टकं संपूर्णम् ।

## ४०८ श्रीहरिशरणाष्टकम् ।

श्रीगणेशाय नमः ॥ ध्येयं वदन्ति शिवमेव हि केचिदन्ये शक्तिं गणेशमपरे तु दिवाकरं वै । रूपैस्तु तैरपि विभासि यतस्त्वमेव तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ १ ॥ नो सोदरो न जनको जननी न जाया नैवात्मजो न च कुलं विपुलं बलं वा । संदृश्यते न किल कोऽपि सहायको मे तस्मा० ॥ २ ॥ नोपासिता मदमपास्य मया महान्तस्तीर्थानि चास्तिकधिया नहि सेवितानि । देवार्चनं च विधिवन्न कृतं कदापि तस्मा० ॥ ३ ॥ दुर्वासना मम सदा परिकर्षयन्ति चित्तं शरीरमपि रोगगणा दहन्ति । संजीवनं च परहस्तगतं सदैव तस्मा० ॥ ४ ॥ पूर्वं कृतानि दुरितानि मया तु यानि स्मृत्वाखिलानि हृदयं परिकम्पते मे । ख्याता च ते पतितपावनता तु यस्मात्तस्मा० ॥ ५ ॥ दुःखं जराजननजं विविधाश्च रोगाः काकश्वसूकरजनिर्निरये च पातः । ते विस्मृतेः फलमिदं विततं हि लोके तस्मा० ॥ ६ ॥ नीचोऽपि पापवलितोऽपि विनिन्दितोऽपि ब्रूयात्तवाहमिति यस्तु किलैकवारम् । तं यच्छसीश निजलोकमिति व्रतं ते तस्मा० ॥ ७ ॥ वेदेषु धर्मवचनेषु तथागमेषु रामायणेऽपि च पुराणकदम्बके वा । सर्वत्र सर्वविधिना गदितस्त्वमेव तस्मात्त्वमेव शरणं मम शङ्खपाणे ॥ ८ ॥



इति श्रीपरमहंसस्वामिब्रह्मानन्दविरचितं श्रीहरिशरणाष्टकं सं० ।

## ४०९. चतुःश्लोकीभागवतम्।

श्रीगणेशाय नमः ॥ श्रीभगवानुवाच । ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ १ ॥ यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥ २ ॥ अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ३ ॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाभासो यथा तमः ॥ ४ ॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ ५ ॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥६॥ एतन्मतं समातिष्ठ परमेण समाधिना । भवान्कल्पविकल्पेन न विमुह्यति कर्हिचित् ॥ ७ ॥

इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कन्धे भगवद्ब्रह्मसंवादे चतुःश्लोकीभागवतं समाप्तम् ।

---

## ४१० सप्तश्लोकीगीता।

श्रीगणेशाय नमः ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥१॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।

रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्ध-संघाः ॥ २ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥६॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रम्हविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकी गीता संपूर्णा ।

---

## ४११ पाण्डवगीता ।

श्रीगणेशाय नमः ॥ पाण्डव उवाच । प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् । रुक्माङ्गदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान्स्मरामि ॥ १ ॥ लोमहर्षण उवाच । धर्मो विवर्धति युधिष्ठिरकीर्तनेन पापं प्रणश्यति वृकोदरकीर्तनेन । शत्रुर्विनश्यति धनंजयकीर्तनेन माद्रीसुतौ कथयतां न भवन्ति रोगाः ॥२॥



ब्रह्मोवाच । ये मानवा विगतरागपरावरज्ञा नारायणं सुरगुरुं

सततं स्मरन्ति । ध्यानेन तेन हतकिल्बिषचेतनास्ते मातुः पयोधररसं न पुनः पिबन्ति ॥३॥ इन्द्र उवाच । नारायणो नाम नरो नराणां प्रसिद्धचोरः कथितः पृथिव्याम् । अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मरतां सदैव ॥ ४ ॥ युधिष्ठिर उवाच । मेघश्यामं पीतकौशेयवासं श्रीवत्साङ्कं कौस्तुभोद्भासिताङ्गम् । पुण्योपेतं पुण्डरीकायताक्षं विष्णुं वंदे सर्वलोकैकनाथम् ॥५॥ भीमसेन उवाच । जलौघमग्ना सचराचरा धरा विषाणकोट्याखिलविश्वमूर्तिना । समुद्धृता येन वराहरूपिणा स मे स्वयंभूर्भगवान् प्रसीदताम् ॥ ६ ॥ अर्जुन उवाच । अचिन्त्यमव्यक्तमनन्तमव्ययं विभुं प्रभुं भावितविश्वभावनम् । त्रैलोक्यविस्तारविचारकारकं हरिं प्रपन्नोऽस्मि गतिं महात्मनाम् ॥ ७ ॥ नकुल उवाच । यदि गमनमधस्तात्कालपाशानुबद्धो यदि च कुलविहीने जायते पक्षिकीटे । कृमिशतमपि गत्वा जायते चान्तरात्मा मम भवतु हृदिस्थे केशवे भक्तिरेका ॥ ८ ॥ सहदेव उवाच । तस्य यज्ञवराहस्य विष्णोरतुलतेजसः । प्रणामं ये प्रकुर्वन्ति तेषामपि नमो नमः ॥ ९ ॥ कुन्त्युवाच । स्वकर्मफलनिर्दिष्टां यां यां योनिं व्रजाम्यहम् । तस्यां तस्यां हृषीकेश त्वयि भक्तिर्दृढाऽस्तु मे ॥ १० ॥ माद्र्युवाच । कृष्णे रताः कृष्णमनुस्मरन्ति रात्रौ च कृष्णं पुनरुत्थिता ये । ते भिन्नदेहाः प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशे ॥ ११ ॥

द्रुपद उवाच। कीटेषु पक्षिषु मृगेषु सरीसृपेषु रक्षःपिशाचमनुजेष्वपि यत्र यत्र। जातस्य मे भवतु केशव त्वत्प्रसादात्त्वय्येव भक्तिरचलाऽव्यभिचारिणी च ॥ १२ ॥ सुभद्रोवाच। एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः। दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ १३ ॥ अभिमन्युरुवाच। गोविन्द गोविन्द हरे मुरारे गोविन्द गोविन्द रथाङ्गपाणे। गोविन्द गोविन्द मुकुन्द कृष्ण गोविन्द गोविन्द नमो नमस्ते॥१४॥ धृष्टद्युम्न उवाच। श्रीराम नारायण वासुदेव गोविन्द वैकुण्ठ मुकुन्द कृष्ण। श्रीकेशवानन्त नृसिंह विष्णो मां त्राहि संसारभुजङ्गदष्टम् ॥ १५ ॥ सात्यकिरुवाच। अप्रमेय हरे विष्णो कृष्ण दामोदराच्युत। गोविन्दानन्त सर्वेश वासुदेव नमोऽस्तु ते ॥१६॥ उद्धव उवाच। वासुदेवं परित्यज्य योऽन्यं देवमुपासते। तृषितो जाह्नवीतीरे कूपं वाञ्छति दुर्भगः ॥ १७ ॥ धौम्य उवाच। अपां समीपे शयनासनस्थं दिवा च रात्रौ च यथाधिगच्छताम्। यद्यस्ति किंचित्सुकृतं कृतं मया जनार्दनस्तेन कृतेन तुष्यतु ॥१८॥ संजय उवाच। आर्ता विषण्णा शिथिलाश्च भीता घोरेषु व्याघ्रादिषु वर्तमानाः। संकीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥ १९ ॥ अक्रूर उवाच। अहं तु नारायणदासदासदासस्य दासस्य च दासदासः। अन्येभ्य ईशो जगतो नराणामस्मादहं चान्य-

तरोऽस्मि लोके ॥ २० ॥ विदुर उवाच । वासुदेवस्य ये भक्ताः शान्तास्तद्गतमानसाः । तेषां दासस्य दासोस्यामहं जन्मनि जन्मनि ॥ २१ ॥ भीष्म उवाच । विपरीतेषु कालेषु परिक्षीणेषु बन्धुषु । त्राहि मां कृपया कृष्ण शरणागतवत्सल ॥ २२ ॥ द्रोणाचार्य उवाच । ये ये हताश्चक्रधरेण राजँस्त्रै-लोक्यनाथेन जनार्दनेन । ते ते गता विष्णुपुरीं प्रयाताः क्रोधोऽपि देवस्य वरेण तुल्यः ॥ २३ ॥ कृपाचार्य उवाच । मज्जन्मनः फलमिदं मधुकैटभारे मत्प्रार्थनीय मदनुग्रह एप एव । त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ ॥ २४ ॥ अश्वत्थामोवाच । गोविन्द केशव जनार्दन वासुदेव विश्वेश विश्व मधुसूदन विश्वनाथ । श्रीपद्मनाभ पुरुषोत्तम पुष्कराक्ष नारायणाच्युत नृसिंह नमो नमस्ते॥२५॥ कर्ण उवाच । नान्यं वदामि न शृणोमि न चिन्तयामि नान्यं स्मरामि न भजामि न चाश्रयामि । भक्त्या त्वदीयचर-णाम्बुजमन्तरेण श्रीश्रीनिवास पुरुषोत्तम देहि दास्यम् ॥ २६ ॥ धृतराष्ट्र उवाच । नमो नमः कारणवामनाय नारायणायामितविक्रमाय । श्रीशार्ङ्गचक्राब्जगदाधराय नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ २७ ॥ गान्धार्युवाच । त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥२८॥



द्रौपद्युवाच । यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।

कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते ॥ २९ ॥ जयद्रथ उवाच । नमः कृष्णाय देवाय ब्रह्मणेऽनन्तमूर्तये । योगेश्वराय योगाय त्वामहं शरणं गतः ॥ ३० ॥ विकर्ण उवाच । कृष्णाय वासुदेवाय देवकीनन्दनाय च । नन्दगोपकुमाराय गोविन्दाय नमो नमः ॥ ३१ ॥ सोमदत्त उवाच । नमः परमकल्याण नमस्ते विश्वभावन । वासुदेवाय शान्ताय यदूनां पतये नमः ॥ ३२ ॥ विराट उवाच । नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ३३ ॥ शल्य उवाच । अतसीपुष्पसंकाशं पीतवाससमच्युतम् । ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ ३४ ॥ बलभद्र उवाच । कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव । संसारार्णवमग्नानां प्रसीद पुरुषोत्तम ॥ ३५ ॥ श्रीकृष्ण उवाच । कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ ३६ ॥ सत्यं ब्रवीमि मनुजाः स्वयमूर्ध्वबाहुर्यो मां मुकुन्द नरसिंह जनार्दनेति । जीवो जपत्यनुदिनं मरणे रणे वा पाषाणकाष्ठसदृशाय ददाम्यभीष्टम् ॥ ३७ ॥ सूत उवाच । तत्रैव गङ्गा यमुना च वेणी गोदावरी सिन्धुसरस्वती च । सर्वाणि तीर्थानि वसन्ति तत्र यत्राच्युतोदारकथाप्रसङ्गः ॥ ३८ ॥ यम उवाच । नरके पच्यमानं तु यमेन परिभाषितम् । किं त्वया नार्चितो देवः केशवः

क्लेशनाशनः ॥ ३९ ॥ नारद उवाच । जन्मान्तरसहस्रेण तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ ४० ॥ प्रह्लाद उवाच । नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् । तेषु तेष्वचला भक्तिरच्युताऽस्तु सदा त्वयि ॥ ४१ ॥ या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्माऽपसर्पतु ॥ ४२ ॥ विश्वामित्र उवाच । किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः । यो नित्यं ध्यायते देवं नराणां मनसि स्थितम् ॥ ४३ ॥ जमदग्निरुवाच । नित्योत्सवस्तदा तेषां नित्यश्रीर्नित्यमङ्गलम् । येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ॥ ४४ ॥ भरद्वाज उवाच । लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ ४५ ॥ गौतम उवाच । गोकोटिदानं ग्रहणेषु काशीप्रयागगङ्गायुतकल्पवासः । यज्ञायुतं मेरुसुवर्णदानं गोविन्दनाम्ना न कदापि तुल्यम् ॥ ४६ ॥ अत्रिरुवाच । गोविन्देति सदा स्नानं गोविन्देति सदा जपः । गोविन्देति सदा ध्यानं सदा गोविन्दकीर्तनम् ॥ ४७ ॥ अक्षरं हि परं ब्रह्म गोविन्देत्यक्षरत्रयम् । तस्मादुच्चरितं येन ब्रह्मभूयाय कल्पते ॥ ४८ ॥ श्रीशुक उवाच । अच्युतः कल्पवृक्षोऽसावनन्तः कामधेनवः । चिन्तामणिश्च गोविन्दो हरिनाम विचिन्तयेत् ॥४९॥ हरिरुवाच । जयति जयति देवो देवकीनन्दनोऽयं जयति जयति

कृष्णो वृष्णिवंशप्रदीपः। जयति जयति मेघश्यामलः कोमलाङ्गो जयति जयति पृथ्वीभारनाशो मुकुन्दः ॥ ५० ॥ पिप्पलायन उवाच। श्रीमन्नृसिंहविभवे गरुडध्वजाय तापत्रयोपशमनाय भवौषधाय। कृष्णाय वृश्चिकजलाग्निभुजङ्गरोगक्लेशव्ययाय हरये गुरवे नमस्ते ॥ ५१ ॥ आविर्होत्र उवाच। कृष्ण त्वदीयपदपङ्कजपञ्जरान्ते अद्यैव मे विशतु मानसराजहंसः। प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ५२ ॥ विदुर उवाच। हरेर्नामैव नामैव नामैव मम जीवनम्। कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ ५३ ॥ वसिष्ठ उवाच। कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते। भस्मीभवन्ति तस्याशु महापातककोटयः ॥ ५४ ॥ अरुन्धत्युवाच। कृष्णाय वासुदेवाय हरये परमात्मने। प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥ ५५ ॥ कश्यप उवाच। कृष्णानुस्मरणादेव पापसंघातपञ्जरः। शतधा भेदमाप्नोति गिरिर्वज्रहतो यथा ॥ ५६ ॥ दुर्योधन उवाच। जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः। केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥ ५७ ॥ यन्त्रस्वगुणदोषेण क्षम्यतां मधुसूदनः। अहमेवमहं हन्तुं मम दोषो न विद्यते ॥ ५८ ॥ भृगुरुवाच। नामैव तव गोविन्द कलौ त्वत्तः शताधिकम्। ददात्युच्चारणान्मुक्तिं विना अष्टां-

गयोगतः ॥ ५९ ॥ लोमहर्षण उवाच । नमामि नारायण-
पादपङ्कजं करोमि नारायणपूजनं सदा । वदामि नाराय-
णनाम निर्मलं स्मरामि नारायणतत्त्वमव्ययम् ॥ ६० ॥
शौनक उवाच । स्मृत्वा सकलकल्याणभाजनं यत्र जायते ।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ ६१ ॥ गर्ग
उवाच । नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी ।
तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ ६२ ॥ दाल्भ्य
उवाच । किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥ ६३ ॥ वैश-
म्पायन उवाच । यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ६४ ॥ अङ्गिरा
उवाच । हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनि-
च्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ ६५ ॥ पराशर
उवाच । सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परि-
करस्तेन मोक्षाय गमनं प्रति ॥ ६६ ॥ पौलस्य उवाच । हे
जिह्वे रससारज्ञे सर्वदा मधुरप्रिये । नारायणाख्यं पीयूषं
पिब जिह्वे निरन्तरम् ॥६७॥ व्यास उवाच । सत्यं सत्यं पुनः
सत्यं भुजमुत्थाप्य चोच्यते । न वेदाच्च परं शास्त्रं न देवः
केशवात्परः ॥ ६८ ॥ धन्वन्तरिरुवाच । अच्युतानन्त
गोविन्द नामोच्चारणभेषजात् । नश्यन्ति सकला रोगाः

सत्यं सत्यं वदाम्यहम् ॥ ६९ ॥ मार्कण्डेय उवाच । सा हानिस्तन्महच्छिद्रं सा चान्धजडमूढता । यन्मुहूर्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥ ७० ॥ अगस्त्य उवाच । निमिषं निमिषार्धं वा प्राणिनां विष्णुचिन्तनम् । क्रतुकोटिसहस्राणां ध्यानमेकं विशिष्यते ॥ ७१ ॥ मनसा कर्मणा वाचा ये स्मरंति जनार्दनम् । तत्र तत्र कुरुक्षेत्रं प्रयागो नैमिषं वनम् ॥ ७२ ॥ श्रीशुक उवाच । आलोड्य सर्वशास्त्राणि विचार्यैवं पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ७३ ॥ श्रीमहादेव उवाच । शरीरं च नवच्छिद्रं व्याधिग्रस्तं कलेवरम् । औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥ ७४ ॥ शौनक उवाच । भोजनाच्छादने चिन्तां वृथा कुर्वन्ति वैष्णवाः । योऽसौ विश्वंभरो देवः स भक्तान् किमुपेक्षते ॥ ७५ ॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम् ॥ ७६ ॥ सनत्कुमार उवाच । यस्य हस्ते गदाचक्रं गरुडो यस्य वाहनम् । शङ्खः करतले यस्य स मे विष्णुः प्रसीदतु ॥ ७७ ॥ इदं पवित्रमायुष्यं पुण्यं पापप्रणाशनम् । यः पठेत्प्रातरुत्थाय वैष्णवं स्तोत्रमुत्तमम् ॥ ७८ ॥ सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् । अमोघं कामभोगार्थं पाण्डवैः परिकीर्तितम् ॥ ७९ ॥ आकाशात्पतितं तोयं

यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥ ८० ॥

इति श्रीपाण्डवगीता संपूर्णा ।

## ४१२ कार्तिकेयस्तोत्रम् ।

श्रीगणेशाय नमः ॥ स्कन्द उवाच । योगीश्वरो महासेनः कार्तिकेयोऽग्निनन्दनः । स्कन्दः कुमारः सेनानीः स्वामी शंकरसंभवः ॥ १ ॥ गाङ्गेयस्ताम्रचूडश्च ब्रह्मचारी शिखिध्वजः । तारकारिरुमापुत्रः क्रौञ्चारिश्च षडाननः ॥ २ ॥ शब्दब्रह्मसमुद्रश्च सिद्धः सारस्वतो गुहः । सनत्कुमारो भगवान् भोगमोक्षफलप्रदः ॥ ३ ॥ शरजन्मा गणाधीश पूर्वजो मुक्तिमार्गकृत् । सर्वागमप्रणेता च वाञ्छितार्थप्रदर्शनः ॥४॥ अष्टाविंशतिनामानि मदीयानीति यः पठेत् । प्रत्यूषं श्रद्धया युक्तो मूको वाचस्पतिर्भवेत् ॥ ५ ॥ महामन्त्रमयानीति मम नामानुकीर्तनम् । महाप्रज्ञामवाप्नोति नात्र नार्या विचारणा ॥ ६ ॥

इति श्रीरुद्रयामले प्रज्ञाविवर्धनाख्यं श्रीमत्कार्तिकेयस्तोत्रं संपूर्णम् ।

## ४१३ हरिहरात्मकस्तोत्रम् ।

श्रीगणेशाय नमः ॥ गोविन्द माधव मुकुन्द हरे मुरारे

शंभो शिवेश शशिशेखर शूलपाणे । दामोदराच्युत जनार्दन वासुदेव त्याज्या भटा य इति संततमामनन्ति ॥ १ ॥ गङ्गाधरान्धकरिपो हर नीलकण्ठ वैकुण्ठ कैटभरिपो कमठाब्जपाणे । भूतेश खण्डपरशो मृड चण्डिकेश त्याज्या० ॥ २ ॥ विष्णो नृसिंह मधुसूदन चक्रपाणे गौरीपते गिरिश शंकर चन्द्रचूड । नारायणासुरनिबर्हण शार्ङ्गपाणे त्याज्या० ॥ ३ ॥ मृत्युंजयोग्रविषमेक्षण कामशत्रो श्रीकान्त पीतवसनाम्बुदनील शौरे । ईशान कृत्तिवसन त्रिदशैकनाथ त्याज्या० ॥ ४ ॥ लक्ष्मीपते मधुरिपो पुरुषोत्तमाद्य श्रीकण्ठ दिग्वसन शान्त पिनाकपाणे । आनन्दकन्द धरणीधर पद्मनाभ त्याज्या० ॥ ५ ॥ सर्वेश्वर त्रिपुरसूदन देवदेव ब्रह्मण्यदेव गरुडध्वज शङ्खपाणे । त्र्यक्षोरगाभरण बालमृगाङ्कमौले त्याज्या० ॥ ६ ॥ श्रीराम राघव रमेश्वर रावणारे भूतेश मन्मथरिपो प्रमथाधिनाथ । चाणूरमर्दन हृषीकपते मुरारे त्याज्या० ॥ ७ ॥ शूलिन् गिरीश रजनीशकलावतंस कंसप्रणाशन सनातन केशिनाश । भर्ग त्रिनेत्रभव भूतपते पुरारे त्याज्या० ॥८॥ गोपीपते यदुपते वसुदेवसूनो कर्पूरगौर वृषभध्वज भालनेत्र । गोवर्धनोद्धरण धर्मधुरीण गोप त्याज्या० ॥९॥ स्थाणो त्रिलोचन पिनाकधर स्मरारे कृष्णानिरुद्ध कमलाकर कल्मषारे । विश्वेश्वर त्रिपथगार्द्रजटाकलाप त्याज्या० ॥ १० ॥ अष्टोत्तराधिकशतेन सुचा-

स्नाम्नां संदर्भितां ललितरत्नकदम्बकेन । सन्नायकां दृढ-गुणां निजकण्ठगां यः कुर्यादिमां स्रजमहो स यमं न पश्येत् ॥ ११ ॥ गणावूचतुः । इत्थं द्विजेन्द्र निजभृत्यगणान्सदैव संशिक्षयेदवनिगान्स हि धर्मराजः । अन्येऽपि ये हरिह-राङ्कधरा धरायां ते दूरतः पुनरहो परिवर्जनीयाः ॥ १२ ॥ अगस्त्य उवाच । यो धर्मराजरचितां ललितप्रबन्धां नामा-वलिं सकलकल्मषबीजहन्त्रीम् । धीरोऽत्र कौस्तुभभृतः शशिभूषणस्य नित्यं जपेत्स्तनरसं न पिबेत्स मातुः ॥१३॥ इति शृण्वन्कथां रम्यां शिवशर्मा प्रियेऽनघाम् । प्रहर्षवक्त्रः पुरतो ददर्श सरसां पुरीम् ॥ १४ ॥

इति श्रीस्कन्दपुराणे काशीखण्डे धर्मराजविरचिता हरि-हराष्टोत्तरशतनामावलिः समाप्ता ।

## ४१४ शिवरामाष्टकम् ।

श्रीगणेशाय नमः ॥ शिव हरे शिव राम सखे प्रभो त्रिविधतापनिवारण हे विभो । अज जलेश्वर यादव पाहि मां शिव हरे विजयं कुरु मे वरम् ॥ १ ॥ कमललोचन राम दयानिधे हर गुरो गजरक्षक गोपते । शिवतनो भव शंकर पाहि मां शिव हरे वि० ॥ २ ॥ स्वजनरञ्जन मङ्गलमन्दिरं भजति ते पुरुषं परमं पदम् । भवति तस्य सुखं परमाद्भुतं शिव हरे वि० ॥ ३ ॥ जय युधिष्ठिरवल्लभ भूपते जय जया-

र्जितपुण्यपयोनिधे। जय कृपामय कृष्ण नमोऽस्तु ते शिव हरे वि० ॥ ४ ॥ भवविमोचन माधव मापते सुकविमानसहंस शिवारते। जनकजारत राघव रक्ष मां शिव हरे वि० ॥५॥ अवनिमण्डलमङ्गल मापते जलदसुन्दरराम रमापते। निगमकीर्तिगुणार्णव गोपते शिव हरे वि० ॥ ६ ॥ पतितपावन नाममयी लता तव यशो विमलं परिगीयते। तदपि माधव मां किमुपेक्षसे शिव हरे वि० ॥ ७ ॥ अमरतापरदेव रमापते विजयतस्तव नाम धनोपमा। मयि कथं करुणार्णव जायते शिव हरे वि० ॥ ८ ॥ हनुमतः प्रियचापकर प्रभो सुरसरिद्धृतशेखर हे गुरो। मम विभो किमु विस्मरणं कृते शिव हरे वि० ॥ ९ ॥ नरहरेति परं जनसुन्दरं पठति यः शिवरामकृतस्तवम्। विशति रामरमाचरणाम्बुजे शिव हरे वि० ॥ १० ॥ प्रातरुत्थाय यो भक्त्या पठेदेकाग्रमानसः। विजयो जायते तस्य विष्णुसान्निध्यमाप्नुयात् ॥ ११ ॥

इति श्रीरामानन्दविरचितं शिवरामस्तोत्रं संपूर्णम्।

---

## ४१५ गायत्रीकवचम्।

श्रीगणेशाय नमः ॥ श्रीपार्वत्युवाच । देवदेव महादेव संसारार्णवतारकम्। गायत्रीकवचं देव कृपया कथय प्रभो ॥१॥ श्रीमहादेव उवाच। मूलाधारे स्थिता नित्यं कुण्डली तत्त्वरूपिणी। सूक्ष्मातिसूक्ष्मपरमा बिसतन्तुस्वरूपिणी ॥२॥

विद्युत्पुञ्जप्रतीकाशा कुण्डला श्रुतिसर्पिणी । परस्य ब्रह्मग्रहणी पञ्चाशद्वर्णरूपिणी ॥ ३ ॥ शिवस्य नर्तकी नित्या परब्रह्मप्रपूजिता । ब्राह्मणस्यैव गायत्री चिदानन्दस्वरूपिणी ॥ ४ ॥ ब्रह्मण्यवर्त्मवातेयं प्राणात्मा नित्यनूतनात् । नित्यं तिष्ठति सानन्दा कुण्डली तव विग्रहे ॥ ५ ॥ अतिगोप्यं महत्पुण्यं त्रिकोटीतीर्थसंयुतम् । सर्वज्ञानमयी देवी सर्वदानमयी सदा ॥ ६ ॥ सर्वसिद्धिमयी देवी पार्वती प्राणवल्लभा । ॐ ॐ ॐ ॐ भूः ॐ ॐ भुवः ॐ ॐ स्वः ॐ ॐ त ॐ ॐ त्स ॐ ॐ वि ॐ ॐ तु ॐ ॐ र्व ॐ ॐ रे ॐ ॐ ण्यं ॐ ॐ भ ॐ ॐ र्गो ॐ ॐ दे ॐ ॐ व ॐ ॐ स्य ॐ ॐ धी ॐ ॐ म ॐ ॐ हि ॐ ॐ धि ॐ ॐ यो ॐ ॐ यो ॐ ॐ नः ॐ ॐ प्र ॐ ॐ चो ॐ ॐ द ॐ ॐ यात् ॐ ॐ ॐ । ॐ भूः ॐ पातु मे मूलं चतुर्दलसमन्वितम् । ॐ भुवः पातु मे लिङ्गं सजलं षट्दलात्मकम् ॥ ७ ॥ ॐ स्वः ॐ पातु मे कण्ठं सकाशां दलषोडशम् । ॐ त ॐ पातु मे रूपं ब्रह्माणं कारणं परम् ॥ ८ ॥ ॐ त्स ॐ पातु मे ब्रह्मरसं पातु सदा मम । ॐ वि ॐ पातु मे गन्धं सदा शशिरसंयुतम् ॥ ९ ॥ ॐ तु ॐ पातु मे स्पर्शं शरीरस्य च कारणम् । ॐ र्व ॐ पातु मे शब्दं शब्दविग्रहकारणम् ॥ १० ॥ ॐ रे ॐ पातु मे नित्यं सदा तत्त्वशरीरकम् । ॐ ण्यं ॐ पातु मे ह्यक्षं सर्वतत्त्वैककारणम्

॥ ११ ॥ ॐ यं ॐ पातु मे श्रोत्रं श्रवणस्य च कारणम् ।
ॐ भ ॐ पातु मे घ्राणं गन्धोपादानकारणम् ॥ १२ ॥
ॐ गों ॐ पातु मे वास्यं सभायां शब्दरूपिणी । ॐ दे
ॐ पातु मे बाहुयुगुलं ब्रह्मकारणम् ॥१३॥ ॐ व ॐ स्य
ॐ पातु मे लिङ्गं षड्दलं षड्दलैर्युतम् । ॐ धी ॐ पातु
मे नित्यं प्रकृतिः शब्दकारणम् ॥ १४ ॥ ॐ म ॐ पातु मे
नित्यं मनोब्रह्मस्वरूपिणम् । ॐ हि ॐ पातु मे बुद्धिं पर-
ब्रह्ममयं सदा ॥ १५ ॥ ॐ धि ॐ पातु मे नित्यमहंकार
यथा तथा । ॐ यो पातु मे नित्यं जलं सर्वत्र सर्वदा । ॐ
नः ॐ पातु मे नित्यं तेजःपुञ्जो यथा तथा ॥ १६ ॥ ॐ
प्र ॐ पातु मे नित्यमनिलं शरीरकारणम् । ॐ चो ॐ
पातु मे नित्यमाकाशं शिवसन्निभम् ॥ १७ ॥ ॐ द ॐ
पातु मे जिह्वां जपयज्ञस्य कारणम् ॥ ॐ यात् ॐ पातु मे
नित्यं शिवज्ञानमयं सदा ॥ १८ ॥ तत्त्वानि पांतु मे नित्यं
गायत्री परदैवतम् । कृष्णा मे सततं पातु ब्रह्माणि भूर्भु-
वःस्वरोम् ॥ १९ ॥ ॐ अस्य श्रीगायत्रीकवचस्य परब्रह्म
ऋषिः । ऋग्यजुःसामाथर्वणच्छन्दांसि । ब्रह्मा देवता । धर्मा-
र्थकाममोक्षार्थं जपे विनियोगः । ॐ भूर्भुवः स्वः तत्सवि-
तुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।
कामक्रोधादिकं सर्वं स्मरणाद्याति दूरतः । इदं कवचमज्ञात्वा

ब्रह्मविद्यां जपेद्यदि ॥ २० ॥ शतकोटिजपेनैव न सिद्धिर्जायते

प्रिये । गायत्रीकवचात्सर्वं स्मरणात्सिध्यति ध्रुवम् ॥२१॥ पठित्वा कवचं विप्रो गायत्रीं सकृदुच्चरेत् । सर्वपापविनिर्मुक्तो जीवन्मुक्तो भवेद्द्विजः ॥ २२ ॥ इदं कवचमज्ञात्वा कवचान्यं पठेत्तु यः । सर्वं तस्य वृथा देवि त्रैलोक्यमङ्गलादिकम् ॥ २३ ॥ गायत्रीकवचं यस्य जिह्वायां विद्यते सदा । तदामृतमयी जिह्वा पवित्रा जपपूजने ॥ २४ ॥ इदं कवचमज्ञात्वा ब्रह्मविद्यां जपेद्यदि । व्यर्थं भवति चार्वङ्गि तज्जपं वनरोदनम् ॥ २५ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्यानि स्मरणाद्यान्ति दूरतः ॥ २६ ॥ नाशमाप्नुयात्सर्वं मांसमेदोऽस्थिमज्जाशुक्रविनिर्मितम् (?) ॥ २७ ॥ वातपित्तकफैर्युक्तं स्थूलदेहं तदुच्यते । सूक्ष्मं ज्योतिर्मयं देहं पञ्चभूतात्मकं विदुः ॥ २८ ॥ महापद्मवनान्तस्थं सर्वावयवसंयुतम् । आधारदेहसंबन्धाद्गायत्री ब्रह्मणः स्वयम् ॥ २९ ॥ एतदेव परं ब्रह्म कथिते उभयात्मके । ब्राह्मणस्यैव जीवात्मा गायत्रीसहितो वपुः ॥ ३० ॥ आत्मनां हृदयाम्भोजे प्रदीपकलिकोपमम् । निर्धूमं च यथा ज्योतिस्तैलाग्निवर्तियोगतः ॥ ३१ ॥ तज्ज्योतिः परमं ब्रह्म शिवरावणसंशयः (?) । गायत्रीकवचं न्यासं मात्रिकास्थानसन्धिषु ॥ ३२ ॥ स कृत्वा ब्राह्मणश्रेष्ठ चान्यन्यासं समाचरेत् । अन्यन्यासे तथा सिद्धिरन्यथारण्यरोदनम् ॥ ३३ ॥ गायत्रीन्यासमात्रेण परब्रह्म-

मयो द्विजः । इदं कवचमज्ञात्वा ब्रह्मचर्यं करोति यः॥३४॥ ब्रह्मचर्यं भवेद्व्यर्थं गायत्रीकवचं विना । कवचस्य प्रसादेन ब्राह्मणो ज्वलदग्निवत् ॥ ३५ ॥ कवचं परमेशानि सृष्टि-स्थितिलयात्मकम् । कवचं ब्राह्मण इदं प्रातरुत्थाय यः पठेत् ॥ ३६ ॥ गायत्रीं स सकृत्स्मृत्वा जपलक्षफलं भवेत् । गायत्रीं दशधा जप्त्वा दशलक्षफलं भवेत् ॥ ३७ ॥ एवं क्रमेण गायत्रीं शतधा प्रजपेद्यदि । शतलक्षफलं प्राप्य विह-रेद्देववद्भुवि ॥ ३८ ॥ ग्रहणे चन्द्रसूर्यस्य पठित्वा कवचं द्विजः । सकृद्यदि जपेद्दिव्यां गायत्रीं परमाक्षराम् ॥ ३९ ॥ तत्क्षणात्तु भवेत्सिद्धो ब्रह्मसायुज्यमाप्नुयात् । इदं कवचम-ज्ञात्वा गायत्रीं प्रजपेत्तु यः ॥४०॥ जप एव तया वास्यां(?) निस्तेजो न च सिद्धिदः । यः पठेत्कवचं देवि सततं शिव-सन्निधौ ॥ ४१ ॥ विष्णुदेवस्य कवचं प्रजपेच्छक्तिसन्निधौ । तेजःपुञ्जमयो विप्रस्तत्क्षणाज्जायते ध्रुवम् ॥ ४२ ॥

इति श्रीरुद्रयामले पार्वतीश्वरसंवादे गायत्रीकवचं संपूर्णम् ।

---

## ४१६ मानसिकस्नानम् ।

श्रीगणेशाय नमः ॥ अनन्तादित्यसंकाशं वासुदेवं चतु-र्भुजम् । शङ्खचक्रगदापद्मधारिणं पुरुषोत्तमम् ॥ १ ॥ श्रीव-त्सकौस्तुभोरस्कं वनमालाविभूषितम् । श्यामलं शान्तव-दनं दिव्यपीताम्बरावृतम् ॥ २ ॥ दिव्यचन्दनलिप्ताङ्गं चारु-

हासं शुभेक्षणम् । नारदादिभिरासेव्यं भास्वद्भिर्मलकङ्कणम् ॥ ३ ॥ सकिङ्किणीककेयूरहारनूपुरशोभितम् । अनर्घरत्नखचितमुकुटेन विराजितम् ॥ ४ ॥ अनन्तरत्नसंछन्नं स्फुरन्मकरकुण्डलम् । ध्वजवज्राङ्कुशालक्ष्यपदपाथोरुहद्वयम् ॥ ५ ॥ तत्पादोदकजां गङ्गां निपतन्तीं स्वमूर्धनि । चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥ ६ ॥ तया संक्षालयेद्देहमन्तर्बाह्यगतं मलम् । तत्क्षणाद्विरजा मर्त्यो जायते स्फटिकोपमः ॥ ७ ॥ अन्तर्बहिश्च तत्सर्वं मानसं स्नानमाचरेत् । इडा भागीरथी गङ्गा पिङ्गला यमुना नदी ॥ ८ ॥ तयोर्मध्यगता नाडी सुषुम्नाख्या सरस्वती । ध्यानह्रदे ज्ञानजले रागद्वेषमलापहे ॥ ९ ॥ यः स्नाति मानसे तीर्थे स याति परमां गतिम् । नमः शिवायै गङ्गायै शिवाश्रयै नमो नमः ॥ १० ॥ नमस्त्रिपथगामिन्यै विश्वमूर्त्यै नमो नमः । नमोस्तु पापहारिण्यै भागीरथ्यै नमो नमः ॥ ११ ॥ इदं मानसिकं स्नानं प्रोक्तं हरिहरादिभिः । सार्धत्रिकोटितीर्थेषु स्नानादप्यधिकं फलम् ॥ १२ ॥ अलिनीलघनश्यामं नलिनायतलोचनम् । स्मरामि सच्चिदानन्दं तेन स्नातो भवाम्यहम् ॥ १३ ॥ अच्युतोऽहमनन्तोऽहमानन्दोऽहमहं हरिः । नित्योऽहं निर्विकल्पोऽहं निराकारोऽस्म्यहं सदा ॥ १४ ॥ सच्चिदानन्दरूपोऽहमजोऽहममृतोऽस्म्यहम् । ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ॥ १५ ॥ अशक्तु-

वन्भावयितुं वाक्यमेतदुदीरयेत् । संवत्सरकृताभ्यासान्मुक्तिरेव न संशयः ॥ १६ ॥ इदं मानसिकं स्नानं प्रातरुत्थाय यः पठेत् । कालमृत्युमतिक्रम्य जीवत्याचन्द्रतारकम् ॥ १७ ॥ शुचिर्भवति संस्मृत्य स्नातो भवति दर्शनात् । प्रणिपातेन पूतात्मा त्रयः कृष्णे महागुणाः ॥ १८ ॥ चतुर्भुजं महाकायं शङ्खचक्रगदाधरम् । ध्यायीत मनसा विष्णुं मानसं स्नानमुच्यते ॥ १९ ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ २० ॥

इति श्रीवामनपुराणे गङ्गामाहात्म्ये मानसिकस्नानं संपूर्णम् ।

---

## ४१७ विश्वनाथनगरीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यत्र देवपति नापि देहिनां मुक्तिरेव भवतीति निश्चितम् । पूर्वपुण्यनिचयेन लभ्यते विश्वनाथनगरी गरीयसी ॥ १ ॥ स्वर्गतः सुखकरी दिवौकसां शैलराजतनयातिवल्लभा । ढुण्ढिभैरवविदारितविघ्ना विश्व० ॥ २ ॥ यत्र तीर्थममलं मणिकर्णिका सा सदाशिवसुखप्रदायिनी । या शिवेन रचिता निजायुधैर्विश्व० ॥ ३ ॥ सर्वदा अमरवृन्दवन्दिताया गजेन्द्रमुखवारितविघ्ना । कालभैरवकृतैकशासना विश्व० ॥ ४ ॥ यत्र मुक्तिरखिलैस्तु जन्तुभिर्लभ्यते मरणमात्रतः शुभा । साखिलामरगणस्पृहणीया विश्व० ॥५॥

उरगं तुरगं खगं मृगं वा करिणं केसरिणं खरं नरं वा ।
सकृदाप्लुत एव देवनद्यां लहरी किं न हरं चरीकरीति ॥६॥

इति श्रीमच्छंकराचार्यविरचितं विश्वनाथनगरीस्तोत्रं संपूर्णम् ।

## ४१८ कार्तवीर्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ कार्तवीर्यः खलद्वेषी कृतवीर्यसुतो बली । सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः ॥ १ ॥ रक्तगन्धो रक्तमाल्यो राजा स्मर्तुरभीष्टदः । द्वादशैतानि नामानि कार्तवीर्यस्य यः पठेत् ॥ २ ॥ संपदस्तस्य जायन्ते जनास्तस्य वशंगताः । आनयत्याशु दूरस्थं क्षेमलाभयुतं प्रियम् ॥ ३ ॥ कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रभृत् । तस्य स्मरणमात्रेण हृतं नष्टं च लभ्यते ॥ ४ ॥ कार्तवीर्य महाबाहो सर्वदुष्टनिबर्हण । सर्वं रक्ष सदा तिष्ठ दुष्टान्नाशय पाहि माम् ॥ ५ ॥ सहस्रबाहुं सशरं सचापं रक्ताम्बरं रक्तकिरीटकुण्डलम् । चौरादिदुष्टभयनाशनमिष्टदं तं ध्यायेन्महाबलविजृम्भितकार्तवीर्यम् ॥ ६ ॥ यस्य संस्मरणादेव सर्वदुःखक्षयो भवेत् । तं नमामि महावीर्यमर्जुनं कृतवीर्यजम् ॥७॥ हैहयाधिपतेः स्तोत्रं सहस्रावर्तनं कृतम् । वाञ्छितार्थप्रदं नृणां शूद्राद्यैर्यदि न श्रुतम् ॥ ८ ॥

इति श्रीडामरतन्त्रे उमामहेश्वरसंवादे कार्तवीर्यस्तोत्रं संपूर्णम् ।

## ४१९ लघु सप्तशतीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यत्कर्म धर्मनिलयं प्रवदन्ति तज्ज्ञा यज्ञादिकं तदखिलं सफलं त्वयैव । त्वां चेतनायत इति प्रविचार्य चित्ते नित्यं त्वदीयचरणौ शरणं प्रपद्ये ॥ १ ॥ पाथोधिनाथतनयापतिरेव शेषपर्यङ्कलालितवपुः पुरुषः पुराणः । त्वन्मोहपाशविवशो जगदम्ब सोऽपि व्याघूर्णमाननयनः शयनं चकार ॥ २ ॥ तत्कौतुकं जननि यस्य जनार्दनस्य कर्णप्रसूतमलजौ मधुकैटभाख्यौ । तस्यापि यौ न भवतः सुलभौ विहन्तुं त्वन्मायया कवलितौ विलयं गतौ तौ ॥३॥ यन्माहिषं वपुरपूर्वबलोपपन्नं यन्नाकनायकपराक्रमजित्वरं च । यल्लोकशोकजननप्रतिबद्धहार्दं तल्लीलयैव दलितं गिरिजे भवत्या ॥ ४ ॥ यो धूम्रलोचन इति प्रथितः पृथिव्यां भस्मीबभूव समरे तव हुंकृतेन । सर्वासुरक्षयकरे गिरिराजकन्ये मन्ये स्वमन्युदहने कृत एष होमः ॥ ५ ॥ केषामपि त्रिदशनायकपूर्वकानां जेतुं न जातु सुलभाविति चण्डमुण्डौ । तौ दुर्मदौ तु परमाम्बरतुल्यरूपे मातस्तवासि कुलिशात्पतितौ विशीर्णौ ॥ ६ ॥ दौत्येन ते शिव इति प्रथितप्रभावो देवोऽपि दानवपतेः सदनं जगाम । भूयोऽपि तस्य चरितं प्रथयाञ्चकार सा त्वं प्रतीति शिवदूति विजृम्भितासि ॥ ७ ॥ चित्रं तदेतदमरैरपि ये न पेयाः शस्त्राभिघातपतितारुधिरादपर्णे । भूमौ बभूवुरमिताः प्रतिरक्तबीजास्तेऽपि त्वयैव

गगने गिलिताः समस्ताः ॥ ८ ॥ आश्चर्यमेतदखिलं यदभूः सुरारी त्रैलोक्यवैभवविलुण्ठनजुष्टपाणी । शस्त्रैर्निहत्य भुवि शुम्भनिशुम्भसंज्ञौ नीतौ त्वया जननि तावपि नाकलोकम् ॥ ९ ॥ त्वत्तेजसा प्रलयकालहुताशनेऽस्मिन्नस्ते प्रयान्ति भुवनान्यखिलानि सद्यः । तस्मिन्निपत्य शलभा इव दानवेन्द्रा भस्मीभवन्ति हि भवानि किमत्र चित्रम् ॥ १० ॥ किं वर्णयामि भवतीं भवति प्रतापसंवर्धनप्रणयिनि प्रणमज्जनेषु । तत्किं वृणामि भवतीं भवति प्रतापसंवर्धनि प्रणयिनीं विपदास्थितेषु ॥ ११ ॥ वामे करे तदितरे च तथोपरिष्टात्पात्रं सुधारसयुतं वरमातुलिङ्गम् । खेटं गदां च दधतीं भवतीं भवानीं ध्यायन्ति येऽरुणनिभां कृतिनस्त एव ॥ १२ ॥ यद्वारुणात्परमिदं जगदम्ब यस्ते वीजं स्मरेदनुदिनं मदनादिरूढम् । मायाङ्कितं तिलकितं तरुणेन्दुबिन्दुनादैरतीन्द्रमिह राज्यमसौ भुनक्ति ॥ १३ ॥ आवाहनं यजनवर्णनमग्निहोत्रं कर्मार्पणं तव विसर्जनमत्र देवि । मोहान्मया कृतमिदं सकलापराधं मातः क्षमस्व वरदे बहिरन्तरस्थे ॥ १४ ॥ अन्तःस्थिताप्यखिलजन्तुषु तन्तुरूपा विद्योतसे बहिरिहाखिलवस्तुरूपा । का भूरिशब्दरचना वचनातिगासि दीनं जनं जननि मामिह निःप्रपञ्चम् ॥ १५ ॥ एतत्पठेदनुदिनं दनुजान्तकारि चण्डीचरित्रमतुलं भुवि यस्तिलकम् । भीमन्दुली दनुजपूर्णभगः क्षमी स्याद्योगी

चिरन्तनवपुः कविचक्रवर्ती ॥ १६ ॥ श्रीसिद्धिनाथापर-नामधेयः श्रीशंभुनाथो भुवनैकनाथः । तस्य प्रसादात्सकलागमज्ञः पृथ्वीधरः स्तोत्रमिदं चकार ॥ १७ ॥

इति पृथ्वीधराचार्यविरचितं लघु सप्तशतीस्तोत्रं संपूर्णम् ।

## ४२० बन्दीमोचनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीबन्दीमोचनमन्त्रस्य कण्वऋषिः । त्रिष्टुप् छन्दः । ह्रीं बीजम् । ह्रूं कीलकम् । मम बन्दीमोचनार्थे जपे विनियोगः । ॐ ह्रीं ह्रूं बन्दीदेव्यै नमः । अष्टोत्तरशतं जपः । बन्दीं देवीं नमस्कृत्य वरदाभयशोभिताम् । तदङ्घ्यां शरणं गच्छे शीघ्रं मोक्षं ददातु मे ॥ १ ॥ बन्दी कमलपत्राक्षी लोहश्रृङ्खलभञ्जिनी । प्रसादं कुरु मे देवि शीघ्रं० ॥ २ ॥ त्वं बन्दी त्वं महामाया त्वं दुर्गा त्वं सरस्वती । त्वं देवी रजनी चैव शीघ्रं० ॥ ३ ॥ संसारतारिणी बन्दी सर्वकामप्रदायिनी । सर्वलोकेश्वरी देवी शीघ्रं० ॥ ४ ॥ त्वं ह्रीस्त्वमीश्वरी देवी ब्रह्माणी ब्रह्मवादिनी । त्वं वै कल्पक्षयं कर्त्री शीघ्रं० ॥ ५ ॥ देवी धात्री धरित्री च धर्मशास्त्रार्थभाषिणी । दुश्शांबरागिणी देवी शीघ्रं० ॥ ६ ॥ नमोऽस्तु ते महालक्ष्मि रत्नकुण्डलभूषिता शिवस्यार्धाङ्गिनी चैव शीघ्रं० ॥ ७ ॥ नमस्कृत्य महादुर्गां भयाद्दुत्तारिणीं शिवाम् ॥ महादुःखहरां चैव शीघ्रं० ॥ ८ ॥

इदं स्तोत्रं महापुण्यं यः पठेन्नित्यमेव च । सर्वबन्धविनिर्मुक्तो मोक्षं च लभते क्षणात् ॥ ९ ॥

इति श्रीरुद्रयामले वन्दीमोचनस्तोत्रं समाप्तम् ।

## ४२१ महामारीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देव्युवाच । पुरा ब्रह्मा तु मां स्पृष्ट्वा समाहूयाब्रवीद्वचः । शृणु मे वचनं पुत्रि कुरुष्वाद्याथ सादरम् ॥ १ ॥ कलौ जना दुराचारा राजानश्च तथाविधाः । अतो गत्वा भुवं देवि मृत्युरूपा भवाशु च ॥ २ ॥ परद्रव्यापहर्तारः परस्त्रीनिरताः सदा । देवस्वहरणे सक्ता ब्रह्मस्वहरणे नृप ॥ ३ ॥ तेषां दोषवशात्त्वं तु जनान् संहर नित्यशः ब्रह्मणैवं समादिष्टा इन्द्राद्यैः सुरसत्तमैः ॥ ४ ॥ भुवं समागता तत्र जनाञ्ज्ञात्वाथ पापिनः । राज्ञो दोषान्पुरस्कृत्य ग्रामे ग्रामे वसाम्यहम् । तत्रापि पापिनो हत्वा पुनर्ग्रामान्तरं भजे ॥ ५ ॥ एवं देशानटित्वाहं सर्वान्संहृत्य वै जनान् पुनर्गच्छामि सदनं ब्रह्मणः परमेष्ठिनः ॥ ६ ॥ एवं मदागमं ज्ञात्वा बुद्धिमान्पुण्यकृन्नरः । विचार्य शास्त्रतो नित्यं जागरूको भवेदलम् ॥ ७ ॥ पतन्ति मूषिका यत्र नृत्यन्ति विरमन्ति च । तद्गृहं तत्क्षणं त्यक्त्वा सकुटुम्बो वने विशेत् ॥ ८ ॥ तत्र शान्तिं प्रकुर्वीत महादेव्याः समीरिताम् । जपित्वा च महामन्त्रं पठित्वा स्तोत्रमुत्तमम् ॥ ९ ॥

ॐ नमो भगवति महामारिके मृत्युरूपिणि सकुटुम्बं मामव स्वाहा । वने जलाशयं गत्वा ऊर्ध्वबाहुरधोमुखः। वीरासने चोपविश्य जपेन्मन्त्रं सहस्रशः ॥ १० ॥ संस्थाप्य प्रतिमां तत्र धूपदीपोपहारकैः। संपूज्य विधिवत्पश्चाज्जुहुयात्प्रत्यहं नरः ॥११॥ हरिद्राचूर्णमिश्रेण चित्रान्नेनैव संयुतः। समिद्भिः खदिरैर्भक्त्या ब्राह्मणैश्च समन्वितः ॥ १२ ॥ पत्नीपुत्रात्मभृत्यैश्च जुहुयादनुवासरम् । होमान्ते च पठेन्नित्यं स्तोत्रमेतज्जितेन्द्रियः ॥ १३ ॥ नमो देवि महादेवि सर्वशोकवशंकरि । सर्वदा सर्वतो मह्यं कृपां कुरु कृपामयि ॥१४॥ मेरौ कैलासशिखरे हेमाद्रौ गन्धमादने । नित्यप्रियकृतावासे मद्यमांसबलिप्रिये ॥ १५ ॥ महासैन्यसमायुक्ते सर्वप्राणविहिंसके । सर्वाभिचारिके देवि सर्वं त्वं रक्ष सर्वदा ॥ १६ ॥ यत्र कुत्र स्थले वापि यस्मिन् कस्मिन् यदा तदा । रक्ष मां रक्ष मां देवि सपुत्रपशुभृत्यकम् ॥ १७ ॥ माङ्गल्यं मङ्गलं देहि महामङ्गलदायिनि । लोकानामभये सर्वमङ्गले मङ्गलप्रिये ॥ १८ ॥ इति स्तुत्वा महादेवीं भक्तिभावेन संयुतः। भुञ्जीत स्वजनैर्युक्तो देवीं तां मनसा स्मरन् ॥ १९ ॥ यदा स्वगृहचैत्येषु ध्वाङ्क्षरावो भविष्यति । काकशान्तिं ततः कृत्वा गृहं गन्तुमुपक्रमेत् ॥ २० ॥ शुभमुहूर्ते शुनक्षत्रे स्वलंकृत्य ततो गृहम् । ब्राह्मणैर्बन्धुभिः सार्धं संविशेद्गृहमात्मनः ॥ २१ ॥ स्वस्तिवाचनविप्रेभ्यः शान्तिसूक्तोक्तिपूर्वकम् ।

दक्षिणां च हिरण्यादिं दद्याच्छाठ्यविवर्जितः ॥ २२ ॥ ब्राह्म-णान्भोजयित्वा च देवीं तां प्रार्थयेद्गृहे । गच्छ गच्छ महा-देवि स्वस्थानं मङ्गलं कुरु ॥२३॥ एवं कृत्यविधानेन मारि-काशान्तिरुत्तमा । जायते नात्र संदेहः सत्यं सत्यं समीरि-तम् ॥ २४ ॥ इत्येतत्कथितं देव्या देवेभ्यः स्वात्मसंभवम् । माहात्म्यं पठितं येन सोऽपि माङ्गल्यमाप्नुयात् ॥ २५ ॥ लिखितं पुस्तकं यस्य गृहे तिष्ठति सर्वदा । तस्य मारीभयं नास्ति सत्यं सत्यं मयोदितम् ॥ २६ ॥ पुस्तकं पूजयेद्यस्तु श्रद्धया परया मुदा । सोऽपि माङ्गल्यमाप्नोति इहामुत्र परां गतिम् ॥ २७ ॥ सर्वं त्यक्त्वा साधयेत देवीं यत्नैर्धनैरपि । स्तोष्यन्ति परया भक्त्या सर्वकामार्थसिद्धये ॥२८॥ बिडाला यत्र नश्यन्ति यत्र नश्यन्ति मूषिकाः । स्थानं तत्र परि-त्यज्य स्थानं शून्यं च कारयेत् ॥ २९ ॥

इति श्रीदेवीपुराणे श्रीमहामारिकास्तोत्रं संपूर्णम् ।

## ४२२ मृतसंजीवनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ एवमाराध्य गौरीशं देवं मृत्युंजये-श्वरम् । मृतसंजीवनं नाम्ना कवचं प्रजपेत्सदा ॥१॥ सारा-त्सारतरं पुण्यं गुह्याद्गुह्यतरं शुभम् । महादेवस्य कवचं मृत-संजीवनामकम् ॥ २ ॥ समाहितमना भूत्वा शृणुष्व कवचं शुभम् । श्रुत्वैतद्दिव्यकवचं रहस्यं कुरु सर्वदा ॥ ३ ॥ वरा-

भयकरो यज्वा सर्वदेवनिषेवितः । मृत्युंजयो महादेवः प्राच्यां मां पातु सर्वदा ॥४॥ दधानः शक्तिमभयां त्रिमुखः षड्भुजः प्रभुः । सदाशिवोऽग्निरूपी मामाग्नेय्यां पातु सर्वदा ॥ ५ ॥ अष्टादशभुजोपेतो दण्डाभयकरो विभुः । यमरूपी महादेवो दक्षिणस्यां सदावतु ॥ ६ ॥ खड्गाभयकरो धीरो रक्षोगणनिषेवितः । रक्षोरूपी महेशोमां नैर्ऋत्यां सर्वदावतु ॥ ७ ॥ पाशाभयभुजः सर्वरत्नाकरनिषेवितः । वरुणात्मा महादेवः पश्चिमे मां सदावतु ॥ ८ ॥ गदाभयकरः प्राणनायकः सर्वदागतिः । वायव्यां मारुतात्मा मां शंकरः पातु सर्वदा ॥ ९ ॥ शङ्खाभयकरस्थो मां नायकः परमेश्वरः । सर्वात्मान्तरदिग्भागे पातु मां शंकरः प्रभुः ॥१०॥ शूलाभयकरः सर्वविद्यानामधिनायकः । ईशानात्मा तथैशान्यां पातु मां परमेश्वरः ॥ ११ ॥ ऊर्ध्वभागे ब्रह्मरूपी विश्वात्माधः सदावतु । शिरो मे शंकरः पातु ललाटं चन्द्रशेखरः ॥ १२ ॥ भ्रूमध्यं सर्वलोकेशस्त्रिनेत्रो लोचनेऽवतु । भ्रूयुग्मं गिरिशः पातु कर्णौ पातु महेश्वरः ॥ १३ ॥ नासिकां मे महादेव ओष्ठौ पातु वृषध्वजः । जिह्वां मे दक्षिणामूर्तिर्दन्तान्मे गिरिशोऽवतु ॥ १४ ॥ मृत्युंजयो मुखं पातु कण्ठं मे नागभूषणः । पिनाकी मत्करौ पातु त्रिशूली हृदयं मम ॥ १५ ॥ पञ्चवक्त्रः स्तनौ पातु उदरं जगदीश्वरः । नाभिं पातु विरूपाक्षः पार्श्वौ मे पार्वतीपतिः ॥ १६ ॥ कटिद्वयं

गिरीशो मे पृष्ठं मे प्रमथाधिपः । गुह्यं महेश्वरः पातु ममोरू पातु भैरवः ॥ १७ ॥ जानुनी मे जगद्धर्ता जङ्घे मे जगदम्बिका । पादौ मे सततं पातु लोकवन्द्यः सदाशिवः ॥१८॥ गिरिशः पातु मे भार्यां भवः पातु सुतान्मम । मृत्युंजयो ममायुष्यं चित्तं मे गणनायकः ॥ १९ ॥ सर्वाङ्गं मे सदा पातु कालकालः सदाशिवः । एतत्ते कवचं पुण्यं देवतानां च दुर्लभम् ॥ २० ॥ मृतसंजीवनं नाम्ना महादेवेन कीर्तितम् । सहस्रावर्तनं चास्य पुरश्चरणमीरितम् ॥ २१ ॥ यः पठेच्छृणुयान्नित्यं श्रावयेत्सुसमाहितः । स कालमृत्युं निर्जित्य सदायुष्यं समश्नुते ॥ २२ ॥ हस्तेन वा यदा स्पृष्ट्वा मृतं संजीवयत्यसौ । आधयो व्याधयस्तस्य न भवन्ति कदाचन ॥ २३ ॥ कालमृत्युमपि प्राप्तमसौ जयति सर्वदा । अणिमादिगुणैश्वर्यं लभते मानवोत्तमः ॥ २४ ॥ युद्धारम्भे पठित्वेदमष्टाविंशतिवारकम् । युद्धमध्ये स्थितः शत्रुः सद्यः सर्वैर्न दृश्यते ॥ २५ ॥ न ब्रह्मादीनि चास्त्राणि क्षयं कुर्वन्ति तस्य वै । विजयं लभते देवयुद्धमध्येऽपि सर्वदा ॥ २६ ॥ प्रातरुत्थाय सततं यः पठेत्कवचं शुभम् । अक्षय्यं लभते सौख्यमिह लोके परत्र च ॥ २७ ॥ सर्वव्याधिविनिर्मुक्तः सर्वरोगविवर्जितः । अजरामरणो भूत्वा सदा षोडशवार्षिकः ॥ २८ ॥ विचरत्यखिलाँल्लोकान्प्राप्य भोगांश्च दुर्लभान् ।

तस्मादिदं महागोप्यं कवचं समुदाहृतम् ॥ २९ ॥ मृतसंजीवनं नाम्ना दैवतैरपि दुर्लभम् ॥ ३० ॥

इति श्रीवसिष्ठविरचितं मृतसंजीवनस्तोत्रं संपूर्णम् ।

---

## ४२३ वेंकटेश्वरमङ्गलस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रियः कान्ताय देवाय कल्याणनिधयेऽर्थिनाम् । श्रीवेंकटनिवासाय श्रीनिवासाय मङ्गलम् ॥ १ ॥ लक्ष्मीसविभ्रमालोकसभ्रूविभ्रमचक्षुषे । चक्षुषे सर्वलोकानां वेंकटेशाय मङ्गलम् ॥ २ ॥ श्रीवेंकटाद्रिशृङ्गाय मङ्गलाभरणाङ्घ्रये । मङ्गलानां निवासाय श्रीनिवासाय मङ्गलम् ॥ ३ ॥ सर्वावयवसौन्दर्यसंपदा सर्वचेतसाम् । सदा संमोहनायास्तु वेंकटेशाय मङ्गलम् ॥ ४ ॥ नित्याय निरवद्याय सत्यानन्दचिदात्मने । सर्वान्तरात्मने श्रीमद्वेंकटेशाय मङ्गलम् ॥ ५ ॥ स्वतः सर्वविदे सर्वशक्तये सर्वशेषिणे । सुलभाय सुशीलाय वेंकटेशाय मङ्गलम् ॥ ६ ॥ परस्मै ब्रह्मणे पूर्णकामाय परमात्मने । प्रपन्नपरतत्त्वाय वेंकटेशाय मङ्गलम् ॥ ७ ॥ अकालतत्त्वविश्रान्तावात्मानमनुपश्यताम् । अतृप्तामृतरूपाय वेंकटेशाय मङ्गलम् ॥ ८ ॥ प्रायः स्वचरणौ पुंसां शरणत्वेन पाणिना । कृपया दृश्यते श्रीमद्वेंकटेशाय मङ्गलम् ॥९॥ दयामृततरङ्गिण्यास्तरङ्गैरपि शीतलैः । अपाङ्गैः सिञ्चते विश्वं वेंकटेशाय मङ्गलम् ॥ १० ॥ स्रग्भू-

धाम्बरहेतीनां सुषमावहमूर्तये । सर्वार्तिशमनायास्तु वेंकटेशाय मङ्गलम् ॥११॥ श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे । रमया रममाणाय वेंकटेशाय मङ्गलम् ॥१२॥ श्रीमत्सुन्दरजामातृमुनिमानसवासिने । सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम् ॥ १३ ॥ नमः श्रीवेंकटेशाय शुद्धज्ञानस्वरूपिणे । वासुदेवाय शान्ताय श्रीनिवासाय मङ्गलम् ॥ १४ ॥ मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १५ ॥

इति श्रीवेंकटेशमङ्गलस्तोत्रं संपूर्णम् ।

## ४२४ अश्विनीकुमारस्तोत्रम् ।

श्रीगणेशाय नमः ॥ प्रपूर्वगौ पूर्वजौ चित्रभानू गिरा वां शंसामि तपसा ह्यनन्तौ । दिव्यौ सुपर्णौ विरजौ विमानावधिक्षिपन्तौ भुवनानि विश्वा ॥ १ ॥ हिरण्मयौ शकुनी सांपरायौ नासत्यदस्रौ सुनसौ वैजयन्तौ । शुक्लं वयन्तौ तरसा सुवेमावधिव्ययन्तावसितं विवस्वतः ॥२॥ ग्रस्तां सुपर्णस्य बलेन वर्तिकामसुञ्चतावश्विनौ सौभगाय । तावत्सुवृत्तावनमन्तमाय यावसत्तमा गा अरुणा उदावहत् ॥ ३ ॥ षष्टिश्च गावस्त्रिशताश्च धेनव एकं वत्सं सुवते तं दुहन्ति । नाना गोष्ठा विहिता एकदोहनास्तावश्विनौ दुहतो धर्ममुक्थ्यम्



॥ ४ ॥ एकां नाभिं सप्तशता अराः श्रिताः प्रधिष्वन्या

विंशतिरर्पिता अराः। अनेमिचक्रं परिवर्ततेऽजरं मायाश्विनौ समनक्ति चर्षणी ॥ ५ ॥ एकं चक्रं वर्तते द्वादशारं षण्णाभिमेकाक्षममृतस्य धारणम्। यस्मिन्देवा अधि विश्वे विषक्तास्तावश्विनौ मुञ्चतो मा विषीदतम् ॥ ६ ॥ अश्विनाविन्दुममृतं वृत्तभूयौ तिरोधत्तामश्विनौ दासपत्नी। हित्वा गिरिमश्विनौ गामुदाचरन्तौ तद्वृष्टिमह्नात्प्रथितौ बलस्य ॥ ७ ॥ युवां दिशो जनयथो दशाग्रे समानं मूर्ध्नि रथयानं वियन्ति। तासां यातमृषयोऽनुप्रयान्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ८ ॥ युवां वर्णान्विकुरुथो विश्वरूपांस्तेऽधिक्षियन्ते भुवनानि विश्वा। ते भानवोऽप्यनुसृताश्चरन्ति देवा मनुष्याः क्षितिमाचरन्ति ॥ ९ ॥ तौ नासत्यावश्विनौ वां महेऽहं स्रजं च यां बिभृथः पुष्करस्य। तौ नासत्यावमृतावृतावृधावृते देवास्तत्प्रपदे न सूते ॥ १० ॥ मुखेन गर्भं लभतां युवानौ गतासुरेतत्प्रपदेन सूते। सद्यो जातो मातरमत्ति गर्भस्तावश्विनौ मुञ्चथो जीवसे गाम् ॥ ११ ॥ स्तोतुं न शक्नोमि गुणैर्भवन्तौ चक्षुर्विहीनः पथि संप्रमोहः। दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे युवां शरण्यौ शरणं प्रपद्ये ॥१२॥

इति श्रीमन्महाभारते आदिपर्वण्यश्विनीकुमारस्तोत्रं संपूर्णम्।

---



## ४२५ पञ्चदेवस्तोत्रम्।

श्रीगणेशाय नमः ॥ गणेशविष्णुसूर्येशदुर्गाख्यं देवपञ्च-

कम् । वन्दे विशुद्धमनसा जनसायुज्यदायकम् ॥१॥ एक-रूपान् भिन्नमूर्तीन् पञ्चदेवान्नमस्कृतान् । वन्दे विशुद्धभावे-नेशाम्बेनैकरदाच्युतान् ॥ २ ॥ कल्याणदायिनो देवान्नम-स्कार्यान्महौजसः। विष्णुशंभुशिवासूर्यगणेशाख्यान्नमाम्यहम् ॥ ३ ॥ एकात्मनो भिन्नरूपान् लोकरक्षणतत्परान् । शिव-विष्णुशिवासूर्यहेरम्बान् प्रणमाम्यहम् ॥ ४ ॥ दिव्यरूपाने-करूपान्नानारूपान्नमस्कृतान् । शिवाशंकरहेरम्बविष्णुसूर्या-न्नमाम्यहम् ॥ ५ ॥ नित्यानानन्दसंदोहदायिनो दीनपाल-कान् । शिवाच्युतगणेशेनदुर्गाख्यान् नौम्यहं सुरान् ॥ ६ ॥ कमनीयतनून्देवान् सेवावश्यान् कृपावतः । शंकरेनशिवा-विष्णुगणेशाख्यान्नमाम्यहम् ॥ ७ ॥ सूर्यविष्णुशिवाशंभुवि-घ्नराजाभिधान्सुरान् । एकरूपान् सदा वन्दे सुखसंदोहसि-द्धये ॥ ८ ॥ हरौ हरे तीक्ष्णकरे गणेशे शक्तौ न भेदो जग-दादिहेतुषु । अधः पतन्त्येषु भिदां दधाना भाषन्त एवं यतयोऽच्युताश्रमाः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदच्युताश्रम-
विरचितं पञ्चदेवस्तोत्रं समाप्तम् ।

---

## ४२६ भेदभङ्गाभिधानस्तोत्रम् ।

श्रीगणेशाय नमः ॥ चतुर्वदनाम्भोजजाद्भूतमन्तं भवन्तं 
भवच्छेदकर्तारमग्र्यम् । सुखानां चतुष्कं दधानं प्रधानं शिवं

सृष्टिकर्त्तारमीशानमीडे ॥ १ ॥ उमाङ्कश्रितं स्वं करं चोत्क्षिपन्तं गिरीशोत्तमाङ्गस्थचन्द्रं दिधीर्षुम् । मुहुर्गर्जितं सस्मितं सर्वपूज्यं शिवं विघ्नहर्तारमीशानमीडे ॥ २ ॥ सुमेरोः समन्तात्सदैवाश्रयन्तं सहस्रांशुभासा नभो भासयन्तम् । जगद्भद्रहेतोर्धृतानेकरूपं शिवं व्याधिहर्तारमीशानमीडे ॥ ३ ॥ रमाजानकीरुक्मिणीजाम्बवत्याद्यनेकस्वशक्तिस्फुरद्वामभागम् । हृषीकेशरामाघशत्र्वादिसंज्ञं शिवं सर्वदातारमीशानमीडे ॥ ४ ॥ धनाध्यक्षरूपेण ऋक्थान्यवन्तं कुबेरालकेशादिनामौघवन्तम् । पुलस्त्यान्वयोत्पत्तिभाजं विराजं शिवं द्रव्यदातारमीशानमीडे ॥ ५ ॥ प्रशस्तारुविद्यानिधानं सुधानं स्वभूस्वापपर्यङ्कतां संदधानम् । अनन्तावतारच्छलेनाधिशीर्षं शिवं भूमिधर्तारमीशानमीडे ॥ ६ ॥ अनेकक्रियारूपनामप्रकाशैर्निजं देवतापञ्चकं दर्शयन्तम् । तथैवावतारान् दशान्यांश्च लोके नटं चाखिलं दैवतं ज्योतिरीडे ॥ ७ ॥ श्रुतेर्नेह नानेति शब्दप्रमाणैर्मुनिभ्यस्तदर्थावयज्ञः पुराणैः । निजामेकतां द्योतयन्तं सुधीभ्यः सदासच्चिदात्मानमीशानमीडे ॥८॥ अजस्रेश्वराराधने दत्तचेता महात्माच्युताख्याश्रमान्तः परिव्राट् । अकार्षीदिदं भेदभङ्गाभिधानं मुदे स्तोत्रमन्तर्भिदाभङ्गभाजाम् ॥ ९ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमदच्युताश्रमविरचितं भेदभङ्गाभिधानस्तोत्रं समाप्तम् ।

## ४२७ सुदर्शनकवचम् ।

श्रीगणेशाय नमः ॥ ॐ अस्य श्रीसुदर्शनकवचमहामन्त्रस्य अहिर्बुध्न्य ऋषिः । सुदर्शनरूपी परमात्मा देवता । सहस्रारमिति बीजम् । सुदर्शनमिति शक्तिः । चक्राडिति कीलकम् । सर्वरक्षार्थे जपे विनियोगः । ॐ अचक्राय स्वाहा हृदयाय नमः । विचक्राय स्वाहा शिरसे । सुचक्राय स्वाहा शिखायै वषट् । धीचक्राय स्वाहा सुदर्शनकवचाय हुं । ज्वालाचक्राय स्वाहा नेत्राभ्यां वौषट् । सुचक्राय स्वाहा अस्त्राय फट् ॥ अथ ध्यानम् ॥ शङ्खं शार्ङ्गं सुखेटं हलपरशुगदापाशमन्तर्दधाने सव्ये वामेऽथ चक्रेऽप्यसिमुसललसद्वज्रहस्तं त्रिशूलम् । ज्वालाकेशं च पाशं ज्वलदनलशिखाविद्युदूर्ध्वमण्डलस्थं प्रत्यालीढं त्रिनेत्रं पुरगणमथनं भावयेन्मन्त्रराजम् ॥ १ ॥ मस्तकं मे सहस्रारं पातु भालं सुदर्शनम् । भ्रूमध्ये चक्रराट् पातु नेत्रेऽग्र्यर्केन्दुलाञ्छनः ॥ २ ॥ कर्णौ वेदस्तवः पातु घ्राणं पातु विभीषणः । महादीपैकपालीने इष्टरुद्रवरप्रदः ॥ ३ ॥ दन्तान्पातु जगद्बन्धो रसनां मम सर्वदा । सर्वविद्यानृपः पातु गिरं वागीश्वरोऽवतु ॥ ४ ॥ वीरसिंहो मुखं पातु चुबुकं भक्तवत्सलः । सर्वदो पृष्ठदेशे मे देवानामभयप्रदः ॥ ५ ॥ नाभिषट्कोणके पातु घण्टास्वः कटिं तथा । ऊरू पातु महाशूरो जानुनी भीमविक्रमः ॥ ६ ॥ जङ्घे पातु महावेगो गुल्फावदितिरञ्जनः । पातु

पादतलद्वन्द्वं विश्वभारो निरन्तरम् ॥ ७ ॥ सुदर्शननृसिंहो मे शरीरं पातु सर्वदा । पातु सर्वाङ्गकान्तिं मे कल्पान्ताग्निसमप्रभः ॥ ८ ॥ मम सर्वाङ्गरोमाणि ज्वालाकेशस्तु रक्षतु । अन्तर्बहिश्च मे पातु विश्वात्मा सर्वतोमुखः ॥ ९ ॥ रक्षाहीनं च यत्स्थानं प्रचण्डस्तत्र रक्षतु । सर्वतो दिक्षु मे पातु ज्वालासहस्रसंस्तुतम् ॥ १० ॥ इति सौदर्शनं दिव्यं कवचं सर्वकामदम् । सर्वबाधोपशमनं सर्वव्याधिनिवारणम् ॥ ११ ॥ सर्वशत्रुक्षयकरं सर्वमङ्गलदायकम् । त्रिसंध्यं जपतां नृणां सर्वदा सर्वकामदम् ॥ १२ ॥ प्रातरुत्थाय यो भक्त्या पठेदेतत्सदा नरः । तस्य कार्येषु सर्वेषु विघ्नः कोऽपि न जायते ॥ १३ ॥ यक्षराक्षसवेतालाः पिशाचाश्च विनायकाः । शाकिनीडाकिनीमाला कालिकाचण्डिकादयः ॥ १४ ॥ भूतप्रेतपिशाचाश्च येऽन्ये दुष्टग्रहा अपि । कवचस्य प्रभावेन दृष्टिमात्रेण तेऽखिलाः ॥ १५ ॥ पलायन्ते यथा नागाः पक्षिराजस्य दर्शनात् । अस्यायुतपुरश्चर्या दशांशं तिलसर्पिषा ॥ १६ ॥ हवनं तत्समं चैव तर्पणं गन्धवारिणा । पुष्पाञ्जलिर्दशांशेन मिष्टान्नैः सुघृतप्लुतैः । चतुर्विंशद्द्विजा भोज्यास्ततः कार्याणि साधयेत् ॥ १७ ॥ विन्यस्य जवनो धीरो युद्धार्थं योऽधिगच्छति । क्षणाज्जित्वाऽखिलाञ्छत्रून्विजयो भवति ध्रुवम् ॥ १८ ॥ मन्त्रिताम्बु त्रिवारं वै पिबेत्सप्तदिनावधि । व्याधयः प्रशमं यान्ति सकलाः कुक्षिसंभवाः ॥ १९ ॥ सुख-

रोगाक्षिरोगाणां नाशनं परमं मतम् । भीतानामभिषेकाच्च महाभयनिवारणम् ॥ २० ॥ सप्ताभिमन्त्रिताऽनेन तुलसीमूलमृत्तिका । किम्पेन्नश्यन्ति तद्रोगाः सप्त अच्छादयोऽखिलाः ॥ २१ ॥ ललाटे तिलकं नृणां मोहनं सर्ववश्यकृत् । परेषां मन्त्रतन्त्रादिनाशनं परमं मतम् । अग्निसर्पादिसर्वेषां विषाणां हरणं परम् ॥ २२ ॥ सौवर्णे राजते वाऽपि पत्रे भूर्जादिकेऽपि वा । लिखित्वा पूजयेद्भक्त्या स श्रीमान्भवति ध्रुवम् ॥ २३ ॥ बहुना किमिहोक्तेन यद्यद्वाञ्छति मानवः । सकलं प्राप्नुयादस्य कवचस्य प्रभावतः ॥ २४ ॥

इति सुदर्शनकवचं समाप्तम् ।

---

## ४२८ भारतसावित्रीस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वैशम्पायन उवाच ॥ मुनिं स्निग्धाम्बुदाभासं वेदव्यासमकल्मषम् । वेदव्यासं स्मरेन्नित्यं व्यासं व्यासं नमाम्यहम् ॥ १ ॥ श्रीवेदव्यास उवाच ॥ द्वारावत्यां स्थितः कृष्णश्चिन्तयामास वै पुरा । पाण्डवानां हितार्थाय शीघ्रं कृष्णेन गम्यताम् ॥ २ ॥ श्रीकृष्णो रथवेगेन गत्वा वै हस्तनापुरम् । विदुरस्य गृहं गत्वा समुचोदय दारुकम् ॥ ३ ॥ विदुरो दृष्टवान्कृष्णं स्वागतं ते महाप्रभो । भवद्दर्शनमात्रेण कृतकृत्योऽस्मि सर्वदा ॥ ४ ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः । अद्य मे सफलं पुण्यं गोविन्दे गृहमागते

॥ ५ ॥ अष्टमी च नवमी च चतुर्दशी च अयनं च विषुवं च दिनत्रयं च । अथैव पिण्डपितृयज्ञमखस्य कालो दामोदरेण सहसा गृहमागतेन ॥ ६ ॥ श्रीभगवानुवाच ॥ साधु साधु महाप्राज्ञ सर्वशास्त्रविशारद । तृप्तस्तव वरं ब्रूहि ददामि कुरुनन्दन ॥७॥ विदुर उवाच ॥ आसनं बन्धुसंकीर्णं विप्रसंकीर्णमन्दिरम् । शयनं सुतसंकीर्णं देहि मे मधुसूदन॥८॥ व्यास उवाच ॥ दुर्लभं विप्रगोष्ठी च गङ्गास्नानं च दुर्लभम् । दुर्लभा विष्णुभक्तिश्च दुर्लभा भारतीकथा ॥ ९ ॥ भारतः पञ्चमो वेदो यः पठेच्छृणुयादपि । भारतेन पदैकेन गङ्गादर्शनमेव च ॥१०॥ संजय उवाच ॥ कृष्णस्यागमनं श्रुत्वा कुरुराजः सुयोधनः । विदुरस्य गृहं गत्वा इदं वचनमब्रवीत् ॥ ११ ॥ दुर्योधन उवाच ॥ भीष्मद्रोणौ परित्यज्य मां चैव मधुसूदन । किमर्थं पुण्डरीकाक्ष कृतं वृषलभोजनम् ॥१२॥ श्रीभगवानुवाच ॥ न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने ॥ १३ ॥ कस्य दोषो कुले नास्ति केन रोगेण पीडितम् । व्यसनं केन संप्राप्तं कस्य सौख्यं निरन्तरम् ॥ १४ ॥ उर्वशीगर्भसंभूतो वसिष्ठश्च महामुनिः । तपसा ब्राह्मणो जातो किं जातेन च कारणम् ॥ १५ ॥ मातङ्गीगर्भसंभूतो मतङ्गश्च महामुनिः । तपसा ब्राह्मणो जातो किं जातेन च कारणम् ॥ १६ ॥ हरिणीगर्भसंभूतो ऋषिश्टङ्गो महामुनिः । तपसा

ब्राह्मणो जातो किं जातेन च कारणम् ॥ १७ ॥ धीवरीगर्भसंभूतो व्यासो द्वैपायनस्तथा। तपसा ब्राह्मणो जातो किं जातेन च कारणम् ॥ १८ ॥ कलशाद्गर्भसंभूतो अगस्त्यश्च महामुनिः। तपसा ब्राह्मणो जातो किं जातेन च कारणम् ॥ १९ ॥ भुक्तिं पृच्छसि राजेन्द्र आदरं किं न पृच्छसि। भोजनं गतजीर्णं च आदरस्तत्रजरामरः ॥ २० ॥ शुद्धं भागवतं शास्त्रं शुद्धं भागीरथीजलम्। विष्णुपादोदकं शुद्धं शुद्धमेकादशीव्रतम् ॥ २१ ॥ आदरेण च दत्तानि शाकानि च सुयोधन। प्रीणन्ति मम गात्राणि नामृतं मानवर्जितम् ॥ २२ ॥ प्रीतिभोज्यानि चान्नानि तथैवापद्गतानि च। न ते प्रीतिस्तु राजेन्द्र न चैवापद्गता वयम् ॥२३॥ द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्। पाण्डवान्द्वेषसे राजन्मम प्राणा हि पाण्डवाः ॥ २४ ॥ चाण्डालमपि मद्भक्तं नावमन्यति बुद्धिमान्। अवमत्य व्रजन्त्येव नरकं घोरमेव च ॥२५॥ मम वाक्यं कुरुश्रेष्ठ शान्तिमिच्छ सुयोधन। राजन् तेषां समं दत्त्वा यूयं पञ्चोत्तरं शतम् ॥२६॥ वने द्वादश वर्षाणि अज्ञातं च त्रयोदशम्। पञ्चग्रामार्थिनो राजा पाण्डवानां युधिष्ठिरः ॥२७॥ इन्द्रप्रस्थं यमप्रस्थं जयन्तं वारणावतम्। देहि मे चतुरग्रामं पञ्चमं हस्तनापुरम् ॥ २८ ॥



दुर्योधन उवाच। इन्द्रप्रस्थं गुरवे यमप्रस्थं कृपस्य च। वारणावतं भीष्मं च जयन्तं सूर्यनन्दनम् ॥ २९ ॥ हस्तना-

पुरमस्माकं पञ्चग्रामानि यो जयेत् । एवं व्यवस्थितान्ग्रामान् शृणु देवकिनन्दन ॥३०॥ सूच्यग्रेण सुतीक्ष्णेन यावद्भिद्यति मेदिनी । तामहं न प्रदास्यामि विना युद्धेन केशव ॥३१॥ श्रीभगवानुवाच ॥ पञ्चग्रामान्याचितोऽस्मि त्वामहं शरणं गतः। गोत्रक्षयो न कर्तव्यो राजन्पञ्चोत्तरं शतम्॥३२॥ दुर्योधन उवाच ॥ यन्त्रस्य गुणदोषेण मन्त्रिणां पुरुषोत्तम । अहं मन्त्री भवान्यन्त्री मम दोषो न विद्यते ॥ ३३ ॥ श्रीभगवानुवाच ॥ यदा यदा पश्यसि वानरध्वजं धनुर्धरं पाण्डवमध्यमं रणे । यदा प्रहस्तं भ्रमतं वृकोदरं तदा तदा दास्यसि सर्वमेदिनीम् ॥ ३४ ॥ दुर्योधन उवाच ॥ हिरण्यवर्णं परिपूर्णगात्रं मेघोन्नतं मत्तगजेन्द्रतुल्यम् । आदित्यपुत्रं बहुशत्रुनाशनं पश्यन्ति कर्णं रथमारूढं च ॥ ३५ ॥ श्रीभगवानुवाच ॥ किं कर्णस्य सहस्रेषु दुर्योधनशतैरपि । शरद्गर्जितभेदेन वृथा कर्णेन गर्जितम् ॥ ३६ ॥ नरे चतुष्कं तुरगे च षोडशं गजे शतं पञ्चशतं रथेन । दृष्ट्वार्जुनं मुञ्चति बाणवर्षं स्वातीगताः शक्र इवातिवृष्टीः ॥ ३७ ॥ एकधा शतधा चैव शतधा च सहस्रधा । रणे पार्थशरोद्दिष्टदीनं ब्रह्मयशोदितम् ॥ ३८ ॥ दुर्योधन उवाच ॥ अष्टौ रथसहस्राणि नव दन्तिशतानि च । राजपुत्रसहस्राणि दत्त्वा भीष्मो निवर्तते ॥ ३९ ॥ श्रीभगवानुवाच ॥ एकाकी पादचारी च यदि नायासि कौरव । धर्मशास्त्रप्रवक्तारो मन्वाद्या मयपा

इव ॥४०॥ द्वाविमौ पुरुषौ मूर्खौ दुर्योधनदशाननौ । गोग्रहं वनभङ्गं च दृष्ट्वा युद्धं पुनः पुनः ॥ ४१ ॥ भीष्म उवाच ॥ अहमेकस्त्रिभिर्द्रोणं पञ्चभिः सूर्यनन्दनम् । निमिषं द्रोणपुत्रं च निमिषार्धं धनञ्जयः ॥ ४२ ॥ धृतराष्ट्र उवाच ॥ ब्रूहि संजय यद्वृत्तं युद्धे तेषां महात्मनाम् । पाण्डवानां कुरूणां च संप्राप्ते च जनक्षये॥४३॥ के तत्र प्रमुखा योधाः के तत्र च महारथाः । महाबलास्तु के तत्र कथं तत्र निपातिताः ॥४४॥ भीष्मद्रोणौ कथं भग्नौ कर्णशल्यौ कथं हतौ । पुत्रस्तु मम मन्दात्मा न शृणोति च दुर्मतिः ॥ ४५ ॥ संजय उवाच ॥ मेदिनीभारनिर्भारं पार्थसारथिमच्युतम् । प्रणमामि हृषीकेशं दुर्लभं चक्रपाणिनम् ॥ ४६ ॥ शृणु राजन्कथं वृत्तं यदि वादिषु पाण्डव । पाण्डवानां बलिर्योद्धा सर्वे विष्णुपरायणाः ॥ ४७ ॥ अर्जुनः सात्यकिश्चैव धृष्टद्युम्नो घटोत्कचः । शिखण्डिश्चाभिमन्युश्च काशीराजस्तथैव च ॥४८॥ नकुलः सहदेवश्च भीमसेनो युधिष्ठिरः । विराटश्चोत्तरश्चैव द्रुपदश्च महारथाः ॥ ४९ ॥ एते चतुर्दश प्रोक्ताः पाण्डवानां बलिर्युधाः । कौरवाणां बलिर्युद्धा सर्वे संकर्षणप्रभाः ॥ ५० ॥ शकुनी सौबलो भीष्मो कृतवर्मा जयद्रथः । भूरिश्रवास्तु बाह्लीको भगदत्तस्तथैव च ॥ ५१ ॥ उलूकः सोमदत्तश्च शतबिन्दुश्च पार्थिवः । द्रोणो द्रौणिः कृपः शल्यो वृषसेनो महायुधः ॥ ५२ ॥ वैकर्तनो विकर्णश्च कलिङ्गश्च तथैव च । दुःशा-

सनो विचित्रस्य राजा दुर्योधनस्तथा ॥ ९३ ॥ एते द्वाविंशतिः प्रोक्ता भारतेषु महारथाः । युधिष्ठिरश्च भीमश्च नकुलश्च महारथाः ॥ ९४ ॥ अर्जुनः सहपुत्रश्च द्रोणः सहसुतस्तथा । भीष्मश्च सात्यकिश्चैव षडेतेऽतिमहारथाः ॥ ९५ ॥ आदिपर्व सभापर्व पर्वआरण्यकं तथा । विराटपर्व विज्ञेयं चतुर्थं तदनन्तरम् ॥ ९६ ॥ उद्योगं पञ्चमं पर्व भीष्मपर्वअतः परम् । द्रोणपर्व कर्णपर्व शल्यपर्वमतः परम् ॥ ९७ ॥ दशमं सौप्तिकं पर्व स्त्रीपर्व च ततः परम् । द्वादशं शान्तिकं पर्व त्रयोदश्यनुशासनम् ॥ ९८ ॥ चतुर्दशमश्वमेधी व्यासाश्रमस्तथैव च । षोडशं मौसलं चैव महाप्रस्थान एव च ॥ ९९ ॥ स्वर्गारोहणकं पर्व हरिवंशस्तथैव च । इत्यष्टादश पर्वाणि संख्या द्वैपायनस्तथा ॥ ६० ॥ हेमन्ते प्रथमे मासि शुक्लपक्षे त्रयोदशी । प्रवृत्तं भारतं युद्धं नक्षत्रं यमदैवतम् ॥ ६१ ॥ फाल्गुनेन हतो भीष्मः कृष्णपक्षे च सप्तमी । अष्टम्यां चैव सौभद्रो नवम्यां च जयद्रथः॥६२॥ दशम्यां भगदत्तश्च महायुद्धे निपातितः । एकादश्यामर्धरात्रौ हतो वीरो घटोत्कचः॥६३॥ ततः प्रभातसमये विराटद्रुपदौ हतौ । द्वादश्यां चैव मध्याह्ने द्रोणाचार्यो रणे हतः ॥ ६४ ॥ त्रयोदश्यां च पूर्वाह्णे वृषसेनो हतो युधि । चतुर्दश्यां च मध्याह्ने कर्णो वैकर्तनो हतः ॥ ६५ ॥ निस्तत्त्वं हतमहवीर्यं प्रशान्तदर्पं धृतराष्ट्रसैन्यम् । न शोभते सूर्यसुतेन हीनं

वृन्दं ग्रहाणां निशि चन्द्रहीनम् ॥ ६६ ॥ मुखं कमलपत्राक्षं यथा श्रवणवर्जितम् । तथा तत्कौरवं सैन्यं कर्णहीनं न शोभते ॥६७॥ शकुनी लोकराजस्तु सहदेवेन पातितः। अमायां च हतः शल्यो मद्रराजो बले हतः ॥६८॥ अमायामूर्ध्वभागे च राजा दुर्योधनो हतः ॥ धृतराष्ट्र उवाच ॥ कथं दुर्योधनो राजा भीमसेनेन ताडितः॥६९॥संजय उवाच॥ गदया ताडितः शक्त्या भीमसेनेन मर्षिणा । अन्यथा भाषणं युद्धं छद्मना कृतमन्यथा ॥ ७० ॥ नवनागसहस्रेषु नागे नागे शते रथाः। रथे रथे शते चाश्वा अश्वे अश्वे शते नराः ॥७१॥ धृष्टद्युम्नो शिखण्डी च द्रौपद्याः पञ्च चात्मजाः। एवमष्टादशं हन्ति अक्षौहिण्यां दिने दिने ॥ ७२ ॥ दिनानि दश भीष्मेण भारद्वाजेन पञ्च च। दिनद्वयं तु कर्णेन शल्येनार्धदिनं तथा ॥ ७३ ॥ दिनार्धं तु गदायुद्धं एतद्भारतमुच्यते । न भवेत्तादृशं युद्धं क्षत्रियाणां मनस्विनाम् ॥ ७४ ॥ सर्वशत्रुक्षयं क्षेत्रं कुरुक्षेत्रं महात्मनः । पार्थिवान्रोहणे स्वर्गे राजपुत्र यशस्विना ॥ ७५ ॥ रणयुद्धेन यज्ञेन दीक्षितोऽयं युधिष्ठिरः । वेदिं कृत्वा कुरुक्षेत्रं यूपं कृत्वा जनार्दनम् ॥७६॥ होतारमर्जुनं कृत्वा घृतास्यं सूर्यनन्दनम् । दुर्योधनं पशुं कृत्वा भीष्मद्रोणौ महाहविः ॥७७॥ पाञ्चालीमरणिं कृत्वा वह्निं कृत्वा वृकोदरम् । गाण्डीवेन स्रुवेणैव हूयमानेषु राजसु ॥ ७८ ॥ अयाचितमिदं द्रव्यं सुप्रथितस्तु जनार्दनः । इमां

भारतसावित्रीं प्रातरुत्थाय यः पठेत् ॥ ७९ ॥ दिवा वा यदि वा रात्रौ समेषु विषमेषु च । न भयं विद्यते किंचित्कार्यसिद्धिं च विन्दति ॥ ८० ॥ अहोरात्रकृतं पापं स्मरणेन विनश्यति । संवत्सरकृतं पापं पठनादेव नश्यति ॥८१॥ यत्फलं गोसहस्राणि सुवर्णालंकृतानि च । दत्तस्य दानपात्रेषु व्यासस्य वचनं यथा ॥८२॥ शृण्वतां पठतां चैव विष्णोर्माहात्म्यमुत्तमम् । सर्वपापविनिर्मुक्तो विष्णोः सायुज्यमाप्नुयात् ॥ ८३ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ८४ ॥

इति श्रीमन्महाभारते व्यासकृते भारतसावित्रीस्तोत्रं संपूर्णम् ।

## ४२९ अमृतसंजीवनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अथापरमहं वक्ष्येऽमृतसंजीवनं स्तवम् । यस्यानुष्ठानमात्रेण मृत्युर्दूरात्पलायते ॥ १ ॥ असाध्याः कष्टसाध्याश्च महारोगा भयंकराः । शीघ्रं नश्यन्ति पठनादस्यायुश्च प्रवर्धते ॥ २ ॥ शाकिनीडाकिनीदोषाः कुदृष्टिग्रहशत्रुजाः । प्रेतवेतालयक्षोत्था बाधा नश्यन्ति चाखिलाः ॥३॥ दुरितानि समस्तानि नानाजन्मोद्भवानि च । संसर्गजविकाराणि विलीयन्तेऽस्य पाठतः ॥४॥सर्वोपद्रवनाशाय सर्वबाधाप्रशान्तये । आयुःप्रवृद्धये चैतत्स्तोत्रं परमम‌द्भुतम् ॥५॥ बालग्रहाभिभूतानां बालानां सुखदायकम् ।

सर्वारिष्टहरं चैतद्बलपुष्टिकरं परम् ॥ ६ ॥ बालानां जीवनायैतत्स्तोत्रं दिव्यं सुधोपमम् । मृतवत्सत्वहरणं चिरजीवित्वकारकम् ॥७॥ महारोगाभिभूतानां भयव्याकुलितात्मनाम् । सर्वाधिव्याधिहरणं भयघ्नममृतोपमम् ॥ ८ ॥ अल्पमृत्युश्चापमृत्युः पाठादस्य प्रणश्यति । जलाग्निविषशस्त्रारिनखिशृङ्गिभयं तथा ॥९॥ गर्भरक्षाकरं स्त्रीणां बालानां जीवनप्रदम् । महारोगहरं नृणामल्पमृत्युहरं परम् ॥१०॥ बाला वृद्धाश्च तरुणा नरा नार्यश्च दुःखिताः । भवन्ति सुखिनः पाठादस्य लोके चिरायुषः ॥ ११ ॥ अस्मात्परतरं नास्ति जीवनोपाय ऐहिकः । तस्मात्सर्वप्रयत्नेन पाठमस्य समाचरेत् ॥ १२ ॥ अयुतावृत्तिकं वाऽथ सहस्रावृत्तिकं तथा । तदर्धं वा तदर्धं वा पठेदेतच्च भक्तितः ॥ १३ ॥ कलशे विष्णुमाराध्य दीपं प्रज्वाल्य यत्नतः । सायंप्रातश्च विधिवत्स्तोत्रमेतत्पठेत्सुधीः ॥ १४ ॥ सर्पिषा हविषा वाऽपि संयावेनाथ भक्तितः । दशांशमानतो होमं कुर्यात्सर्वार्थसिद्धये ॥ १५ ॥ नमो नमो विश्वविभावनाय नमो नमो लोकसुखप्रदाय । नमो नमो विश्वसृजेश्वराय नमो नमो मुक्तिवरप्रदाय ॥ १६ ॥ नमो नमस्तेऽखिललोकपाय नमो नमस्तेऽखिलकामदाय । नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखिलरक्षकाय ॥ १७ ॥ नमो नमस्ते सकलार्तिहर्त्रे नमो नमस्ते विरुजप्रकर्त्रे । नमो नमस्तेऽखि-

लविश्वधर्त्रे नमो नमस्तेऽखिललोकभर्त्रे ॥ १८ ॥ सृष्टं देव चराचरं जगदिदं ब्रह्मस्वरूपेण ते सर्वं तत्परिपाल्यते जगदिदं विष्णुस्वरूपेण ते । विश्वं संहितये तदेव निखिलं रुद्रस्वरूपेण ते संसिच्यामृतसीकरैर्हर महारिष्टं चिरं जीवय ॥ १९ ॥ यो धन्वन्तरिसंज्ञया निगदितः क्षीराब्धितो निस्सृतो हस्ताभ्यां जनजीवनाय कलशं पीयूषपूर्णं दधत् । आयुर्वेदमरीरचज्जनरुजां नाशाय स त्वं मुदा संसि०॥२०॥ स्त्रीरूपं वरभूषणाम्बरधरं त्रैलोक्यसंमोहनं कृत्वा पाययति स्म यः सुरगणान् पीयूषमत्युत्तमम् । चक्रे दैत्यगणान्सुधाविरहितान् संमोह्य स त्वं मुदा संसि० ॥ २१ ॥ चाक्षुषोदधिसंप्लावभूवेदपझषाकृते । सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ॥ २२ ॥ पृष्ठमन्दरनिर्घूर्णनिद्राक्षकमठाकृते । सिञ्च० ॥२३॥ याच्ञाछलबलित्राससुक्तनिर्जरवामन । सिञ्च०॥२४॥ धरोद्धारहिरण्याक्षघातक्रोडाकृते प्रभो । सिञ्च० ॥ २५ ॥ भक्तत्रासविनाशात्तचण्डत्वनृहरे विभो । सिञ्च० ॥ २६ ॥ क्षत्रियारण्यसंछेदकुठारकर रैणुक । सिञ्च० ॥ २७ ॥ रक्षोराजप्रतापाब्धिशोषणाशुग राघव । सिञ्च० ॥ २८ ॥ भूभारासुरसंदोहकालाग्ने रुक्मिणीपते । सिञ्च० ॥ २९ ॥ वेदमार्गरतानर्हविभ्रान्त्यै बुद्धरूपधृक् । सिञ्च० ॥ ३० ॥ कलिवर्णाश्रमास्पष्टधर्मर्ध्यै कल्किरूपभाक् । सिञ्च० ॥३१॥ असाध्याः कष्टसाध्या ये महारोगा भयङ्कराः । छिन्धि

तानाशु चक्रेण चिरं जीवय जीवय ॥ ३२ ॥ अल्पमृत्युं चापमृत्युं महोत्पाताद्युपद्रवान् । भिन्धि भिन्धि गदाघातैश्चिरं जीवय जीवय ॥ ३३ ॥ अहं न जाने किमपि त्वदन्यत्समाश्रये नाथ पदाम्बुजं ते । कुरुष्व तद्यन्मनसीप्सितं ते सुकर्मणा केन समक्षमीयाम् ॥ ३४ ॥ त्वमेव तातो जननी त्वमेव त्वमेव नाथश्च त्वमेव बन्धुः । विद्याधनागारकुलं त्वमेव त्वमेव सर्वं मम देवदेव ॥ ३५ ॥ न मेऽपराधं प्रविलोकय प्रभोऽपराधसिन्धोश्च दयानिधिस्त्वम् । तातेन दुष्टोऽपि सुतः सुरक्ष्यते दयालुता तेऽवतु सर्वदाऽस्मान् ॥ ३६ ॥ अहह विस्मर नाथ न मां सदा करुणया निजया परिपूरितः । भुवि भवान्यदि मे नहि रक्षकः कथमहो मम जीवनमत्र वै ॥ ३७ ॥ दह दह कृपया त्वं व्याधिजालं विशालं हर हर करवालं चाल्पमृत्यो करालम् । निजजनपरिपालं त्वां भजे भावयालं कुरु कुरु बहुकालं जीवितं मे सवालम् ॥ ३८ ॥ न यत्र धर्माचरणं न दानं व्रतं न यागो न च विष्णुचर्चा । न पितृगोविप्रवरामरार्चा स्वल्पायुषस्तत्र जना भवन्ति ॥ ३९ ॥ क्लीं श्रीं क्लीं श्रीं नमो भगवते जनार्दनाय सकलदुरितानि नाशय नाशय क्ष्रौमारोग्यं कुरु कुरु ह्रीं दीर्घमायुर्देहि देहि स्वाहा ॥ अस्य धारणतो जापादल्पमृत्युः प्रशाम्यति । गर्भरक्षाकरं स्त्रीणां बालानां जीवनं परम् ॥४०॥ शतं पञ्चाशतं चाकन्याश्च वा पञ्चवि-

विंशतिम् । पुस्तकानां द्विजेभ्यस्तु दद्यादीर्घायुषाप्तये ॥४१॥ भूर्जपत्रे विलिख्येदं कण्ठे वा बाहुमूलके । संधारयेद्गर्भरक्षा बालरक्षा च जायते ॥ ४२ ॥ सर्वे रोगा विनश्यन्ति सर्वा बाधा प्रशाम्यति । कुदृष्टिजं भयं न स्यान्न च प्रेतादिजं भयम् ॥ ४३ ॥ मया कथितमेतत्तेऽमृतसंजीवनं परम् । अल्पमृत्युहरं स्तोत्रं मृतवत्सत्वनाशनम् ॥ ४४ ॥

इति सुदर्शनसंहितायाममृतसंजीवनस्तोत्रं समाप्तम् ।

---

## ४३० कष्टमोचनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ अथाहं ते प्रवक्ष्यामि सर्वलोकोपकारकम् । कष्टमोचननामेदं स्तोत्रं परमदुर्लभम् ॥ १ ॥ ऋणतो रोगतो दुष्टाद्बन्धुतः शत्रुतो नृपात् । यत्कष्टं तानि सर्वाणि विलीयन्तेऽस्य पाठतः ॥ २ ॥ पठेदयुतवारं यस्त्रिसंख्यं वा पठेदिदम् । शतार्धार्थं यथाशक्त्या दत्त्वा कष्टाद्विमुच्यते ॥ ३ ॥ श्रीमाधव दयासिन्धो भक्तसंकटनाशन । देहि मे विपुलं सौख्यं कष्टान्मोचय मोचय ॥ ४ ॥ सुरगोविप्ररक्षार्थस्वीकृतानेकविग्रह । देहि मे० ॥५॥ धराम्बुनिस्सुरत्रासनाशकाखिलकामद । देहि मे० ॥ ६ ॥ गजो ग्राहग्रहात्कष्टात्त्वयैव परिमोचितः । देहि मे० ॥ ७ ॥ दुस्सभायां महाकष्टाद्द्रौपदी मोचिता त्वया । देहि मे० ॥ ८ ॥ त्वयैव पाण्डवाः सर्वे नानाकष्टाद्विमोचिताः । देहि मे० ॥ ९ ॥

सुदामाख्यो द्विजः कष्टाद्दारिद्र्यान्मोचितस्त्वया । देहि मे० ॥ १० ॥ सर्वेषां सर्वकष्टेभ्यः सर्वदा त्वं विमोचकः । देहि मे० ॥ ११ ॥ पूर्णकारुण्यभावेन रक्ष मां सर्वतः सदा । देहि मे० ॥ १२ ॥ सर्वापदां निहन्ता त्वं दाता त्वं सर्वसंपदाम् । देहि मे० ॥ १३ ॥ संकष्टनाशनपराय विभूतिदाय प्राणप्रयाणभयविघ्नविनाशकाय । सर्वेश्वराय सकलामरवन्दिताय लक्ष्मीप्रियाय वरदाय नमो नमस्ते ॥ १४ ॥ इति ते कथितं दिव्यं स्तोत्रं संकष्टनाशनम् । बालवैधव्यहरणं मङ्गलित्वाघनाशनम् ॥ १५ ॥

इति सुदर्शनसंहितायां कष्टमोचनस्तोत्रम् ।

---

## ४३१ वंशकवचम् ।

श्रीगणेशाय नमः ॥ भगवन्देवदेवेश कृपया त्वं जगत्प्रभो । वंशाख्यकवचं ब्रूहि मह्यं शिष्याय तेऽनघ यस्य प्रभावाद्देवेश वंशच्छेदो न जायते ॥ १ ॥ सूर्य उवाच ॥ शृणु पुत्र प्रवक्ष्यामि वंशाख्यकवचं शुभम् । संतानवृद्धिर्यत्पाठाद्गर्भरक्षा सदा नृणाम् ॥ २ ॥ वन्ध्यापि लभते पुत्रं काकवन्ध्या सुतैर्युता । मृतवत्सा सपुत्रा स्यात्स्रवद्गर्भा स्थिरप्रजा ॥ ३ ॥ अपुष्पा पुष्पिणी यस्य धारणाच्च सुखप्रसूः ॥ कन्याप्रजा पुत्रिणी स्यादेतत्स्तोत्रप्रभावतः ॥ ४ ॥


भूतप्रेतादिजा बाधा या बाधा कुलदोषजा । ग्रहबाधा

देवबाधा बाधा शत्रुकृता च या ॥ ५ ॥ भस्मीभवन्ति सर्वास्ताः कवचस्य प्रभावतः । सर्वे रोगा विनश्यन्ति सर्वे बालग्रहाश्च ये ॥ ६ ॥ पूर्वे रक्षतु वाराही चाग्नेय्यामम्बिका स्वयम् । दक्षिणे चण्डिका रक्षेन्नैर्ऋत्यां शववाहिनी ॥ ७ ॥ पश्चिमे केशुदा रक्षेद्वायव्यां च महेश्वरी । उत्तरे वैष्णवी रक्षेदीशाने सिंहवाहिनी ॥ ८ ॥ ऊर्ध्वं तु शारदा रक्षेदधो रक्षतु पार्वती । शाकंभरी शिरो रक्षेन्मुखं रक्षतु भैरवी ॥ ९ ॥ कण्ठं रक्षतु चामुण्डा हृदयं रक्षताच्छिन्ना । ईशानी च भुजौ रक्षेत्कुक्षिं नाभिं च कालिका ॥ १० ॥ अपर्णा ह्युदरं रक्षेत्कटिं बस्तिं शिवप्रिया । ऊरू रक्षतु कौमारी जया जानुद्वयं तथा ॥ ११ ॥ गुल्फौ पादौ सदा रक्षेद्ब्रह्माणी परमेश्वरी । सर्वाङ्गानि सदा रक्षेद्दुर्गा दुर्गार्तिनाशिनी ॥ १२ ॥ नमो देव्यै महादेव्यै दुर्गायै सततं नमः । पुत्रसौख्यं देहि देहि गर्भरक्षां कुरुष्व नः ॥ १३ ॥ ॐ ह्रीं ह्रीं ह्रीं श्रीं श्रीं श्रीं ऐं ऐं ऐं महाकालीमहालक्ष्मीमहासरस्वतीरूपायै नवकोटिमूर्त्यै दुर्गायै नमः । ह्रीं ह्रीं ह्रीं दुर्गे दुर्गार्तिनाशिनि संतानसौख्यं देहि देहि वन्ध्यत्वं मृतवत्सत्वं च हर हर गर्भरक्षां कुरु कुरु सकलां बाधां कुलजां बाह्यजां कृतामकृतां च नाशय नाशय सर्वगात्राणि रक्ष रक्ष गर्भं पोषय पोषय सर्वोपद्रवं शोषय शोषय स्वाहा । अनेन कवचेनाङ्गं सप्तवाराभिमन्त्रितम् । ऋतुस्नाता जलं पीत्वा भवेद्गर्भवती ध्रुवम्

॥१४॥ गर्भपातभये पीत्वा दृढगर्भा प्रजायते । अनेन कवचेनाथ मार्जितायाः निशागमे ॥ १५ ॥ सर्वबाधाविनिर्मुक्ता गर्भिणी स्यान्न संशयः । अनेन कवचेनेह ग्रन्थितं रक्तदोरकम् ॥ १६ ॥ कटिदेशे धारयन्ती सुपुत्रसुखभागिनी । असूत पुत्रमिन्द्राणी जयन्तं यत्प्रभावतः ॥ १७ ॥ गुरूपदिष्टं वंशाख्यं कवचं तदिदं सखे । गुह्याद्गुह्यतरं चेदं न प्रकाश्यं हि सर्वतः । धारणात्पठनादस्य वंशच्छेदो न जायते ॥ १८ ॥ बाला विनश्यन्ति पतन्ति गर्भास्तत्राबलाः कष्टयुताश्च वन्ध्याः । बालग्रहैर्भूतगणैश्च रोगैर्न यत्र धर्माचरणं गृहे स्यात् ॥ १९ ॥

इति श्रीज्ञानभास्करे सूर्यारुणसंवादे वंशकवचं समाप्तम् ।

---

## ४२२ मनोरथाष्टकम् ।

श्रीगणेशाय नमः ॥ गणाधिपो भानुशशीधरासुतो बुधो गुरुर्भार्गव सूर्यनन्दनः । राहुश्च केतुप्रभृतिर्नव ग्रहाः कुर्वन्तु वः पूर्णमनोरथं सदा ॥ १ ॥ उपेन्द्र इन्द्रो वरुणो हुताशनो धर्मो यमो वायुहरिश्चतुर्मुखः । गन्धर्वयक्षो ऋषिसिद्धिचारणाः कुर्वन्तु० ॥ २ ॥ मनुर्मरीचिर्भृगुदक्षनारदः पराशरो व्यासवसिष्ठभार्गवः । वाल्मीककुम्भोद्भवगर्गगौतमाः कुर्वन्तु० ॥ ३ ॥ नलो दधीचिः सगरः पुरूरवा शाकुन्तलेयो भरतो धनञ्जयः । रामत्रयं वैन्यबलिर्युधिष्ठिरः कुर्वन्तु० ॥ ४ ॥ रम्भा

शची सत्यवती च देवकी गौरी च लक्ष्मीरदितिश्च रुक्मिणी। कूर्मो गजेन्द्रः खचरा धराचराः कुर्वन्तु० ॥५॥ गङ्गा च क्षिप्रा यमुना सरस्वती गोदावरी वेत्रवती च नर्मदा। सा चन्द्रभागा वरुणा असी नदी कुर्वन्तु० ॥ ६ ॥ तुङ्गं प्रभासं गुरुचक्रपुष्करं गयाभिमुक्तो बदरी वटेश्वरः। केदारपम्पासरनैमिषारण्याः कुर्वन्तु० ॥ ७ ॥ शङ्खश्च दूर्वा- सितपत्रचामरं मणिप्रदीपो वररत्नकाञ्चनम्। संपूर्णकुम्भः सहितो हुताशनः कुर्वन्तु० ॥ ८ ॥ प्रयाणकाले यदि वा सुमङ्गले प्रभातकाले च नृपाभिषेके। धर्मार्थकामार्थनरस्य भाषितं व्यासेन संपूर्णमनोरथाष्टकम् ॥ ९ ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। रक्षन्तु चतुरो वेदा यावच्च- न्द्रदिवाकरौ ॥ १० ॥

इति श्रीव्यासविरचितं मनोरथाष्टकं संपूर्णम्।

## ४३३ पञ्चदेवस्तोत्रम्।

श्रीगणेशाय नमः ॥ गणेशविष्णुसूर्येशदुर्गाख्यं देवपञ्च- कम्। वन्दे विशुद्धमनसा जनसायुज्यदायकम् ॥ १ ॥ एक- रूपान् भिन्नमूर्तीन् पञ्चदेवान्नमस्कृतान्। वन्दे विशुद्धभावे- नेशाम्बेनैकरदाच्युतान् ॥ २ ॥ कल्याणदायिनो देवान्नम- स्कुर्यान्महौजसः। विष्णुशंभुशिवासूर्यगणेशाख्यान्नमाम्य- हम् ॥ ३ ॥ एकात्मनोऽभिन्नरूपान् लोकरक्षणतत्परान्।

शिवविष्णुशिवासूर्यहेरम्बान् प्रणमाम्यहम् ॥ ४ ॥ दिव्य-रूपानेकरूपान्नानारूपान्नमस्कृतान् । शिवाशङ्करहेरम्बवि-ष्णुसूर्यान्नमाम्यहम् ॥ ५ ॥ नित्यानानन्दसंदोहदायिनो दीनपालकान् । शिवाच्युतगणेशेनदुर्गाख्यान् नौम्यहं सुरान् ॥ ६ ॥ कमनीयतनून्देवान् सेवावश्यान् कृपावतः । शंकरेनशिवाविष्णुगणेशाख्यान्नमाम्यहम् ॥ ७ ॥ सूर्यवि-ष्णुशिवाशंभुविघ्नराजाभिधान्सुरान् । एकरूपान् सदा वन्दे सुखसंदोहसिद्धये ॥ ८ ॥ हरौ हरे तीक्ष्णकरे गणेशे शक्तौ न भेदो जगदादिहेतुषु । अधः पतन्त्येषु भिदां दधाना भाषन्त एवं यतयोऽच्युताश्रमाः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदच्युताश्र-मविरचितं पञ्चदेवस्तोत्रं समाप्तम् ।

---

## ४३४ हरिहरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ धर्मार्थकाममोक्षाख्यचतुर्वर्गप्रदा-यिनौ । वन्दे हरिहरौ देवौ त्रैलोक्यपरिपायिनौ ॥ १ ॥ एकमूर्तीद्विधा भिन्नौ संसारार्णवतारकौ । वन्देऽहं कामदौ देवौ सततं शिवकेशवौ ॥ २ ॥ दयामयौ दीनदरिद्रतापहौ महौजसौ मान्यतमौ सदा समौ । उदारलीलाकलितौ सिता-सितौ नमामि नित्यं शिवकेशवावहम् ॥ ३ ॥ अनन्तमा-हात्म्यनिधी विधिस्तुतौ मिथस्तुतौ लोकविधानकारिणौ ।

सुरासुराधीशनुतौ नुतौ जगत्पती विधत्तां शिवकेशवौ शिवम् ॥४॥ जगत्त्रयीपालननाशकारकौ प्रसन्नहासौ विलसत्सदानना। महाबलौ मञ्जुलमूर्तिधारिणौ शिवं विधत्तां शिवकेशवौ सदा ॥ ५ ॥ महस्विनौ मोदकरौ परौ वरौ मुनीश्वरैः सेवितपादपङ्कजौ। अजौ सुजातौ जगदीश्वरौ सदा शिवं विधत्तां शिवकेशवौ मम ॥६॥ नमोऽस्तु नित्यं शिवकेशवाभ्यां स्वभक्तसंरक्षणतत्पराभ्याम्। देवेश्वराभ्यां करुणाकराभ्यां लोकत्रयीनिर्मितिकारणाभ्याम् ॥ ७ ॥ सलीलशीलौ महनीयमूर्ती दयाकरौ मञ्जुलसच्चरित्रौ। महोदयौ विश्वविनोदहेतू नमामि देवौ शिवकेशवौ तौ ॥८॥ त्रिशूलपाणिं वरचक्रपाणिं पीताम्बरं स्पष्टदिगंबरं च। चतुर्भुजं वा दशबाहुयुक्तं हरिं हरं वा प्रणमामि नित्यम् ॥ ९ ॥ कपालमालाललितं शिवं च सद्वैजयन्तीस्त्रगुदारशोभम्। विष्णुं च नित्यं प्रणिपत्य याचे भवत्पदाम्भोरुहयोः स्मृतिः स्तात् ॥ १० ॥ शिव त्वमेवाऽसि हरिस्वरूपो हरे त्वमेवाऽसि शिवस्वरूपः। भ्रान्त्या जनास्त्वां द्विविधस्वरूपं पश्यन्ति मूढा ननु नाशहेतोः ॥ ११ ॥ हरे जना ये शिवरूपिणं त्वां त्वद्रूपमीशं कलयन्ति नित्यम्। ते भाग्यवन्तः पुरुषाः कदाऽपि न यान्ति भास्वत्तनयस्य गेहम् ॥ १२ ॥ शम्भो जना ये हरिरूपिणं त्वां भवत्स्वरूपं कमलालयेशम्। पश्यन्ति भक्त्या खलु ते महान्तो यमस्य नो यान्ति पुरं कदाचित् ॥ १३ ॥

शिवे हरौ भेदधियाऽऽधियुक्ता मुक्तिं लभन्ते न जना दुरापाम्। भुक्तिं च नैवेह परन्तु दुःखं संसारकूपे पतिताः प्रयान्ति ॥ १४ ॥ हरे हरौ भेददृशो भृशं वै संसारसिन्धौ पतिताः सतापाः। पापाशया मोहमयान्धकारे भ्रान्ता महादुःखभरं लभन्ते ॥१५॥ सन्तो लसन्तः सुतरां हरौ च हरे च नित्यं बहुभक्तिमन्तः । अन्तर्महान्तौ शिवकेशवौ तौ ध्यायन्त उच्चैर्मुदमाप्नुवन्ति ॥ १६ ॥ हरौ हरे चैक्यमुदारशीलाः पश्यन्ति शश्वत्सुखदायिलीलाः । ते भुक्तिमुक्ती समवाप्य नूनं सुखं दुरापं सुतरां लभन्ते ॥ १७ ॥ शिवे शिवेशेऽपि च केशवे च पद्मापतौ देववरे महान्तः । भेदं न पश्यन्ति परन्तु सन्तस्तयोरभेदं कलयन्ति सत्यम् ॥ १८ ॥ रमा-पतिं वा गिरिजापतिं वा विश्वेश्वरं वा जगदीश्वरं वा । पिनाकपाणिं खलु शार्ङ्गपाणिं हरिं हरं वा प्रणमामि नित्यम् ॥ १९ ॥ सुरेश्वरं वा परमेश्वरं वा वैकुण्ठलोकस्थितमच्युतं वा । कैलासशैलस्थितमीश्वरं वा विष्णुं च शंभुं च नमामि नित्यम् ॥ २० ॥ हरिर्दयार्द्राशयतां प्रयातो हरो दया-लुत्तमभावमाप्तः । अनेकदिव्यास्त्रधरः परेशः पायादजस्रं कृपया नतं माम् ॥ २१ ॥ शेषोऽस्ति यस्याऽऽभरणत्वमाप्तो यद्वा सुशय्यात्वमितः सदैव । देवः स कोऽपीह हरिर्हरो वा करोतु मे मञ्जुलमङ्गलं द्राक् ॥ २२ ॥ हरिं हरं चापि भजन्ति भक्त्या विभेदबुद्धिं प्रविहाय नूनम्। विद्वा महान्तो

मुनयो महेच्छा स्वच्छाशया नारदपर्वताद्याः ॥२३॥ सनत्कुमारादय उन्नतेच्छा मोहेन हीना मुनयो महान्तः । स्वान्तस्थितं शङ्करमच्युतं च भेदं परित्यज्य सदा भजन्ते ॥२४॥ शिष्टा वसिष्ठादय आत्मनिष्ठाः श्रेष्ठा स्वधर्मावनकर्मवित्ताः । हृत्तापहारं मलहीनचित्ता हरिं हरं चैकतया भजन्ते ॥२५॥ अन्ये महात्मान उदारशीला भृग्वादयो ये परमर्षयस्ते । पश्यन्ति चैक्यं हरिशर्वयोः श्रीसंयुक्तयोरत्र न संशयोऽस्ति ॥ २६ ॥ इन्द्रादयो देववरा उदारा त्रैलोक्यसंरक्षणदत्तचित्ताः । हरिं हर चैकसुरूपमेव पश्यन्ति भक्त्या च भजन्ति नूनम् ॥ २७ ॥ सर्वेषु वेदेषु खलु प्रसिद्धवैकुण्ठकैलासगयोः सुधाम्नोः । मुकुन्दबालेन्दुवतंसयोः सचरित्रयोरीश्वरयोरभेदः ॥ २८ ॥ सर्वाणि शास्त्राणि वदन्ति नूनं हरेर्हरस्यैक्यमुदारमूर्तेः । नास्त्यत्र संदेहलवोऽपि सत्यं नित्यं जना धर्मधना गदन्ति ॥ २९ ॥ सर्वैः पुराणैरिदमेव सूक्तं यद्विष्णुशंभ्वोर्महनीयमूर्त्योः । ऐक्यं सदेवाऽस्ति न भेदलेशोऽप्यस्तीह चिन्त्यं सुजनैस्तदेवम् ॥ ३० ॥ भेदं प्रपश्यन्ति नराधमा ये विष्णौ च शंभौ च दयानिधाने । ते यान्ति पापाः परितापयुक्ता घोरं विशालं निरयस्य वासम् ॥ ३१ ॥ भूताधिपं वा विबुधाधिपं वा रमेश्वरं वा परमेश्वरं वा । पीताम्बरं वा हरिदम्बरं वा हरिं हरं वा पुरुषा भजध्वम् ॥ ३२ ॥ महस्विवर्य कमनीयदेहमुदारसारं सुख-

क्षायिचेष्टम् । सर्वेष्टदेवं दुरितापहारं विष्णुं शिवं वा सततं भजध्वम् ॥ ३३ ॥ शिवस्य विष्णोश्च विभात्यभेदो व्यासादयोऽपीह महर्षयस्ते । सर्वज्ञभावं दधतो नितान्तं वदन्ति चैवं कलयन्ति सन्तः ॥ ३४ ॥ महाशया धर्मविधानदक्षा रक्षापरा निर्जितमानसा ये । तेऽपीह विज्ञाः समदर्शिनो वै शिवस्य विष्णोः कलयन्त्यभेदम् ॥ ३५ ॥ हरिरेव हरो हर एव हरिर्नहि भेदलवोऽपि तयोः प्रथितः । इति सिद्धमुनीशयतीशवरा निगदन्ति सदा विमदाः सुजनाः ॥ ३६ ॥ हर एव हरिर्हरिरेव हरो हरिणा च हरेण च विश्वमिदम् । प्रविनिर्मितमेतदयेहि सदा विमदो भव तौ भज भावयुतः ॥ ३७ ॥ हरिरेव बभूव हरः परमो हर एव बभूव हरिः सरमः । हरिता हरता च तथा मिलिता रचयत्यखिलं खलु विश्वमिदम् ॥ ३८ ॥ वृषध्वजं वा गरुडध्वजं वा गिरीश्वरं वा भुवनेश्वरं वा । पतिं पशूनामथवा यदूनां कृष्णं शिवं वा विबुधा भजन्ते ॥ ३९ ॥ भीमाकृतिं वा रुचिराकृतिं वा त्रिलोचनं वा समलोचनं वा । उमापतिं वाऽथ रमापतिं वा हरिं हरं वा मुनयो भजन्ते ॥ ४० ॥ हरिः स्वयं वै हरतां प्रयातो हरस्तु साक्षाद्धरिभावमाप्तः । हरिर्हरश्चापि जगज्जनानामुपास्यदेवौ स्त इति प्रसिद्धिः ॥ ४१ ॥ हरिर्हि साक्षात् हर एव सिद्धो हरो हि साक्षाद्धरिरेव चास्ते । हरिर्हरश्च स्वयमेव चैको द्विरूपतां कार्यवशात् प्रयातः

॥ ४२ ॥ हरिर्जगत्पालनकृत्प्रसिद्धो हरो जगन्नाशकरः परात्मा। स्वरूपमात्रेण भिदामवाप्तौ द्वावेकरूपौ स्त इमौ सुरेशौ ॥ ४३ ॥ दयानिधानं विलसद्विधानं देवप्रधानं ननु सावधानम्। सानन्दसन्मानसभासमानं देवं शिवं वा भज केशवं वा ॥४४॥ श्रीकौस्तुभाभरणमिन्दुकलावतंसं काली-विलासिनमथो कमलाविलासम्। देवं मुरारिमथवा त्रिपुरा-रिमीशं भेदं विहाय भज भो भज भूरिभक्त्या ॥ ४५ ॥ विष्णुः साक्षाच्छंभुरेव प्रसिद्धः शंभुः साक्षाद्विष्णुरेवास्ति नूनम्। नास्ति स्वल्पोऽपीह भेदावकाशः सिद्धान्तोऽयं सज्जनानां सयुक्तः ॥ ४६ ॥ शंभुर्विष्णुश्चैकरूपो द्विमूर्तिः सत्यं सत्यं गद्यते निश्चितं सत्। अस्मिन्मिथ्या संशयं कुर्वते ये पापाचारास्ते नरा राक्षसाख्याः ॥ ४७ ॥ विष्णौ शंभौ नास्ति भेदावभासः संख्यावन्तः सन्त एवं वदन्ति। अन्तः किंचित्संविचिन्त्य स्वयं द्राक् भेदं त्यक्त्वा तौ भजस्व प्रकामम् ॥ ४८ ॥ विष्णोर्भक्ताः शंभुविद्वेषसक्ताः शंभोर्भक्ता विष्णुविद्वेषिणो ये। कामक्रोधान्धाः सुमन्दाः सनिन्दा विन्द-न्ति द्राक् ते नरा दुःखजालम् ॥४९॥ विष्णौ शंभौ भेदबुद्धिं विहाय भक्त्या युक्ताः सज्जना ये भजन्ते। तेषां भाग्यं वक्तुमीशो गुरुर्नो सत्यं सत्यं वच्म्यहं विद्धि तत्त्वम् ॥५०॥ हरेर्विरोधी च हरस्य भक्तो हरस्य वैरी च हरेश्च भक्तः साक्षादसौ राक्षस एव नूनं नाऽस्त्यत्र संदेहकवोऽपि सत्यम्

॥ ५१ ॥ शिवं च विष्णुं च विभिन्नदेहं पश्यन्ति ये मूढधियोऽतिनीचाः । ते किं सुसद्भिः सुतरां महद्भिः संभाषणीयाः पुरुषा भवन्ति ॥ ५२ ॥ अनेकरूपं विदितैकरूपं महान्तमुच्चैरतिशान्तचित्तम् । दान्तं नितान्तं शुभदं सुकांतं विष्णुं शिवं वा भज भूरिभक्त्या ॥ ५३ ॥ हरे मुरारे हर हे पुरारे विष्णो दयालो शिव हे कृपालो । दीनं जनं सर्वगुणैर्विहीनं मां भक्तमार्तं परिपाहि नित्यम् ॥ ५४ ॥ हे हे विष्णो शंभुरूपस्त्वमेव हे हे शंभो विष्णुरूपस्त्वमेव । सत्यं सर्वे सन्त एवं वदन्तः संसाराब्धिं ह्यञ्जसा संतरन्ति ॥ ५५ ॥ विष्णुः शंभुः शंभुरेवास्ति विष्णुः शंभुर्विष्णुर्विष्णुरेवास्ति शंभुः । शंभौ विष्णौ चैकरूपत्वमिष्टं शिष्टा एवं सर्वदा संजपन्ति ॥ ५६ ॥ दैवी संपद्विद्यते यस्य पुंसः श्रीमान् सोऽयं सर्वदा भक्तियुक्तः । शंभुं विष्णुं चैकरूपं द्विदेहं भेदं त्यक्त्वा संभजन्मोक्षमेति ॥ ५७ ॥ येषां पुंसामासुरी संपदास्ते मृत्योर्ग्रासाः कामलोभाभिभूताः । क्रोधेनान्धाः बन्धयुक्ता जनास्ते शंभुं विष्णुं भेदबुद्ध्या भजन्ते ॥ ५८ ॥ कल्याणकारं सुखदप्रकारं विनिर्विकारं विहितोपकारम् । स्वाकारमीशं न कृतापकारं शिवं भजध्वं किल केशवं वा ॥ ५९ ॥ सच्चित्स्वरूपं करुणासुकूपं गीर्वाणभूपं वरधर्मयूपम् । संसारसारं सुरुचिप्रसारं देवं हरिं वा भज भो हरं वा ॥ ६० ॥



आनन्दसिन्धुं परदीनबन्धुं मोहान्धकारस्य निकारहेतुम् ।

देवबाधा बाधा शत्रुकृता च या ॥ ५ ॥ भस्मीभवन्ति सर्वास्ताः कवचस्य प्रभावतः । सर्वे रोगा विनश्यन्ति सर्वे बालग्रहाश्च ये ॥ ६ ॥ पूर्वे रक्षतु वाराही चाग्नेय्यामम्बिका स्वयम् । दक्षिणे चण्डिका रक्षेन्नैर्ऋत्यां शववाहिनी ॥ ७ ॥ पश्चिमे केसुदा रक्षेद्वायव्यां च महेश्वरी । उत्तरे वैष्णवी रक्षेदीशाने सिंहवाहिनी ॥ ८ ॥ ऊर्ध्वं तु शारदा रक्षेदधो रक्षतु पार्वती । शाकंभरी शिरो रक्षेन्मुखं रक्षतु भैरवी ॥ ९ ॥ कण्ठं रक्षतु चामुण्डा हृदयं रक्षताच्छिवा । ईशानी च भुजौ रक्षेत्कुक्षिं नाभिं च कालिका ॥ १० ॥ अपर्णा ह्युदरं रक्षेत्कटिं बस्तिं शिवप्रिया । ऊरू रक्षतु कौमारी जया जानुद्वयं तथा ॥ ११ ॥ गुल्फौ पादौ सदा रक्षेद्ब्रह्माणी परमेश्वरी । सर्वाङ्गानि सदा रक्षेद्दुर्गा दुर्गार्तिनाशिनी ॥ १२ ॥ नमो देव्यै महादेव्यै दुर्गायै सततं नमः । पुत्रसौख्यं देहि देहि गर्भरक्षां कुरुष्व नः ॥ १३ ॥ ॐ ह्रीं ह्रीं ह्रीं श्रीं श्रीं श्रीं ऐं ऐं ऐं महाकालीमहालक्ष्मीमहासरस्वतीरूपायै नवकोटिमूर्त्यै दुर्गायै नमः । ह्रीं ह्रीं ह्रीं दुर्गे दुर्गार्तिनाशिनि संतानसौख्यं देहि देहि वन्ध्यत्वं मृतवत्सत्वं च हर हर गर्भरक्षां कुरु कुरु सकलां बाधां कुलजां बाह्यजां कृतामकृतां च नाशय नाशय सर्वगात्राणि रक्ष रक्ष गर्भं पोषय पोषय सर्वोपद्रवं शोषय शोषय स्वाहा । अनेन कवचेनाङ्गं सप्तवारामिमन्त्रितम् । ऋतुस्नाता जलं पीत्वा भवेद्गर्भवती ध्रुवम्

॥१४॥ गर्भपातभये पीत्वा दृढगर्भा प्रजायते । अनेन कव-चेनाथ मार्जिताया निशागमे ॥ १५ ॥ सर्वबाधाविनिर्मुक्ता गर्भिणी स्यान्न संशयः । अनेन कवचेनेह ग्रन्थितं रक्तदोर-कम् ॥ १६ ॥ कटिदेशे धारयन्ती सुपुत्रसुखभागिनी । असूत पुत्रमिन्द्राणी जयन्तं यत्प्रभावतः ॥ १७ ॥ गुरूप-दिष्टं वंशाख्यं कवचं तदिदं सखे । गुह्याद्गुह्यतरं चेदं न प्रकाश्यं हि सर्वतः । धारणात्पठनादस्य वंशच्छेदो न जायते ॥ १८ ॥ बाला विनश्यन्ति पतन्ति गर्भास्तत्राबलाः कष्ट-युताश्च वन्ध्याः । बालग्रहैर्भूतगणैश्च रोगैर्न यत्र धर्माचरणं गृहे स्यात् ॥ १९ ॥

इति श्रीज्ञानभास्करे सूर्यारुणसंवादे वंशकवचं समाप्तम् ।

---

## ४२२ मनोरथाष्टकम् ।

श्रीगणेशाय नमः ॥ गणाधिपो भानुशशीधरासुतो बुधो गुरुर्भार्गव सूर्यनन्दनः । राहुश्च केतुप्रभृतिर्नव ग्रहाः कुर्वन्तु वः पूर्णमनोरथं सदा ॥ १ ॥ उपेन्द्र इन्द्रो वरुणो हुताशनो धर्मो यमो वायुहरिश्चतुर्मुखः । गन्धर्वयक्षो ऋषिसिद्धिचा-रणाः कुर्वन्तु० ॥ २ ॥ मनुर्मरीचिर्भृगुदक्षनारदः पराशरो व्यासवसिष्ठभार्गवः । वाल्मीककुम्भोद्भवगर्गगौतमाः कुर्वन्तु० ॥ ३ ॥ नलो दधीचिः सगरः पुरूरवा शाकुन्तलेयो भरतो धनञ्जयः । रामत्रयं वैन्यबलिर्युधिष्ठिरः कुर्वन्तु० ॥ ४ ॥ रम्भा

शची सत्यवती च देवकी गौरी च लक्ष्मीरदितिश्च रुक्मिणी। कूर्मो गजेन्द्रः खचरा धराचराः कुर्वन्तु० ॥५॥ गङ्गा च क्षिप्रा यमुना सरस्वती गोदावरी वेत्रवती च नर्मदा। सा चन्द्रभागा वरुणा असी नदी कुर्वन्तु० ॥ ६ ॥ तुङ्गं प्रभासं गुरुचक्रपुष्करं गयाभिमुक्तो बदरी वटेश्वरः। केदारपम्पासरनैमिषारण्याः कुर्वन्तु० ॥ ७ ॥ शङ्खश्च दूर्वा-सितपत्रचामरं मणिप्रदीपो वररत्नकाञ्चनम्। संपूर्णकुम्भः सहितो हुताशनः कुर्वन्तु० ॥ ८ ॥ प्रयाणकाले यदि वा सुमङ्गले प्रभातकाले च नृपाभिषेके। धर्मार्थकामार्थनरस्य भाषितं व्यासेन संपूर्णमनोरथाष्टकम् ॥ ९ ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। रक्षन्तु चतुरो वेदा यावच्च-न्द्रदिवाकरौ ॥ १० ॥

इति श्रीव्यासविरचितं मनोरथाष्टकं संपूर्णम्।

---

## ४३३ पञ्चदेवस्तोत्रम्।

श्रीगणेशाय नमः ॥ गणेशविष्णुसूर्येशदुर्गाख्यं देवपञ्च-कम्। वन्दे विशुद्धमनसा जनसापुज्यदायकम् ॥ १ ॥ एक-रूपान् भिन्नमूर्तीन् पञ्चदेवान्नमस्कृतान्। वन्दे विशुद्धभावे-नेशाम्बेनैकरदाच्युतान् ॥ २ ॥ कल्याणदायिनो देवान्नम-स्कुर्यान्महौजसः। विष्णुशंभुशिवासूर्यगणेशाख्यान्नमाम्य-हम् ॥ ३ ॥ एकात्मनोऽभिन्नरूपान् लोकरक्षणतत्परान्।

शिवविष्णुशिवासूर्यहेरम्बान् प्रणमाम्यहम् ॥ ४ ॥ दिव्यरूपानेकरूपान्नानारूपान्नमस्कृतान् । शिवाशङ्करहेरम्बविष्णुसूर्यान्नमाम्यहम् ॥ ५ ॥ नित्यानानन्दसंदोहदायिनो दीनपालकान् । शिवाच्युतगणेशेनदुर्गाख्यान् नौम्यहं सुरान् ॥ ६ ॥ कमनीयतनून्देवान् सेवावश्यान् कृपावतः । शंकरेनशिवाविष्णुगणेशाख्यान्नमाम्यहम् ॥ ७ ॥ सूर्यविष्णुशिवाशंभुविघ्नराजाभिधान्सुरान् । एकरूपान् सदा वन्दे सुखसंदोहसिद्धये ॥ ८ ॥ हरौ हरे तीक्ष्णकरे गणेशे शक्तौ न भेदो जगदादिहेतुषु । अधः पतन्त्येषु भिदां दधाना भापन्त एवं यतयोऽच्युताश्रमाः ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदच्युताश्रमविरचितं पञ्चदेवस्तोत्रं समाप्तम् ।

---

## ४३४ हरिहरस्तोत्रम् ।

श्रीगणेशाय नमः ॥ धर्मार्थकाममोक्षाख्यचतुर्वर्गप्रदायिनौ । वन्दे हरिहरौ देवौ त्रैलोक्यपरिपायिनौ ॥ १ ॥ एकमूर्तौ द्विधा भिन्नौ संसारार्णवतारकौ । वन्देऽहं कामदौ देवौ सततं शिवकेशवौ ॥ २ ॥ दयामयौ दीनदरिद्रतापहौ महौजसौ मान्यतमौ सदा समौ । उदारलीलाकलितौ सितासितौ नमामि नित्यं शिवकेशवावहम् ॥ ३ ॥ अनन्तमाहात्म्यनिधी विधिस्तुतौ भिदाच्युतौ लोकनिधानकारणौ ।

सुरासुराधीशनुतौ नुतौ जगत्पती विधत्तां शिवकेशवौ शिवम् ॥४॥ जगत्रयीपालननाशकारकौ प्रसन्नहासौ विलसत्सदानना। महाबलौ मञ्जुलमूर्तिधारिणौ शिवं विधत्तां शिवकेशवौ सदा ॥ ५ ॥ महस्विनौ मोदकरौ परौ वरौ मुनीश्वरैः सेवितपादपङ्कजौ। अजौ सुजातौ जगदीश्वरौ सदा शिवं विधत्तां शिवकेशवौ मम ॥६॥ नमोऽस्तु नित्यं शिवकेशवाभ्यां स्वभक्तसंरक्षणतत्पराभ्याम्। देवेश्वराभ्यां करुणाकराभ्यां लोकत्रयीनिर्मितिकारणाभ्याम् ॥ ७ ॥ सलीलशीलौ महनीयमूर्ती दयाकरौ मञ्जुलसच्चरित्रौ। महोदयौ विश्वविनोदहेतू नमामि देवौ शिवकेशवौ तौ ॥८॥ त्रिशूलपाणिं वरचक्रपाणिं पीताम्बरं स्पष्टदिगंबरं च। चतुर्भुजं वा दशबाहुयुक्तं हरिं हरं वा प्रणमामि नित्यम् ॥ ९ ॥ कपालमालाललितं शिवं च सद्वैजयन्तीसमुदारशोभम्। विष्णुं च नित्यं प्रणिपत्य याचे भवत्पदाम्भोरुहयोः स्मृतिः स्तात् ॥ १० ॥ शिव त्वमेवाऽसि हरिस्वरूपो हरे त्वमेवाऽसि शिवस्वरूपः। भ्रान्त्या जनास्त्वां द्विविधस्वरूपं पश्यन्ति मूढा ननु नाशहेतोः ॥ ११ ॥ हरे जना ये शिवरूपिणं त्वां त्वद्रूपमीशं कलयन्ति नित्यम्। ते भाग्यवन्तः पुरुषाः कदाऽपि न यान्ति भास्वत्तनयस्य गेहम् ॥ १२ ॥ शम्भो जना ये हरिरूपिणं त्वां भवत्स्वरूपं कमलालयेशम्। पश्यन्ति भक्त्या ननु ते महान्तो यमस्य नो यान्ति पुरं कदाचित् ॥ १३ ॥

शिवे हरौ भेदधियाऽऽधियुक्ता मुक्तिं लभन्ते न जना दुरापाम् । भुक्तिं च नैवेह परन्तु दुःखं संसारकूपे पतिताः प्रयान्ति ॥ १४ ॥ हरे हरौ भेददृशो भृशं वै संसारसिन्धौ पतिताः सतापाः । पापाशया मोहमयान्धकारे भ्रान्ता महादुःखभरं लभन्ते ॥ १५॥ सन्तो लसन्तः सुतरां हरौ च हरे च नित्यं बहुभक्तिमन्तः । अन्तर्महान्तौ शिवकेशवौ तौ ध्यायन्त उच्चैर्मुदमाप्नुवन्ति ॥ १६ ॥ हरौ हरे चैक्यमुदारशीलाः पश्यन्ति शश्वत्सुखदायिलीलाः । ते भुक्तिमुक्ती समवाप्य नूनं सुखं दुरापं सुतरां लभन्ते ॥ १७ ॥ शिवे शिवेशेऽपि च केशवे च पद्मापतौ देववरे महान्तः । भेदं न पश्यन्ति परन्तु सन्तस्तयोरभेदं कलयन्ति सत्यम् ॥ १८ ॥ रमा-पतिं वा गिरिजापतिं वा विश्वेश्वरं वा जगदीश्वरं वा । पिनाकपाणिं खलु शार्ङ्गपाणिं हरिं हरं वा प्रणमामि नित्यम् ॥ १९ ॥ सुरेश्वरं वा परमेश्वरं वा वैकुण्ठलोकस्थितमच्युतं वा । कैलासशैलस्थितमीश्वरं वा विष्णुं च शंभुं च नमामि नित्यम् ॥ २० ॥ हरिर्दयार्द्राशयतां प्रयातो हरो दया-लुत्तमभावमाप्तः । अनेकदिव्यास्त्रधरः परेशः पायादजस्रं कृपया नतं माम् ॥ २१ ॥ शेषोऽस्ति यस्याऽऽभरणत्वमाप्तो यद्वा सुशय्यात्वमितः सदैव । देवः स कोऽपीह हरिर्हरो वा करोतु मे मञ्जुलमङ्गलं द्राक् ॥ २२ ॥ हरिं हरं चापि भजन्ति भक्त्या विभेदबुद्धिं विहाय [illegible] ॥ २३ ॥ सिद्धा महान्तो

मुनयो महेच्छा स्वच्छाशया नारदपर्वताद्याः ॥२३॥ सनत्कुमारादय उन्नतेच्छा मोहेन हीना मुनयो महान्तः। स्वान्तस्थितं शङ्करमच्युतं च भेदं परित्यज्य सदा भजन्ते ॥२४॥ शिष्टा वसिष्ठादय आत्मनिष्ठाः श्रेष्ठा स्वधर्मावनकर्मवित्ताः। वृत्तापहारं मलहीनचित्ता हरिं हरं चैकतया भजन्ते ॥२५॥ अन्ये महात्मान उदारशीला भृग्वादयो ये परमर्षयस्ते। पश्यन्ति चैक्यं हरिशर्वयोः श्रीसंयुक्तयोरत्र न संशयोऽस्ति ॥ २६ ॥ इन्द्रादयो देववरा उदारा त्रैलोक्यसंरक्षणदत्तचित्ताः। हरिं हर चैकसुरूपमेव पश्यन्ति भक्त्या च भजन्ति नूनम् ॥ २७ ॥ सर्वेषु वेदेषु खलु प्रसिद्धवैकुण्ठकैलासगयोः सुधाम्नोः। मुकुन्दबालेन्दुवतंसयोः सच्चरित्रयोरीश्वरयोरभेदः ॥ २८ ॥ सर्वाणि शास्त्राणि वदन्ति नूनं हरेर्हरस्यैक्यमुदारमूर्तेः। नास्त्यत्र संदेहलवोऽपि सत्यं नित्यं जना धर्मधना गदन्ति ॥ २९ ॥ सर्वैः पुराणैरिदमेव सूक्तं यद्विष्णुशंभ्वोर्महनीयमूर्त्योः। ऐक्यं सदेवाऽस्ति न भेदलेशोऽप्यस्तीह चिन्त्यं सुजनैस्तदेवम् ॥ ३० ॥ भेदं प्रपश्यन्ति नराधमा ये विष्णौ च शंभौ च दयानिधाने। ते यान्ति पापाः परितापयुक्ता घोरं विशालं निरयस्य वासम् ॥ ३१ ॥ भूताधिपं वा विबुधाधिपं वा रमेश्वरं वा परमेश्वरं वा। पीताम्बरं वा हरिदम्बरं वा हरिं हरं वा पुरुषा


भजन्तम् ॥ ३२ ॥ महेश्वरं ...

दायिचेष्टम् । सर्वेष्टदेवं दुरितापहारं विष्णुं शिवं वा सततं भजध्वम् ॥ ३३ ॥ शिवस्य विष्णोश्च विभात्यभेदो व्यासादयोऽपीह महर्षयस्ते । सर्वज्ञभावं दधतो नितान्तं वदन्ति चैवं कलयन्ति सन्तः ॥ ३४ ॥ महाशया धर्मविधानदक्षा रक्षापरा निर्जितमानसा ये । तेऽपीह विज्ञाः समदर्शिनो वै शिवस्य विष्णोः कलयन्त्यभेदम् ॥ ३५ ॥ हरिरेव हरो हर एव हरिर्नहि भेदलवोऽपि तयोः प्रथितः । इति सिद्धमुनीशयतीशवरा निगदन्ति सदा विमदाः सुजनाः ॥ ३६ ॥ हर एव हरिर्हरिरेव हरो हरिणा च हरेण च विश्वमिदम् । प्रविनिर्मितमेतदवेहि सदा विमदो भव तौ भज भावयुतः ॥ ३७ ॥ हरिरेव बभूव हरः परमो हर एव बभूव हरिः सरमः । हरिता हरता च तथा मिलिता रचयत्यखिलं खलु विश्वमिदम् ॥ ३८ ॥ वृषध्वजं वा गरुडध्वजं वा गिरीश्वरं वा भुवनेश्वरं वा । पतिं पशूनामथवा यदूनां कृष्णं शिवं वा विबुधा भजन्ते ॥ ३९ ॥ भीमाकृतिं वा रुचिराकृतिं वा त्रिलोचनं वा समलोचनं वा । उमापतिं वाऽथ रमापतिं वा हरिं हरं वा सुनयो भजन्ते ॥ ४० ॥ हरिः स्वयं वै हरतां प्रयातो हरस्तु साक्षाद्धरिभावमाप्तः । हरिर्हरश्चापि जगज्जनानामुपास्यदेवौ स्त इति प्रसिद्धिः ॥ ४१ ॥ हरिर्हि साक्षात् हर एव सिद्धो हरो हि साक्षाद्धरिरेव चास्ते । हरिर्हरश्च स्वयमेव चैको द्विरूपतां कार्यवशात् प्रयातः

॥ ४२ ॥ हरिर्जगत्पालनकृत्प्रसिद्धो हरो जगन्नाशकरः परात्मा। सुरूपमात्रेण भिदामवाप्तौ द्वावेकरूपौ स्त इमौ सुरेशौ ॥ ४३ ॥ दयानिधानं विलसद्विधानं देवप्रधानं ननु सावधानम्। सानन्दसन्मानसभासमानं देवं शिवं वा भज केशवं वा ॥४४॥ श्रीकौस्तुभाभरणमिन्दुकलावतंसं कालीविलासिनमथो कमलाविलासम्। देवं मुरारिमथवा त्रिपुरारिमीशं भेदं विहाय भज भो भज भूरिभक्त्या ॥ ४५ ॥ विष्णुः साक्षाच्छंभुरेव प्रसिद्धः शंभुः साक्षाद्विष्णुरेवास्ति नूनम्। नास्ति स्वल्पोऽपीह भेदावकाशः सिद्धान्तोऽयं सज्जनानां समुक्तः ॥ ४६ ॥ शंभुर्विष्णुश्चैकरूपो द्विमूर्तिः सत्यं सत्यं गद्यते निश्चितं सत्। अस्मिन्मिथ्या संशयं कुर्वते ये पापाचारास्ते नरा राक्षसाख्याः ॥ ४७ ॥ विष्णौ शंभौ नास्ति भेदावभासः संख्यावन्तः सन्त एवं वदन्ति। अन्तः किंचित्संविचिन्त्य स्वयं द्राक् भेदं त्यक्त्वा तौ भजस्व प्रकामम् ॥ ४८ ॥ विष्णोर्भक्ताः शंभुविद्वेषसक्ताः शंभोर्भक्ता विष्णुविद्वेषिणो ये। कामक्रोधान्धाः सुमन्दाः सनिन्दा विन्दन्ति द्राक् ते नरा दुःखजालम् ॥४९॥ विष्णौ शंभौ भेदबुद्धिं विहाय भक्त्या युक्ताः सज्जना ये भजन्ते। तेषां भाग्यं वक्तुमीशो गुरुर्नो सत्यं सत्यं वच्म्यहं विद्धि तत्त्वम् ॥५०॥ हरेर्विरोधी च हरस्य भक्तो हरस्य वैरी च हरेश्च भक्तः। साक्षादसौ राक्षस एव नूनं नाऽस्त्यत्र संदेहकणोऽपि सत्यम्

॥ ५१ ॥ शिवं च विष्णुं च विभिन्नदेहं पश्यन्ति ये मूढधियोऽतिनीचाः। ते किं सुसद्भिः सुतरां महद्भिः संभाषणीयाः पुरुषा भवन्ति ॥ ५२ ॥ अनेकरूपं विदितैकरूपं महान्तमुच्चैरतिशान्तचित्तम्। दान्तं नितान्तं शुभदं सुकांतं विष्णुं शिवं वा भज भूरिभक्त्या ॥ ५३ ॥ हरे मुरारे हर हे पुरारे विष्णो दयालो शिव हे कृपालो। दीनं जनं सर्वगुणैर्विहीनं मां भक्तमार्तं परिपाहि नित्यम् ॥ ५४ ॥ हे हे विष्णो शंभुरूपस्त्वमेव हे हे शंभो विष्णुरूपस्त्वमेव। सत्यं सर्वे सन्त एवं वदन्तः संसाराब्धिं ह्यञ्जसा संतरन्ति ॥ ५५ ॥ विष्णुः शंभुः शंभुरेवास्ति विष्णुः शंभुर्विष्णुर्विष्णुरेवास्ति शंभुः। शंभौ विष्णौ चैकरूपत्वमिष्टं शिष्टा एवं सर्वदा संजपन्ति ॥ ५६ ॥ दैवी संपद्विद्यते यस्य पुंसः श्रीमान् सोऽयं सर्वदा भक्तियुक्तः। शंभुं विष्णुं चैकरूपं द्विदेहं भेदं त्यक्त्वा संभजन्मोक्षमेति ॥ ५७ ॥ येषां पुंसामासुरी संपदास्ते मृत्योर्ग्रासाः कामलोभाभिभूताः। क्रोधेनान्धाः बन्धयुक्ता जनास्ते शंभुं विष्णुं भेदबुद्ध्या भजन्ते ॥ ५८ ॥ कल्याणकारं सुखदप्रकारं विनिर्विकारं विहितोपकारम्। स्वाकारमीशं न कृतापकारं शिवं भजध्वं किल केशवं वा ॥ ५९ ॥ सच्चित्स्वरूपं करुणासुकूपं गीर्वाणभूपं वरधर्मगूपम्। संसारसारं सुरुचिप्रसारं देवं हरिं वा भज भो हरं वा ॥ ६० ॥


आनन्दसिन्धुं पददीनबन्धुं मोहान्धकारस्य निवारहेतुम्।

सद्धर्मसेतुं रिपुधूमकेतुं भजस्व विष्णुं शिवमेकबुद्ध्या ॥६१॥ वेदान्तसिद्धान्तमयं दयालुं सत्सांख्यशास्त्रप्रतिपाद्यमानम् । न्यायप्रसिद्धं सुतरां समिद्धं भजस्व विष्णुं शिवमेकबुद्ध्या ॥ ६२ ॥ पापापहारं रुचिरप्रचारं कृतोपकारं विलसद्विहारम् । सद्धर्मधारं कमनीयदारं सारं हरिं वा भज भो हरं वा ॥ ६३ ॥ हरौ हरे भेदमवेक्षमाणः प्राणी नितान्तं खलु तान्तचेताः । प्रेताधिपस्यैति पुरं दुरन्तं दुःखं च तत्र प्रथितं प्रयाति ॥ ६४ ॥ भो भो जना ज्ञानधनामनागप्यर्च्यं हरौ चापि हरे च नूनम् । भेदं परित्यज्य मनो निरुध्य सुखं भवन्तः खलु तौ भजन्तु ॥ ६५ ॥ आनन्दसन्मन्दिरमिन्दुकान्तं शान्तं नितान्तं भुवनानि पान्तम् । भान्तं सुदान्तं विहितासुरान्तं देवं शिवं वा भज केशवं वा ॥ ६६ ॥ हे हे हरे कृष्ण जनार्दनेश शंभो शशाङ्काभरणाधिदेव । नारायण श्रीश जगत्स्वरूप मां पाहि नित्यं शरणं प्रपन्नम् ॥ ६७ ॥ विष्णो दयालोऽच्युत शार्ङ्गपाणे भूतेश शंभो शिव शर्व नाथ । मुकुन्द गोविन्द रमाधिपेश मां पाहि नित्यं शरणं प्रपन्नम् ॥ ६८ ॥ कल्याणकारिन् कमलापते हे गौरीपते भीम भवेश शर्व । गिरीश गौरीप्रिय शूलपाणे मां पाहि नित्यं शरणं प्रपन्नम् ॥ ६९ ॥ हे शर्व हे शंकर हे पुरारे हे कृष्ण हे केशव हे मुरारे । हे दीनबन्धो करुणैकसिन्धो मां पाहि नित्यं शरणं प्रपन्नम् ॥७०॥

हे चन्द्रमौले हरिरूप शंभो हे चक्रपाणे शिवरूप विष्णो ।
हे कामशत्रो खलु कामतात मां पाहि नित्यं भगवन्नमस्ते
॥ ७१ ॥ सकललोकपशोकविनाशिनौ परमरम्यतया प्रवि-
काशिनौ । अघसमूहविदारणकारिणौ हरिहरौ भज मूढ
भिदां त्यज ॥ ७२ ॥ हरिः साक्षाद्धरः प्रोक्तो हरः साक्षा-
द्धरिः स्मृतः । उभयोरन्तरं नास्ति सत्यं सत्यं न संशयः
॥ ७३ ॥ यो हरौ च हरे साक्षादेकमूर्तौ द्विधा स्थिते ।
भेदं करोति मूढात्मा स याति नरकं ध्रुवम् ॥ ७४ ॥ यस्य
बुद्धिर्हरौ चापि हरे भेदं च पश्यति । स नराधमतां यातो रोगी
भवति मानवः ॥ ७५ ॥ यो हरौ च हरे चापि भेदबुद्धिं
करोत्यहो । तस्मान्मूढतमो लोके नान्यः कश्चन विद्यते
॥७६॥ मुक्तिमिच्छसि चेत्तर्हि भेदं त्यज हरौ हरे । अन्यथा
जन्मलक्षेपु मुक्तिः खलु सुदुर्लभा ॥ ७७ ॥ विष्णोः शिवस्य
चाभेदज्ञानान्मुक्तिः प्रजायते । इति सद्वेदवाक्यानां सिद्धान्तः
प्रतिपादितः ॥ ७८ ॥ विष्णुः शिवः शिवो विष्णुरिति ज्ञानं
प्रशिष्यते । एतज्ज्ञानयुतो ज्ञानी नान्यथा ज्ञानमिष्यते ॥७९॥
हरिर्हरो हरश्चापि हरिरस्तीति भावयन् । धर्मार्थकाममो-
क्षाणामधिकारी भवेन्नरः ॥ ८० ॥ हरिं हरं भिन्नरूपं भाव-
यत्यधमो नरः । स वर्णसंकरो नूनं विज्ञेयो भावितात्मभिः
॥ ८१ ॥ हरे शम्भो हरे विष्णो शंभो हर हरे हर । इति
नित्यं जपन् जन्तुर्जीवन्मुक्तो हि जायते ॥ ८२ ॥ न हरिं

च हरं चापि भेदबुद्ध्या विलोकयेत् । यदीच्छेदात्मनः क्षेम बुद्धिमान्कुशलो नरः ॥ ८३ ॥ हरे हर दयालो मां पाहि पाहि कृपां कुरु । इति संजपनादेव मुक्तिः प्राणौ प्रतिष्ठिता ॥ ८४ ॥ हरिं हरं द्विधा भिन्नं वस्तुतस्त्वेकरूपकम् । प्रणमामि सदा भक्त्या रक्षतां तौ महेश्वरौ ॥ ८५ ॥ इदं हरिहरस्तोत्रं सूक्तं परमदुर्लभम् । धर्मार्थकाममोक्षाणां दायकं दिव्यमुत्तमम् ॥ ८६ ॥ शिवकेशवयोरैक्यप्रतिपादकमीडितम् । पठेयुः कृतिनः शान्ता दान्ता मोक्षाभिलाषिणः ॥ ८७ ॥ एतस्य पठनात्सर्वाः सिद्धयो वशगास्तथा । देवयोर्विष्णुशिवयोर्भक्तिर्भवति भूतिदा ॥ ८८ ॥ धर्मार्थी लभते धर्ममर्थार्थी चार्थमश्नुते । कामार्थी लभते कामं मोक्षार्थी मोक्षमश्नुते ॥ ८९ ॥ दुर्गमे घोरसंग्रामे कानने वधबन्धने । कारागारेऽस्य पठनाज्जायते तत्क्षणं सुखी ॥ ९० ॥ वेदे यथा सामवेदो वेदान्तो दर्शने यथा । स्मृतौ मनुस्मृतिर्यद्वत् वर्णेषु ब्राह्मणो यथा ॥ ९१ ॥ यथाऽऽश्रमेषु संन्यासो यथा देवेषु वासवः । यथाऽश्वत्थः पादपेषु यथा गङ्गा नदीषु च ॥ ९२ ॥ पुराणेषु यथा श्रेष्ठं महाभारतमुच्यते । यथा सर्वेषु लोकेषु वैकुण्ठः परमोत्तमः ॥ ९३ ॥ यथा तीर्थेषु सर्वेषु प्रयागः श्रेष्ठ ईरितः । यथा पुरीषु सर्वासु वरा वाराणसी मता ॥ ९४ ॥ यथा दानेषु सर्वेषु चाभयदानं महत्तमम् । यथा सर्वेषु धर्मेषु चाहिंसा परता स्मृता

॥ ९५ ॥ यथा सर्वेषु सौख्येषु भोजनं प्राहुरुत्तमम् । तथा स्तोत्रेषु सर्वेषु स्तोत्रमेतत्परात्परम् ॥ ९६ ॥ अन्यानि यानि स्तोत्राणि तानि सर्वाणि निश्चितम् । अस्य स्तोत्रस्य नो यान्ति षोडशीमपि सत्कलाम् ॥ ९७ ॥ भूतप्रेतपिशाचाद्या बालवृद्धग्रहाश्च ये । ते सर्वे नाशमायान्ति स्तोत्रस्यास्य प्रभावतः ॥ ९८ ॥ यत्रास्य पाठो भवति स्तोत्रस्य महतो ध्रुवम् । तत्र साक्षात्सदा लक्ष्मीर्वसत्येव न संशयः ॥ ९९ ॥ अस्य स्तोत्रस्य पाठेन विश्वेशौ शिवकेशवौ । सर्वान्मनोरथान्पुंसां पूरयेतां न संशयः ॥ १०० ॥ पुण्यं पुण्यं महत्पुण्यं स्तोत्रमेतद्धि दुर्लभम् । भो भो मुमुक्षवः सर्वे यूयं पठत सर्वदा ॥ १०१ ॥

इत्यच्युताश्रमस्वामिविरचितं श्रीहरिहराद्वैतस्तोत्रं संपूर्णम् ।

---

## ४३५ अथ गोपीगीतम् ।

श्रीगणेशाय नमः ॥ गोप्य ऊचुः ॥ जयति तेऽधिकं जन्मना व्रजः श्रयत इंदिरा शश्वदत्र हि । दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते ॥ १ ॥ शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा । सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः ॥ २ ॥ विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् । वृषमयात्म-

जाद्विश्वतो भयादृषभ ते वयं रक्षिता मुहुः ॥ ३ ॥ न खलु गोपिकानंदनो भवानखिलदेहिनामंतरात्मदृक् । विखनसार्थितो विश्वगुप्तये सख उदेयिवान्सात्वतां कुले ॥ ४ ॥ विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात् । करसरोरुहं कांत कामदं शिरसि धेहि नः श्रीकरग्रहम् ॥५॥ व्रजजनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित । भज सखे भवत्किंकरीः स्म नो जलरुहाननं चारु दर्शय ॥ ६ ॥ प्रणतदेहिनां पापकर्शनं तृणचरानुगं श्रीनिकेतनम् । फणिफणार्पितं ते पदांबुजं कृणु कुचेषु नः कृन्धि हृच्छयम् ॥ ७ ॥ मधुरया गिरा वल्गुवाक्यया बुधमनोज्ञया पुष्करेक्षण । विधिकरीरिमा वीर मुह्यतीरधरसीधुनाऽऽप्याययस्व नः ॥ ८ ॥ तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् । श्रवणमंगलं श्रीमदाततं भुवि गृणंति ते भूरिदा जनाः ॥ ९ ॥ प्रहसितं प्रिय प्रेमवीक्षणं विहरणं च ते ध्यानमंगलम् । रहसि संविदो या हृदिस्पृशः कुहक नो मनः क्षोभयंति हि ॥ १० ॥ चलसि यद्व्रजाच्चारयन्पशून् नलिनसुंदरं नाथ ते पदम् । शिलतृणांकुरैः सीदतीति नः कलिलतां मनः कांत गच्छति ॥ ११ ॥ दिनपरिक्षये नीलकुंतलैर्वनरुहाननं बिभ्रदावृतम् । घनरजस्वलं दर्शयन्मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥ प्रणतकामदं पद्मजार्चितं धरणिमंडनं ध्येयमापदि । चरणपंकजं शंतमं

च ते रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥ सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम् । इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम् ॥ १४ ॥ अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् । कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम् ॥ १५ ॥ पतिसुतान्वयभ्रातृबांधवानतिविलंघ्य तेऽत्यच्युतागताः । गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥ रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् । बृहदुरःश्रियो वीक्ष्य धाम ते मुहुरतिस्पृहा मुह्यते मनः ॥ १७ ॥ व्रजवनौकसां व्यक्तिरंग ते वृजिनहंत्र्यलं विश्वमंगलम् । त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥ यत्ते सुजातचरणांबुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु । तेनाटवीमटसि तद्व्यथते न किंस्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥ १९ ॥ श्रीशुक उवाच ॥ इति गोप्यः प्रगायंत्यः प्रलपंत्यश्च चित्रधा । रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः ॥ २० ॥ तासामाविरभूच्छौरिः स्मयमानमुखांबुजः । पीतांबरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे गोपीगीतं संपूर्णम् ।

## ४३६ अथ युगलगीतप्रारंभः ।

श्रीगणेशाय नमः ॥ श्रीशुक उवाच ॥ गोप्यः कृष्णे वनं याते तमनद्रुतचेतसः । कृष्णलीलाः प्रगायंत्यो निन्युर्दुःखेन वासरान् ॥ १ ॥ गोप्य ऊचुः ॥ वामबाहुकृतवामकपोलो वल्गितभ्रुरधरार्पितवेणुः । कोमलांगुलिभिराश्रितमार्गं गोप्य ईरयति यत्र मुकुंदः ॥ २ ॥ व्योमयानवनिताः सह सिद्धैर्विस्मितास्तदुपधार्य सलज्जाः । काममार्गणसमर्पितचित्ताः कश्मलं ययुरपस्मृतनीव्यः ॥ ३ ॥ हंत चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत् । नंदसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥ वृंदशो व्रजवृषा मृगगावो वेणुवाद्यहृतचेतस आरात् । दन्तदष्टकवलाधृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥ बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडंबाः । कर्हिचित्सबल आलिसगोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥ तर्हि भग्नगतयः सरितो वै तत्पदांबुजरजोनिलनीतम् । स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजास्तिमितापः ॥ ७ ॥ अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः । वनचरो गिरितटेषु चरंतीर्वेणुनाऽऽह्वयति गाः स यदा हि ॥८॥ वनलतास्तरव आत्मनि विष्णुं व्यञ्जयंत्य इव पुष्पफलाढ्याः । प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥ दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः । अलिकु-

लैरलघुगीतमभीष्टमाद्रियन्यर्हि संधितवेणुः ॥ १० ॥ सर-
सिसारसहंसविहंगाश्चारुगीतहृतचेतस एत्य । हरिमुपा-
सत ते यतचित्ता हंत मीलितदृशो धृतमौनाः ॥ ११ ॥
सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।
हर्षयन्यर्हि वेणुरवेण जातहर्ष उपरंभति विश्वम् ॥ १२ ॥
महदतिक्रमणशंकितचेता मंदमंदमनुगर्जति मेघः । सुहृदम-
भ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥
विविधगोपरसेषु विदग्धो वेणुवाद्यउरुधा निजशिक्षाः । तव
सुतः सति यदाधरबिम्बे दत्तवेणुरनयत्स्वरजातीः ॥ १४ ॥
सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः । कवय
आनतकंधरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः ॥ १५ ॥
निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः । व्रज-
भुवः शमयन्खुरतोदं वर्ष्मधुर्यगतिरीडितवेणुः ॥ १६ ॥
व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः । कुज-
गतिं गमिता न विदामः कश्मलेन वसनं कबरं वा ॥१७॥
मणिधरः क्वचिदागणयन्गा मालया दयितगंधतुलस्याः ।
प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन्भुजमगायत यत्र ॥१८॥
क्वणितवेणुरववंचितचित्ताः कृष्णमन्वसत कृष्णगृहिण्यः ।
गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः
॥ १९ ॥ कुन्ददामकृतकौतुकवेषो गोपगोधनवृतो यमुना-
याम् । नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार

॥ २० ॥ मन्दवायुरुपवात्यनुकूलं मानयन्मलयजस्पर्शेन । वंदिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥२१॥ वत्सलो व्रजगवां यदगध्रो वंद्यमानचरणः पथि वृद्धैः । कृत्स्नगोधनमुपोह्य दिनांते गीतवेणुरनुगेडितकीर्तिः॥ २२ ॥ उत्सवं श्रमरुचाऽपि दृशीनामुन्नयन्खुररजश्छुरितस्रक् । दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥ मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली । बदर-पांडुवदनो मृदुगंडं मंडयन्कनककुण्डललक्ष्म्याः ॥ २४ ॥ यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनांते । मुदि-तवक्र उपयाति दुरंतं मोचयन्व्रजगवां दिनतापम् ॥ २५ ॥ श्रीशुक उवाच ॥ एवं व्रजस्त्रियो राजन्कृष्णलीलानुगा-यतीः । रेमिरेऽहस्सु तच्चित्तास्तन्मनस्का महोदयाः ॥२६॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे युगलगीतं संपूर्णम् ।

---

## ४३७ भ्रमरगीतम् ।

श्रीगणेशाय नमः॥ गोप्य ऊचुः। मधुप कितवबन्धो मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः । वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १ ॥ सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् । परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तमश्लोकजल्पैः

॥ २ ॥ किमिह बहु षडङ्घ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम् । विजयसखसखीनां गायतां तत्प्रसङ्गः क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥३॥ दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः । चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः॥ ४ ॥ विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् । स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु सन्धेयमस्मिन् ॥ ५ ॥ मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृतविरूपां स्त्रीजितः कामयानाम् । बलिमपि बलिमत्त्वाऽऽवेष्टयत् ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ ६ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः । सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां चरन्ति ॥ ७ ॥ वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः । ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुज उपमन्त्रिन् भण्यतामन्यवार्ता ॥८॥ प्रियसख पुनरागाः प्रेयसा प्रेषितः किं वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग । नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं सततमुरसि सौम्य श्रीर्वधूः साकमास्ते ॥ ९ ॥ अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते स्मरति सपितृगेहान्सौम्य बन्धूंश्च गोपान् । क्वचिदपि स

कथा नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं मूर्ध्नि धास्यत्कदा नु ॥१०॥ श्रीशुक उवाच ॥ अथोद्धवो निशम्यैवं कृष्णदर्शनलालसः। सान्त्वयन्प्रियसन्देशैर्गोपीरिदमभाषत॥११॥

इति श्रीमद्भागवतान्तर्गतभ्रमरगीतं समाप्तम् ।

## ४३८ श्रुतिगीतम् ।

श्रीगणेशाय नमः ॥ श्रुतय ऊचुः ॥ जय जय ह्यजामजित दोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः। अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनु चरेन्निगमः ॥ १ ॥ बृहदुपलब्धमेतदवयन्त्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात्। अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथाभवन्ति भुवि दत्तपदानि नृणाम् ॥२॥ इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः । किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ ३ ॥ दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन्यदनुग्रहतः। पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ ४ ॥ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम्। तत उदगादनन्त तव धाम शिरः परमं पुनरिह यत्समेत्य न

पतन्ति कृतान्तमुखे ॥ ५ ॥ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्त्यनलवत्स्वकृतानुकृतिः । अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥ ६ ॥ स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् । इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥७॥ दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः । न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥८॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च । न बत रमन्त्यहो असदुपासनयात्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ ९ ॥ निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् । स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ १० ॥ क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये । तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ ११ ॥ जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः । त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥१२॥

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशन्त्यशे-षमिदमात्मतयात्मविदः । नहि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥ १३ ॥ तव परिचये चरन्त्यखिलसत्त्वनिकेततया त उत पदाक्रम-न्त्यविगणय्य शिरो निर्ऋतेः । परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पतंति न ये विमुखाः ॥ १४ ॥ त्वमकरणः स्वराडखिलकारकशक्तिधर-स्तव बलिमुद्वहन्ति समदन्त्यजयानिमिषाः । वर्षभुजोऽखि-लक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भव-तश्चकिताः ॥ १५ ॥ स्थिरचरजातयः स्युरजयोत्थनिमित्त-युजो विहर उदीक्षया यदि परस्य विमुक्ततः । नहि पर-मस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्य-तुलां दधतः ॥ १६ ॥ अपरिमिता ध्रुवास्तनुभृतो यदि सर्व-गतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा । अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ १७ ॥ न घटत उद्भवः प्रकृतिपूरुषयोरजयो-रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् । त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि निलिल्यु-रशेषरसाः ॥१८॥ नृपु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् । कथमनुव-र्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छ-

रणेषु भयम् ॥ १९ ॥ विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः । व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥ २० ॥ स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे । इति सदजानतां मिथुनतो रतये चरतां सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ॥ २१ ॥ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदाम्बुजहृदोघभिदङ्घ्रिजलाः । दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥ २२ ॥ सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् । व्यवहृतये विकल्प इषितोऽन्धपरंपरया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ २३ ॥ न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे । अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ २४ ॥ स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभगः । त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ २५ ॥ यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमो सतां हृदिगतोऽस्मृतकण्ठमणिः ।



असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधि-

रूढपदाद्भवतः ॥ २६ ॥ त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः । अनुयुगमन्वहं सगुणगीतपरंपरया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥२७॥ द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः । ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ २८ ॥ श्रीभगवानुवाच । इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् । सनन्दनमथानर्चुः सिद्धा ज्ञात्वात्मनो गतिम् ॥ २९ ॥ इत्यशेषसमाम्नायपुराणोपनिषद्रसः । समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ३० ॥ त्वं चैतद्ब्रह्मदायाद श्रद्धयात्मानुशासनम् । धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ३१ ॥ श्रीशुक उवाच । एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान् ॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ३२ ॥ नारद उवाच । नमस्तस्मै भगवते कृष्णायामलकीर्तये । यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ३३ ॥ इत्याद्यमृषिमानस्य तच्छिष्यांश्च महात्मनः । ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ३४ ॥ सभाजितो भगवता कृतासनपरिग्रहः । तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ३५ ॥ इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया । यथा ब्रह्मण्यनिर्देश्ये निर्गुणेपि श्रुतिश्चरेत् ॥ ३६ ॥ योऽस्योत्प्रेक्षक आदिमध्य-

निधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनु प्रविश्य ऋषिणा चक्रे परः शास्ति ताः । यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे नारदनारायणसंवादे वेदस्तुतिः समाप्ता ।

---

## ४३९ महिषीगीतप्रारम्भः ।

श्रीगणेशाय नमः ॥ महिष्य ऊचुः । कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः । वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १ ॥ नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि । दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ २ ॥ भो भोः सदा निष्टनसे उदन्वन्नल- ब्धनिद्रोऽधिगतप्रजागरः । किं वा मुकुन्दापहृतात्मला- ञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥३॥ त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि । कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ ४ ॥ किं वा चरितमस्मा- भिर्मलयानिल तेऽप्रियम् । गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशन्त्यशेषभिदमात्मतयात्मविदः । नहि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥ १३ ॥ तव परिचये चरन्त्यखिलसत्त्वनिकेततया त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः । परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पतंति न ये विमुखाः ॥ १४ ॥ त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्त्यजयानिमिषाः । वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ १५ ॥ स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्ततः । नहि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्यतुलां दधतः ॥ १६ ॥ अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा । अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्सममनुजानतां यदमतं मतदुष्टतया ॥ १७ ॥ न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् । त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि निलिल्युरशेषरसाः ॥१८॥ नृषु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् । कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छ-

रणेषु भयम् ॥ १९ ॥ विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः । व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥ २० ॥ स्वजनसुतात्मदारधनधामधरासुररथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे । इति सदजानतां मिथुनतो रतये चरतां सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ॥ २१ ॥ भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदाम्बुजहृदोघभिदङ्घ्रिजलाः । दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥ २२ ॥ सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् । व्यवहृतये विकल्प इषितोऽन्धपरंपरया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान्॥ २३ ॥ न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे । अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ २४ ॥ स यदजया त्वजामनुशयीत गुणांश्च जुषन्भजति सरूपतां तदनु मृत्युमपेतभगः । त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ २५ ॥ यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमो सतां हृदिगतोऽस्मृतकण्ठमणिः ।



असुतृपयोगिनामुभयतोप्यसुखं भगवन्ननपगतान्तकादनधि-

रूढपदाद्भवतः ॥ २६ ॥ त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः । अनुयुगमन्वहं सगुणगीतपरंपरया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥२७॥ द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः । ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ २८ ॥ श्रीभगवानुवाच । इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् । सनन्दनमथानर्चुः सिद्धा ज्ञात्वात्मनो गतिम् ॥ २९ ॥ इत्यशेषसमाम्नायपुराणोपनिषद्रसः । समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ३० ॥ त्वं चैतद्ब्रह्मदायाद श्रद्धयात्मानुशासनम् । धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ३१ ॥ श्रीशुक उवाच । एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान् ॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ३२ ॥ नारद उवाच । नमस्तस्मै भगवते कृष्णायामलकीर्तये । यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ३३ ॥ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः । ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ३४ ॥ समाजितो भगवता कृतासनपरिग्रहः । तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ३५ ॥ इत्येतद्वर्णितं राजन्यन्नः प्रश्नः कृतस्त्वया । यथा ब्रह्मण्यनिर्देश्ये निर्गुणेपि श्रुतिश्चरेत् ॥ ३६ ॥ योऽस्योत्प्रेक्षक आदिमध्य-

निधने योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनु प्रविश्य ऋषिणा चक्रे परः शास्ति ताः । यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे नारदनारायणसंवादे वेदस्तुतिः समाप्ता ।

---

## ४३९ महिषीगीतप्रारम्भः ।

श्रीगणेशाय नमः ॥ महिष्य ऊचुः । कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः । वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १ ॥ नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि । दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ २ ॥ भो भोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः । किं वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥३॥ त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि । कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ ४ ॥ किं वा चरितमस्माभिर्मलयानिल तेऽप्रियम् । गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि

नः स्मरम् ॥ ५ ॥ मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः । अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥ ६ ॥ प्रियराव पदानि भाषसे मृतसंजीविकयानया गिरा । करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥ ७ ॥ न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् । अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ ८ ॥ शुष्यद्ध्रदाः कृशतरा बत सिन्धुपत्न्यः सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः । यद्वद्वयं यदुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्मः ॥ ९ ॥ हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा । किंवा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ १० ॥ इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे । क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥ ११ ॥

इति श्रीमद्भागवतान्तर्गतमहिषीगीतं समाप्तम् ।

---

## ४४० अथ सरस्वतीस्तोत्रप्रारंभः ।

श्रीगणेशाय नमः ॐ अस्यश्रीआरूढासरस्वतीस्तोत्रमंत्रस्य ॥ ब्रह्मऋषिः ॥ गायत्रीछंदः ॥ सरस्वतीदेवता ॥

ऐंबीजं ॥ ह्रींशक्तिः ॥ क्लींकीलकं ॥ अभीष्टसिध्यर्थेजपे वि-
नियोगः ॥ आरूढा श्वेतहंसेभ्रमतिचगगनेदक्षिणेचाक्षसूत्रं ।
वामेहस्तेच दिव्यंकरकनकमयंपुस्तकंज्ञानगम्यम् ॥ सावीणां
वादयंतोस्वकरकलकजैःशास्त्रविज्ञानशब्दैः । क्रीडंती दिव्यरू-
पावरकमलधराभारतीसुप्रसन्ना ॥ १ ॥ ह्रीं ह्रीं ह्रींहृद्यबीजे
शशिरुचिकमलेकल्पविस्पष्टशोभे । भव्येभव्यानुकूलेकुमति-
वनदहेविश्ववंद्यांघ्रिपद्मे ॥ पद्मेपद्मोपविष्टे प्रणतजनमनोमोद-
संपादयित्रि । प्रोत्फुल्लज्ञानकूटेहरिहरदयितेदेविसंसारसारे
॥ २ ॥ सौंसौंसौं शक्तिबीजेकमलभवमुखांभोजभूतस्वरूपे ।
रूपारूपप्रकाशेसकलगुणमयेनिर्गुणेनिर्विकारे ॥ नस्थूलेनैव
सूक्ष्मेऽप्यविदितविभवेजाप्यविज्ञानतत्त्वे । विश्वेविश्वांतरा-
लेसुरगणनमितेनिष्कलेनित्यशुद्धे ॥ ३ ॥ ऐंऐंऐं जाप्यतुष्टे
हिमरुचिमुकुटेवल्लकीव्यग्रहस्ते । मातर्मातर्नमस्तेदहदहजड-
तांदेहिबुद्धिंप्रशस्ताम् ॥ विद्येवेदांतगीतेश्रुतिपरिपठितेमोक्ष-
देमुक्तिमार्गे । वाचातीतस्वरूपे भवभमवरदाशारदेशुभ्रहारे
॥४॥ धींधींधीं धारणाख्येधृतिमतिनुतिभिर्नामभिःकीर्तनीये
नित्येऽनित्येनिमित्तेमुनिगणनमितेनूतनेवैपुराणे ॥ पुण्येपु-
ण्यप्रवाहेहरिहरनमितेवर्णतत्त्वेसुवर्णे । मातर्मात्रार्द्धतत्त्वेमुनि-
मतिमतिदेमाधविप्रौढनादे ॥ ५ ॥ क्लींक्लींक्लींसुस्वरूपेदहद-
हदुरितंपुस्तकव्यग्रहस्ते । संतुष्टाकारचित्ते स्मितमुखिसुभ-
गेजृंभिणिस्तंभविद्ये ॥ मोहेमुग्धप्रबोधेममकुरुविमतिध्वांत-

विध्वंसमीड्येगीर्गीर्वाग्भारतीत्वंकविमुखरसनेसिद्धिदेसिद्धि-साध्ये ॥ ६ ॥ स्तौमित्वांत्वांचवंदेममखलुरसनामाकदाचि-द्त्यजेथा मामेबुद्धिर्विरुद्धाभवतुनचमनोदेविमेजातुपापम् ॥ मामेदुःखंकदाचित्क्वचिदपिसमये पुस्तकेनाकुलत्वं शास्त्रे वादेकवित्वेप्रसरतुममधीर्मास्तुकुंठाकदाचित् ॥ ७ ॥ इत्ये-तैःश्लोकमुख्यैः प्रतिदिनमुषसिस्तौतियोभक्तिनम्रो वाणी वाचस्पतेरप्यविदितविभवावाक्पतिर्मिष्टपंकः ॥ सस्यादि-ष्टार्थलाभःसुतमिवसततंसाचमांपातुदेवी सौभाग्यंतस्यलो-केप्रसरतुकविताविघ्नमस्तंप्रयाति ॥ ८ ॥ निर्विघ्नातस्य-विद्याप्रभवतिसततंचाश्रुतग्रंथबोधः कीर्तिस्त्रैलोक्यमध्येनि-वसतुवदने शारदातस्यसाक्षात् ॥ दीर्घायुर्लोकपूज्यःसकल-गुणनिधिःसंततंराजमान्योवाग्देव्याः संप्रसादात्त्रिजगतिवि-जयीजायतेसत्सभासु ॥ ९ ॥ ब्रह्मचारीव्रतीमौनीत्रयोदश्यां निरामिषः ॥ सारस्वतजपात् पाठात्सस्यादिष्टार्थलाभवान् ॥ १० ॥ पक्षद्वयेत्रयोदश्यामेकविंशतिसंख्यया । अविच्छि-न्नंपठेद्धीमान्ध्यात्वादेवींसरस्वतीम् ॥ ११ ॥ शुक्लांबरधरां शुक्लांसर्वाभरणभूषिताम् । शुक्लवस्त्रावृतांदेवीं हंसवाहनसं-स्थिताम् ॥ १२ ॥ सर्वपापविनिर्मुक्तःसुभगोलोकविश्रुतः । वांछितंफलमाप्नोतिसलोकेनात्रसंशयः ॥ १३ ॥

इति श्रीशिवागमे सरस्वतीस्तोत्रं संपूर्णम् ।

## ४४१ अथ श्रीलक्ष्म्यष्टकप्रारंभः ।

श्रीगणेशाय नमः ॥ लक्ष्मिप्रसन्नाधनधान्यवृद्धिंभोगाननेकानथराज्यमानम् । तनोसिसत्पुत्रकलत्रसौख्यंतांत्वांहिमातःशरणंप्रपद्ये ॥ १ ॥ लक्ष्मिप्रसन्नाशुभसौमनस्यमारातिनाशंजयमर्थलाभम् । करोषि कोट्याद्यधिपत्वमीड्येतांत्वांहिमातःशरणंप्रपद्ये ॥ २ ॥ लक्ष्मिप्रसन्नाविजयंरणेऽथकरोषिपुण्येपरिपूर्णसिद्धिम् । तनोसिकीर्तिंविमलांचदिक्षु तांत्वांहिमातः शरणंप्रपद्ये ॥ ३ ॥ लक्ष्मित्वमेवासिपिताचमाता बन्धुःसखाचाथगुरुर्गरीयान् । लोकेयदेतत्प्रतिभातिदृश्यं त्वमेवतांत्वांशरणंप्रपद्ये ॥ ४ ॥ लक्ष्मित्वमेवास्यचराचरस्यस्थित्यादिकार्ये किलमुख्यहेतुः । विनात्वयार्किंचिदपीहनास्तितांत्वांहिमातःशरणंप्रपद्ये ॥५॥ लक्ष्मित्वयायेचनराविहीना विद्याविवेकादिगुणैरुपेताः । खिन्नाः शवत्वेनचरन्तिभूमौ तांत्वांहिमातःशरणंप्रपद्ये ॥६॥ लक्ष्मित्वयैवास्त्यकुलेकुलत्वंविद्याविहीनेऽपिविपश्चितत्वम् । गुणैर्विहीनेऽपिचसद्गुणित्वं तांत्वांहिमातःशरणंप्रपद्ये ॥ ७ ॥ लक्ष्मित्वमस्मान्धनिनः करोतुव्यापारिणश्चाथकुटुंबिनश्च । मयासपुत्रेणचपूजितासिमेदेहिमातःशरणंस्तुताय ॥ ८ ॥ सत्सारस्वतवंशजोऽप्यथधरादेवावटंकोद्विजः श्रीकृष्णोत्थ-करोदिदंशुभकरं लक्ष्म्यष्टकंप्रेमतः । यंप्रातःप्रपठेति वा निर्दि-

सुदादीपोत्सवेपूजने तेषांस्त्रीसुतवित्तवृद्धिकरणेलक्ष्मीप्रसन्नाभवेत् ॥ ९ ॥

इति कार्तान्तिककविरचितं लक्ष्म्यष्टकं संपूर्णम् ।

## ४४२ अवधूतगीतम् ।

श्रीगणेशाय नमः ॥ अवधूतं द्विजं कंचिच्चरन्तमकुतोभयम् । कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ॥१॥ यदुरुवाच । कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा । यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ॥ २ ॥ प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः । हेतुनैव समीहन्ते आयुषो यशसः श्रियः ॥३॥ त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः । न कर्ता नेहसे किंचिज्जडोन्मत्तपिशाचवत् ॥४॥ जनेषु दह्यमानेषु कामलोभदवाग्निना । न तप्यसेऽग्निना मुक्तो गंगांभस्थ इव द्विपः॥५॥त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् । ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥६॥ श्रीभगवानुवाच । यदुनैवं महाभागो ब्रह्मण्येव स्वमेधसा ॥ पृष्टः सभाजितः प्राह प्रश्रयावनतं नृपम् ॥७॥ ब्राह्मण उवाच । सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः । यतो बुद्धिमुपादाय मुक्तोऽटामीह तान् शृणु ॥८॥ पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः । कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः ॥९॥ मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः । कुमारी शरकृत्सर्प ऊर्णनाभिः

सुपेशकृत् ॥ १० ॥ एते मे गुरवो राजन् चतुर्विंशतिरा-
श्रिताः । शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ॥ ११ ॥
यतो यदनुशिक्षामि यथा वा नाहुषात्मज । तत्तथा पुरुष-
व्याघ्र निबोध कथयामि ते ॥ १२ ॥ भूतैराक्रम्यमाणोपि
धीरो दैववशानुगैः । तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षिते-
र्व्रतम् ॥१३॥ शश्वत्परार्थसर्वेहः परार्थैकान्तसंभवः । साधुः
शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ १४ ॥ प्राणवृत्त्यैव
संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः । ज्ञानं यथा न नश्येत नावकी-
र्येत वाङ्मनः ॥ १५ ॥ विषयेष्वाविशन्योगी नानाधर्मेषु
सर्वतः । गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ॥ १६ ॥
पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः । गुणैर्न युज्यते योगी
गन्धैर्वायुरिवात्मदृक् ॥ १७ ॥ अन्तर्हितश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन । व्याप्त्या व्यवच्छेदमसङ्गमात्मनो
मुनिर्नभस्त्वं विततस्य भावयेत् ॥ १८ ॥ तेजोबन्नमयैर्भा-
वैर्मेघाद्यैर्वायुनेरितैः । न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः
पुमान् ॥ १९ ॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभू-
र्नृणाम् । मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ॥२०॥
तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः । सर्वभक्षोपि युक्तात्मा
नादत्ते मलमग्निवत् ॥ २१ ॥ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः
श्रेय इच्छताम् । भुंक्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम्
॥२२॥ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः । प्रविष्ट ईयते

तत्तत्सरूपोग्निरिवैधसि॥२३॥विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः। कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥ २४ ॥ कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ। नित्यावपि न दृश्येते आत्मनोग्नेर्यथार्चिषाम् ॥ २५ ॥ गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति। न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ॥ २६ ॥ बुद्ध्यते स्वेन भेदेन व्यक्तिस्थ इव तद्गतः। लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोर्कवत् ॥२७॥ नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित्। कुर्वन्विन्देत संतापं कपोत इव दीनधीः ॥ २८ ॥ कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ। कपोत्या भार्यया सार्धमुवास कतिचित्समाः ॥ २९ ॥ कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ। दृष्टिं दृष्ट्याङ्गमङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ॥३०॥ शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् । मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ॥३१॥ यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता। तं तं समनयत्कामं कृच्छ्रेणाप्यजितेन्द्रियः ॥ ३२ ॥ कपोती प्रथमं गर्भं गृह्णती काल आगते। अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ॥ ३३ ॥ तेषु काले व्यजायन्त रचितावयवा हरेः। शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ॥ ३४ ॥ प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ। शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः



॥ ३५ ॥ तासां पतत्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः। प्रत्युद्ग-

मैरदानानां पितरौ शुश्रमापतुः ॥ ३६ ॥ स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया । विमोहितौ दीनधियौ शिशून्पुपुषतुः प्रजाः ॥ ३७ ॥ एकदा जग्मतुस्तासामन्नार्थौ तौ कुटुम्बिनौ । परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम् ॥ ३८ ॥ दृष्ट्वा ताँल्लुब्धकः कश्चिद्यदृच्छातो वनेचरः । जगृहे जालमातत्य चरतः स्वालयान्तिके ॥ ३९ ॥ कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ । गतौ पोषणमादाय स्वनीडमुपजग्मतुः ॥ ४० ॥ कपोती स्वात्मजान्वीक्ष्य बालकाञ्जालसंवृतान् । तानभ्यधावत्क्रोशन्ती क्रोशतो भृशदुःखिता ॥ ४१ ॥ साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया । स्वयं चाबध्यत शिचा बद्धान्पश्यन्त्यपस्मृतिः ॥ ४२ ॥ कपोतश्चात्मजान्बद्धानात्मनोऽप्यधिकान्प्रियान् । भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥ ४३ ॥ अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः ॥ अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥ ४४ ॥ अनुरूपानुकूला च यस्य मे पतिदेवता । शून्ये गृहे मां संत्यज्य पुत्रैः स्वर्याति साधुभिः ॥ ४५ ॥ सोहं शून्ये गृहे दीनो मृतदारो मृतप्रजः । जिजीविषे किमर्थं वा विधुरो दुःखजीवितः ॥ ४६ ॥ तांस्तथैवावृतान् शिग्भिर्मृत्युग्रस्तान्विचेष्टतः । स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत् ॥ ४७ ॥ तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम् । कपोतकान्कपोतीं च सिद्धार्थः प्रययौ गृहम्

॥ ४८ ॥ एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत् । पुष्णन्कुटुम्बं कृपणः सानुबन्धोऽवसीदति ॥४९॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् । गृहेषु खगवत्सक्तस्त-मारूढच्युतं विदुः ॥ ५० ॥ सुखमैन्द्रियकं राजन् स्वर्गे नरक एव च । देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद्बुधः ॥ ५१ ॥ ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा । यदृ-च्छयैवापतितं ग्रसेदजगरोऽक्रियः ॥ ५२ ॥ शयीताहानि भूरीणि निराहारोऽनुपक्रमः । यदि नोपनमेद्ग्रासो महाहि-रिव दिष्टभुक् ॥५३॥ ओजःसहोबलयुतं बिभ्रद्देहमकर्मकम् । शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ ५४ ॥ मुनिः प्रस-न्नगम्भीरो दुर्विगाह्यो दुरत्ययः । अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥५५॥ समृद्धकामो हीनो वा नारा-यणपरो मुनिः । नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥ ५६ ॥ दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः । प्रलो-भितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ ५७ ॥ योषिद्धिर-ण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः । प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ५८ ॥ स्तोकं स्तोकं ग्रसेद्ग्रासं देहो वर्तेत यावता । गृहानहिंसन्नातिष्ठे-द्वृत्तिं माधुकरीं मुनिः ॥५९॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः। सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥६०॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षितम् । पाणिपात्रोद-

रामत्रो मक्षिकेव न संग्रही ॥ ६१ ॥ सायंतनं श्वस्तनं वा न संगृह्णीत भिक्षुकः। मक्षिका इव संगृह्णन् सह तेन विनश्यति ॥ ६२ ॥ पदापि युवतीं भिक्षुर्न स्पृशेद्दारवीमपि । स्पृशन् करीव बद्ध्येत करिण्या अङ्गसङ्गतः ॥६३॥ नाधिगच्छेत्स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः । बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ ६४ ॥ न देयं नोपभोग्यं च लुब्धैर्यद्दुःखसंचितम् । भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥६५॥ सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः। मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥६६॥ ग्राम्यगीतं न शृणुयाद्यतिर्वनचरः क्वचित्। शिक्षेत हरिणाद्बद्धान्मृगयोर्गीतमोहितात् ॥ ६७ ॥ नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम् ।आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ॥ ६८ ॥ जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः। मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा॥ ६९ ॥ इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः। वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते ॥ ७० ॥ तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान्। न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥७१॥ पिङ्गला नाम वेश्यासीद्विदेहनगरे पुरा । तस्या मे शिक्षितं किंचिन्निबोध नृपनन्दन ॥ ७२ ॥ सा स्वैरिण्येकदा कान्तं सङ्केतमुपनेष्यती । अभूत्काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ ७३ ॥ मार्ग आगच्छतो वीक्ष्य

पुरुषान्पुरुपर्षभ । तान् शुल्कदान्वित्तवतः कान्तान्मेनेऽर्थ-कामुका ॥ ७४ ॥ आगतेष्वपयातेषु सा सङ्केतोपजीविनी । अप्यन्यो वित्तवान् कोऽपि मामुपैष्यति भूरिदः ॥ ७५ ॥ एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बिनी । निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ ७६ ॥ तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः । निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥७७॥ तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम । निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः । न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ॥७८॥ पिङ्गलोवाच । अहो मे मोहविततिं पश्यता विजितात्मनः । या कान्ता-दसतः कामं कामये येन बालिशा ॥ ७९ ॥ सन्तं समीपे रमणं रतिप्रदं वित्तप्रदं नित्यमिमं विहाय । अकामदं दुःख-भयादिशोकं मोहप्रदं तुच्छमहं भजेऽज्ञा ॥ ८० ॥ अहो मयात्मा परितापितो वृथा साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया । स्त्रैणान्नरादर्थतृषोऽनुशोच्यात्क्रीतेन वित्तं रतिमात्मनेच्छती ॥ ८१ ॥ यदस्थिभिर्निर्मितवंशवंश्यस्थूणं त्वचारोमनखैः पिनद्धम् । क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णं मदुपैति कान्या ॥ ८२ ॥ विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः । याऽन्य-मिच्छन्त्यसत्यस्मादात्मदात्काममच्युतात् ॥ ८३ ॥ सुहृ-त्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् । तं विक्रीयात्म-



नैवाहं रमेऽनेन यथा रमा ॥८४॥ कियत्प्रियं ते व्यभजन्

कामा ये कामदा नराः । आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ॥ ८५ ॥ नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा । निर्वेदोयं दुराशाया यन्मे जातः सुखावहः ॥ ८६ ॥ मैवं स्युर्मन्दभाग्याया क्लेशा निर्वेदहेतवः । येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ॥८७॥ तेनोपकृतमादाय शिरसा ग्राम्यसङ्गता । त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ॥८८॥ संतुष्टा श्रद्दधत्येतद्यथालाभेन जीवती । विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ८९ ॥ संसारकूपे पतितं विषयैर्मुषितेक्षणम् । ग्रस्तं कालाहिनात्मानं कोन्यस्त्रातुमधीश्वरः ॥ ९० ॥ आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाखिलात् । अप्रमत्त इदं पश्येद्ग्रस्तं कालाहिना जगत् ॥९१॥ एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् । छित्त्वोपशममास्थाय शय्यामुपविवेश सा ॥ ९२ ॥ आशा हि परमं दुःखं नैराश्यं परमं सुखम् । यथा संच्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ॥९३॥ ब्राह्मण उवाच ॥ परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम् । अनन्तं सुखमाप्नोति तद्विद्वान्यस्त्वकिंचनः ॥९४॥ सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः । तदामिषं परित्यज्य स सुखं समविन्दत ॥९५॥ न ते मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम् ॥ आत्मक्रीड आत्मरतिर्विचरामीह बालवत् ॥९६॥ द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ । यो विमुग्धो जडो बालो यो

गुणेभ्यः परं गतः ॥ ९७ ॥ क्वचित्कुमारी त्वात्मानं वृणानान् गृहमागतान् । स्वयं तानर्हयामास क्वापि यातेषु बंधुषु ॥ ९८ ॥ तेषामभ्यवहारार्थं शालीन् रहसि पार्थिव । अवघ्नंत्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत् ॥ ९९ ॥ सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः । बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत् ॥ १०० ॥ उभयोरप्यभूद्घोषो ह्यवघ्नन्त्याः स्म शङ्खयोः । तत्राप्येकं निरभिदद्देकस्मान्नाभवद्ध्वनिः ॥ १०१ ॥ अन्वशिक्षमिमं तस्या उपदेशमरिंदम । लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ॥ १०२ ॥ वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि । एक एव चरेत्तस्मात्कुमार्या इव कङ्कणः ॥ १०३ ॥ मन एकत्र संयुज्याज्जितश्वासो जितासनः । वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ॥ १०४ ॥ यस्मिन्मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून् । सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १०५ ॥ तदैवमात्मन्यवरुद्धचित्तो न वेद किंचिद्बहिरन्तरं वा । यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥ १०६ ॥ एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः । आलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १०७ ॥ गृहारम्भोतिदुःखाय विफलश्चाध्रुवात्मनः । सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १०८ ॥ एको नारायणो देवः पूर्वसृष्टं स्वमायया । संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १०९ ॥ एक

एत्राद्वितीयोभूदात्माधारोखिलाश्रयः। कालेनात्मानुभावेन साम्य नीतासु शक्तिषु। सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ ११० ॥ परावराणां परम आस्ते कैवल्यसंज्ञितः। केवलानुभवानन्दसंदोहो निरुपाधिकः ॥ १११ ॥ केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम्। संक्षोभयन्सृजत्यादौ तथा सूत्रमरिंदम ॥ ११२ ॥ तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम्। यस्मिन्प्रोतमिदं विश्वं येन संसरत पुमान् ॥ ११३ ॥ यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः। तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥११४॥ यत्र यत्र मनो देही धारयेत्सकलं धिया। स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत्सरूपताम् ॥ ११५ ॥ कीटः पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशितः। याति तत्साम्यतां राजन् पूर्वरूपमसन्त्यजन् ॥११६॥ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः। स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो॥११७॥ देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततार्त्युदर्कम्। तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ ११८ ॥ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यत् प्रियचिकीरपया वितन्वन्। स्वान्ते सकृच्छ्रमवरुद्धधनः सदेहः सृष्ट्वास्य बीजमवसीदति वृक्षधर्मः ॥११९॥ जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा शिश्नोन्यतस्त्वगुदरं श्रवणं कुतश्चित्। घ्राणोन्यतश्चप-

लहक्‌ क्वच कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ १२० ॥ सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या वृक्षा-न्सरीसृपपशून्खगदंशमत्स्यान्‌ । तैस्तैरतुष्टहृदयः पुरुषं विधाय ब्रह्मावलोकधिषणं मुदमाप देवः ॥१२१॥ लब्ध्वा सुदुर्लभमिदं बहुसंभवान्ते मानुष्यमर्थदमनित्यमपीह धीरः । तूर्णं यतेत न पतेदनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्यात्‌ ॥ १२२ ॥ एवं संजातवैराग्यो विज्ञानालोक आत्मनि । विचरामि महीमेतां मुक्तसङ्गोऽनहंकृतिः ॥१२३॥ न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम्‌ । ब्रह्मैतदद्वि-तीयं वै गीयते बहुधर्षिभिः ॥ १२४ ॥ श्रीभगवानुवाच ॥ इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः । वन्दितोऽ-भ्यर्थितो राज्ञा ययौ प्रीतो यथागतम्‌ ॥ १२५ ॥ अवधूत-वचः श्रुत्वा पूर्वेषां नः स पूर्वजः । सर्वसङ्गविनिर्मुक्तः सम-चित्तो बभूव ह ॥ १२६ ॥

इति श्रीमद्भागवतान्तर्गतमवधूतगीतं समाप्तम्‌ ।

---

## ४४३ नवग्रहस्तोत्रम्‌ ।

श्रीगणेशाय नमः ॥ भास्वान्काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वरः षट्त्रिस्थो दशशोभनो गुरुशशीभौमेषु मित्रं सदा । शुक्रो मन्दरिपुः कलिङ्गजनितश्चाग्नीश्वरौ देवते मध्ये वर्तुलपूर्वदिग्दिनकरः कुर्यात्सदा मंगलम्‌ ॥ १ ॥

चन्द्रः कर्कटकप्रभुः सितनिभश्चात्रेयगोत्रोद्भवश्चाग्नेयश्चतुर-स्रवारुणमुखश्चापोऽप्युमाधीश्वरः । षट्सप्ताग्निदशैकशोभन-फलो शोरिर्गुरोर्कप्रियः स्वामी यामुनदेशजो हिमकरः कुर्यात्सदा मंगलम् ॥ २ ॥ भौमो दक्षिणदिक्त्रिकोणयम-दिक् विघ्नेश्वरो रक्तभः स्वामी वृश्चिकमेषयोः सुरगुरुश्चार्कः शशी सौहृदः । ज्ञोरिः षट्त्रिफलप्रदश्च वसुधास्कन्दौ क्रमादे-वते भारद्वाजकुलोद्भवः क्षितिसुतः कुर्यात्सदा मङ्गलम् ॥ ३ ॥ सौम्योदङ्मुखपीतवर्णमगधश्चात्रेयगोत्रोद्भवो बाणेशानदिशः सुहृच्छनिभृगः शत्रुः सदा शीतगुः । कन्या-युग्मपतिर्दशाष्टचतुरः षण्नेत्रकः शोभनो विष्णुः पौरुषदेवते शशिसुतः कुर्यात्सदा मङ्गलम् ॥ ४ ॥ जीवश्चाङ्गिरगोत्रजो-त्तरमुखो दीर्घोत्तरेसंस्थितः पीताश्वत्थसमिच्च सिन्धुजनि-तश्चापोथ मीनाधिपः । सूर्येन्दुक्षितिजप्रियो बुधसितौ शत्रू समाश्चापरे सप्ताङ्कद्विभवःशुभः सुरगुरुः कुर्यात्सदा मङ्गलम् ॥ ५ ॥ शुक्रो भार्गवगोत्रजः सितनिभः प्राचीमुखः पूर्वदिक् पञ्चाङ्को वृषभस्तुलाधिपमहाराष्ट्राधिपोदुंबरः । इन्द्राणीम-घवाद्भुभौ बुधशनी मित्रार्कचन्द्रौ रिपू षष्ठो द्विर्दशवर्जितो भृगुसुतः कुर्यात्सदा मङ्गलम् ॥ ६ ॥ मन्दः कृष्णनिभस्तु पश्चिममुखः सौराष्ट्रकः काश्यपः स्वामी मांकरकुम्भयोर्बुध-सितौ मीने समश्चाङ्गिराः । स्थावं पश्चिमदिक् प्रजापति-यमौ देवौ धनुष्यासनः षट्त्रिस्थः शुभकृच्च सिंहिकसुतः

कुर्यात्सदा मङ्गलम् ॥ ७ ॥ केतुर्जैमिनिगोत्रजः कुशसमिद्वायव्यकोणे स्थितश्चित्राङ्कध्वजलाञ्छनो हिमगुहा यो दक्षिणाशामुखः । ब्रह्मा चैव सचिन्तचित्तसहिताः प्रत्याधिदेवः सदा षट्त्रिस्थः शुभकृच्च बर्बरपतिः कुर्यात्सदा मङ्गलम् ॥ ८ ॥ इत्येतद्ग्रहमङ्गलाष्टनवकं लोकोपकारप्रदं पापौघप्रशमं महच्छुभकरं सौभाग्यसंवर्धनम् । यः प्रातः शृणुयात्पठत्यनुदिनं श्रीकालिदासोदितं स्तोत्रं मङ्गलदायकं शुभकरं प्राप्नोत्यभीष्टं फलम् ॥ ९ ॥

इति नवग्रहमङ्गलस्तोत्रम् ।

---

## ४४४ अथ श्रीबिल्वनाथाष्टकप्रारंभः ।

श्रीगणेशाय नमः ॥ ओमित्येकाक्षरब्रह्मादेवाधिदेवमीशानम् । विश्वेशंविख्यातंसततंश्रीबिल्वनाथमहमीडे ॥१॥ दन्त्यरिचर्माम्बरधरमग्नींद्वर्काक्षिणंशिवानाथम् । अभवंभवमभयकरं सततंश्रीबिल्वनाथमहमीडे ॥२॥ नागोपवीतिनंत्वथनागायुंदेष्टदंविनाशेशम् । नागाननपितरंतंसततं श्रीबिल्वनाथमहमीडे ॥ ३ ॥ नरकपालकरधरमपिनरकपालकरहरंनिधीशेशम् । निरवधिसुखदमसुखहंसततंश्रीबिल्वनाथमहमीडे ॥४॥ दक्षदर्पदलनपरं परमंपरिचर्ययेष्टदंपुंसाम् । [illegible]संततंश्रीबिल्वनाथमहमीडे ॥ ५ ॥ नकुलेनगजानाथंसगदगदघ्नंगरीष्ठगणनाथम् । जटिलंकुटिलकुलहरं

सततंश्रीबिल्वनाथमहमीडे ॥ ६ ॥ काशीशंकामहरंकार्यह-रंकरुणाकरमघहंतम् । दकपादिमरत्नगलंसततंश्रीबिल्वना-थमहमीडे ॥ ७ ॥ कच्छोपवर्तनेसद्ग्रामाद्गढसिंहशीर्षत:पूर्वे । काननमध्यगमीशंसततंश्रीबिल्वनाथमहमीडे ॥८॥ सत्सार-स्वतवंशजोऽप्यथधरादेवावटङ्कीद्विजःश्रीकृष्णोह्यकरोदिदंशु-भकरंश्रीबिल्वनाथाष्टकम् । तत्प्रेम्णाप्रपठन्तिपूजनविधौवि-प्राश्चयेप्रेमतस्तेषांवैवरदःसदासभवतिश्रीबिल्वनाथोहरः ॥९॥

इति कार्तान्तिकविरचितं बिल्वनाथाष्टकं संपूर्णम् ।

---

## ४४५ अथ श्रीबिल्वनाथाष्टकप्रारंभः ।

श्रीगणेशाय नमः ॥ चंचरी (विबुधप्रिया) वृत्तम् । भव्य-भोजकटोपवर्त्तनभूतिदं भयनाशनं भूसुरैर्गढसिंहशीर्षनिवा-सिभिर्नुतमीडितम् । बालचंद्रविभातभालमजं भवं प्रणता-र्तिहं बिल्वनाथमघौघहारिणमीश्वरं प्रणमाम्यहम् ॥ १ ॥ जन्हुजाङ्कितशीर्षशुभ्रजटाधरं विषमेक्षणं शैलजाङ्कितवाम-भागकलेवरं हरिदम्बरम् । विघ्नपाङ्कितदक्षिणाङ्गमथाश्रिता-मरपादपं बिल्वनाथमघौघहारिणमीश्वरं प्रणमाम्यहम् ॥२॥ नागकुण्डलनागकङ्कणनागहारविभूषितं नागचर्मसुवाससं नवनागनायकमालिनम् । नागवृन्दपतिंस्तुनागगणार्चितं नगजेश्वरं बिल्वनाथमघौघहारिणमीश्वरं प्रणमाम्यहम् ॥३॥



निर्गुणं निरहङ्कृतिं निरुपद्रवं च निरञ्जनं निर्मलं निरवद्य-

निर्भयत्वैभवं च निरामयम् । निष्कलंककलेवरं त्वथ निष्क्रियं सुनिरंकुशं बिल्वनाथमघौघहारिणमीश्वरं प्रणमाम्यहम् ॥४॥ नारदादिमुनीश्वरस्तुतमप्रमेयपराक्रमं दक्षयज्ञनिषूदनं त्रिदिवालयैरभिवन्दितम् । यक्षराजसखं त्रिशूलिनमायुषामपिवर्द्धनं बिल्वनाथमघौघहारिणमीश्वरं प्रणमाम्यहम् ॥ ५ ॥ सिद्धसाध्यगणैस्तथाप्सरसां गणैरपिसेवितं भूतप्रेतपिशाचकिन्नरदैत्यदानववन्दितम् । खड्गपाशकुठारतोमरमुद्गरांकुशपाणिनं बिल्वनाथमघौघहारिणमीश्वरं प्रणमाम्यहम् ॥ ६ ॥ नातितीर्थजलैर्नकेसरचन्दनादिविलेपनैः षोडशार्चनतो न तुष्यतिनातिपुष्पफलार्चनैः । एकबिल्वदलेन तुष्यति भावतोहि शिवः स्वयं बिल्वनाथमघौघहारिणमीश्वरंप्रणमाम्यहम् ॥ ७ ॥ त्रासयारिगणं विनाशय मृत्युजं भयमुत्कटं मा समुद्धर संसृतेः कुरु शं सदा हर दुर्घटम् । यत्सुपुत्रकलत्रवाहनभूषणादिमनोगतं बिल्वनाथ समर्थये मम देहि दिव्यमभीप्सितम् ॥ ८ ॥ सत्सारस्वतवंशजोऽप्यथधरादेवावटङ्कीद्विजःश्रीकृष्णोह्यकरोदिदं शुभकरं श्रीबिल्वनाथाष्टकम् । तत्प्रेम्णा प्रपठन्ति पूजनविधौ विप्राश्रयेप्रेमतस्तेषां वै वरदः सदा स भवति श्रीबिल्वनाथोहरः ॥ ९ ॥ शाकेप्रकृतिधृतिमिते शुचौ सिते भृगुदिने दशम्यां वै । निष्यामन्वितयान्ते यातं बिल्वेश्वराष्टकं पूर्णम् ॥ १० ॥



इति कार्तान्तिककृतं बिल्वनाथाष्टकं संपूर्णम् ।

---

## ४४६ हंसाष्टकम् ।

श्रीगणेशाय नमः ॥ ब्रह्माहं सत्स्वरूपं चितिसुखमविदन् माययाऽऽक्षिप्यमाणस्तत्संपर्कापनुत्त्यै शरणमुपगतः सद्गुरुं ज्ञाततत्त्वम् । श्रावं श्रावं तदुक्तीश्चिरतरमननाऽपास्तदुस्तर्कजालः साक्षात्कारैकशेपाद्विगलितनिखिलोपप्लवोऽहं स एव ॥ १ ॥ मृत्पिण्डं नीडमाप्याऽस्थिरचितमनिलान्दोलितं रन्ध्रपूर्णं हंसाश्रित्य प्रमादाँस्त्यजसि यदि सुखावाप्तिहेतुं विचारम् । वर्षैरल्पैरमुष्मिन् विदलति वितथीभूततत्स्थैर्ययत्नो विस्मृत्योच्चैर्गतिं स्वां त्वमशरणतयाऽधः पतन् शोचितासि ॥ २ ॥ हंस त्वां वन्धुकामां प्रकृतिमिह गुणैश्चित्तदेशेऽसुसिक्ते प्रागुप्त्वा कर्मबीजं मधुरकटुफलं व्यस्य संसारवृक्षम् । द्वेषेप्सामोहजालं विमतवसुवपुर्ग्रन्थि विस्तारयन्तीं दृष्ट्वा कृत्वा हताशां सुखमयमभयं मानसं मा प्रहासीः ॥ ३ ॥ प्रक्षीणे मेघवृन्दे विरमति च वृषे स्वामिनो निःस्पृहत्वादश्रोतव्ये द्विजानां वचसि च शिखिनां नीरजस्यात्मलाभे । काले सत्त्वान्यभावं गमयति चपलोन्मेषणे क्वापि याते योग्यालोक्यस्वरूपश्चिरमधिशयितं मानसं हंस मुञ्च ॥ ४ ॥ सर्वेष्वङ्गेष्वविन्दन् खगतिषु विहितान्वेषणो वन्ध्ययत्नो विश्वासादाप्तवाचां जलवपुषि भृशं भ्रान्तवान् मानसे च । विज्ञाते तं विवेकं सुचिरमनुसरन् त्वां विदेहेष्वपश्यन्नथानन्दैकतानं सकलकलतया निश्चितं हंसमीक्षे

॥ ५ ॥ शाखाः सर्वागमानां सततमधिवसन् ज्ञात आर-ण्यकोक्त्या क्रामद्भिः सप्तभूमीः पवनविजयिभिर्योगमार्गे-ऽनुयातः । संहृष्टस्तारनादश्रुतिमनुसरसो मूर्ध्नि पद्मे निरीह-श्चित्तानन्दस्वभावो लसदतुलगतिर्हन्त लब्धः स हंसः ॥ ६ ॥ चित्रं निष्पक्षपातोऽतिशयविशदभा नित्यमुक्तोप-भोगो व्याहृत्यादौ त्रिमात्रं पदममृतफलं सर्वदाऽऽस्वाद्य तृप्तः । योगाङ्गोपास्तिशुद्धैश्चिरमनुरहसं वीक्षितो दिव्यवन्यां हंसोऽयं स्वान्तरङ्गे विहरति सततं चित्रकूटस्थरूपः ॥ ७ ॥ जातिं श्लाघ्यामनिच्छन् विगलितकुतुकः प्रांशुवंशेषु वस्तुं पुन्नागेभ्यो विरक्तः कुरवविरसधीर्निःस्पृहो बन्धुजीवे । रम्भायां वीतलोभः कुवलयमभजन् मुक्तपद्मानुरागो हंसः संप्रत्यशोके विरचयति पदं माधवस्य प्रसादात् ॥ ८ ॥ सोपानं सांख्ययोगोपनिषदभिहितार्थानुभूतिक्रमाणां साहि-त्योल्लाससीमागतसरलतरश्लेषसौन्दर्यसारम् । ज्ञात्वा हंसा-ष्टकं मेऽस्वहितशुचिमनोवृत्तिभिः पूर्णकामा भूयासुर्वीतमोहा इति तमनुभवन् वक्ति गङ्गाधरः शम् ॥ ९ ॥

इति हंसाष्टकं समाप्तम् ।

---

## ४४७ गङ्गाधराष्टकम् ।

श्रीगणेशाय नमः ॥ यः [illegible]स्तुता-



निष्कारणव्यञ्जिताऽचिन्त्योत्पादनवैभवां गिरिसुतां मायां

निजाङ्के दधत् । सेव्यां संसृतिहानये त्रिपथगां विद्यां च मूर्ध्ना वहन् स्वं ब्रह्मत्वमभिव्यनक्ति भजतः पायात् स गङ्गाधरः ॥१॥ यस्यालोच्य कपर्ददुर्गविलुठद्गङ्गाम्बुशौक्ल्याच्छतामाधुर्याणि पराजयोदितशुचा क्षीणः कलामात्रताम् । बिभ्रत् पित्सति नूनमुत्कटजटाजूटोच्चकूटाच्छशी लालाटाक्षिशिखासु सोऽस्तु भजतां भव्याय गङ्गाधरः ॥ २ ॥ यल्लालाटकृपीटयोनिसततासङ्गाद्विलीनः शशी गङ्गारूपमुपेत्य तत्प्रशमनाशक्तः कृशाङ्गः शुचा । उद्बध्नाति तदुं त्रपापरवशो मन्ये जटादामभिः पायात् स्तव्यविभाव्यनव्यचरितो भक्तान् स गङ्गाधरः ॥ ३ ॥ अङ्कारूढधराधराधिपसुतासौन्दर्यसन्तर्जिता गङ्गा यस्य कपर्ददुर्गमवने लीना विलीना ह्रिया । चिन्तापाण्डुतनुः स्खलन्त्यविरतं पार्वत्यसूयास्मितैरन्तर्धिं बहु मन्यतेऽस्तु भजतां भूत्यै स गङ्गाधरः ॥४॥ मुग्धां स्निग्ध इव प्रतार्य गिरिजामर्धाङ्गदानच्छलान्नित्योग्द्रबहुलभ्रमां त्रिपथगामात्मोत्तमाङ्गे वहन् । स्थाने यो विषमेक्षणत्वपदवीमारोप्यते कोविदैः प्रच्छन्नप्रणयक्रमोऽस्तु भजतां प्रीत्यै स गङ्गाधरः ॥ ५ ॥ सेवासज्जसुरासुरर्षिपरिषद्व्याकीर्णपुष्पाञ्जलिप्रश्चोतन्मकरन्दबिन्दुसततासारः पतन् मस्तके । यस्याविश्रमसम्भृतस्त्रिपथगानाम्ना जनैः ख्याप्यते स त्रैलोक्यनिषेविताङ्घ्रियुगलः पुष्णातु



गङ्गाधरः ॥ ६ ॥ यस्मिन्नुद्धततताण्डवैकरसतासाटोपनाट्य-

क्रमे विस्रस्तासु जटासु भासुरतनुर्धाराशतैः पातुका। गङ्गा जङ्गमवारिपर्वतधियं चित्ते विधत्ते सतामेवं चित्रविभूतिरस्तु भजतां भव्याय गङ्गाधरः ॥ ७॥ यो गङ्गापयसि प्रभो तव महानत्यादरः कल्पते संमूर्छद्विषयापनाय विधये क्रुध्यस्यसत्योक्तये। ईशानस्तवसागरान्तगमने वाण्यः पुराण्योऽक्षमाः सङ्क्षिप्येत्थमभिष्टुतः ससितगुः प्रीतोऽस्तु गङ्गाधरः ॥ ८ ॥

इति गङ्गाधराष्टकं संपूर्णम्।

## ४४८ अथ भगवन्नामरत्नमालाष्टकस्तोत्रम्।

श्रीगणेशाय नमः ॥ श्लथत्पिचण्डं मदसान्द्रगण्डं प्रलम्बशुण्डं धृतचन्द्रखण्डं। विघ्नान्तदण्डं प्रणमाम्यखण्डं महाप्रचण्डं गजराजतुण्डं ॥ १ ॥ स्वयंविभान्तं रजताद्रिकान्तं भृशप्रशान्तं कृतमन्मथान्तं। कुमारतातं नतपारिजातं वंदेऽवदातं गिरिजाधिनाथं ॥ २ ॥ बृहन्नितंबां रुचिरोष्ठबिंबां हतारिदम्भां सदुरोजकुम्भां। निकृत्तशुंभां धृतसत्कदम्बां विश्वावलम्बां कलयेऽहमंबां ॥ ३ ॥ सदात्तचर्यं वरदेशधुर्यं निर्लिप्तवर्यं सुखकृच्छूपर्यं। दत्तार्त्तधैर्यं श्रुतिगीतवीर्यं तद्ब्रह्मतुर्यं प्रणमामि सूर्यं ॥ ४ ॥ आनन्दकन्दं धृतपुण्यगन्धं तं सत्यसंधं धृतभक्तबन्धं। का...न्दं ...कुन्दं मिताऽरिद्वन्दं कलये मुकुंदं ॥५॥ पयोदश्यामं परिपूर्णकामं कामा-

भिरामं क्षतिभिल्ललामं । विद्वद्भिरामं सुखकृत्प्रणामं प्रीत्या प्रकामं प्रणमामि रामं ॥ ६ ॥ सुवर्णपीतां सुरसङ्गीतां यतिप्रतीतां त्रिगुणव्यतीतां । सदा विनीतां दयया परीतां शुचिस्मितां तां प्रणमामि सीतां ॥ ७ ॥ छात्रंरवेलंघित-सिंधुपात्रं बलाधिमात्रं पविकल्पगात्रं । सुग्रीवमित्रं भयहृच्चरित्रं वन्दे पवित्रं पवनस्य पुत्रं ॥ ८ ॥ महादेवतनूजेन पंतविट्ठलशर्मणा । भगवन्नामरत्नानां मालिकेयं विनिर्मिता ॥ ९ ॥

इतिश्री विठ्ठलविरचितं भगवन्नाममाला सम्पूर्णा ।

---

## ४४९ अथ भगवद्भजनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ राम रघूत्तम सीतानायक । दशरथ-नन्दन सत्सुखदायक ॥ १ ॥ श्रीकृष्ण विभो जय कंसारे । पाहि हरे मामिह संसारे ॥२॥ दत्तराज अवधूत दिगम्बर । करुणाकर आत्रेय परात्पर ॥ ३ ॥ सांब सदाशिव गिरिजानायक । मृत्युंजय जय भवभयहारक ॥ ४ ॥ रामकृष्ण-गोपाल । जय जय रामकृष्णगोपाल ॥ ५ ॥ गरुडध्वज गोविंद गदाधर । गोकुलपाल दयाल दयाकर ॥ ६ ॥ रामचंद्र रघुवीर । जय जय रामचंद्र रघुवीर ॥ ७ ॥ राक्षसखंडन रघुकुलमंडन । राजत्रणधीर ॥ ८ ॥ दाशरथेराम



जयजय दाशरथेराम । पावननाम मेघश्याम मन्मथशत-

समधाम ॥ ९ ॥ राधाकृष्णजय कुंजविहारी । मुरलीधर गोवर्धनधारी ॥ १० ॥ मदनमनोहर माधव शौरी । कंसध्वंसक श्याममुरारी ॥ ११ ॥ गोविंदराधे गोविंद । जय हरि गोविंदराधे गोविंद ॥ १२ ॥ रघुराज हरे रघुराज हरे । रघुराज हरे भव मे शरणं ॥ १३ ॥ रघुराज हरे रघुराज हरे रघुराज हरे जहि संसरणं ॥ १४ ॥ हे रघुनन्दन हे रघुनन्दन । हे रघुनन्दन पालय मां ॥ १५ ॥ हे रघुनायक हे सितसायक । हे सुखदायक पालय मां ॥ १६ ॥ श्रीहरे श्रीहरे श्रीहरे पाहि मां । श्रीहरे श्रीहरे श्रीहरे पाहि मां॥ १७॥ मन्मथसुंदर भूपपुरंदर । मन्दरधारक पालय मां ॥ १८ ॥ हे रघुनन्दन राक्षसकंदन । राम दयाघन पालय मां ॥१९॥ हे रघुनन्दन रावणमर्दन । राम जनार्दन पालय मां ॥२०॥ केशव माधव राघव वामन । दीन दयाघन पालय मां ॥२१॥ गोकुलपालक गोपतिबालक । पांडवरक्षक पालय मां ॥ २२ ॥ राम श्यामतनुकाममनोरम । परमधाम उद्दामपराक्रम ॥ २३ ॥

इति भगवद्भजनस्तोत्रं समाप्तम् ।

---

## ४५० अथ जगदम्बिकास्तोत्रम् ।

श्रीगणेशाय नमः ॥ दधन्वैरंतर्यादपि मलिनचर्यां सपदि यत्सपर्यां पश्यन्सन्विशतु सुरपुर्यां नरपशुः । मदान्वर्या-

न्वीर्यात्समहरदसुर्यान्समिति या जगद्धुर्या तुर्या मम मनसि कुर्यान्निवसतिं ॥ १ ॥ लसन्नासामुक्ता निजचरणभक्तावन-विधौ समुद्युक्ता रक्तांबुरुहदृगलक्ताधरपुटा । अपि व्यक्ताऽव्यक्तायमनियमसक्ताशयशया जगद्धुर्या तुर्या मम मनसि कुर्यान्निवसतिं ॥ २ ॥ रणत्सन्मंजीरा खलदमनधीराऽतिरुचिरस्फुरद्दिव्यच्चीरा सुजनझषनीरायिततनुः । विराजत्कोटीरा विमलतरहीरा भरणभृज्जगद्धुर्या० ॥ ३ ॥ वसाना कौशेयं कमलनयना चंद्रवदना दधाना कारुण्यं त्रिपुलजघना कुन्दरदना । पुनाना पापाद्या सपदि विधुनाना भवभयं जग० ॥ ४ ॥ रघूत्तंसप्रेक्षारणरणिकया मेरुशिखरात्समागाद्यारागाज्झटिति यमुनागाधिपमसौ । नगाधीशप्रेष्ठा नगपतिसुता निर्जरनुता जग० ॥ ५ ॥ विलसन्नवरत्न-मालिका कुटिलश्यामलकुन्तलालिका । नवकुंकुमभव्यभा-लिकाऽवतु सा मां हिमशैलबालिका ॥ ६ ॥ यमुनाचलवा-सिनी ज्वलदसुना दुःखदवस्य देहिना । असुना यदि वीक्षिता सकृच्छसु नानाविध मातनोत्यहो ॥ ७ ॥ अनुभूतिसती-प्राणपरित्राणपरायणा । देवैः कृतसपर्या सा तुर्या कुर्याच्छु-भानि नः ॥ ८ ॥ धात्रादिमान्या हि यदीययात्रा गात्राणि सद्यो विमलीकरोति । मात्रा न यात्रापि विनांगहीनान्का मातुरिष्टे जडमूढदीनान् ॥ ९ ॥ हाटे स्वर्णालंकारा पंत-

विठ्ठलशर्मणा । अर्पिता तैर्जगन्माता शंभुकान्ता प्रसीदताद् ॥ १० ॥

इति जगदंबिकास्तोत्रम् ।

## ४९१ अथ शिवजयजयकारध्यानस्तोत्रम् ।

श्रीगणेशाय नमः ॥ स्फटिकप्रतिभटकांते । विरचितकलिमलशांते । शिव शंकर शिव शंकर जय कैलासपते ॥१॥ भस्मोद्धूलितविग्रह क्षिप्रप्रभवदनुग्रह ॥ शिव शंकर० ॥ २ ॥ गङ्गाधरपिंगटजट हृतशरणागतसंकट ॥ शिव शं० ॥ ३ ॥ बालसुधाकरशेखर भाललसद्वैश्वानर ॥ शिव शं० ॥ ४ ॥ पद्मदलायतलोचन दृढभवबन्धनमोचन ॥ शिव शं० ॥५॥ मन्दमधुरहासवदन निर्जितदुर्लसितमदन ॥ शिव शं० ॥ ६ ॥ विलसद्द्विपधरकुण्डल विनिहतदुर्जनमण्डल ॥ शिव शंकर० ॥ ७ ॥ लेखात्रयशुभकन्धर लोकत्रितयधुरन्धर शिव शंकर० ॥ ८ ॥ परशुमृगाभयवरकर बद्धनतावनपरिकर ॥ शिव शंकर० ॥ ९ ॥ बहलविपुलवक्षस्थल काकत्रितयविनिश्चल ॥ शिव शंकर० ॥ १० ॥ त्रिवलिस्थितिविकसदुदर लोकत्रितयपुरन्दर ॥ शिव शंकर० ॥ ११ ॥ प्रावृतकरिवरकृत्ते कृतनतविषयनिवृत्ते ॥ शिव शंकर० ॥ १२ ॥ व्याघ्राजिनविहिताम्बर मुनिमानसझषशम्बर शिव शंकर० ॥ १३ ॥ सनकादिकवन्द्यचरण दुस्तरभव-

सिन्धुतरण ॥ शिव शंकर० ॥ १४ ॥ लालितबालगजानन कलितमहापितृकानन ॥ शिव शंकर० ॥ १५ ॥ सच्चिद्घनसुखसागर लीलापीतमहागर ॥ शिव शंकर० ॥ १६ ॥ गिरिजाश्लिष्टार्धतनो कल्पितगिरिराजधनो ॥ शिव शंकर० ॥ १७ ॥ पंचवदनवृषगामिन् । पंतविठ्ठलस्वामिन् ॥ शिव शंकर० ॥ १८ ॥

इति श्रीशिवजयजयकारस्तोत्रम्।

---

## ४५२ अथ हरिहराष्टकम्।

श्रीगणेशाय नमः ॥ एकत्र शृङ्गाररसानुविद्धं परत्र वैराग्यपथाधिरूढम्। परस्परस्नेहदृगेकहृद्यं वन्दामहे हारिहरस्वरूपम् ॥ १ ॥ उपासनाकोटिकथानकेऽपि द्वैतोपसर्गस्य जिहीर्षयेव। अद्वैतभावार्पितकेलिकायं वन्दामहे हारिहरस्वरूपम् ॥ २ ॥ हरिर्हरस्यैष हरो हरेश्च सौहार्दसीमानमुपैति बाढम्। इत्यादराद्व्यासगवीषु गीतं वन्दामहे हारिहरस्वरूपम् ॥ ३ ॥ एकत्र लक्ष्मीललितानुकारि परत्र गौरीगुरुतापहारि। सरस्वतीगीतगुणप्रवाहं वन्दामहे हारिहरस्वरूपम् ॥ ४ ॥ गाङ्गैस्तरङ्गैरधऊर्ध्वशोभि विशेषितं शेषविजृम्भितेन। शङ्कावहानाकलनासु कल्यं वन्दामहे हारिहरस्वरूपम् ॥ ५ ॥ अन्योन्यकायच्छविकल्पितेन श्यामेन गौरेण च रोचिषाढ्यम्। उरस्थितिस्यन्दनमोर्मि

संस्थं वन्दामहे हारिहरस्वरूपम् ॥ ६ ॥ पर्यन्तभीमा गुणभेददृष्टिर्मा भूच्च नौ मायिकविग्रहेऽपि । इत्युल्लसद्वर्णविपर्ययाभं वन्दामहे हारिहरस्वरूपम् ॥७॥ न वस्तुतो ब्रह्मणि कल्पितेषु मायावतारेषु भिदावकाशः । इतीव सत्यापयितुं निरूढं वन्दामहे हारिहरस्वरूपम् ॥ ८ ॥ एतन्मायिकनामरूपरचनाप्राग्भारविस्फूर्जितं सत्यं वानृतमेव वेत्युभयथावादेऽपवादास्पदम् । सिद्धान्तं सुधियां हृदि प्रथयितुं द्वैधावसानायितं शान्तं हारिहरस्वरूपमवतात्संसारभीतेर्जगत् ॥ ९ ॥

इति हरिहराष्टकं संपूर्णम् ।

---

## ४५३ अथ शिवगाथा ।

श्रीगणेशाय नमः ॥ जय जय गिरिजालंकृतविग्रह, जय जय विनताखिलदिक्पाल । जय जय सर्वविपत्तिनाशन, जय जय शंकर दीनदयाल ॥१॥ जय जय सकलसुरासुरसेवित, जय जय वाञ्छितदानवितन्द्र । जय जय लोकालोकधुरंधर जय जय नागेश्वर धृतचन्द्र ॥२॥ जय जय पण्डितपुरीनिवासिन्, जय जय करुणाकल्पितलिङ्ग । जय जय संसृतिरचनाशिल्पिन्, जय जय भक्तहृदम्बुजभृङ्ग ॥ ३ ॥ जय जय भोगिफणामणिरञ्जित, जय जय भूतिविभूषितदेह । जय जय पितृवनकेलिपरायण, जय जय गौरीविभ्रम-

गेह ॥ ४ ॥ जय जय गाङ्गतरङ्गलुलितजट जय जय मङ्गलपूरसमुद्र । जय जय बोधविजृम्भणकारण जय जय मानसपूर्तिविनिद्र ॥ ५ ॥ जय जय दयातरङ्गितलोचन जय जय चित्रचरित्रपवित्र । जय जय शब्दब्रह्मविकाशक जय जय किल्बिषतापधवित्र ॥ ६ ॥ जय जय तन्त्रनिरूपणतत्पर जय जय योगविकस्वरधाम । जय जय मदनमहाभटभञ्जन जय जय पूरितपूजककाम ॥ ७ ॥ जय जय गङ्गाधर विश्वेश्वर जय जय पतितपवित्रविधान । जय जय बंबंनाद कृपाकर जय जय शिव शिव सौख्यनिधान ॥८॥ य इमं शिवजयवादमुदारं पठति सदा शिवधाम्नि । तस्य सदाशिवशासनयोगान्माद्यति संपन्नाम्नि ॥ ९ ॥

इति शिवगाथा समाप्ता ।

---

## ४५४ अथ सरयूसुधा ।

श्रीगणेशाय नमः ॥ तेऽन्तः सत्त्वमुदञ्चयन्ति रचयन्त्यानन्दसान्द्रोदयं दौर्भाग्यं दलयन्ति निश्चलपदः संभुञ्जते संपदः । शय्योत्थायमदभ्रभक्तिभरितश्रद्धाविशुद्धाशया मातः पातकपातकर्त्रि सरयु त्वां ये भजन्त्यादरात् ॥ १ ॥ किं नागेशशिरोवतंसितशशिज्योत्स्नाछटासंचिता किं वा व्याधिशमाय भूमिवलयं पीयूषधाराऽऽगता । उत्फुल्लामलपुण्डरी-

कपटलीसौन्दर्यसर्वंकषा मातस्तावकवारिपूरसरणिः स्नानाय मे जायताम् ॥ २ ॥ अश्रान्तं तव संनिधौ निवसतः कूलेषु विश्राम्यतः पानीयं पिबतः क्रियां कलयतस्तत्त्वं परं ध्यायतः। उद्यत्प्रेमतरङ्गभंगुरदृशा वीचिच्छटां पश्यतो दीनत्राणपरे-ममेदमयतां वासिष्ठि शिष्टं वयः ॥ ३ ॥ गङ्गा तिष्यविचालिता रविसुता कृष्णप्रभावाश्रिता क्षुद्रा गोमतिका परास्तु सरितः प्रायो यमाशां गताः । त्वं त्वाकल्पनिवेशभासुरकला पूर्णेन्दुबिम्बोज्ज्वला सौम्यां संस्थितिमातनोषि जगतां सौभाग्यसंपत्तये ॥ ४ ॥ मज्जन्नाकनितम्बिनी स्तनतटाभोगस्खलत्कुङ्कुमक्षोदामोदपरम्परापरिमिलत्कल्लोलमालावृते । मातर्ब्रह्मकमण्डलूदकलसत्सन्मानसोल्लासिनी त्वद्वारां निचयेन मामकमलस्तोमोऽयमुन्मूल्यताम् ॥ ५ ॥ इष्टान् भोगान् घटयितुमिवागाधलक्ष्मीपराध्यां वातारब्धस्फुरितलहरीहस्तमावर्तयन्ती । गन्धद्रव्यच्छुरणविकसद्वारिवासो वसाना सा नः शीघ्रं हरतु सरयूः सर्वपापप्ररोहान् ॥ ६ ॥ जयति विपुलपात्रप्रान्तसंरूढगुल्मव्रतितिततिनिबद्धारामशोभां श्रयन्ती । निशि शशिकरयोगात्सैकतेऽप्यम्बुसत्तां सपदि विरचयन्ती साऽपगात्रैजयन्ती ॥ ७ ॥ अंहांसि नाशयन्ती घटयन्ती सकलसौख्यजालानि । भेयांसि प्रथयन्ती सरयूः साकेतसंगता पातु ॥ ८ ॥ य इमकं सरयूस्तवकं

पठेन्निबिडभक्तिरसाप्लुतमानसः । स खलु तत्कृपया सुखमेधतेऽनुगतपुत्रकलत्रसमृद्धिभाक् ॥ ९ ॥

इति सरयूसुधा समाप्ता ।

## ४५५ अथ गोमतीमहिमा ।

श्रीगणेशाय नमः ॥ मातर्गोमति तावकीनपयसां पूरेषु मज्जन्ति ये तेऽन्ते दिव्यविभूतिसूतिसुभगस्वर्लोकसीमान्तरे । वातान्दोलितसिद्धसिन्धुलहरीसंपर्कसान्द्रीभवन्मन्दारद्रुमपुष्पगन्धमधुरं प्रासादमध्यासते ॥ १ ॥ आस्तां कालकरालकल्मषभयाद्भीतेव कार्श्यं गता मध्येपात्रमुदूढसैकतभराकीर्णाऽवशीर्णामृता । गङ्गा वा यमुना नितान्तविषमां काष्ठां समालम्भितामातस्त्वं तु समाकृतिः खलु यथापूर्वं वरीवर्तसे ॥ २ ॥ या व्यालोलतरङ्गबाहुत्रिकसन्मुग्धारविन्देक्षणं भौजङ्गीं गतिमातनोति परितः साध्वी परा राजते । पीयूषादपि माधुरीमधिकयन्त्याराददुदाराशया साऽस्मत्पातकसातनाय भवतात्स्रोतस्वती गोमती ॥ ३ ॥ कुम्भाकारमुरीकरोषि कुहचित्क्वाप्यर्धचन्द्राकृतिं धत्से भूतलमानयष्टिघटनामालम्बसे कुत्रचित् । अन्तः क्वापि तडागवर्तनतया सिद्धाश्रमं सूयसे मातर्गोमति वातभङ्गिविधया नानाकृतिर्जायसे ॥ ४ ॥ रोधोभङ्गिनिवेशनेन कुहचिद्वापीयसे पीयसे क्वाप्युत्तालतटाधराम्बुकलया कूपायसे

पूयसे । मातस्तीरसमत्वतः क्वचिदपां गर्तायसे त्रायसे कुत्रापि प्रतनुस्पदेन सरितो नालीयसे गीयसे ॥५॥ तानासन्नतरानति क्षितिरुहो याः पातयन्ति क्षणात्तास्त्वर्थौ घुणकीर्णवर्णघटनन्यायेन संगच्छताम् । गोमन्ताचलदारिके तव तटे तूच्चल्लतापादपे सद्योनिर्वृतिमेति भक्तजनता तामैहिकामुष्मिकीम् ॥ ६ ॥ एतत्तापनतापतप्तमुदकं माभूदितीवान्तिके माद्यत्पल्लवतल्लजद्रुमतती यत्रातपत्रायते । मातः शारदचन्द्रमण्डलगलत्पीयूषपूरायिते शश्वोत्थायमजस्रमाह्निककृते त्वां बाढमभ्यर्थये ॥ ७ ॥ एकं चक्रमवाप्य तत्र भवतो दाक्षायणीवल्लभाद्देवो दैत्यविनाशकस्त्रिभुवने स्वास्थ्यं समारोपयत् । तच्चक्रं त्वयि भासतेऽपि बहुधा निश्चक्रमंहोपहा यत्त्वं दीव्यसि तत्तवैष महिमा चित्रायते त्रायिनि ॥ ८ ॥ ये गोमतीस्तुतिमिमां मधुरां प्रभाते संकीर्तयेयुरुरुभक्तिरसाधिरूढाः । तेषां कृते सपदि सा शरदिन्दुकान्तिकीर्तिप्ररोहविभवान् विदधाति तुष्टा ॥ ९ ॥

इति गोमतीमहिमा समाप्तः ।

---

## ४५९ अथ यमुनाकुलकम् ।

श्रीगणेशाय नमः ॥ चिरगृहीतजगत्तमसो रवेर्जनितया प्रसृतेव तमश्छटा । घनतमालसपत्नसमुच्छलल्लहरिका हरिकामितगोपिका ॥ १ ॥ सलिलकेलिपरायणवल्लवीकमनका-

यरुचिच्छुरणादिव । दलितनीलमणिच्छविसोदरी सुरवरा-
रवराजितवेणिका ॥ २ ॥ असितपक्षनिशाद्रिशिखास्खल-
त्तिमिरनिर्झरसंचयनादिव । प्रकटिता स्फुटकालकुशेशय-
च्छविसमाऽविसमाप्रतिभालिनी ॥ ३ ॥ विकचपङ्कजको-
शपरिस्रवन्मधुरसाश्रयणादिव सभ्रमा । श्रुतिसवर्णतया भ्रम-
रभ्रमद्व्रजवधूजवधूतजलान्तरा ॥ ४ ॥ घनपयःपरिणामव-
शादिवप्रचुरनीलिममञ्जिमभिर्द्रुमैः । उभयतीरगतैः शमिता-
तपप्रसरणा शरणागतवत्सला ॥ ५ ॥ सगणकालियभोगि-
फणैरिव प्रकटनीलसरोरुहकोरकैः । परिष्टतोदितवल्लवम-
ण्डलीरसिकता सिकताश्रितधीवरा ॥ ६ ॥ प्रविततायत-
सैकतकैतवादमरनिम्नगयेव करम्बिता । विपुलकूलविका-
सिगतस्पृहादिकमठा कमठावलिसंकुला ॥ ७ ॥ नियमिते-
न्द्रियकर्मठमण्डलाचरितसांध्यविधानविकस्वरा । करसरो-
जगृहीतघटस्फुरत्छकमनी कमनीयतटान्तरा ॥ ८ ॥ अधि-
जलोच्छ्रितदारवपट्टिकातलनिविष्टयतीशपरिष्कृता । श्रुति-
भेदविजृम्भितसंहितामधुरिमा धुरि मादकतां गता ॥ ९ ॥
स्मरससंमिलदुन्मदमाथुरीप्रचुरमज्जनजर्जरितोर्मिका । भग-
वती यमुना वृजिनापहा विजयते जयतेजनकृत् सताम् ॥ १० ॥

इति यमुनाकुलकं समाप्तम् ।

## ४५७ अथात्मोपदेशः ।

श्रीगणेशाय नमः ॥ शास्त्रप्रतिष्ठा गुरुवाक्यनिष्ठा सदात्मदृष्टिः परितोषपुष्टिः चतस्र एता निवसन्ति यत्र स वर्तमानोऽपि न लिप्यतेऽघैः ॥ १ ॥ उद्देश्यभेदेन विधेयभेदे शास्त्राण्यनेकानि भवन्ति तावत् । तत्रास्तिकैराद्रियमाणमेव विभावनीयं परमार्थसिद्ध्यै ॥ २ ॥ व्याख्याबलेनाभिनिवेशभाजा प्रमेयभेदो बहुधाभ्युदेति । तत्रास्ति मात्सर्यकलङ्कमुक्ता मुक्तावदाता धिषणा प्रमाणम् ॥ ३ ॥ तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ४ ॥ अनेकशास्त्रार्थविमर्शनेन तत्तन्महाव्यक्तिनिदर्शनेन । त्रैकालिकज्ञानविकस्वरेषु महाजनत्वं गुरुपूपदिष्टम् ॥ ५ ॥ यदेकतत्पुत्रकलत्रमित्रविद्वेष्युदासीनचराचरं हि । तन्नामरूपाख्यविकारवर्जं ब्रह्मेति वेदान्तविदो विदन्ति ॥ ६ ॥ तदात्मरत्नं न बहुश्रुतेन न वा तपोराशिबलेन लभ्यम् । प्रकाशते तत्तु गुरूपदिष्टज्ञानेन जन्मान्तरखण्डकेन ॥७॥ जात्या गुणेन क्रियया च सम्यग्गतप्रमादो विदधद्विधेयम् । लभेत यत्तेन सदेव तुष्यन् यतेत भाग्यार्पितकार्यकायः ॥ ८ ॥ निष्कामचित्तेन किलैकतानः परामृशन्वस्तुगुरूपदिष्टम् । उदारभावो रचयेत सौख्यं परं परेषामपि किं स्वनिष्ठम् ॥ ९ ॥



इति समस्तव्यामात्मोपदेशः समाप्तः ।

## ४५८ अथ महालसाकवचम्।

श्रीगणेशाय नमः॥ भगवन्सर्वधर्मज्ञसर्वागमविशारद। कवचंदेवतायास्तुकृपयाकथयप्रभो॥ १॥ ब्रह्मोवाच॥ शृणु देवमहाप्राज्ञसर्वशास्त्रविशारद। कवचंमहालसादेव्यामहासिद्धिकरंपरं॥ २॥ मोहिनीमेशिरः पातुभालंनेत्रयुगं तथा। भ्रुवौचकामिनीरक्षेन्मुखंवागीश्वरीतथा॥ ३॥ श्रोत्रेमंगलरूपाचकंठंमहिषमर्दिनी। भुजौसौंदर्यनिलयाहस्तौरक्षेद्यशस्विनी॥ ४॥ सर्वदानाभिदेशेतुकमलापातुचोदरम्। विजयाहृदयंपातुकटिंसुरवरार्चिता॥ ५॥ करौमहालयारक्षेदंगुलीर्भक्तवत्सला। वैष्णवीपातुजंघेचमायामेदूंगुदंतथा॥ ६॥ पादौचदेवजननीतलंपातालवासिनी। पूर्वेमहालसारक्षेद्दक्षिणेसुखदायिनी॥ ७॥ पश्चिमेवारुणीरक्षेदुत्तरेऽमृतवासिनी। ईशान्यांपातुचेशानीआग्नेय्यामग्निदेवता॥ ८॥ नैर्ऋत्यां खड्गधारीचवायव्यांमृगवाहिनी। ऊर्ध्वंब्रह्माणीमेरक्षेदधस्ताद्वैष्णवीतथा॥ ९॥ अग्रतःपातु चेंद्राणीवाराहीपृष्ठतस्तथा। कौबेरीचोत्तरेपातुदक्षिणेविष्णुवल्लभा॥ १०॥ इदंकवचमज्ञात्वायोभजेन्मोहिनींतथा। वृथाश्रमोभवेत्तस्यनमंत्रःसिद्धिदायकः॥ ११॥ भूर्जपत्रेसमालिख्यकुंकुमादिकचंदनैः। शतमष्टोत्तरंजाप्यंस्वर्णस्थंधार्यतेयदि॥ १२॥ कंठेवादक्षिणेवाहावष्टसिद्धिर्भवेद्ध्रुवं। सर्वथासर्वदानित्यंजपेन्मोहिनिकं



तथा॥ १३॥ राजद्वारे सभास्थानेकारागृहनिबंधने।

जलमध्येचाग्निमध्येतथानिर्जनकेवने ॥१४॥ अरण्येप्रांतरे-घोरेशत्रुसंघेमहाहवे । शस्त्रघातेविषेपीतेजपन्सिद्धिमवाप्नुयात् ॥ १५ ॥ ब्रह्मराक्षसवेतालाःकूष्मांडाभैरवादयः । नश्यंति दर्शनात्तस्यकवचेहृदिसंस्थिते ॥ १६ ॥ मनसाचिंतितंकार्यं सहस्रंजपतस्तथा । पलाशमूलेप्रजपेत्सहस्रत्रितयंमुदा ॥१७॥ शत्रुक्षानिर्ध्रुवंचात्रजायते नात्रसंशयः । अर्कमूलेजपेन्नित्यंमंत्र-राजमिमंशुभम् ॥ १८ ॥ भोजयेद्ब्राह्मणांश्चैवलक्ष्मीर्वसति सर्वदा । यदिदंकवचंनित्यंभक्त्यातवमयोदितं ॥ १९ ॥ योज-पेत्सर्वदाभक्त्यामोहिन्याःकवचंशुभम् । वांछितं फलमाप्नो-तिनात्रकार्याविचारणा ॥ २० ॥

इति श्रीभविष्योत्तरपुराणे ब्रह्मप्रोक्तं महालसाकवचं संपूर्णम् ।

---

## ४५९ अथ महालसार्गलास्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवाऊचुः ॥ जयमंगलरूपेत्वंजयत्वं भक्तवत्सले । जयसौंदर्यनिलयेजयकारुण्यवारिधे ॥ १ ॥ महालयेमोकरुणालयेमांत्वंत्राहिदीनार्तिहरेप्रपन्नं । त्वत्पाद-पद्मावनतोत्तमांगंप्रसीदचत्वंवरदेशरण्ये ॥२॥ त्वंविष्णुरूपि-णीदेवित्वंचरुद्रस्वरूपिणी। त्वंब्राह्मीत्वंचशर्वाणीत्वमिंद्राणी तिगीयसे ॥३॥ त्वंकल्याणीचश्रीर्वाणीसैंहिकेयविदारिणी ॥ त्वमिंद्राणीचसौपर्णीकाद्रवेयविदारिणी ॥४॥ वैकुंठपदनिः-श्रेणीनिर्जराणां तरंगिणी । गंगाधरस्यरमणीनिधिवासप्र-

वासिनी ॥ ५ ॥ संहारिणीचविपदांसंपत्संततिकारिणी । भवपाशमहापाशगेहपाशविदारिणी ॥ ६ ॥ स्कंदउवाच ॥ इतितेत्रिदशाःस्तुत्वाजनार्दनमनर्दम् । स्त्रीरूपेणातिशोभाढ्यंमोहिनीरूपकंजगुः ॥ ७ ॥ देवाऊचुः ॥ शृंगारलावण्यसमुद्ररूपिणीस्वरूपशोभारतिकोटिजित्वरा । त्वमेवकामीप्सितदातृदानदादेवीसुदारक्षतुदैत्यमोहिनी ॥८॥ प्रतारणाभिज्ञतमासुरारिणांनमःशिरश्छेदनकारिविक्रमा । स्वरूपसंमोहितदानवव्रजादेवी सुदारक्षतुदैत्यमोहिनी ॥ ९ ॥ ददाति दोर्भ्यामपियाचतुर्भुजाश्रियंहितर्घंतिविभूषणांकनैः । आपत्यदारिद्र्यविनाशकारिणीदेवीसुदा० ॥ १० ॥ पीयूषदात्रीसुतनुर्दिवौकसांदितेःसुतानांचसुराप्रदात्री ॥ गृहीतमायामयकामिनीवपुर्देवी०॥११॥ सुवर्णपंकेरुहकेतकीश्रियंशरीरवर्णेनचजित्वराप्रसू:। स्वकंठधिक्कारितवल्लकीगुणादेवी० ॥१२॥ स्वदीप्तकोटींदुकृतप्रभाश्रयाप्रभाविनीदैवतकामपूरिणी । अखंडमाखंडलनिर्जरस्तुतादेवी० ॥ १३ ॥ यस्याःप्रभावंद्विसहस्रजिह्वःसहस्रवक्त्रोप्युरगाधिराजः । वक्तुंप्रभुर्नकृतदेतरेजनादेवी० ॥१४॥ स्कंद उवाच ॥ इतिस्तुतातैस्त्रिदशैःस्वभावैःसामोहिनीरूपमधोक्षजस्य ॥ उवाचवाक्यं विनयप्रसन्नाश्लक्ष्णंतदातान्प्रणतानुदारान् ॥ १५ ॥ मोहिन्युवाच ॥ आदौपुरुषरूपेणसंस्तुतोहंजनार्दनः । ततःसीमंतिनीरूपाभवद्भिर्मोहिनीस्तुता ॥ १६ ॥ अथचैवमहापुण्यपुरुषप्रकाशितस्तवः । यएनं

पठतेनित्यंप्रातरुत्थायमानवः ॥१७॥ मत्समीपेविशेषेणशुचि-र्भूत्वा धृतव्रतः । नदारिद्र्यंभवेत्तस्यनसंकटमवाप्नुयात् ॥ १८ ॥ आरोग्यं सततंगच्छेन्नसरोगैःप्रबाधते । भूतप्रेतपिशाचा-नांनबाधाभिःसभूयते ॥ १९ ॥ मरणेविष्णुमांल्लोकान्प्राप्नो-तीतिविनिश्चितं । इदंक्षेत्रंमहापुण्यंवृद्धातीरमितीश्रुतं ॥२०॥ विशेषेणाधुनाजातंयुष्मत्पंक्तिनिषेवणात् । महालयेतिवि-ख्यातियाताहंमोहिनीस्त्वयं ॥ २१ ॥ वसाम्यत्रसुराःसर्वे भवंतोपिवसिष्यथ । त्रिरात्रंमत्समीपेयःपुरुषप्रकृतिस्तवम् ॥ २२ ॥ इदंपठतिसंयुक्तस्तस्याहंवांछितप्रदा । मद्दर्शनकृतां पुंसांमुक्तिरेवनसंशयः ॥ २३ ॥

इति श्रीमहालसाऽर्गलास्तोत्रं संपूर्णम् ।

---

## ४६० श्रीमन्मंगलमूर्त्यष्टकम् ।

श्रीगणेशाय नमः ॥ जयतिश्रुतिमूलमंगलं जगतांमूर्त-मिवैकमंगलम् । भजतामिदयत्सुमंगलंसततंमेविदधातुमंग-लम् ॥ १ ॥ विधिसत्कृतिदत्तकन्यकाद्वयपाणिग्रहणातिमं-गलम् । गणराट्करकंजपंचकंस० ॥ २ ॥ तनुतेचलनांकने नंयद्बहुधाभूमितलस्यमंगलम् । मृडभूपदपंकजद्वयंसततंमे० ॥ ३ ॥ कुरुतेहिविपन्निवारणंभजतःफूत्करणेनमंगलम् । हर-सुतकराग्रपुष्करंसत० ॥ ४ ॥ अघमाशुनिवारयंस्ततांबक-



लंवर्धयतीष्टमंगलम् । गजतुंडकटाक्षवीक्षणंसत० ॥ ५ ॥

सपदिस्वकटाक्षवीक्षणैःकुरुतेयद्गजकस्यमंगलम् । गिरिजातनयेक्षणद्वयंसत० ॥ ६ ॥ श्रुतिशीर्षमयंप्रबोधनैर्जगतो यद्विदधातिमंगलम् । गजराजमुखस्यबृंहणंसत० ॥ ७ ॥ दययेष्टवरैःसमीहते निजसेवानिरतस्यमंगलम् । सकलादिसमर्च्यमानसंसततं० ॥ ८ ॥ इति योमंगलमूर्तेर्मंगलपद्याष्टकंपठेन्नित्यम् । श्रीकृष्णशर्मरचितं तस्यभवेन्मंगलंसदा त्यम् ॥ ९ ॥

इति श्रीगणेशमंगलपद्याष्टकस्तोत्रं संपूर्णम् ।

---

## ४६१ अथ श्रीगणेशस्तोत्रम् ।

श्रीगणेशाय नमः । सुमुखोमखभुङ्मुखार्चितः सुखवृध्यै निखिलार्तिशांतये । अखिलश्रुतिशीर्षवर्णितः सकलाद्यः ससदाऽस्तुमेहृदि ॥ १ ॥ प्रणवाकृतिमस्तकेनयः प्रणवो वेदमुखावसानयोः । अयमेवविभाति सुस्फुटंह्यवतारः प्रथमः परस्यसः ॥ २ ॥ प्रथमंगुणनायकोह्यभौ त्रिगुणानांसुनियंत्रणाययः । जगदुद्भवपालनात्ययेष्वजविष्ण्वीशसुरप्रणोदकः ॥ ३ ॥ विधिविष्णुहरेंद्रदेवतादिगणानां परिपालनाद्विभुः । अपिचेंद्रियपुंजचालनाद्गणनाथः प्रथितोर्थतःस्फुटम् ॥ ४ ॥ अणिमामुखसिद्धिनायको भजतः साधयतीष्टकामनाः । अपवर्गमपि प्रभुर्धियो निजदासस्य तमोविहृत्य यः ॥ ५ ॥ जननीजनकः सुखप्रदोनिखिलानिष्टहरोऽखिल-

दः । गणनायकएवमामवेद्दपाशांकुशमोदकान्दधत् ॥६॥ शरणंकरुणार्णवः समेशरणं रक्ततनुश्चतुर्भुजः । शरणं भजकांतरायहा शरणं मंगलमूर्तिरस्तु मे ॥ ७ ॥ सततंगणनायकंभजेनवनीताधिककोमलांतरम् । भजनाद्भवभीनिभंजनं स्मरणाद्विघ्ननिवारणक्षमम् ॥ ८ ॥ अरुणारुणवर्णराजितं तरुणादित्यसमप्रभं प्रभुम् । वरुणायुधमोदकावहं करुणामूर्तिमहंप्रणौमितम् ॥ ९ ॥ कनुमूषकवाहनंप्रभुंमृगयेत्वज्ञतमोवनीतले । विबुधास्तुपितामहादयस्त्रिपु लोकेष्वपियंनलेभिरे ॥ १० ॥ शरणागतपालनोत्सुकं परमानंदमजंगणेश्वरम् । वरदानपटुंकृपानिधिंहृदयाब्जेनिदधामि सर्वदा ॥ ११ ॥ सुमुखे विमुखेसतिप्रभौनमहेंद्रादपिरक्षणं कदा । त्वयि हस्तिमुखे प्रसन्नताऽभिमुखेनापियमाद्भयं भवेत्॥१२॥ सुतरांहिजडोपि पंडितः खलु मूकोऽप्यतिवाक्पतिर्भवेत् । गणराजदयार्द्रवीक्षणादपिचाज्ञः सकलज्ञतामियात् ॥१३॥ अमृतं तु विषं विषंसुधापरमाणुस्तुनगोनगोप्यणुः । कुलिशंतुतृणं तृणं पविर्गणनाथाशु तवेच्छया भवेत् ॥१४॥ कगतोसिविभोविहायमांननुसर्वज्ञनवेत्सिमांकथम् । किमु पश्यसि विश्वदृङ्नमां न दयाकिंमयितेदयानिधे ॥१५॥ अयिदीनदयासरित्पतेमयिनैष्ठुर्यमिदं कुतः कृतम् । निजभक्तिसुधालवोपियदिदत्तो जनिमृत्युमोचकः ॥१६॥ नितरांविषयोपभोगसःक्षपितंत्वायुरमूल्यमेनसा । अहहाज्ञतमस्य साहसं सहनीयं

कृपयात्वयाविभो ॥ १७ ॥ भगवन्नहितारकस्यते व्रतमंत्र-स्यजपःकृतस्तथा । नकदैकधियापिचिंतनं तवमूर्तेस्तुमया-तिपाप्मना ॥ १८ ॥ भजनंनकृतंसमर्चनंतवनामस्मरणंनद-र्शनम् । हवनं प्रियमोदकार्पणंनचदूर्वा न समर्पिता मया॥१९॥ नचसाधुसमागमःकृतस्तवभक्ताश्चमयानसत्कृताः । द्विजभो-जनमप्यकारिनोबतदौरात्म्यमिदं क्षमस्वमे ॥ २० ॥ नविं-धितवसेवनस्यवा नचजानेस्तवनं मन्तुं तथा । करयुग्मशिरः सुयोजनं तवभूयाद्गणनाथपूजनम् ॥ २१ ॥ अथकागण-नाथमेगतिर्मति जानेपतितस्य भाविनी । इतितप्ततनुंसदा-वमामनुकंपार्द्रकटाक्षवीक्षणैः ॥ २२ ॥ इहदंडधरस्यसंग-मेऽखिलधैर्यच्यवने भयंकरे ॥ अविताгणराजकोनुमांतनु-पातावसरैत्वया विना ॥ २३ ॥ वदकं भवतोन्यमिष्टदा-च्छरणं यामि दयाघनादृते । अवनायभवाग्निभर्जितोगति-हीनःसुखलेशवर्जितः ॥ २४ ॥ श्रुतिमृग्यपथस्यचिंतनंकि-मुवाचोऽविपयस्य संस्तुतिम् । किमुपूजनमप्यनाकृतेरसम-र्थोरचयामिदेवते ॥ २५ ॥ किमुमद्विकलात्स्वसेवनं किमु-रंकादुपचारवैभवम् । जडवाङ्मतितोनिजस्तुतिंगणनाथे-च्छसिवादयानिधे ॥ २६ ॥ अधुना पिचकिंदयानतेमम-पापातिशयादितीशचेत् । हृदयेनवनीतकोमलेनहिकाठि-न्यनिवेशसंभवः ॥ २७ ॥ व्यसनार्दितसेवकस्यमेप्रणतस्याशुग-



णेशपादयोः । अभयप्रदहस्तपंकजंकृपयामूर्ध्निकुरुष्व ताव-

कम् ॥२८॥ जननीतनयस्यदृक्पथं मुहुरेतिप्रसभंदयार्द्रधीः। ममदृग्विषयस्तथैवभोगणनाथाशुभवानुकंपया ॥ २९ ॥ गजराजमुखायतेनमोमृगराजोत्तमवाहनायते । द्विजराजक-लाभृतेनमोगणराजायसदा नमोस्तुते ॥ ३० ॥ गणनाथग-णेशविघ्नराट्शिवसूनोजगदेकसद्गुरो । सुरमानुषगीतसद्यशः प्रणतंमामवसंसृतेर्भयात् ॥ ३१ ॥ जयसिद्धिपते महामते जयबुद्धीशजडार्तसद्गते । जययोगिसमूहसद्गुरोजयसेवारत-कल्पनातरो ॥ ३२ ॥ तनुवाग्घृदयैरसच्चसच्चदवस्थात्रितये कृतंमया । जगदीशकरिष्यमाणमप्यखिलं कर्मगणेशतेऽर्पि-तम् ॥३३॥ इतिकृष्णमुखोद्गतंस्तवंगणराजस्यपुरःपठेन्नरः। सकलाधिविवर्जितोभवेत्सुतदारादिसुखीसभुक्तिभाक् ॥३४॥

इति धौरेयोपाह्वश्रीकृष्णविरचितं गणेशस्तोत्रं संपूर्णम् ।

---

## ४६२ अथ श्रीगणेशमहिम्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ महिम्नस्तेज्ञानं विधिहरिहराणामपि नयत्कुतःसम्यक्स्यात्तज्जगतिविदुषोऽन्यस्यभगवन्। तथाप्या-त्मोद्धारव्यवसितमतिस्त्वामनुभजन्यथाबुद्धिप्राप्यं व्रजतिप-दमीड्यंगणपते ॥ १ ॥ गुणाञ्छेपोऽशेषान्दशशतमुखैस्ते निगदितुं समर्थोनब्रह्मासुरगुरुगिरान्नानविबुधाः । श्रुति-र्नाममौनं त्वमसिभजतामार्तिशमनः कथं तच्चित्तं ते गणपतिसमीहे तव स्तवं



समर्थो जडमतिः ॥ २ ॥ यथाशक्तिस्तोतुं गजमुखभवत्प्रे-

रितमतेः समारंभोऽयंमेभवतुतवतोपाय नितराम् । असंबद्धं क्लिष्टंनहिभवतिकिंबालवचनं पितुःसंतोपद्धैजगतिजगदीशा-तिसुहृदः ॥ ३ ॥ गुणेभ्यःसंभूताविधिहरिशिवाःकर्मणिनिजे कुतः कोहंजातः किमिहचकरोमीतिमुहुः । वियद्वाणीं श्रुत्वाभजतगणनाथं त्विवितिदा महंतेजप्त्वातेह्यभिलषित-मापुस्त्विहवरम् ॥ ४ ॥ गणेशत्वंमातायतइदमभूद्विश्वमखिलं पितापित्वं चान्नोदकवितरणेनावसिसदा ॥ बिभर्षित्वंस्वस्मि-न्निदमितिसखाप्राकृतलये गतिस्त्वत्तो नान्येत्यतउपगत-स्त्वांहिशरणम् ॥ ५ ॥ निवर्ततेवाचोयतइति नुतौकोनुकुश-लस्तत्रध्याने कोवाप्यतिमतिपथस्येशभविता ॥ अतोहृद्वा-ग्भ्यांत्वांगजमुखयथाशक्ति कवयो मुदासंसेवंतेझटितिभव-मोक्षायसततम् ॥ ६ ॥ परब्रह्मैकस्त्वंभजनपरकार्यायदयया-ऽवतारान्धत्से यान्विविधगुणनाम्नोखिलहितान् ॥ तथा धर्मद्विष्टप्रशमनपरान्साधुचरितान्नमस्तेभ्यो नित्यं गजवदनध-र्मावनरतान् ॥ ७ ॥ विधिर्विष्णुः शर्वःसुरपतिरिनो ग्लौश्च जगती जलंवह्निर्वायुर्वियदपियमःपाशिधनदौ ॥ सुराःसर्वे तेंशाःसततमनुरक्षंतिसकलं नियोगात्तेविश्वंगजमुखभवन्नि-र्मितमिदम ॥ ८ ॥ उमाभक्त्युद्रेकाच्छिवकृततपःपुण्यनि-चयात्तयोर्वांछासिध्यै वरदशिवयोस्त्वंतनुभवः । अभूरद्धा-यत्तन्निजपरवशत्वंतवविभोह्यनिर्वाच्यंदृष्टंयतइदमजस्यापि जननम् ॥ ९ ॥ वहन्ब्रह्मांडानामगणितशतकोटीःस्वजठरे

बिभर्ष्यन्वर्थाह्वांबृहदुदरमूर्तिं सुललिताम् । स्वदासासंख्या-गोभरणबहुलंबोदरतनुः स्वलंकृत्यैकिंनो सदयतवभूयाद्गुण-निधे ॥ १० ॥ वरेण्यंराजानं विनतमुपदिश्योत्तमतमैर्महा-गीतावाक्यैर्भवजलधिनौकोपमपदैः । परंस्वानंदाख्यंददि-थपदमाद्यंनिजमतो वदान्योमान्योऽन्योनहिजगतिबुद्धीश भवतः ॥११॥ सुतौलाभोलक्षोप्यथखलुशिवौयस्य पितरावुभे सिद्धिर्बुद्धिः सुमुखदयितेमंगलतनुः । स्वयंमोदान्नाशःकृतवस-तिरानंदभुवने करेत्विक्षोश्चापोखिलविभवदाता विजयसे ॥१२॥शमीमंदाराभ्यांशुचिहरितदूर्वांकुरगणैः सपर्यां कुर्यात्ते भवतिकृतकृत्यःसमनुजः । सकृन्नामोक्त्वातेप्रभवतिजडोवा-क्पतिरिव प्रभोनुःस्याद्भक्तिस्तवचरणयोर्मोक्षसुखदा ॥१३॥ स्तुतिर्दोषान्हन्यादपि दशमनोवाक्तनुभवान्नतिः क्लेशान्ह-न्यात्पदकमलयोस्ते भव भवान् । स्मृतिर्विघ्नान्हन्यात्तव पविरिवाद्रीन्बहुविधान्रतिस्तस्मिन्भूयाद्भवतिमनसोमेगण-पते ॥ १४ ॥ रज पादाब्जस्थंसकलविभवश्रेष्ठनिलयं तव-ब्रह्मादीनांत्रिविधदुरितघ्नंतद्भृताम् । महामोहग्राहग्रसनपटु-संवित्प्रदमिदं मुमुक्षूणां ढुंढेलसतिममशीर्षेशुभकरम् ॥१५॥ भवाब्धौदुष्पारेविषयमकरेदुःखसलिलेनिमग्नस्योद्धर्तागजमु-खऋतेत्वन्नहिविभो । इतित्यक्त्वासर्वंत्वमरसमुदायंविगत-भीर्दयालो संप्राप्य ... नोस्यत्पदकमलमार्तोतिसुखरूपम् ॥ १६ ॥ महा-पापीयातस्तवभजनतोमुक्त्यर्पितां भुशुंड्यन्वर्थाह्वोऽभवद-

खिलसिद्ध्येकनिलयः । महाव्याधिग्रस्तःसपदिविधुकांतः-सुतनुतां तथामंदाराद्याःसुगतिमिहयाताश्चबहवः ॥ १७ ॥ कृतं नध्यानंतेसुलभमतिनामापिनकदा गृहीतं वाचा वा श्रुतिविहितकर्मापि न कृतम् । मयापापेनेत्थं क्षपितमिह चायुर्विषयिणाक्षमस्वागोदोमेद्यहहगणनाथात्वकृपया ॥१८॥ नकांक्षेहंमोक्षंगजसुखसुखेनेंद्रपदजं नराज्यंवाप्राज्यंनखलुचि-रजीवित्वमजरम् । स्वभक्तानां संगः सततमिहभूयादितिवरं प्रसन्नोमेदेहि स्वपदयुगले भक्तिमचलाम् ॥१९॥ महाविद्या-मूर्तेनिजवरदमूर्तेनम इदं जगन्मूर्तेतुभ्यंजितमदनमूर्तेनमइदं । महातेजोमूर्तेनरगजपमूर्तेनम इदं दयामूर्तेतुभ्यंपरमसुख-मूर्तेनमइदम् ॥ २० ॥ नमोहेरंबायश्रुतिमृगितरूपायविभवे नमोविश्वोत्पत्तिस्थितिलयकृतेमोदकभृते । नमःसद्रूपायाप-रिमितसुखायप्रतिपदे नमः सर्वस्मै सद्वरवरदतुभ्यंभगवते ॥ २१ ॥ इति गणपमहिम्नस्तोत्रमंत्रेण देवं गणपतिमभि-षिंचेदेकनिष्ठः पठेद्वा । सकलदुरितजालान्ना विमुच्याशु यायादखिलविभवविद्या सौख्यभाक्स्यात् नमीड्यम् ॥ १ ॥ श्रीकृष्णनाम्नेति मयागणेशत्वत्प्रेरितेनैवयथामनीषम् । कृत्वाऽर्पितस्तेपदयोर्महिम्नोभव्यःस्तवस्तेनविभोप्रसीद ॥२॥

इति श्रीधौरेयकुलोत्पन्नश्रीकृष्णशर्मविरचितंगणेश-महिम्नस्तोत्रं संपूर्णम् ।

## ४६३ अथ श्रीरामचतुर्दशरत्नमाला ।

श्रीगणेशाय नमः ॥ अवनीभरवारणाययोदिविजप्रार्थनयारघोःकुले । अवतीर्यजघानराक्षसांस्तमहंराममहर्निशंभजे ॥ १ ॥ मुनियाचनयामखावने खरमुख्यानवधीचताटिकाम् । जनकस्य सुतामुवोढयस्तमहं० ॥ २ ॥ दयितेरिततातशासनाद्दयिताबंधुयुतोऽगमद्वनम् । मुनिवेषधरःफलादिभुक्तमहं० ॥३॥ वनवासरताश्रमान्भ्रमन्सकलान्छाकभुजोऽभयंददत् । निजघान विराधराक्षसंतमहं० ॥४॥ अपिपंचवटीस्थलेमृगं सकलज्ञोऽनुगतः सुमायिनम् । अनवेक्ष्य शुशोच जानकींतम० ॥ ५ ॥ परिहृत्यकबंधबंधनंशबरीदत्तफलप्रतोषितः । सुगलेनचकारसौहृदं तम० ॥ ६ ॥ निवसन्सुगिरौप्रवर्षणेबतलंकागतजानकीकथाम् । हनुमद्वचसानुबोधयस्त० ॥ ७ ॥ कपिसैन्ययुतोऽब्धिसंनिधौकृतरामेश्वरलिंगयोजनः । कृतवारिधिसेतुबंधनस्त० ॥ ८ ॥ शरणागतशत्रुबंधवेरिपुराज्यं तुविभीषणाय यः । प्रददौ दययानृपोत्तमस्तम० ॥ ९ ॥ सकुलंविनिहत्यरावणंजननींस्थावरजंगमस्य यः । जगृहेऽग्निगतांतुजानकींत० ॥ १० ॥ अथपुष्पकयानसंस्थितोभरतायाददौस्वदर्शनम् । सदयःसदयाय सानुजस्त० ॥ ११ ॥ अथराज्यपदेसहानुजैर्निजसाकेतपुरेजगत्प्रभुः । अयुताब्दमहोऽधिष्ठितस्त० ॥ १२ ॥ नृपधिष्ण्यसुशोभितो जनान्सकपीनिष्टवरैरतोषयत् । निजपूःस्थितजंतुमुक्तिदस्त०॥१३॥

इतिराघववंशभूषणंपरमीशंकिलकृष्णभूसुरः । निजहृत्कमले विभावयंस्तमहं राममहर्निशं भजे ॥ १४ ॥

इति श्रीधौरेयोपाह्वश्रीकृष्णविरचिता श्रीरामचतुर्दशरत्नमाला समाप्ता ।

---

## ४६४ अथ राजपुरगंगाष्टकम् ।

श्रीगणेशाय नमः ॥ अथ राजपुरस्यसंनिधौकथमुष्णालयपूर्महीधरे । ननुजाह्नवितेहिमालयंनिजधिष्ण्यंतुविहायचेत्स्थितिः ॥१॥ भगवत्पदजेपदोद्भवंभगिनीबंधुमिवानुकंपया । जरठंकृषिकर्मतत्परंसुसमाधातुमिहोद्भवस्तव ॥ २ ॥ बहुपात्तरुमूलनिर्गमोगतिहीनोद्धरणार्थसूचकः । नभवेदितिसिंधुसंगमोगूढगुप्ताभवसीश्वरप्रिये ॥ ३ ॥ विधिपंचमशीर्षकृन्तनाद्गिरिकन्योद्वहनेतुकिल्बिषी । सबभूवहिधूतपातकोनिकटेवासत्रशात्तवेश्वरः ॥ ४ ॥ अपिभार्गवभूमिसंस्थितान्नुसमुद्धर्तुमिवाप्यधोगतान् । कृपयापरयाहिकौंकणेवतसह्याद्रितलेतवागमः ॥ ५ ॥ भुवनानिचतुर्दशापिचोद्धरणार्थंवद जन्हुकन्यके । कृतत्रत्यसिकिंचतुर्दशायतनेषुस्थितिमत्रसांप्रतम् ॥ ६ ॥ कलिदोषहशःकुतर्किनस्त्वयथार्थंबहुधावदंति ये । नरकेनिपतंतितेयतोमहिमानं न विदंति ते खलाः ॥७॥ अथयेतवभक्तिभाविताः स्नपनं पानमलभ्यदर्शनम् । भजनं नमनंचकुर्वतेसकुलायांतिविमुक्तिमंब ते ॥ ८ ॥ इतिकृष्ण-

मुखोद्गतंस्तवंसुरनद्याःसमुदीर्यमानवः । स्नपनंकुरुतेसपुण्य-
भाग्भव मुक्तिं लभते न संशयः ॥ ९ ॥

इति धौरेयोपनाम कृश्रीकृष्णशर्मकृतराजपुरगंगा-
ष्टकस्तोत्रं संपूर्णम् ।

---

## ४६५ अथ मथुरामाधुरी ।

श्रीगणेशाय नमः ॥ जयति सा परमाद्भुतराधिकारम-
णवृत्तपवित्रतरीकृता । कुसुमितद्रुमराजिविराजिता व्रत-
तिका ततिकापरिवेष्टिता ॥ १ ॥ सरसरासविहाररतस्व-
भूचरणपङ्कजलाञ्छितभूतला । वनगृहान्तरवासकसज्जिका
नवरता वरतामरसोदका ॥२॥ अभिनवस्फुटशाखिशिखा-
स्खलत्कुसुमसंहतिसंकुलसंचरा । नददुदारखगावलिरुच्चकैरुप-
वना पवनाधुतपल्लवा ॥ ३ ॥ रुचिरकुञ्जगृहान्तरसंचरद्भु-
जगभोजिविकासितताण्डवा । विपुलसूरसुतापुलिनान्तरे
घनयनानयनादरजृम्भिता ॥ ४ ॥ विकिरकेलिविमर्दसमु-
च्चरत्कुसुमसौरभसांद्रदिगन्तरा । किमपि चेतसि नर्म वित-
न्वतीसुरजितोऽरजितोद्धतसंपदः ॥ ५ ॥ स्फुरितनैकविध-
च्छवितूलिकालिखितवर्णचयैर्हरिनामभिः । मधुरचित्रभृ-
तासु कनत्प्रजासुखचिता खचिताऽऽलयभित्तिपु ॥ ६ ॥
निबिडमान्द्यमेदुरभास्वरस्वरजुषां रजसां तमसामपि ।
क्षतिकृतां महतां हरिकीर्तनध्वनिरमा निरमानितकल्मषा

॥ ७ ॥ विबुधसद्मसु पल्लवितोल्लसल्ललितभागवतामृतसेविभिः। विविधभक्तजनैश्च समन्ततो वलयिता लयितालविघूर्णिता ॥ ८ ॥

इति मथुरामाधुरी संपूर्णा।

---

## ४६६ अयोध्यादिपुरीश्लेषेण मथुरामाधुरी।

श्रीगणेशाय नमः॥ महितरामचरित्रपवित्रिता कलितसारवनीरतरङ्गिता दशरथस्य पुरीव हरीक्षिता शुभरताभरताशयसंस्कृता ॥ १ ॥ सततसंगतसाधुमहोदयाऽधिमणिकर्णिकविष्णुपदाञ्चिता। स्मरजितो नगरीव शिवोज्ज्वला सुरुचिरारुचिराजितनागरा ॥ २ ॥ गहनसाकसमाकलितावने प्रतिदिनं विकसन्मधुसूदना। यदुपुरीव च सागरसंश्रिता मधुरसाधुरसा स्फुरदुद्भवा ॥ ३ ॥ प्रथितविक्रमरम्यरसाश्रया सरितमादधती खलु भास्वतीम्। स्फुरितधाममहेशमवन्तिकां कविकलाविकलाकलनालया ॥ ४ ॥ अधिगताऽधिकदक्षिणमण्डलं सदनुकम्पकृतिस्थितिशालिनी। मुदितमुक्तिसतीश्वरकाञ्चिका सुरचितारचिताघविनाशना ॥ ५ ॥ स्फुरदुदग्रसुपर्वतरङ्गिणी विबुधदक्षनिरूपितसत्क्रिया। व्रजवती महतां बहुमायकागमहिता महिता



श्रुतशासनैः ॥ ६ ॥ अमरराजपुरीव सुवज्रिका भुजगरा-

जपुरीव सुभोगिका । मधुपुरीप्रतिसद्मनोहरन्नवसुधा वसु-
धामलभूषणा ॥ ७ ॥

इति मथुरामाधुरी संपूर्णा ।

---

## ४६७ मुमुक्षुपञ्चकम् ॥

श्रीगणेशाय नमः ॥ ॐ परमात्मने नमः । विहायैनः कृत्वा क्रतुविधुरकर्मादिविहितं धियं संशोध्याऽऽहत्रा चिद् चिदवलोकादिनिकरम् । समाराध्याऽऽचार्यं नतिविमतिशुश्रूषणमुखैः प्रपन्नः सन् पृच्छेद् त्रिविदिपितमात्मीयमखिलम् ॥ १ ॥ विचार्याऽऽत्मानं स्वं श्रुतिगदितसच्चित्सुखमयं परं ब्रह्मास्मीति श्रवणमननध्यानकरणैः । अहं ब्रह्मास्मीति दृढमवगतिं गम्य परमां विबाध्येदं दृश्यं सकलमलमज्ञानसहितम् ॥ २ ॥ विदित्वेत्थं तत्त्वं निखिलनिगमान्तैर्निगदितं निहत्याऽनर्थं वै सकलमपि जीवातुसहितम् । परानन्दो भूत्वा भवति भुवि भव्यो भुपति भो विधेयं कर्त्तव्यं विविधमपि हेयं हृदिगतम् ॥ ३ ॥ सुदो जीवन्मुक्तेर्यदि हृदि मनीषा स्वविदुषस्तदा वृत्तिं वृत्तेरनिशमभिकुर्वन् बहुतिथम् । विनाश्यैव स्थौल्यं मलिनतरसत्त्वस्य मनसः सुसत्त्वाविर्भावात् [illegible] हि सुगमात् ॥ ४ ॥ सुभूमिं प्राप्येमां परमसुखदां पञ्चमसुखां सुखं भुक्त्वा ब्राह्मं दृढत-

रनिजारब्धमपि च । विलाप्येदं विश्वं जगदगमयं हेतुसहितं चिदानन्दे शुद्धे भजति च विदेहामृतमयम् ॥ ५ ॥

इति मुमुक्षुपञ्चकं समाप्तम् ।

---

## ४६८ आत्मषट्कम् ॥

श्रीगणेशाय नमः ॥ ॐ परमात्मने नमः ॥ मनोबुद्ध्यहंकारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे । न च व्योम भूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥ १ ॥ न च प्राणसंज्ञो न वै पञ्चवायुर्न वा सप्तधातुर्न वा पञ्चकोशः । न वाक्पाणिपादं न चोपस्थपायुश्चिदानन्द० ॥२॥ न मे द्वेषरागौ न मे लोभमोहौ मदो नैव मे नैव मात्सर्यभावः । न धर्मो न चार्थो न कामो न मोक्षश्चिदानन्द० ॥ ३ ॥ न पुण्यं न पापं न सौख्यं न दुःखं न मन्त्रो न तीर्थं न वेदा न यज्ञाः । अहं भोजनं नैव भोज्यं न भोक्ता चिदानन्द० ॥ ४ ॥ न मृत्युर्न शङ्का न मे जातिभेदः पिता नैव मे नैव माता च जन्म । न बन्धुर्न मित्रं गुरुर्नैव शिष्यश्चिदानन्द० ॥ ५ ॥ अहं निर्विकल्पो निराकाररूपो विभुत्वाच्च सर्वत्र सर्वेन्द्रियाणाम् । न चासंगतं नैव मुक्तिर्न मेयश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ॥६॥

इति श्रीमच्छंकराचार्यविरचितमात्मषट्कस्तोत्रं संपूर्णम् ॥



---

## ४६९ निर्वाणाष्टकम् ॥

श्रीगणेशाय नमः ॥ ॐ परमात्मने नमः ॥ भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे मायामोहौ क्षयमुपगतौ नष्टसन्देहवृत्तेः । शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ १ ॥ यद्वात्मानं सकलवपुषामेकमन्तर्बहिस्थं दृष्ट्वा पूर्णं खमिव सततं सर्वभाण्डस्थमेकम् । नान्यत्कार्यं किमपि च ततः कारणाद्भिन्नरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ २ ॥ हेम्नः कार्यं हुतवहगतं हेममेवेति यद्वत्क्षीरे क्षीरं समरसतया तोयमेवाम्बुमध्ये । एवं सर्वं समरसतया त्वंपदं तत्पदार्थे निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ३ ॥ यस्मिन्विश्वं सकलभुवनं सामरस्यैकभूतमुर्वी ह्यापोऽनलमनिलखं जीवमेवंक्रमेण । यत्क्षाराब्धौ समरसतया सैन्धवैकत्वभूतं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ४ ॥ यद्वन्नद्यौ दधिसमरसौ सागरत्वं ह्यवाप्तौ तद्वज्जीवालयपरिगतौ सामरस्यैकभूताः । भेदातीतं परिलयगतं सच्चिदानन्दरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ५ ॥ दृष्ट्वा वेद्यं परमथपदं स्वात्मबोधस्वरूपं बुद्ध्वात्मानं सकलवपुषामेकमन्तर्बहिस्थम् । भूत्वा नित्यं सदुदिततया स्वप्रकाशस्वरूपं निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ६ ॥ कार्याकार्यं किमपि

सततं नैव कर्त्तव्यमस्ति जीवन्मुक्तस्थितिरवगतो दग्धवस्त्रावभासः । एवं देहे प्रविलयगते तिष्ठमानो विमुक्तो निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ७ ॥ कस्मात्कोऽहं किमपि च भवान्कोयमत्र प्रपञ्चः स्वं स्वं वेद्यं गगनसदृशं पूर्णतत्त्वप्रकाशम् । आनन्दाख्ये समरसघने बाह्यमन्तर्विहीने निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः ॥ ८ ॥ सत्यं सत्यं परममस्तृतं सर्वकल्याणरूपं मायारण्ये दहनममलं शान्तिनिर्वाणदीपम् । तेजोरूपं निगमसदनं व्यासपुत्राष्टकं यः प्रातःकाले पठति मनसा याति निर्वाणमार्गं ॥ ९ ॥

इति श्रीमहर्षिशुकदेवमुनिविरचितं निर्वाणाष्टकं संपूर्णम् ॥

---

## ४७० सदाचारस्तोत्रम् ॥

श्रीगणेशाय नमः ॥ ॐ परमात्मने नमः ॥ सच्चिदानन्दरूपाय जगदङ्कुरहेतवे । सदोदिताय पूर्णाय नमोऽनन्ताय विष्णवे ॥ १ ॥ सर्ववेदान्तसिद्धान्तैर्ग्रथितं निर्मलं शिवम् । सदाचारं प्रवक्ष्यामि योगिनां ज्ञानसिद्धये ॥ २ ॥ प्रातः स्मरामि देवस्य सवितुर्भर्ग आत्मनः । वरेण्यं तद्धियो यो नश्चिदानन्दः प्रचोदयात् ॥ ३ ॥ अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तिषु । यदेकं केवलं ज्ञानं तदेवाहं परं बृहत् ॥४॥



ज्ञानाज्ञानविलासोऽयं ज्ञानाज्ञानेन शाम्यति । ज्ञानाज्ञाने

परित्यज्य ज्ञानमेवावशिष्यते ॥ ५ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । असङ्गोऽहमिति ज्ञात्वा शौचमेतत्प्रचक्षते ॥ ६ ॥ मन्मनो मीनवन्नित्यं क्रीडत्यानन्दवारिधौ । सुस्नातस्तेन पूतात्मा सम्यग्विज्ञानवारिणा ॥ ७ ॥ अथाघमर्षणं कुर्यात् प्राणापाननिरोधतः । मनः पूर्णे समाधाय मग्नकुम्भो यथार्णवे ॥ ८ ॥ लयविक्षेपयोः संधौ मनस्तत्र निरामिषम् । स संधिः साधितो येन स मुक्तो नात्र संशयः ॥ ९ ॥ सर्वत्र प्राणिनां देहे जपो भवति सर्वदा । हंसः सोहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १० ॥ तर्पणं स्वसुखेनैव स्वेन्द्रियाणां प्रतर्पणम् । मनसा मन आलोक्य स्वयमात्मा प्रकाशते ॥ ११ ॥ आत्मनि स्वप्रकाशेऽग्नौ चित्तमेकाहुतिं क्षिपेत् । अग्निहोत्री स विज्ञेय इतरे नामधारकाः ॥१२॥ देहो देवालयः प्रोक्तो देही देवो निरञ्जनः । अर्चितः सर्वभावेन स्वानुभूत्या विराजते ॥ १३ ॥ मौनं स्वाध्यायश्च ध्यानं ध्येयब्रह्मानुचिंतनम् । ज्ञानेनेति तयोः सम्यग्निषेधान्तप्रदर्शनम् ॥ १४ ॥ अतीतानागतं किंचिन्न स्मरामि न चिन्तये । रागद्वेषं विना प्राप्तं भुञ्जाम्यत्र शुभाशुभम् ॥ १५ ॥ हठाभ्यासो हि संन्यासो नैव काषायवाससा । नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ॥ १६ ॥ अभयं सर्वभूतानां दानमाहुर्मनीषिणः । निजानन्दे स्पृहा नान्य-



द्वैराग्यस्यावधिर्मतः ॥ १७ ॥ वेदान्तश्रवणं कुर्यात् मननं

चोपपत्तिभिः । योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ १८ ॥ शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः । प्रसुप्तपुरुषो यद्वच्छब्देनैवानुबुध्यते ॥ १९ ॥ आत्मानात्मविवेकेन ज्ञानं भवति निर्मलम् । गुरुणा बोधितः शिष्यः शब्दब्रह्मातिवर्तते ॥ २० ॥ न त्वं देहो नेन्द्रियाणि न प्राणो न मनो न धीः । विकारित्वाद्विनाशित्वाद् दृश्यत्वाच्च घटो यथा ॥ २१ ॥ विशुद्धं केवलं ज्ञानं निर्विशेषं निरंजनम् । यदेकं परमानंदं तत्त्वमस्यद्वयं परम् ॥ २२ ॥ शब्दस्याद्यन्तते सिद्धे मनसोऽपि तथैव च । मध्ये साक्षितया नित्यं तदेव त्वं भ्रमं जहि ॥२३॥ स्थूलवैराजयोरैक्यं सूक्ष्महैरण्यगर्भयोः । अज्ञानमाययोरैक्यं प्रत्यग्विज्ञानपूर्णयोः ॥ २४ ॥ चिन्मात्रैकरसे विष्णौ ब्रह्मात्मैक्यस्वरूपके । भ्रमेणैव जगज्जातं रज्ज्वां सर्पभ्रमो यथा ॥२५॥ तार्किकाणां च जीवेशौ वाच्यावेतौ विदुर्बुधाः । लक्ष्यौ च सांख्ययोगाभ्यां वेदान्तैरेकता तयोः ॥ २६ ॥ कार्यकारणवाच्यांशौ जीवेशौ योजहच्च तौ । अजहच्च तयोर्लक्ष्यौ चिदंशावेकरूपिणौ ॥ २७ ॥ कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः । सांख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः ॥२८॥ अन्ये पाषण्डिनः सर्वे ज्ञानवार्तासु दुर्बलाः । एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते ॥२९॥ अहं ममेत्ययं बन्धो ममाहं नेति मुक्तता । बन्धमोक्षौ गुणैर्भाति गुणाः प्रकृतिसंभवाः ॥३०॥ ज्ञानमेकं

सदा भाति सर्वावस्थासु निर्मलम् । मन्दभाग्या न जानन्ति स्वरूपं केवलं बृहत् ॥ ३१ ॥ संकल्पसाक्षिणं ज्ञानं सर्वलोकैकजीवनम् । तदस्मीति च यो वेद स मुक्तो नात्र संशयः ॥ ३२ ॥ प्रमाता च प्रमाणं च प्रमेयप्रमितिस्तथा । यस्य भासावभासेत मानं ज्ञानाय तस्य किम् ॥३३॥ अर्थाकारा भवेद्वृत्तिः फलेनार्थः प्रकाशते । अर्थज्ञानं विजानाति स एवार्थः परः स्मृतः ॥ ३४ ॥ वृत्तिव्याप्यत्वमेवास्तु फलव्याप्तिः कथं भवेत् । स्वप्रकाशस्वरूपत्वात्सिद्धत्वाच्च चिदात्मनः ॥ ३५ ॥ अर्थादर्थे यदा वृत्तिर्गन्तुं चलति चान्तरे । निराधारा निर्विकारा या दशा सोन्मनी स्मृता ॥ ३६ ॥ चित्तं चिच्च विजानीयात् तकाररहितं यदा । तकारविषयाध्यासं जपारागो यथा मणौ ॥ ३७ ॥ ज्ञेयवस्तुपरित्यागाज्ज्ञानं तिष्ठति केवलम् । त्रिपुटी क्षीणतामेति ब्रह्मनिर्वाणमृच्छति ॥३८॥ मनोमात्रमिदं सर्वं तन्मनोऽज्ञानमात्रकम् । अज्ञानं भ्रम इत्याहुर्विज्ञानं परमं पदम् ॥ ३९ ॥ अज्ञानं चान्यथाज्ञानं मायामेतां वदंति ते । ईश्वरं मायिनं विद्यान्मायातीतं निरंजनम् ॥ ४० ॥ सदानन्दे चिदाकाशे मायामेघस्तडिन्मनः । अहंता गर्जनं तत्र धारासारो हि वृत्तयः ॥ ४१ ॥ महामोहान्धकारेऽस्मिन् देवो वर्षति लीलया । अस्या वृत्तेर्विरामाय प्रबोधैकसमीरणः ॥ ४२ ॥ ज्ञानं दृग्दृश्ययोर्भावं विज्ञानं दृश्यशून्यता । एकमेवाद्वयं ब्रह्म नेह

नानास्ति किंचन ॥ ४३ ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं तज्ज्ञानं ज्ञानमुच्यते । विज्ञानं चोभयोरैक्यं क्षेत्रज्ञपरमात्मनोः ॥ ४४ ॥ परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनम् । आत्मनो ब्रह्मणः सम्यगुपाधिद्वयवर्जितम् ॥४५॥ त्वमर्थविषयं ज्ञानं विज्ञानं तत्पदाश्रयम् । पदयोरैक्यबोधस्तु ज्ञानविज्ञानसंज्ञकम् ॥४६॥ आत्मानात्मविवेकस्य ज्ञानमाहुर्मनीषिणः । अज्ञानं चान्यथा लोके विज्ञानं तन्मयं जगत् ॥ ४७ ॥ अन्वयव्यतिरेकाभ्यां सर्वत्रैकं प्रपश्यति । यत्तत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम् ॥ ४८ ॥ अज्ञानध्वंसकं ज्ञानं विज्ञानं चोभयात्मकम् । ज्ञानविज्ञाननिष्ठेयं तत्सद्ब्रह्मणि चार्पितम्॥४९॥ भोक्ता सत्त्वगुणः शुद्धो भोगानां साधनं रजः । भोग्यं तमोगुणं प्राहुरात्मा चैषां प्रकाशकः ॥५०॥ ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यरतः सदा । सर्वं ब्रह्मेति यो वेद ब्रह्मचारी स उच्यते ॥ ५१ ॥ गृहस्थो गुणमध्यस्थः शरीरं गृहमुच्यते । गुणाः कुर्वंति कर्माणि नाहं कर्तेति बुद्धिमान् ॥ ५२ ॥ किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः । हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ॥ ५३ ॥ सदाचारमिमं नित्यं ये च संदधते बुधाः । संसारसागराच्छीघ्रं मुच्यंते नात्र संशयः ॥ ५४ ॥

इति श्रीमच्छंकराचार्यविरचितं सदाचारस्तोत्रं संपूर्णम् ।

## ४७१ ब्रह्मज्ञानावली ।

श्रीगणेशाय नमः॥ ॐपरमात्मने नमः । ॐतत्सद्ब्रह्मणे नमः ॥ सकृच्छ्रवणमात्रेण ब्रह्मज्ञानं यतो भवेत् । ब्रह्मज्ञानावली माला सर्वेषां मोक्षसिद्धये ॥ १ ॥ असंगोऽहमसंगोऽहमसंगोऽहं पुनः पुनः । सच्चिदानंदरूपोऽहमहमेवाहमव्ययः ॥ २ ॥ नित्यशुद्धविमुक्तोऽहं निराकारोऽहमव्ययः । भूमानंदस्वरूपोऽहमहमेवाहमव्ययः ॥ ३ ॥ नित्योऽहं निरवद्योऽहं निराकारोऽहमच्युतः । परमानंदरूपोऽहमहमेवाहमव्ययः ॥ ४ ॥ शुद्धचैतन्यरूपोऽहमात्मारामोऽहमेव च । अखंडानंदरूपोऽहमहमे० ॥ ५ ॥ प्रत्यक्चैतन्यरूपोऽहं शांतोऽहं प्रकृतेः परः । शाश्वतानंदरूपोऽहमहमे० ॥ ६ ॥ तत्त्वातीतः परात्माहं मध्यातीतः परः शिवः । मायातीतः परं ज्योतिरहमे० ॥ ७ ॥ नामरूपव्यतीतोऽहं चिदाकारोऽहमच्युतः । सुखरूपस्वरूपोऽहमहमे० ॥ ८ ॥ मायातत्कार्यदेहादि मम नास्त्येव सर्वदा । स्वप्रकाशैकरूपोऽहमहमे० ॥ ९ ॥ गुणत्रयव्यतीतोऽहं ब्रह्मादीनां च साक्ष्यहम् । अनंतानंदरूपोऽहमहमे० ॥ १० ॥ अंतर्यामिस्वरूपोऽहं कूटस्थः सर्वगोऽस्म्यहम् । परमात्मस्वरूपोऽहमहमे० ॥ ११ ॥ निष्कलोऽहं निष्क्रियोऽहं सर्वात्माद्यः सनातनः । अपरोक्षस्वरूपोऽहमहमे० ॥ १२ ॥ द्वंद्वादिसाक्षिरूपोऽहमचलोऽहं सनातनः । सर्वसाक्षिस्वरूपोऽहमहमे० ॥ १३ ॥ प्रज्ञानघन एवाहं विज्ञान-

घन एव च। अकर्ताहमभोक्ताऽहमहमे० ॥ १४ ॥ निराधारस्वरूपोऽहं सर्वाधारोऽहमेव च। आप्तकामस्वरूपोऽहमहमे० ॥१५॥ तापत्रयविनिर्मुक्तो देहत्रयविलक्षणः। अवस्थात्रयसाक्ष्यस्मि चाहमेवा० ॥ १६ ॥ दृग्दृश्यौ द्वौ पदार्थौ स्तः परस्परविलक्षणौ। दृग् ब्रह्म दृश्यं मायेति सर्ववेदांतडिंडिमः ॥ १७ ॥ अहं साक्षीति यो विद्याद्विविच्यैवं पुनः पुनः। स एव मुक्तः सो विद्वानिति वेदांतडिंडिमः ॥ १८ ॥ घटकुड्यादिकं सर्वं मृत्तिकामात्रमेव च। तद्वद्ब्रह्म जगत्सर्वमिति वेदांतडिंडिमः ॥ १९ ॥ ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः। अनेन वेद्यं सच्छास्त्रमिति वेदांतडिंडिमः ॥ २० ॥ अंतर्ज्योतिर्बहिर्ज्योतिः प्रत्यग्ज्योतिः परात्परः। ज्योतिर्ज्योतिः स्वयंज्योतिरात्मज्योतिः शिवोऽस्म्यहम् ॥ २१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचिता ब्रह्मज्ञानावली समाप्ता।

## ४७२ अथ सुदर्शनस्तोत्रम्।

श्रीगणेशाय नमः॥ अम्बरीष उवाच॥ त्वमग्निर्भगवान्सूर्यस्त्वं सोमो ज्योतिषां पतिः। त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ १ ॥ सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय। सर्वास्त्रघातिन्विप्राय स्वस्ति भूया इडस्पते

॥ २ ॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् । त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ३ ॥ नमः सुनाभाखिलधर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे । त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ४ ॥ त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम् । दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परावरम् ॥ ५ ॥ यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविष्टोऽजित दैत्यदानवम् । बाहूदरोर्वङ्घ्रिशिरोधराणि वृश्चन्नजस्रं प्रधने विराजसे ॥ ६ ॥ स त्वं जगत्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता । विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ७ ॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः । कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥ ८ ॥ यदि नो भगवान्प्रीत एकः सर्वगुणाश्रयः । सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ९ ॥

इति अंबरीषकृतसुदर्शनस्तोत्रं समाप्तम् ।

---

## ४७२ अथ कृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ वसुदेव उवाच ॥ विदितो भगवासाक्षात्पुरुषः प्रकृतेः परः । केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृक् ॥ १ ॥ स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् । तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥ २ ॥

यथेमेऽविकृता भावास्तथा ते विकृतैः सह । नानावीर्याः पृथग्भूता विराजं जनयन्ति हि ॥ ३ ॥ संनिपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव । प्रागेव विद्यमानत्वान्न तेषामिह संभवः ॥ ४ ॥ एवं भवान्बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः । अनावृतत्वाद्बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ ५ ॥ य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः । विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान् ॥ ६ ॥ त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो वदन्त्यनीहादगुणादविक्रियात् । त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः ॥ ७ ॥ स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः । सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये ॥ ८ ॥ त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर । राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ ९ ॥ अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाग्रजांस्ते न्यवधीत्सुरेश्वर । स तेऽवतारं पुरुषैः समर्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः ॥ १० ॥

इति वसुदेवकृतं कृष्णस्तोत्रं समाप्तम् ।

---

## ४७४ अथ कृष्णस्तोत्रम् ।



श्रीगणेशाय नमः ॥ देवक्युवाच ॥ रूपं यत्तत्प्राहुरव्य-

क्रमाद्यं ब्रह्मज्योतिनिर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥ १ ॥ नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु । व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः ॥ २ ॥ योयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये॥३॥ मर्त्यो मृत्युव्यालभीतः पलायन्लोकान्सर्वान्निर्भयं नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैति ॥ ४ ॥ स त्वं घोरादुग्रसेनात्मजान्नस्त्राहि त्रस्तान्भृत्यवित्रासहासि । रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥ ५ ॥ जन्म ते मय्यसौ पापो माविद्यान्मधुसूदन । समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ ६ ॥ उपसंहर विश्वात्मन्नदो रूपमलौकिकम् । शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ७ ॥ विश्वं यदेतत्स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् । बिभर्ति सोऽयं मम गर्भगोऽभूदहो नृलोकस्य विडम्बनं हि तत् ॥८॥

इति देवकीकृतं कृष्णस्तोत्रं समाप्तम् ।

---

## ४७५ अथ कृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ इन्द्र उवाच ॥ विशुद्धसत्त्वं तव धाम



शान्तं तपोमयं ध्वस्तरजस्तमस्कम् । मायामयोऽयं गुण-

संप्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥ १ ॥ कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिङ्गभावाः । तथापि दण्डं भगवान्बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥ २ ॥ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः काल उपात्तदण्डः । हिताय स्वेच्छातनुभिः समीहसे मानं विधुन्वञ्जगदीशमानिनाम् ॥ ३ ॥ ये मद्विधाज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तन्मदम् । हित्वार्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥ ४ ॥ स त्वं ममैश्वर्यमदप्लुतस्य कृतागसस्तेविदुषः प्रभावम् । क्षन्तुं प्रभोऽथाऽर्हसि मूढचेतसो मैवं पुनर्भून्मतिरीश मेऽसती ॥ ५ ॥ तवावतारोऽयमधोक्षजेह स्वयंभराणामुरुभारजन्मनाम् । चमूपतीनामभवाय देव भवाय युष्मच्चरणानुवर्तिनाम् ॥६॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने । वासुदेवाय कृष्णाय सात्वतां पतये नमः ॥ ७ ॥ स्वच्छन्दोपात्तदेहाय विशुद्धज्ञानमूर्तये । सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥ ८ ॥ मयेदं भगवन्गोष्ठनाशायासारवायुभिः । चेष्टितं विहते यज्ञे मानिना तीव्रमन्युना ॥ ९ ॥ त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः । ईश्वरं गुरुमात्मानं त्वामहं शरणं गतः ॥ १० ॥

इति इंद्रकृतं कृष्णस्तोत्रं समाप्तम् ।

## ४७८ अथ कृष्णस्तोत्रम् ।

श्रीगणेशाय नमः ॥ मुचुकुन्द उवाच ॥ विमोहितोऽयं जन ईशमायया त्वदीयया त्वां न भजत्यनर्थदृक् । सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वञ्चितः ॥ १ ॥ लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यङ्गमयत्नतोऽनघ । पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥२॥ ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपतेः । मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥ ३ ॥ कलेवरेऽस्मिन्घटकुड्यसंनिभे निरूढमानो नरदेव इत्यहम् । वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वागणयन्सुदुर्मदः ॥ ४ ॥ प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् । त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५ ॥ पुरा रथैर्हेमपरिष्कृतैश्चरन्मतङ्गजैर्वा नरदेवसंज्ञितः । स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥ ६ ॥ निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः । गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥ ७ ॥ करोति कर्माणि तपःसुनिष्ठितो निवृत्तभोगस्तदपेक्षया ददत् । पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥ ८ ॥ भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः । सत्संगमो यर्हि तदैव सद्गतौ परावरेशो

त्वयि जायते मतिः ॥ ९ ॥ मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया । यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥ १० ॥ न कामयेऽन्यं तव पादसेवनादकिंचनप्रार्थ्यतमाद्वरं विभो । आराध्य त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम् ॥११॥ तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः । निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम् ॥१२॥ चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रो लब्धशान्तिः कथंचित् । शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि मापन्नमीश ॥ १३ ॥

इति मुचुकुन्दकृतं कृष्णस्तोत्रं संपूर्णम् ।

---